MAHABHASYA PRADIPODDYOTA

Of

Nagesabhatta

edited by

Bahuvallabha Shastri

calcutta

The Asiatic Society

1921

# महाभाष्यप्रदीपोद्द्योतः ॥

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## प्रत्ययः । ३ । १ । १ ॥

"अधिकारेण" इत्यस्य प्रयोजनमाह

यदित्विति ॥ (कै)

अनेकस्येति (कै)

प्रत्याहाराश्रयणे तिपः पकारेण व्याप्त्याश्रये "तप्तनप्तनथनाश्च" (७।१।४५) इति तपः पकारेणेत्यर्थः। एवं च गौरवातिव्याप्त्यादि-

---

प्रत्ययः ॥ प्रत्ययशब्दः संज्ञात्वेनाधिक्रियते आपञ्चमसमाप्तेः। स्यादेतत्। प्रकृत्युपपदोपाधिविकारागमानामपि तर्हि संज्ञा स्यात्। हरतेर्दृतिनाथयोः पशौ। हरतेरिति प्रकृतिः। दृतिनाथयोरित्युप-

---

"प्रत्ययः" ॥ इह यदि सर्वानेव संज्ञिनः स्वरूपेण निर्दिश्य संज्ञा विधीयेत सन् प्रत्ययः क्यच् प्रत्ययः काम्यच् प्रत्यय इति ततो गौरवं स्यात्। अथ सप्प्रत्यय इति सनः सशब्दादारभ्य कपः पकारेण प्रत्याहाराश्रये-

दोषपरिहारार्थाधिकार एव कर्त्तव्यस्तथा च प्रकृत्यादिष्वतिप्रसङ्ग इति भावः ॥ समाक्षिपति

नन्विति । (कै)

विधीयमानस्य सनाद्य सनादेः प्रथमान्ततया प्रत्यय इत्यनेन सामानाधिकरण्यादेकवाक्यतया संज्ञासंबन्धः । अन्येषां तु विभक्ति-त्वाद्वाक्यभेदेनैव संज्ञासंबन्ध इति भावः ॥ सम्भवत्येकवाक्यत्व एव वाक्यभेदो दोषो तत्त्वसम्भव इति समाधत्ते

नैतदिति ॥ (कै)

ननु विभक्तित्वात्कथं प्रत्यय इत्यनेन तेषां संबन्ध इत्यत आह

विभक्त्यन्तरेति ॥ (कै)

ननु सनादिविधानार्थत्वात्प्रकृत्यादेरप्रधानतया संज्ञा न भविष्यतीत्यत आह

सनादीति । (कै)

अन्यथाप्रधानत्वेऽप्यत्र संस्कार्यत्वलक्षणस्वार्थत्वे विरोध इति भावः ॥ ननु प्रकृतीनां प्रत्ययविधावुद्देश्यतया तासामेव संज्ञाया-

---

पदम् । पञ्चावित्युपाधिः । हनस्तचेत्यादिर्विकारः । अपुजतुनोःषुगित्या-गमः । नन्वेषां प्रत्ययत्वे सति किं स्यादिति चेत् । शृणु । प्रकृतिप्रत्यययोः परस्परापेक्ष्यं परत्वं पर्यायेण स्यात् । शब्दान्तरापेक्षं वा प्रकृतेः । उपपद-

---

गमात्र वा प्रदेशान्तरे वा संज्ञा विधीयेत् तदानेकस्य पकारस्य सम्भवात्स-न्देहः स्यात् । तथाहि । प्रत्यासत्तिन्याय आश्रीयमाणे सिपः पकारेण स्याद् आसौ तु तप् तनप् तनथनाश्चेति तनपः । स्यादेतत्, आसिरेवाश्र-यिष्यते, अथ च तनपः पकारेण प्रत्याहारो न भविष्यति ज्ञापकात्, यदय

नप्युद्देश्यत्वं न्याय्यं न तु प्रत्ययानामिति चेन्न । समानविभक्तिकत्वेन प्रत्ययानां कृप्तोद्देश्यतया विभक्त्यन्तराध्याहारेण प्रकृत्यादीनामपि तत्सम्भवादित्यभिमानः ॥ गुप्तादिविशेषणस्य प्रत्ययसंज्ञा कुतो नोद्भाविततेत्यत आह

## उपाधिशब्देन चेह तुल्यन्यायत्वादिति । (कै)

प्रत्ययनिमित्तत्वेन प्रकृत्या तुल्यन्यायत्वमित्यर्थः । एवं चोपाधिषु तदुद्भावनेनैव विशेषणेऽप्युद्भावितैवेति भावः ॥

## तदन्तवाच्यः । (कै)

प्रत्ययान्तवाच्य इत्यर्थः ॥

## समानशब्द इति । (कै)

प्रयोगे भिन्नशब्दबोध्यतादशायां समानाधिकरणशब्दबोध्यो योऽसौ प्रत्ययान्तशब्दवाच्यः स उपाधिरुच्यते इत्यर्थः । यथा पञ्चालानां विषयः पाञ्चालानां विषयः पाञ्चाल इत्यत्र देश इति । हरिरित्यादौ च श्वादिः पशुः । नामार्थत्वात्सन्देहवारणाय इति ।

---

स्यापि परत्वं स्यात् । उपसर्जनंपूर्व्वमिति तु राजपुरुषादिषु सावकाशं परत्वात्परस्येत्यनेन बाध्यते । ननु सुब्विधौ प्रातिपदिकाधिकाराद्राजपुरुषादौ कथं सावकाशतेति चेत् । सत्यम् । एवमपि समाससंज्ञाविरहस्थले

---

'मिच एकाचोऽमप्रत्ययवच्चे'त्यमः प्रत्ययवद्भावं प्राप्ति, अन्यथा षष्ठेऽपि प्रत्ययसंज्ञाव्यापारादमोऽपि स्वत एव प्रत्ययत्वात्तद्भावो नातिदेश्यः स्यादिति । तन्न, तत्र ह्यमिति द्विरावर्त्तते ततश्चाप्रत्ययप्रतिबद्ध 'औतोम् शसो' रित्यादिविधिष्टं कार्य्यं यथा स्यादिति सोऽतिदेशः स्यात् । नन्वेव-

हरिः श्वेत्यादौ विशेषनियमार्थाय स्पष्टप्रतिपत्तये वा क्वचित् समानाधिकरणशब्दप्रयोगोऽप्याभ्यामपकर्षादीनामुपाधित्वव्यावृत्तिः श्लाघादिव्यावृत्तिश्च ॥

## श्लाघादीति । (कै)

आदिना "धातोः कर्मणः समानकर्तृकादि" ( पा-३।१।७) त्यादि । अत एव तदसमानाधिकरणमेव गार्गिकः श्लाघते इति पदान्तराभिधायस्य तदप्रयोगे च कुतोऽसाधुत्वमेव ॥

## अर्थविशेष उपाधिः (कै)

इत्यादिकात्यायनवचनमिति न्यायवार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्राः ॥

## न च प्रकृत्यादीनामिति । (कै)

न च प्रातिपदिकत्वाभावः फलं "ङ्याप्प्रातिपदिकादि" (पा ४।१।१) त्यादावुद्देश्यतावच्छेदकत्वेन तत्त्वज्ञापनात् ॥ ननु प्रकृति-संज्ञायासत्युपपदस्याभावात् प्रकृत्यादयोऽवधिविशेषा उपादानेऽपि सन्निधानात्तनादेरेव परे भवन्त्वित्यत आह

---

उपपदस्य परत्वं स्यादेव । तथा च भोक्तुं व्रजतीत्येव स्यात् न तु व्रजति भोक्तुमिति । उपाधेस्तु अर्थत्वेन परत्वासम्भवेऽपि तद्वाचकशब्दस्य परत्वं नियतं स्यात् । आद्युदात्तत्वं च स्यात् । अङ्गसंज्ञा तु विधानाय सा । न च

---

मपि प्रत्ययग्रहणमनर्थकम् अन्वदिति वक्तव्यम्, अतः प्रत्ययग्रहणात्प्रत्यय-प्रयुक्तमपि कार्यमतिदेश्यमिति प्रतीयते तज्ज्ञापकमुक्तार्थस्य भविष्यति, एवमप्यम आगमत्वात्नुमादिवदप्राप्तेः प्रत्ययत्वातिदेशः स्यात्, अस्तु वा ज्ञापकमेवमपि कुत एतज्ज्ञापकमाश्रीयते न पुनः प्रत्यासत्तिरिति । किञ्च

न चेति । (कै)

युगपदिति शेषः ॥

समासे इति । (कै)

नित्यसमास इत्यर्थः । लौकिके प्रयोगे पौर्वापर्यस्य नियमाभावादुपाधिरपि परत्वाभाव इत्यन्वयः ॥ तत्र हेतुमाह

स्थितस्यैवेति । (कै)

तद्रूपसाधुत्वस्यैव विधेयत्वमिति भावः ॥

विधायकत्वाभावादिति । (कै)

परत्वादिविधायकत्वाभावादित्यर्थः ॥ तद्विधायकत्वेऽप्याह

अर्थस्य चेति । (कै)

यथा स्वमिति तेषामनवकाशत्वेन बाधकत्वमिति भावः ॥

पर्यायेणेति । (कै)

यौगपद्ये हि विरोध इति भावः ॥ सनादीनां परत्वबोधने-

---

प्रकृत्यादयः कुतश्चिद्विहिता अतो न प्रकृत्यादि परेषु पूर्व्वस्य तत्त्वासिद्धिरिति प्रागुक्ता एव दोषाः । विकारागमयोरपि यथायथं परत्वमाद्युदात्तत्वं तयोः परतः पूर्वस्याङ्गत्वं च स्यादिति दुष्टोऽयं प्रत्ययाधिकारः । अत्राहुः । प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्तत्वेनोपादानात् पारार्थ्यात् स्वसंस्कारं

---

यथान्यासाद्गौरवं स्थितमेव सन्नित्यस्याधिकस्य करणात्, अतो गौरवातिप्रसङ्गपरिहारायाधिकारेणेयं संज्ञा विधीयते तदाह । 'प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इति' । कारक इति सद्विशेषणमधिक्रियते स्वादिषु कपर्यन्तेषु प्रकृतिरियमधिक्रियत इतिवत्प्रत्ययशब्दः संज्ञाधिक्रियत इति,

नैव सूत्रोपपत्तौ सन्नित्यादेर्विभक्तिविपरिणामादिनार्थान्तरावगति-मनुपपन्नमित्यत आह

शब्दान्तरापेक्षमिति ॥ (कै)

प्रकृत्यपेक्षन्त्विति (कै)

तासां पंचम्यन्तत्वादिति भावः ॥ ननु राजादीनामपि प्राति-पदिकादिति निर्दिष्टत्वात् प्रत्ययसंज्ञायां परत्वस्य प्राप्तौ कथम् “उपसर्जनं पूर्वम्” इत्येतस्यावकाशत्वमत आह

भोक्तुं व्रजतीति । (कै)

अत्र समासाभावेनोपपदस्य परत्वं स्यादिति भावः ॥ अर्थे परत्वासम्भवस्योक्तत्वादाह

उपाधिवाचिन इति ॥ (कै)

स्वरान्तरमिति (कै)

योऽनवकाशस्तद्विषये मा भूत् । सावकाशविषये तु स्यादिति तात्पर्यम् ॥ न च प्रातिपदिकाद्धातोरित्यनेन सर्वप्रकृतिनिर्देशा-

---

प्रति न प्रयोजकत्वम् । यथा योऽश्वे स देवदत्त इत्युक्तेनाश्वस्य देवदत्त संज्ञा । किं च हरतेर्दृतिनाथयोः कर्मणोरुपपदयोः पशौ कर्त्तरि इन्प्रत्ययो भवतीति वाक्यार्थपर्यवसाने कथं प्रकृत्यादीनां संज्ञाप्राप्तिः । न च आवश्य-

---

वक्तव्ये संज्ञात्वेनेति वचनमनर्थभेदात् । तथा ह्ययमत्र कर्मकरत्वेनाधिकृतः, अयमत्र कर्मकरोऽधिकृतः, नार्थभेदोऽस्ति किन्तु कर्मकरोऽधिकृत इत्युक्ते यः कर्मकरः सोऽधिकृतो रूपान्तरेणेत्यपि गम्यते, कर्मकरत्वेनेति पुनरुच्यमाने

सदंशे सावकाशविषयो दुर्लभ इति वाच्यम् । स्वरान्तरगतं नित्यत्वं बाधित्वा पर्यायः स्यादित्यपि तात्पर्यात् ॥

सिद्धेति । (कै)

ठकि लोप इत्यनुवादेन ठको विध्यनुमानवदिहाप्यनुवादेनैव प्रकृतिविधानानुमानमिति भावः ॥ ननु कुतश्चित् पूर्वस्माद्विधि-र्नास्तीति कथमनुक्तमत आह

आक्षेपादिति । (कै)

तथा च पूर्वोद्देशेन परत्वेन तेषां विधानमिति भावः ॥

पूर्वाक्षेपेऽपि परत्वे इति । (कै)

अनुमितो विधिः सामान्यत एव । पूर्वोद्देशेन तु परत्वमात्र-विधानम् । वस्तुतः ठगादेर्मानान्तरेणाविध्या भवतु तद्विधानु-मानम् । प्रकृत्यादीनां तु मानान्तरेण सिद्धतया तद्विध्यनुमानमेव दुर्लभमिति भावः ॥

---

ते च स्वरत्यादयः प्रत्ययसंज्ञका इति द्वितीयं वाक्यं कल्प्यम् । मानाभावात्, गौरवपराहतत्वाच्च । यत्तु सनादीनामप्यसतां संज्ञानुपपत्तेः वाक्यभेदेनैव संज्ञा विधेया । ततश्च यथा एकेन सनादीनां विधिरपरेण संज्ञाविधिः । एवं प्रकृत्यादीनामपि स्यादेवेति । तन्न । वृत्तिसूत्रयोर्भे वर्णितया रीत्या

---

तस्यैवाकारस्याधिकृतत्वं गम्यते, अधिक्रियते, विनियुज्यते, सूत्रकारेण, 'याम्सनादीननुक्रमिष्यामः', अनुक्रमेण विधास्यामः, सूत्रकाराश्रयमाश्रस्य वृत्तिकारस्यैतद्वचनं, यदि तर्ह्यधिकारेण संज्ञा क्रियते प्रतियोगमुपस्थाना-त्प्रकृत्युपपदोपाधिविकारागमानामपि प्राप्नोति 'स्वरतेर्वृतिनाथयोः पश्यौ

## चिन्त्यमेतदिति । (कै)

ठगाद्यः प्रत्ययसंज्ञामवन्ति ते च प्रत्ययेभ्यः शब्दान्तरेभ्यो वापरे भवतीत्यत्र परशब्दस्य धर्मिप्रधानतया परत्वविशिष्टानां तेषामेवविधानं शाब्दं प्राप्ताप्राप्तविवेकन्यायेन तु देशमात्र-विधानम् ॥ अत एव सर्वोऽपि विशेषविधिरेव प्राप्ताप्राप्तन्यायेन तु कस्यचित् गुणविधित्वमिति मीमांसकाः । न हि "यस्मा-त्प्रत्ययविधिरि" ( १ । ४ । १३ ) त्यत्र प्राप्ताप्राप्तविवेकन्यायलभ्य-विधेयत्वमेव गृह्यते इत्यत्र मानमस्तीत्यङ्गसंज्ञाप्रयोजनमेव । विधिग्रहणसामर्थ्याश्रयविधिग्रहणे लभ्यविधेयत्वस्य ग्रहः । स्त्री इयतीत्यादौ इदं निरूपिताङ्गत्वस्य दुर्वारत्वेन व्यावर्त्याभावा-दिति चेत् । न । भवतीत्यादौ दीर्घवारणाय विधिग्रहणस्याव-श्यकत्वादित्याशयात् ॥

## भूतविभक्त्या (कै)

सिद्धत्वबोधकविभक्त्या । न तु भिन्ने वाक्ये स्वसंस्कारं प्रति-प्रयोजकता स्यादेवेत्यत आह

---

सम्प्रत्ययो भवतीत्यादिक्रमेण संज्ञाविशिष्टस्य संज्ञिन एकवाक्येनैव विधि-सम्भवात् । मह्युद्भिदा यजेतेत्यादौ नामधेयसम्बन्धलाभाय विध्यावृत्तिं मन्यते न्यायविदः । अभ्युपेत्य ब्रूमः । संज्ञापरं द्वितीयं वाक्यमपि गुप्तिज्किद्भ्यः

---

हरतेरिति प्रकृतिः दृतिनाथयोरित्युपपदं पशाविप्युपाधिः, 'हनस्त च" त्यादिर्विकारः, अपुजतुनोः षुगि'त्यागमः, तस्यां च संज्ञायां प्रकृतिप्रत्य-ययोः पर्यायेण परस्परापेक्षं परत्वं स्यात् शब्दान्तरापेक्षं वा प्रकृतेः प्रकृत्यपेक्षं तु प्रत्ययस्य, उपपदस्यापि परत्वा 'दुपसर्जनं पूर्व' मित्येतद्बाध-

वाक्यभेदेनापीति । (कै)

द्वितीयवाक्यस्यापि गुप्तिज्किद्भ्यो यः सन् प्रत्यय इत्येवं रूपस्यैव स्वीकारेण तथापि भूतविभक्त्या निर्देशात्पाराथ्यमेव प्रकृत्यादीनामिति भावः ॥ तेषामेव तां प्रतिप्रयोजकत्वे हेतुमाह

संज्ञासंबन्धेति । (कै)

न च द्वितीयवाक्ये योग्यविभक्त्या विपरिणामः। योग्यविभक्तिनिर्दिष्टेषु सनादिषु चारितार्थ्यादिति भावः ॥ युक्त्यन्तरमप्याह

द्वयोश्चेति । (कै)

प्रत्ययसंज्ञायाः संज्ञित्वेन प्रत्ययापेक्षत्वात् प्रकृत्याद्यपेक्षायामपि प्रकृत्यादीनां प्रत्ययविधौ निमित्तभावेनोपक्षीणानां संज्ञां प्रत्यपेक्षाभावात्प्रत्ययसंज्ञा नेत्यर्थो "निमित्तिकार्यार्थत्वाद्" (भा) इत्यनेन प्रतिपादित इत्यर्थः। उभयासंबन्धस्य न्याय्यतरत्वादित्यभिमानः ॥ वस्तुतस्तु गुपादिभ्यः सन्प्रत्ययः परो भवतीत्येव विशिष्टस्य संज्ञिन एकवाक्यतया विधिसम्भवाद् भिन्नवाक्यत्वे मानाभावात् न प्रकृत्या-

---

सन्प्रत्यय इत्यादिरूपमेव। तथाच विरुद्धविभक्त्यावरुद्धानां प्रकृत्यादीनां प्रथमान्तेन प्रत्यय इत्यनेन सामानाधिकरण्यं सम्भाव्येव। न च द्वितीयवाक्ये प्रकृत्यादीनां विभक्तिविपरिणामेन प्रथमा कल्प्या योग्यविभक्ति-

---

पञ्चम्यादिषु सावकाशं बाधित्वा परत्वं स्यात्, यत्र समासाभावादुपसर्जनं पूर्वमित्यस्याप्रसक्तस्तत्रोपपदस्य परत्वं स्यात्, एवं च सति भोक्तुं व्रजतीत्येवमेव नित्यं स्यान्न तु व्रजति भोक्तुमिति, उपाधेरप्यर्थस्य परत्वासम्भवेऽपि तदाचिनः प्रयोगानियमे प्राप्ते परश्चेति नियमः स्यात्, आद्युदात्तत्वं

दीनां संज्ञा। नन्द्भिदा यजेतेत्यादौ नामधेयसंबन्धलाभाय वाक्यभेदं मन्यते न्यायविदः। तत्रोद्भिसंज्ञाविशिष्टस्यैव यागस्य विधानात्। शब्दार्थयोरभेदाच्च नान्वयो योग्यता नापि लक्षणा। अन्यथाऽसतः संज्ञा उपपत्तिवद् आद्युदात्तस्यापि विधानासम्भवात् प्रत्ययस्वरस्य तासेर्वृत्तिसंनियोगशिष्ट इति "लुटः प्रथमस्येति" (२।४।८५) सूत्रशेषस्थभाष्यविरोधः। यदैव तासिः प्रवर्त्तते तदैवोदात्तत्वयुक्त इति कैयटः॥ किञ्च संज्ञिनमुद्दिश्य संज्ञाविधाने पूर्वं बुद्धिविषयस्य संज्ञेत्यर्थस्य पूर्वोच्चारितः संज्ञी सतो मांसपिण्डस्य देवदत्त इति संज्ञाक्रियते सतो हि कार्यिणः कार्येण भवितव्यमित्यादिभाष्यस्वरसत्वेऽपि प्रकृते अस्य सूत्रस्य शाटकं वयेत्यादिवत् संज्ञाविशिष्टविधाने बाधकाभावात्। अयमेव निमित्तिकार्यार्थत्वादिति भाष्यस्यार्थः। अयं भावः। निमित्तिनोर्निर्ज्ञातत्वात्तेनैकवाक्यतया विशिष्टविधिसम्भवः। निमित्तिष्वन्वये तु वाक्यभेद आयतीति वाक्यभेदभिया न तैस्तस्याः संबन्ध इति॥

निर्दिष्टेषु सनादिषु संज्ञायाश्चरितार्थत्वात्। एवं च। आद्यवाक्ये सनादीनामेव अपूर्वविधानविषयतया प्राधान्यम्। एवं च द्वितीयेऽपि संज्ञिनमपेक्षमाणा संज्ञा पूर्वंच प्रधानतया. क्रममेव गृह्णीयात् न त्वप्रधानमपि। नन्वेवमपि विकारागमानां विधेयतया प्राधान्यात्संज्ञा

च यथायथं स्वरान्तरं बाधित्वा स्यात्, अङ्गसंज्ञा तु विधानप्रतिबद्धा न चेह प्रकृत्यादयः कुतश्चिद्विधीयन्त इति न सा प्रकृत्यादिषु परतः पूर्वस्य प्राप्नोति। ननु च प्रतियोगमुपस्थानेऽपि वाक्यभेदप्रसङ्गात्प्रकृत्यादीनां संज्ञा न भविष्यति। तथाहि। स्मरतेर्दृतिनाथयोः कर्मणोश्चपपदयोः पशौ कर्म-

प्रतिपादकानामिति । (कै)

अर्थप्रतिपादकत्वेन लोकप्रसिद्धानामित्यर्थः ॥

उपायभावेनेति । (कै)

काल्पनिकप्रकृतिप्रत्ययविभागमुपायत्वेनाश्रित्यान्वाख्यानादित्यर्थः ॥

तदनुगुणेति । (कै)

तत्र निमित्तित्वानुगुणप्रथमा अन्याः प्रायेण निमित्तत्वानुगुणा इत्याहुः ॥ बहुषु निर्द्धारणे उतरोनुपपन्न इत्यत आह

किं यदिति । (कै)

प्रधाने कार्यसंप्रत्ययादित्यस्य निमित्तिकार्यार्थत्वादित्यनेन पौनरुक्त्यमाशङ्क्याह

प्रत्ययसंज्ञेति । (कै)

पूर्वं प्रत्ययसंज्ञाया आकाङ्क्षामङ्गीकृत्य प्रकृत्यादीनां निरपेक्षत्वात् संज्ञाभाव इत्युक्तम् इदानीं तु प्रत्ययसंज्ञाया अपि गुणभूतेषु

दुर्वारेति चेत् । नैवम् । अन्वर्थसंज्ञाविज्ञानात् प्रतियन्त्यनेनार्थमिति हि प्रत्ययः विकारागमौ त्वनर्थकौ । न चैवमवेः क इत्यादीनां समासान्तानां च प्रत्ययसंज्ञा न स्यात् अनर्थकत्त्वादिति वाच्यम् । स्वार्थिका अपि प्रकृत्यर्थ-

दीन् प्रत्ययो भवतीत्येकं वाक्यं, ते च सनादयः प्रत्ययसंज्ञका इति द्वितीयं, सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते । नैतदस्ति । सनादीनामप्यसतां संज्ञानुपपत्तेर्वाक्यभेदेनैव संज्ञा विधेया ततश्च सनादीनामेकेन वाक्येन विधिरपरेण संज्ञाविधिः, एवं प्रकृत्यादीनामपि प्राप्नोति तत्राह । 'प्रकृत्यपपदेत्यादि' । अयमभिप्रायः । प्रकृत्यादीनां सनाद्युत्पत्तौ निमित्त-

आकाङ्क्षा नास्तीति प्रतिपाद्यत इति विशेष इति भावः। वाक्यभेदभिया तैस्तथा असंबन्ध इति प्रागुक्तं तेन तु तत्रान्वयप्रसक्त्यभाव एवोच्यते इति विशेष इति तत्त्वम्॥ भाष्ये

**को यातीति।** (भा)

उत्तरस्य वैकल्पिकत्वादप्रयोगः॥

**उभयोः संप्रत्ययो भवतीति।** (भा)

तथ कथयितुः संप्रत्ययत्ययस्तन्मूलकप्रयोगः। तथात्राप्याचार्यस्तेनैव तात्पर्येण प्रयुक्तवान्। शिष्याणां च तथैव बोध इति भावः॥

**प्रयोजनकृतमिति।** (कै)

प्रयोजकत्वकृतां प्रेरणाकृतामित्यर्थः॥ भाष्ये

**यथापुनर्** (भा)

इत्यव्ययम् अस्तुपुनरित्यर्थे॥

---

नार्थवन्त एवेति सिद्धान्तात्। यत्तु कल्पनामात्रमेतदिति। तन्न। प्रकृतिप्रत्ययार्थविभागस्य सर्वस्यापि काल्पनिकत्वाविशेषात्। नैषा कल्पना शास्त्रकृत्सम्मतेति चेन्न। द्वितीयेति सूत्रे पूरणार्थात्स्वार्थे अप्रत्ययस्यापि पूरणार्थतायाः भगवतैवोक्तेः। इहापि प्रत्याय्यन्त इति व्युत्पत्त्यन्तरमप्याश्रित्य

---

त्वेनोपादानात्पारार्थ्यात्स्वसंस्कारं प्रति प्रयोजकत्वाभावो यथा यः पीठे स देवदत्त इति पीठस्य देवदत्तसंज्ञा न भवति। ननु सनाद्युत्पत्तिवाक्ये प्रथमे तेषां पारार्थ्यं न द्वितीये संज्ञासंज्ञिसम्बन्धप्रतिपादनपरे वाक्ये, ततश्च संज्ञासंम्बन्धप्रतिपत्तौ सत्यां स्वार्थतापि सम्भवत्येव। तन्न, द्वितीयमपि वाक्यं संज्ञाविधानपरमेवरूपमेव गुप्तिज्किद्भ्यः सन् प्रत्यय इति, ततश्च तत्रापि भूतविभक्त्या निर्देशान्निमित्तत्वात्पारार्थ्यं स्थितमेव। किञ्च योगविभक्त्य-

किं कृतमिति। (भा)

प्रेरकत्वाभावादिति भावः॥ अपूर्वोपदर्शमात्रेण कथं प्राधान्यमत आह

तदर्थत्वादिति। (कै)

तन्निष्पादकत्वादित्यर्थः॥

प्रयोजकत्वादिति। (कै)

प्रयुज्यत इति प्रयोजकः प्रयोज्यस्तस्मात् निमित्तत्वादित्यर्थः॥

प्रधानत्वाच्चेति। (कै)

अपूर्वोपदेशादित्यर्थः॥

योग्यतासम्भवादिति। (कै)

समानविभक्तिकत्वरूपयोग्यतासम्भवादित्यर्थः॥

न हि परत्वनिमित्तेति। (कै)

तद्बाधे इत्यर्थः॥

तथा हि। (कै)

सति व्यापकाभावेन व्याप्याभावः सिध्येदिति भावः॥

---

प्रकृत्या अभिव्यज्यमानार्थत्वं स्वार्थिकानामस्तीति भाष्यकैयटयोः स्वीकाराच्च। न चैवं विकारागमयोः सम्भवति। प्रकृत्यवयवतया तदर्थ एवोपपत्तयात्। अपि चाप्रयोजनाभावान्नामीषां संज्ञा। न च परत्वमेव

---

भावाच्च न प्रकृत्यादीनां संज्ञा, प्रथमान्तस्य षष्ठ्यन्तस्य वा संज्ञासंबन्धं 'वृद्धिरादैच्' स्वं रूपं शब्दस्येति, न च द्वितीये वाक्ये योग्यविभक्त्यध्याहारेण संज्ञा भवितुमर्हति योग्यविभक्तिनिर्दिष्टेषु सनादिषु चरितार्थत्वात्,

## अपि तु प्रत्ययसंज्ञानिमित्तं परत्वमिति । (कै)

इदं चिन्त्यम् राजपुरुष इत्यादौ प्रत्ययत्वाभावेऽपि पुरुषपदस्य परत्वदर्शनात् ॥

## अकचामिति । (कै)

अकचः प्रत्ययत्वफलं प्रत्ययस्थादितीत्वम् ( ७ । ३ । ४४ ) ॥

## परविज्ञानमिति । (कै)

परश्चेति परिभाषाप्रत्ययसंज्ञाचास्या लिङ्गम् । प्रत्ययसंज्ञकः परो भवतीत्यर्थ इति भावः ॥

## अन्तरङ्गत्वात्स्थानीति । (कै)

आन्तरतम्येनेत्यर्थः । आद्युदात्तत्वं तु तव्यादौ चरितार्थमिति भावः ॥

## साक्षीति । (कै)

प्रत्ययविधानेन परत्वेन प्रतिबद्धेत्यर्थः ॥

---

प्रयोजनम् । यथा विकाराणां स्थानसम्बन्धस्य आगमानामवयवत्वेन सम्बन्धस्य च प्रतिपादनात् । न चाद्युदात्तत्वं प्रयोजनम् । आगमानामनुदात्तत्वविधानात् । यत्र तु प्रयोजनं लभ्यते तत्रेष्यत एवागमस्यापि प्रत्ययत्वम् । यथा अमः प्रकारस्येत्संज्ञार्थमिति । इदं त्ववधेयते । इनश्चवधः,

उपपदसंज्ञा तु सप्तमीनिर्दिष्टस्य विधीयमाना युक्तं यद्वाक्यभेदेन योगविभक्त्यध्याहारेण च भवतीति । किं च प्रधानेतरसंनिधौ प्रधाने कार्यसंप्रत्ययो भवति यस्य चापूर्वविधानं तत्प्रधानम् अतः प्रथमवाक्ये तावत्सनादीनामेव प्राधान्यं द्वितीयेऽपि संज्ञासंज्ञिनमपेक्षमाणा यत्पूर्ववाक्ये प्रधानत-

## अकारस्येत् संज्ञार्थमिति । (कै)

अत एव ल्यप्‌ह इत्यादिनिर्देशाः सङ्गच्छन्ते । अमः सत्रकारस्तु स्थानलोप इत्यत्र विशेषणार्थं इति भावः ॥ नन्वेवं "परविज्ञानादिति" (भा) पञ्चमी अनुपपन्ना हेतुत्वाभावादत आह

## फलमपीति । (कै)

भाष्ये "न च विकारागमाः परे" इत्येव पाठः । न तूत्तरं "सम्भवन्तौ"त्यपपाठ इत्याशयः । अत्राहुः । प्रत्यय इत्यादीनां त्रयाणामप्यधिकारत्वेन प्रतिसूत्रमुपस्थितौ एकवाक्यतया युगपदेव त्रयाणां विधानस्य न्याय्यत्वेन नान्योऽन्यं प्रत्यन्योऽन्यस्योद्देश्यता न्याय्येति कथं प्रत्ययसंज्ञायाः परत्वं फलं कथं वाद्युदात्तत्वमिति । अत एव लुटः प्रथमस्य ( २ । ४ । ८५ ) इत्यादिसूत्रस्थभाष्याविरोधस्तस्मादयमर्थः । स्थानषष्ठ्यादिभिर्देशाकाङ्क्षाया विकारादीनामभावेन पर इत्यस्यासबन्धे सन्नियोगशिष्टन्यायेन प्रत्यय इत्यादीनामप्यसंबन्ध इति ॥

---

नाभिनभं च, विरागविरक्तश्वेत्यादावादेशानां संज्ञा स्यात् अर्थवत्त्वाद्विधेयत्वेन प्राधान्यात् योग्यविभक्तिकत्वाच्चेति । संज्ञाप्रयोजनं तु स्थानिन आदेशेन निर्वर्तितत्वेन शब्दान्तरापेक्षया परत्वमस्तीति तस्मात्कर्तव्योऽत्र यत्न इति

---

यावगतं तदेवापेक्षते न तु पारतन्त्र्यादप्रधानमिति सिद्धमिष्टम् । एवमपि विकारागमानां प्राप्नोति, नैष दोषः, महती संज्ञा क्रियते ऽन्वर्थसंज्ञा यथा विज्ञायेत प्रतिजन्यनेनार्थमिति प्रत्यय इति, न च विकारागमाभ्यामर्थं प्रतियन्ति । यद्येवमिवेःक इत्यादीनां समासान्तानां च न स्याद्, नह्य

**परविज्ञानात्** (भा)

इत्यस्य तत्सन्नियोगशिष्टत्वादित्यर्थः। कश्चित्तु हणह (७।३।८९) इत्यादि निर्देशाच्छयासयोरिति (७।३।४५) ज्ञापकाच्च सन्नियोगशिष्टन्यायामित्यत्वेन प्रवर्त्तत एव संज्ञेति दिक्॥ एतदेव-ध्वनयन्विकारागमेषु परश्चेत्यस्याप्रवृत्तिं प्रश्नमुखेनोपपादयति भाष्ये

**• किं पुनरिति॥** (भा)

**पूर्वोदितस्येति।** (कै)

स्थानसंबन्धस्यावयवसंबन्धस्य चेत्यर्थः॥

**आनन्तर्यसंबन्धे इति।** (कै)

धातोरिति पञ्चमीनिर्देशेन परविधानमुपपद्यत इति भावः॥ ननु धातोरित्यनुवृत्त्याकारोऽनुवृत्त्या च वाक्यभेदेन प्रत्ययस्यापि विधानं स्यादत आह

**श्रुतयोरेवेति॥** (कै)

नन्वनुवृत्तप्रकृतेरपि विभक्तिविपरिणामेन षष्ठ्यन्तविशेषणतया कोयं प्रत्ययविधिरत आह

---

हरदत्तः। अत्रेदं वक्तव्यम्। हनस्तेत्यादिचकारेण न प्रत्ययसंज्ञामात्रस्यानुकर्षणार्थः। अधिकारादेव तल्लाभात्। किन्तु संज्ञिविशिष्टस्य। एवं च तेनैव निराकाँक्षा संज्ञा कथं वधादिभिः सम्बध्येत। क्षेमप्रियमद्रेश्चेत्यादौ तु

---

यामन्वयव्यतिरेकाभ्यां कश्चिदर्थो ऽवधार्यते तदभावेऽपि केवलाया एव प्रकृतेस्तदर्थावगमात्। यदप्युच्यते ऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थ एवैषामर्थ इति तदपि कल्पनामात्रम्, अन्वयव्यतिरेकगम्यत्वादर्थ-

प्रकृतिप्रत्ययेति ॥ (कै)

ननु हन्तिना धातुविशेषणात् कथं धातुमात्रग्रहणोऽत आह

हन्तेरिति ॥ (कै)

भाष्ये

यः स्वमर्थमिति। (भा)

प्रत्यायकत्वं च शब्दस्य स्वार्थविषयमेव गृह्यते योग्यत्वादित्यर्थः॥

पूर्वोपात्तेति। (कै)

यौगिकार्थस्य शब्दस्य संज्ञात्वेन विनियोगकाले शब्दस्यैव प्रवृत्तिनिमित्तत्वाङ्गीकारेण पूर्वोपात्तयौगिकार्थत्यागादित्यर्थः। संज्ञानां कृत्रिमत्वात्तस्य पूर्वोपात्तत्वं बोध्यम्। प्रकारान्तरम्। अन्यत्र शब्दस्य प्रवृत्तिनिमित्तत्वेऽपि महासंज्ञाविषये तादृशार्थ-वच्छब्दस्यैव तत्त्वमित्यादि ॥

---

शिवादिसामर्थ्यादावृत्त्या संज्ञालाभः। किं च नभं विरक्ष्मिति द्वितीयान्तं न तु प्रथमान्तम्। असावमुमादेशं लभते इत्याशयेन प्राचां व्यवहारात्। उक्तञ्च प्रातिशाख्ये। असावमुमिति तद्भावमुक्तमिति। समानाक्षरमन्तस्थं समक्षरं स्वरोदयमिति च। इकोयणचीति तदर्थः एवं स्थिते नभविरक्ष्योः

---

वत्त्वस्य। इतरेतराश्रयत्वं च भवति, सति प्रत्ययत्वे स्वार्थे विधानं स्वार्थे विधानात्स्वार्थवत्त्वे सति प्रत्ययसंज्ञेति, एवं तर्हि प्रयोजनाभावान्न भविष्यति। तथाहि। तेषां स्थानषष्ठ्या संबन्धस्यावयवसंबन्धस्य च प्रतिपादनात्परत्वं तावन्न सम्भवति, आगमानां चानुदात्तत्वविधानादाद्युदात्तत्वस्यासम्भवः, सति तु प्रयोजने आगमस्यापि क्रमः प्रकारस्येत्संज्ञार्थं भवत्येव संज्ञा. अथ

दुरुत्तरत्वादिति । (कै)

अन्वयव्यतिरेकाभ्यां वाच्यद्योत्यार्थाभावनिश्चयेन तेषामर्थवत्त्वाभावे शङ्किते प्रकृत्यर्थ एवास्याप्यर्थ इत्यसदुत्तरमित्यर्थः। स्वार्थे इत्यस्य चार्थराहित्ये एव तात्पर्यमिति भावः॥ कादीनां केनापि प्रत्याय्यमानत्वाभावात् कर्मव्युत्पत्तावपि कथं तेषां प्रत्ययत्वमर्थस्यैव तु तत्प्राप्नोतीत्यत आह

अभिधेयेति । (कै)

अभिधानं शब्दः। एकस्य शब्दस्य कथमुभयसाधनत्वमित्यत आह

एक एवेति॥ (कै)

निपातनादिति । (कै)

वस्तुतोऽसम्भावितत्वार्थात् प्रत्यय इति वक्तुमुचितम्॥

प्रत्ययस्येति । (कै)

अन्वयव्यतिरेकाभ्यां प्रत्ययस्यैवार्थवत्त्वं नागमानामिति भावः॥ वधमभविरङ्गाद्यादेशानामपि न स्वीयार्थप्रत्यापकता किं तु

---

संज्ञया सह विरुद्धविभक्त्यवरोधोऽपि स्पष्ट एवेति दिक्। अथ सनः स शब्दादारभ्य कपः पकारेण सर्पिति प्रत्याहारमाश्रित्य सप्रत्यय इत्येव कुतो नोक्तमिति चेन्न। प्रत्यासत्त्या सिपः पकारेण ग्रहणापत्तेः। व्याख्या तु

---

'हनस्य वधः' 'नाभिनभस्य' 'विराग विरङ्गस्य'त्यादौ वधादीनामनेकाल्मादेशानां संज्ञा कस्मान्न भवति, सम्भवति हि तेषु परत्वं प्रयोजनं, यद्यपि स्थानिन आदेशेन निवर्त्तितत्वान्न तदपेक्षं परत्वं शब्दान्तरापेक्षया स्यादेव परत्वं यथोक्तं प्राक् गुणादिषु अर्थवत्त्वं च तेषामस्ति विधेयत्वात्प्राधान्यं च

स्वान्यर्थप्रायकत्वेव। अत एव कोशादौ तेषां पृथगर्थानिर्देशः। अत एव च नभ्यशब्दादपि नाभिशब्दप्रकारिकस्तदर्थबोधो नाभिहित इति। न तु कदाचिदपि नभहित इति। येऽपि शास्त्रानभिज्ञास्तेऽपि वृद्धव्यवहारात्तथैव प्रतिपत्तिः। एतदर्थमेव भाष्ये स्वमर्थमित्यत्र स्वमिति पदोपादानं स्थानिनो नष्टत्वादन्येन प्रत्याय्यमानार्थकोऽपि नेति दिक् ॥

---

तमनमनमनथनास्वेति तनपः। तस्मादयथान्यासमेवास्तु। संज्ञाप्रयोजनं तु कर्तव्य इत्यादौ धातोरङ्गसंज्ञाप्रवृत्तावाङ्गो गुणः। यत्तु प्रत्ययाद्युदात्तत्वं फलमिति। तदापाततः। आद्युदात्तस्येत्यधिकारमाश्रित्य तस्य सुसाधत्वात् ॥

योग्या च विभक्तिः, अतः सर्वथा वधादिषु सञ्ज्ञानिवृत्तये यत्नः कर्त्तव्यः 'कर्त्तव्यं करणीयमिति'। अत्र प्रत्ययसञ्ज्ञायां धातोरङ्गसञ्ज्ञा, अङ्गस्य गुणः। अनन्तरमपि सनादिकमतिक्रम्य व्यवहितोऽपि तव्यदादिस्तदाहृतः, तस्याद्युदात्तादेरपि प्रत्ययकार्यस्य सम्भवात् सनादौ तु नित्स्वरेण धातुस्वरेण च तद्बाध्यते ॥

# परश्च । ३ । १ । २ ॥

## पञ्चमीति । (कै)

परशब्दाध्याहार एव व्याख्यास्यते न तु पूर्वशब्दाध्याहारो गापोष्टग् ( ३ । ३ । ८ ) इत्यादावपि षष्ठ्या आनन्तर्यार्थत्वेन धातोरिति पञ्चम्या पूर्ववदेव परशब्दाध्याहार इति भावः ॥

## अध्याहारेणेति । (कै)

तदर्थघटितवाक्यार्थस्य एकदेशस्य वृत्तिस्वीकारेणेत्यर्थः । एवम् पूर्वशब्दाध्याहारेणेत्यपि व्याख्येयम् । पूर्वशब्देति व्याख्यानं दुर्ज्ञेयमिति भावः ॥

## आनन्तर्य्यस्येति । (कै)

हलोऽनन्तरा ( १ । १ । ७ ) इत्यादौ तस्याव्यवहितपर्यायत्वादित्यर्थः । प्रत्ययनियमेऽन्येषां परदेशनियमस्याभावादभिमतं देशनियमं दर्शयति

---

परश्च ॥ अयमधिकारः परिभाषा वा । लिङ्गवती चेयम् । लिङ्गं तु प्रत्ययसंज्ञा । गुप्तिज्किद्भ्यः सन्नित्यादौ अपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी तत्र परः पूर्वो वेत्यनियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थ-

---

"परश्च" ॥ 'अयमप्यधिकार इति' । न केवलं प्रत्यय इत्ययमेवेत्यपि शब्दार्थः । 'योगे योग उपतिष्ठत इति' । अनेन परिभाषातो धिकारस्य भेदको धर्मो दर्शितः, परिभाषा हि न प्रतियोगमुपतिष्ठते किन्त्वेकदेशस्थितैव सर्वशास्त्रे व्याप्रियते । 'परश्च स भवतीत्यादि' । अनेनेच्छाया

बहुजेवेति ॥ (कै)

पञ्चमीनिर्देशे मध्यशब्दाध्याहारासम्भवादाह

षष्ठीति ॥ (कै)

शीर्षच्छेदाद्यः ठञ् ( ५ । १ । ६ ) इत्यादौ अव्ययसर्वनाम्नाम् ( ५ । ३ । ७१ ) इत्यादौ प्राक्टेरित्युपादानं विना ठेः प्राक्-विधेरसिद्धेः कथं नियमोऽत आह

अन्यथेति । (कै)

मध्यस्य तत्र टिप्रायरूप एव ग्राह्यो व्याख्यानादित्यभिमानः ॥

केचित्तु । (कै)

"प्राक्टेरि"त्यावर्त्य नियमो व्याख्येय इत्याहुः ॥ प्राक्टेरि-त्युपादानात् कथं मध्यमात्रापेक्षो नियमोऽत आह

मध्यमात्रेति ॥ (कै)

मध्यान्तरे इति । (कै)

शीर्षशब्द रेफकारयोरीकारहकारयोर्मध्ये च स्याद् इति भावः ॥ सामान्यनियमाश्रयणे तदुपस्थिति बीजमाह

---

मिदम् । गापोष्टगित्यादौ षष्ठीनिर्देशेऽपि आनन्तर्यरूपषष्ठ्यर्थस्य पूर्वपरयो-रविशेषादनियमस्तुल्य एव । स्यादेतत् । विभाषासुपोबहुच्पुरस्तादि ये-तन्नियमार्थमस्तु बहुजेव पुरस्ताद्भवति नान्य इति । ततश्च बहुचि पूर्वत्वस्य

---

एवास्याः परिभाषायाः प्रत्ययविधौ सर्वत्र व्यापारो दर्शितः, लिङ्गवती चेयं परिभाषा प्रत्ययसञ्ज्ञा च लिङ्गम् । 'धातोर्वेति' । क्रियावाचिन्याः प्रकृते-स्तिङन्तादेरप्युपलक्षणमेतत् । प्रातिपदिकाद्वेति' । अक्रियावाचिन्याः प्रकृ

**यन्मध्यसामान्यमिति ॥ (कै)**

नन्वत्र चदेशनियमे बह्वजादीनां नियतदेशत्वं न स्यात्। किञ्च देशनियमासम्भवः प्राधान्येन प्रत्ययनियमस्यैव युक्तत्वा-दित्यभिप्रेत्यभाष्ये

**एवमपीति ॥ (भा)**

तदाशयमाह .

**बहुजकचोरिति ॥ (कै)**

नन्वेवं "देशोनियम्यत" इति भाष्यमनुपपन्नमत आह

**प्रत्ययनियमेऽपीति ॥ (कै)**

ननु देशनियमेऽप्रधानसङ्कोचः प्रत्ययनियमे प्रधानसङ्कोचस्तत्र प्रधानसङ्कोचापेक्षयाऽप्रधानसङ्कोचस्य न्याय्यत्वेन देशनियम एवोचित इति चेन् न। "आगन्तूनामन्तेनिवेशश्च" इति न्यायेन तदन्त एवैवकारनिवेशात् "कर्मणि द्वितीयेत्यादौ" (२। ३। २) सूत्र-कारस्य प्रधानसङ्कोचकप्रत्ययनियम एव तात्पर्याच्च। किंच लोकेऽपि

---

नियतत्वादन्यः प्रत्ययः पर एव भविष्यति। न चैवमपि षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेण मध्येऽपि प्रसङ्ग एवेति वाच्यम्। अव्ययसर्वनाम्नामित्यनेन अकजेव प्रकृतिमध्ये नान्य इति नियमात्। न च बह्वजेव पुरस्तादकजेव

---

तेरिदमुपलक्षणं, तेन छगणोरपि ग्रहणम्। 'तैत्तिरीयमिति'। तित्तिरिणा प्रोक्तमधीते, 'तित्तिरिवरतन्तुखण्डिकोखाच्छण्' 'छन्दो ब्राह्मणानि च तद्विषयाणि' 'तदधीते तद्वेद' 'प्रोक्ताल्लुक्' ब्राह्मणकुलस्याभिधेयत्वान्नपुंस-कत्वम्। 'चकारः पुनरस्यैव समुच्चयार्थ इति'। अन्यस्य समुच्चेतव्यस्या-भावत्। 'तेनेति'। अन्यथा बहुलवचनस्य सर्वोपाधिव्यभिचारार्थत्वाद्-

प्रधानस्य राजादेरेव स्थाननियमादिदृश्यते राज्ञश्चैवस्थेयमित्यादिप्रकारेणेति दिक्॥ भाष्ये

**स कदाचित्पूर्वः कदाचित्पर इति।** (भा)

प्रतिलक्ष्यं लक्षणभेदादिविनिगमनाविरहाद्वा॥

**तस्मादिति।** (कै)

"ते प्राग्धातोरि"(१।४।८०)त्यादौ। उत्तरांशविकलाया इव परस्येति कृतेऽपि व्यवहितप्रयोगवारणाय प्रकृते एवोत्तरांशविकलाया इव च सूत्राभावे षष्ठ्यंशविकलायाः प्रकृतिरिति गूढोभिप्रायः॥ उक्तमभिप्रायमजानानः शङ्कते भाष्ये

**सतस्त्वेति॥** (भा)

कार्यं शब्ददर्शनाश्रयेण वैषम्यमित्याह

**यत्रेति॥** (कै)

**उत्तरस्येति।** (कै)

षष्ठीनिर्देशादिति भावः॥ स्वाभाविके परत्वे किं तस्मादित्युत्तरस्येत्यनेनेत्यत आह

---

मध्ये इति नियमे बकुलकचोर्नियमो न लभ्येतेति वाच्यम्। देशनियमार्थयोरपि वाक्ययोः बकुलकचोर्देशसम्बन्धप्रतीत्या निराकाङ्क्षतया तयोर्देशान्तरसम्बन्धे मानाभावात्। विकल्पस्यानेकदोषदुष्टत्वाच्च। न चाकलेव

---

यादिषु परत्वस्यापि विकल्पः सम्भाव्येत, इह 'गुप्तिज्किद्भ्यः सन्' इत्यादौ दिग्योगलक्षणा पञ्चमी, तत्र पूर्वः पर इति वा दिक्शब्दस्याश्रवणादिनियमेनाध्याहारे सत्यनियमेन प्रयोगप्रसङ्गे नियमार्थमिदं पर एव प्रत्ययो

**नित्या इति॥** (कै)

नन्वेकस्याः षष्ठ्या अर्थद्वयपरत्वं कथमित्यत आह

**प्रदेशेष्विति।** (कै)

तत्र तत्रोपस्थितं भिन्नं भिन्नमेवेत्यर्थः॥

**उत्तरस्य भावो भवतीति।** (कै)

भाष्ये परतः स्यादित्यनेन सूचितप्रत्ययः परो भवतीत्यनेनास्य समानार्थत्वादिति भावः॥

**निर्देशेति।** (कै)

लघुनिर्देश इत्यर्थः॥ ननु प्रत्ययस्यानियतदेशत्वे पूर्वमपि प्रत्ययप्रयोगे साधुत्वं स्यादत आह

**अयमर्थ इति।** (कै)

एवं च परस्य सतः प्रत्ययसंज्ञाविधानसामर्थ्यात्परशब्दाध्याहारे आवश्यके अन्याध्याहारे मानाभावासान्यदेशस्थस्य साधुत्वमिति भावः॥

---

प्राक् टेरिति नियमे प्रत्ययान्तरं टिप्राग्भागरूपमध्यविशेषे मा भूत्। मध्यान्तरे तु स्यादेवेति वाच्यम्। लक्ष्यसिद्धये मध्यसामान्यापेक्षनियमाभ्युपगमे बाधकाभवात्। किञ्च गुप्तिज्किद्भ्य इत्यादौ भ्यासादीनां परत्व-

---

न पूर्व इति, 'गापोष्टगि'त्यादौ षष्ठीनिर्देशेप्यानन्तर्यसंम्बन्धे षष्ठी विज्ञानादानन्तर्यस्य च पूर्वत्वेऽपि भावादनियमप्रसङ्ग एवेति तत्रापि नियमार्थमेव। नैतदस्ति प्रयोयनं, विभाषा सुपो बहुच् पुरस्तात्त्वि'त्येतन्नियमार्थं भविष्यति, बहुजेव पुरस्ताद्भवति नान्यः प्रत्यय इति, ततश्च बहुचि पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एव भविष्यति, षष्ठीनिर्देशेषु मध्यशब्दाध्याहारेण

## अनियतदेशा भवत्विति। (कै)

अभ्युपगमवादेनोक्तम्। भवत्वित्यस्य प्रसज्यतामिति वार्थः। "परश्चेति" ( ३। १। २ ) सूत्राकरणलाघवाय उरोधात्प्रत्ययसंज्ञासम्भवत्यप्येकवाक्यत्वे वाक्यभेदेन विधयेति तात्पर्यम्॥

## तद्देवेति। (कै)

"धातोः" "प्रातिपदिकादि"त्याद्यापत्तेस्ततः पर एव भविष्यति। ततः परस्यैव वा संज्ञेत्यादीत्यर्थः॥ पूर्वं प्रयोजनानुक्तेर्वाशब्दं भाष्यकृत्तदर्थं व्याचष्टे इत्याह

## वेति॥ (कै)

शास्त्रेण दृष्टानामेव लोपविधानात्कथमत्यन्तापरदृष्टतेत्यत आह

## परेणेति॥ (कै)

ननु परत्रोत्पन्नस्यैव प्रत्ययत्वेनापृक्तत्वप्रयुक्तलोप इति पूर्वभूतानान्नलोपो नापि साधुत्वमत आह

## तेषामिति। (कै)

ततश्च परस्य सतः प्रत्ययसंज्ञेति नियमाप्राप्त्या पूर्वोत्पन्नस्यापि लोपादिसिद्धिरित्यर्थः। अपृक्तसंज्ञा कदाचित्प्रत्ययत्ववतोऽपीति भावः॥

---

दर्शनेन अङ्गसंज्ञासूत्रे प्रत्यये इति सप्तमीबलेन च ङ्याप्प्रातिपदिकादित्यादौ पञ्चम्यध्याहारे निश्चिते तदैकरूप्याय प्रत्ययविधिपरायामष्टाध्याय्यां न

---

मध्येऽपि प्रसङ्ग इति चेन्न, 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति नियमाद् अकजेव प्रकृतिमध्ये भवति नान्य इति, नैतदेवं, यदि तावदेवं नियम बहुजेव पुरस्तादकजेव मध्य इति ततो बहुजकचो र्नियमो न स्यात्, अथ

न तु पूर्वभूतेति । (कै)

तथाचाग्निचीत्यपि कदाचित्स्यादिति भावः ॥

न हि तेष्विति । (कै)

एवं चौत्तरखेत्यस्य तथासंबन्ध इति भावः ॥ परश्चेत्तस्य करणे तु तत्सामर्थ्यात्परत्वबुद्धिविशिष्टो बोद्धः । क्विबित्यर्थ इति तात्पर्यम् ॥ नन्वत्यन्तासतामुत्पत्तिर्लोपो वा किमिति विधीयत इत्यत आह

केवलमिति । (कै)

प्रसङ्गादर्शनस्यैव लोपत्वेन प्रसक्तत्वबुद्धये उत्पत्तिबोधनमिति भावः ॥

णित्कार्यम् एव परभूतेति । (कै)

किति णिति पिति इतीत्यादीनां परसप्तमीत्वादिति भावः ॥

यद्वेति । (कै)

यद्विषये इत्यर्थः । एकविषये आवृत्त्या नानादेशविधाने मानाभावात् । युगपत्तु द्विसप्तकद्वयेनान्वयासम्भवः ॥ "एवं पचे

---

पूर्वादिपदान्तराध्याहारो न्याय्यः तत्किं परश्चेति सूत्रेन । उच्यते । प्रयोगनियमार्थमिदं, पर एव प्रत्ययो न केवल इति । अन्यथा प्रत्ययार्थमात्र-

---

बद्धचपुरस्तादेव अकज्मध्य एवेति ततो देशस्यानियतत्वात्तत्र प्रत्ययान्तरं स्यादेवेति सर्वथानिष्टप्रसङ्गः । किञ्च अकजेव प्राक् टेरित्येवं नियमे प्राक् टेः प्रत्ययान्तरं माभूत् मध्यान्तरे तु स्यादेव मध्यविशेषाश्रयत्वान्नियमस्य । न च 'तस्मादित्युत्तरस्ये'त्यनया परिभाषयात्र परत्वं सिद्ध्यति यत्र हि

इत्यस्यापि विषयविशेष इत्यर्थः। अन्यथासङ्गतिः स्पष्टैव। अत एव स्पृश इत्ययिमग्रन्थसङ्गतिः। प्रकारान्तरेण व्याख्याने तदसङ्गतिः॥ विषयविशेषमेवाह

**स्पृश इति।** (कै)

अत्रैकस्य स्पृश एव लक्ष्यत्वाच्च लक्ष्यभेदेनापि लक्षणावृत्तिः। एवं च कित्त्वसामर्थ्येनोत्तरस्य बौद्धो भावो भवतीत्यर्थो वक्तुं शब्दपरग्रहणाभावेऽपीत्याशयः॥ भाष्ये

**अपरभूतानामिति।** (भा)

न परभूता अपरभूता इति न विद्यन्ते परभूता एषामिति चार्थः। तेन केवलप्रत्ययानां केवलप्रकृतीनां चेत्यर्थः॥ तदेतदुक्तं

**अप्रत्ययिका** (भा)

इत्यादिना भाष्ये। प्रकृतिरर्थाभिधाने कर्त्तव्ये प्रत्ययिकापि प्रयुज्यमाना दृश्यत इत्यर्थः। तथा च तेषां लोके दृश्यमाना नाम साधुत्वप्रतिपादनाय "परश्चेति" सूत्रमिति भावः॥ भाष्ये यो बभ्रुर्मण्डुर्लमकः स देवदत्तः केत्यर्थः। देवदत्तस्तु नोदाहरणम्।

---

विवक्षायां किमस्य द्वयसमित्याद्यपि प्रयुज्येत। यदि तु प्रकृतिविशेषो-द्देशेनैव प्रत्ययस्य विधानात्केवलो न प्रयोज्यत इति ब्रूषे। एवमपि प्रकृत्यर्थ-

---

प्रागेव सतः कस्य चित् किञ्चिद्विधीयते यथा पदात्परयोरपादादौ वर्त्तमानयोर्युष्मदस्मदोर्वांनावौ भवत इति स तस्या विषयः, इह तु प्रागसन्त एव सनादयो विधीयन्ते न तेषां सम्बन्धि किञ्चित्, प्रत्ययसञ्ज्ञैव तेषां कार्यमिति चेन्न, एवमपि प्रागुत्पत्तिरनिवारिता स्यात्, तथाहि।

अन्यथा वाभ्रव्यादिषु प्रयोक्तव्येषु बभ्रुरित्यादिप्रयुज्यते इति कथनवत् दैवदत्तिरिति प्रयोक्तव्ये देवदत्त इत्यपि भाष्ये वक्तव्यं स्यात् कचित्तथापाठं दृष्ट्वाव्याचष्टे

देवदत्तादय इति। (कै)

बभ्रुरित्यादौ प्रकृतिप्रत्यययोर्द्वयोरपि प्रयोगात्कस्यासाधुत्वमुच्यते इत्यत आह

तदपत्ये इति॥ (कै)

अन्वभेदोपचाररूपलक्षणप्रयोगे साधुत्वनिश्चयात्कथमस्यासाधुत्वमिति शङ्कते

नन्विति। (कै)

नायमभेदोपचारेण प्रयोगः॥

भक्त्यादेरपि। (कै)

प्रतिपत्त्यापत्तेरित्युक्ताशयः। अभेदोपचारं विनोपगुसंबध्यपत्यमित्यर्थप्रतिपिपादयिषया प्रयुक्ता केवलाप्रकृतिस्तथाप्रयुक्तकेवलप्रत्ययश्चासाधुरित्याह

---

मात्रविवक्षायां केवला प्रकृतिः प्रयुज्यतेव। यथा पचपठइति। अतः प्रत्ययः परो भवत्येवेति नियमार्थमिदम्। आपदत्वनिर्वृत्तेस्वायं नियमः।

---

असतां सनादीनां सञ्ज्ञाविधिरनुपपन्न इत्येकेन वाक्येन सनादीनां विधिर्द्वितीयेन च तेषामेव संज्ञाविधिरित्यङ्गीकरणीयं, ततश्च द्वितीये वाक्ये सतः कार्यमिति कृत्वा परिभाषोपस्थानेन प्राक् प्रयुक्तानां सञ्ज्ञैव केवलो न स्यादत्यत्तिस्त्वनियतदेशैव स्यात्, प्रथमवाक्ये परिभाषानुपस्थानात्।

***तस्मादिति ॥ (कै)**

"बहुवचनात्मवद्" इत्यनेन तत्र बभ्वसंबध्यपत्यमित्यर्थविषय-लक्षणां दर्शयति

**अनेनासाधुत्वमिति । (कै)**

उकारीत्यापत्यार्थबोधविवक्षायाम्बभ्रुरित्यस्य प्रमाणमित्यर्थे द्वयसज्मात्रस्येत्यर्थः। अयंभावः। "समानेर्थे चाख्याते सम्याख्यातस्य निवर्त्तक" इत्युक्तेस्तत्रार्थे प्रत्ययपरस्य साधुत्वकथनात् केवलप्रकृत्या-देरसाधुत्वमितिरघूणामित्यादौ तु तदपत्ये रघुत्वारोपेण रघुत्वेनैव रूपेण तेषां बोधान्नासाधुत्वम्। तत्संबन्ध्यपत्यमित्यर्थे हि अनुसमा-सयोरेव साधुत्वमिति सूत्रार्थात्। बभ्रुमण्डू गर्गादौ लमको नडादि-चपकादिषु। प्रागुक्तपङ्क्तिभिः परत्वे सिद्धे "परश्चे"त्येतत्प्रत्ययः परो भवत्येवेति नियमार्थं तेन केवलप्रकृतेर्न प्रयोगो नापि केवल-प्रत्ययस्येति सिद्धं भाष्ये असाधुत्वोपपादकं परस्येत्यस्योदाहरणत्वोप-पादकञ्च ॥

' सोऽयमित्यभिसम्बन्धात्तद्धितेन विना यदि।
बभ्र्वादयः प्रयुज्येरन्नपत्ये नियमो भवेत् ॥

---

तदेतत्तत्रतत्रोच्यते। न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्यय इति अपदं न प्रयुञ्जीतेति च। अपरिनिष्ठितं न प्रयुञ्जीतेति तस्यार्थ इत्युक्तम्।

---

स्यादेतत्,। 'गुपिज्किद्भ्यः सन्नि' त्यादावेकैव पञ्चमी सा चैकमेव दिक्शब्दमध्याहरेत् तत्र पूर्वः परो वेति संशये पूर्वशब्दाध्याहारे द्वितीयस्य वाक्यस्य स्वरसभङ्गः स्यात्, गुपादिभ्यः परः सन् प्रत्ययसञ्ज्ञो

## अवृत्तिजा इति। (कै)

एकार्थीभावरूपवृत्तिविषयाभावेऽपि जाता उच्चारिता वृत्तिजद्वयसादिसदृशाः प्रमाणार्थका बहुसदृशमहादिवाचि बहुशब्दवत्तद्वयसादयोऽपि साधवः स्युरिति तद्वारणार्थं "परश्चे"ति इति भाष्यार्थः। बहुजपेक्षयाभिन्नार्थत्वादस्तु बहुशब्दस्य द्वयसादयोऽपि साधवः स्युरिति तद्वारणार्थं "यद्वा"स्य साधुत्वम्। एषां त्वर्थान्तरवृत्तित्वाभावात् साधुत्वमेवेति भावः॥ तदाह

## अवृत्तिजा अपि भ्रान्त्येति। (कै)

तत्सदृशानुपूर्वीकत्वात्तदर्थकत्वभ्रान्त्येत्यर्थः। प्रत्ययः पर एवेति नियमे अर्थतः शब्दतश्च यः प्रत्ययसजातीयः स पर एवेत्यर्थेनास्यासाधुत्वं बोध्यम्। अन्यथाऽस्य प्रत्ययत्वाभावेन कथं नियमेनासाधुत्वं बोध्येत। एतेन प्रकृत्युद्देशेनैव प्रत्ययानां विधानात्केवलप्रत्ययस्यासाधुत्वे सिद्धे कथमिदं परश्चेत्यस्य प्रयोजनमित्यपास्तम्॥

---

यत्त्विह भाष्ये बभ्रुमण्डुलमक इत्यादीनामपशब्दत्वमुक्तम्, यच्च पदमञ्जर्यां तारतम्यादिशब्दानाम्। तत्सर्वं लाक्षणिकत्वमनादृत्य प्रयुक्तेषु बोध्यम्।

---

भवतीति हि तस्य स्वरूपतः प्राप्तोर्थः स च पूर्ववाक्ये पूर्वशब्दाध्याहारे सति भग्नः स्यात्, अतस्तत्परिरक्षणाय परशब्द एवाध्याहरिष्यते, भवतु वोत्पत्तिरनियतदेशा पश्चात्तु सत एव परस्य यत्प्रत्ययसंज्ञादिशास्त्रकार्यं तन्नान्यदेशस्य यद्देशस्य च शास्त्रीयं कार्यं तद्देशोऽन्यदेशं निवर्त्तयिष्यति विशेषशास्त्रान्वितत्वेन तस्यैव साधुत्वादिति, अस्त्वेवमथ येषु प्रत्ययसंज्ञैव न भवति 'शमेः खः' शङ्खः 'कषेष्ठः' कष्ठ इत्यादिषु, तेषु कथं परत्वं द्वितीयवाक्यव्यापाराभावात्, परतो वा कथं भवानपि

अन्येत्विति। (कै)

अत्र पक्षे बहोरपि इयमादितुल्यत्वेन दृष्टान्ततापत्तिरित्यरुचिः। धातोरिच्छायां वा सन्प्रत्ययसंज्ञो भवतीत्यर्थे प्रधानबाधस्यान्याय्यत्वेनाप्रधानं संज्ञाया एव विकल्पः स्यात्। न च स इष्टपरग्रहणे तु तत्सामर्थ्यात्प्रधानन्यायबाधेन सन एव विकल्प इति "वा वचने चे"त्यादिभाष्यस्य तात्पर्यार्थः॥ तमुपपादयति।

तस्मादित्युत्तरेति। (कै)

परश्चेत्यस्य सत्त्वेऽपि अप्रधानत्वात्परत्वस्यैव विकल्पः स्यादिति दूषयति

न त्वचेति॥ (कै)

नियतत्वादिति। (कै)

तथा च तद्विकल्पो नेष्ट इति भावः॥

दृश्यते हि गोणीशब्दस्य गवि गोणीसादृश्यशक्तिभ्रमाभ्यां प्रयुक्तस्य साध्वसाधुत्वव्यवस्था। अत एव बहुच इञ इति सूत्रे रभृशब्दस्य तदपत्ये सत्त-

- - -

हि यः प्रत्ययः स पर इति प्रत्ययपूर्वकं परत्वं परिभाष्यते, सत्यं, परिभाषापक्षे न स्यात्परत्वम् अधिकारपक्षे तु प्रत्ययत्वपूर्वकं परत्वं न भवति किं तु परत्वविशिष्टस्यैवोत्पन्नस्य पश्चात्प्रत्ययसञ्ज्ञा, इह तु बहुलवचनात्प्रत्ययत्वाभावेपि परत्वमविरुद्धम्, एवमपि नार्थ एतेन बहुलवचनादेव परत्वमेवात्र व्यवस्थास्यते, एवं तर्हि प्रयोगनियमार्थमिदं पर एव प्रत्ययो न केवल इति, अन्यथा प्रत्ययार्थमात्रविवक्षायां केवलोपि प्रत्ययः प्रयुज्येत यथा किमस्य इयमं किमस्य मात्रमिति, यथा वा प्रकर्षविवक्षायां तरतमभाव

तस्मादिति वचनाद्वेति । (कै)

तेन सूत्रेण इतरस्येत्यस्याप्युपस्थितावेकार्थकशब्दद्वयेन नित्यं परत्वस्य बोधनेन पश्चात्तद्विरुद्धाविकल्पस्तस्य बोधयितुमशक्य इत्यर्थः ॥ भाष्ये

वा पर इत्येतदभिसंबध्यत इति (भा)

यः परः स वा भवतीत्यर्थः ॥

तस्या एवेति । (कै)

प्रधानत्वेन प्रत्ययविकल्पस्यान्याय्यत्वादिति भावः ॥

प्रत्याख्यात इति । (कै)

सत्त्वेऽपि न संज्ञायाविशेषणं तद्विकल्पानिष्टेः । परस्येति सत्त्वेऽपि परत्वविकल्पाभाववत् तच सामर्थ्यात् तृच्या वाकावाधभ्रमनिवृत्त्यर्थं सन एव विशेषणं वा ग्रहणं ध्वनितश्चेदं "सामर्थानां प्रथमादि"ति ( ४ । १ । ८२ ) सूत्रे भाष्ये इत्यपि बोध्यम् ॥

---

शया साधुत्वं हरदत्तेनोक्तम् । प्रकृतसूत्रेऽपि नो खल्वारभ्यमाणमप्येतल्ल-क्षणया प्रयोगं निवारयितुमर्हतीत्युक्तन्तेनैव । अत एव तारतम्यमित्यस्य

---

तारतम्यमिति, ननु सर्वत्र प्रकृतिविशेषं निर्दिश्यैव प्रत्ययो विधीयते तत्र पूर्वोक्तया नीत्या परत्वविशिष्टस्यैव विधानमिति नास्ति केवलस्य प्रयोगः, एवमपि प्रकृत्यर्थमात्रविवक्षायां केवलायाः प्रकृतेः प्रयोगः स्यादेव यथा पच इत्येति, यत्र पुनरुभयं विवक्षितं प्रकृत्यर्थः प्रत्ययार्थश्च न तत्र केवलायाः प्रकृतेः प्रयोगप्रसङ्गः, न केवला प्रकृतिः प्रत्ययार्थमभिधातुं समर्थेति, लक्षणया समर्थेति चेत् न खल्वारभ्यमाणमप्येतल्लक्षणया प्रयोगं निवार-

प्रयोगनियमार्थमिदमिति । (कै)

प्रयोगनियमार्थमेवेदमित्यर्थः । क्वचित्तथैव पाठः ॥ भाष्ये

प्रत्ययपरैवेति । (भा)

सामर्थ्यात्प्रत्ययो नित्यं सदा परः प्रयोक्तव्य इत्यर्थं तेन नियम-विद्धिरित्यर्थः ॥ ननु पर एव स्यादिति नियमे वभ्रुरित्यादेरपि साधुत्वं स्यात् इति चेत्तपरः स्यादेवेत्यर्थात् ॥ तद्भनयन्व्याचष्टेनि

नित्यं पर इति । (कै)

न कदाचित्परो न प्रयोजयतीति तेनोभयनियमफलालाभ इति भावः ॥



शब्दपरस्यार्थे व्याख्यया साधुत्वं कैयटेन साधकतमग्रहणमिति सूत्रे ध्वनितमिति दिक् ॥

यितुमर्हति, अतः केवलप्रकृत्यर्थविवक्षायां केवला प्रकृतिर्न प्रयोज्येति सूत्रारम्भः, च शब्दस्यावधारणे, प्रत्ययः परो भवत्येव न तु कदाचिन्न भवतीति वचनव्यक्तिः, आपदत्वनिष्पत्तेश्चायं नियमः, निष्पन्ने तु पदे तावदेव प्रयुज्यते, अपरार्थान्तरविवक्षायां तु तस्मादपि प्रत्ययान्तरं भवति ॥

# आद्युदात्तश्च । ३ । १ । ३ ॥

एते त्रयोऽप्यधिकाराः । यत्तु परश्चाद्युदात्तश्चेत्यनयोः परिभाषात्वमुक्तम् । तत्र लिङ्गाभावात् । न च प्रत्ययसंज्ञैव लिङ्गम् । एकवाक्यतया त्रयाणामपि विधानेनान्यतरस्याभ्यन्तरलिङ्गत्वायोगात् सहविधानं चात्रैव सूत्रे भाष्ये ऽग्रे स्फुटतरम् ॥ भाष्ये

**अन्तोदात्तो मा भूदिति ।** (भा)

अस्वरकाच्च उच्चारणाभावेऽपि आद्युदात्तत्वनियमो न स्यादित्यर्थः ॥

**नैतदिति ।** (भा)

अस्वरकोच्चारणाभावादनियतान्तोदात्तत्वादौ प्राप्ते

---

आद्युदात्तश्च ॥ अयमप्यधिकारः परिभाषा वा प्राग्वत् । तित्तिरिणा प्रोक्तमधीते तैत्तिरीयं ब्राह्मणकुलं, तित्तिरिवरतन्तुखण्डिकोखाच्छण् । छन्दोब्राह्मणानि च तद्विषयाणि । तदधीते तद्वेद । प्रोक्ताल्लुक् । आद्यन्ता-दिष्वपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ॥ इह गोशब्द उदात्तः । स्यादेतत् । अस्वरकस्याच उच्चारणासम्भवात् सर्व एव स्वरविधिर्नियमार्थः । तत्र चित

---

"आद्युदात्तश्च" ॥ इहास्वरकस्याच उच्चारणासम्भवात्सर्व एव स्वर-विधिर्नियमार्थः, तत्र 'चित' एवान्त उदात्तः. नित्येव मध्य उदात्तः, तिदेव स्वरितः सुप्पितावेवानुदात्तौ, दूरात्सम्बुद्धावेवैकश्रुत्यमिति, स्वरान्तराणा-मन्यत्र नियमात्पारिशेष्यादाद्युदात्त एव प्रत्ययो भविष्यति नास्वरको नाप्यन्यस्वरकस्तत्राह 'अनियतस्वरः प्रत्ययप्रसङ्ग इति' । अनियतः स्वरो यस्य

## चित (भा)

इत्यादि । चित एवेत्यादिनियमार्थः । प्रत्ययविषयैर्नियमैरन्येषु स्वरेषु प्रतिबद्धेषु अस्वरकोच्चारणासम्भवादुदात्त एव भविष्यतीति किमनेन सूत्रेणेति भावः ॥ ननु लोके वैस्वर्यनियमाभावे नास्वरकस्याप्युच्चारणमस्त्येव । उदात्तादीनामभावस्यैकश्रुतित्वात् । एकश्रुतेरतिरिक्तत्वे तु सापि स्यादिति कथमाद्युदात्तत्वसिद्धिर्न च दूरात्सम्बुद्धावेव सापिनियता विभाषाछन्दसीत्यादेर्वैपर्थ्यापत्तेः । तेनात्रापि पाक्षिकाः तस्या दुर्वारत्वमिति चेन्न लोके वैस्वर्यपक्षे वेदे चाद्युदात्तार्थमिदं सूत्रं नियमैः सिद्धत्वाद्व्यर्थमिति भाष्याशयात् पक्षे लोके एकश्रुतिरिष्टैवेत्याहुः ॥

## अनियतस्वरेति । (कै)

पूर्वनियमे तु चितोऽन्यस्वरा व्यावृत्त्या नियतत्वास्तदर्थानापत्त्या इष्टा विरोधादावृत्त्योभयविधनियमे मानाभावाच्चान्तोदात्त एव चिदित्येव नियमः स्यादित्यन्यत्रानियमः स्याद् इत्यर्थः ॥ भाष्ये

एवान्तोदात्तः रित एव मध्योदात्तः । तिदेव स्वरितः । सुप्पितावेवानुदात्तौ । दूरात्सम्बुद्धावेवैकश्रुत्यमिति स्वरान्तराणामन्यत्र नियमात्पारिशेष्यात्प्रत्यय आद्युदात्त एव भविष्यति नास्वरकः, नाप्यन्यस्वरकः तत्किमनेन सूत्रेणेति चेन्नैवम् । उक्तरीत्या आद्युदात्तत्वमपि ञ्नित्यादिरित्यादौ

सोऽनियतस्वरः, स चासौ प्रत्ययश्चानियतस्वरप्रत्ययः यस्य प्रसङ्ग प्रत्ययोऽनियतस्वरो मा भूदित्येवमर्थमित्यर्थः । अनियतस्वरप्रसङ्ग इति पाठे त्वनियतस्य स्वरस्य प्रसङ्ग इत्यर्थः । अयमभिप्रायः । आद्युदात्तत्वमपि ञ्नित्यादिर्नित्य'मित्यादौ नियतत्वान्न स्याद् अन्यत्रानियमः स्यादेव यथाय

**संज्ञासन्नियोगेनेति ।** (भा)

अत्र करणे त्रयाणामप्यधिकारत्वादेकवाक्यतया चितयविशिष्टतव्यादेर्विधानात् । अन्यत्र करणे तु प्रत्ययानुवादेन विधानादसंनियोग इति भावः ॥

**द्विराद्युदात्तग्रहणमिति ।** (भा)

प्रत्ययश्च चेति करणेऽपि तस्याद्युदात्तग्रहणात् लघुत्वमिति भावः ॥

**तदादेराद्युदात्तत्वमिति ।** (भा)

तदादेरिति तत् पुरुषः । तदन्तस्येति बहुव्रीहिः ॥

**उत्पन्नः प्रत्यय इति ।** (भा)

प्रत्ययग्रहणे यस्मादिति यदि भाषाया अनुवादविषयत्वादिति भावः ॥ तदुपपादयन् व्याचष्टे

---

नियम्येत । किञ्च त्वदुक्तनियमे चिदादीनामनियमः स्यात् । अतश्चितोन्त एवेत्यादि व्याख्येयम् । ततश्च कृत्यादीनामनियतस्वरत्वं स्यात् । अपि च रित्येवेति नियमेनान्यत्रोपोत्तमरूपमध्यविशेष उदात्तो मा भूत् । मध्यान्तरं तु स्यादेव । सामान्यापेक्षनियमे च व्याख्यानमेव शरणीकरणीयं स्यात् । तस्मात्सूत्रारम्भ एवोचितः । स्यादेतत् । ञ्नित्यादिर्नित्यम्, प्रत्ययस्य च

---

नियमो नास्ति । किञ्च त्वदुक्ते नियमे चिदादीनामनियमः स्याद् अतश्चितोन्त एव तित्स्वरित एवेत्यादिकं तत्रतत्र नियमस्वरूपमाश्रयणीयं ततश्च प्रत्ययस्यानियतस्वरत्वमेव स्यात् । किञ्च रित्येवोपोत्तममुदात्तमित्यपि नियमेऽन्यत्रोपोत्तममुदात्तं मा भूद् मध्यान्तरं तु स्यादेव मध्यविशेषाश्रयत्वान्नियमस्य, तस्मादेव एकाचः प्रत्ययास्त्वनियतस्वरप्रसङ्गे वचनमिदमुदात्तार्थं

उपद्यमान एवेति । (कै)

तथा चेह करणे प्रत्ययस्यानुवाद्यत्वाभावान्न परिभाषोपस्थिति-रिति भावः ॥

ञ्नित्यादिरिति । (कै)

ञ्निदन्तस्य ञ्निति परे पूर्वस्य वाद्युदात्तविधायकः ॥ ननु प्रत्ययस्येत्यनेन सिद्धे ञ्नित्यादिरिति सूत्रं संज्ञिन्येव तदादितदन्तग्रहणाभावस्य ज्ञापकं किं न स्यादिति चेन्न। प्रथमे ञ्नित्यादिरिति सूत्रे विरोधोपस्थित्यभावेनोत्तरकालिकप्रत्ययस्येत्यस्य बोध एव तदुपस्थित्या तत्रैव तदभावकल्पनेत्याशयात् प्रातिपदिकान्तोदात्तत्वमिति स्वरविधौ सञ्जातः कार्यार्थस्य षष्ठे वक्ष्यमाणत्वादनुदात्तत्वं सर्वस्येति तात्पर्यम् । पूर्वप्रयोजनस्य ज्ञापकेन खण्डनादाह

तदर्थ इति ॥ (कै)

अन्यथेति । (कै)

षष्ठे सूत्रकरणे इत्यर्थः । तस्मादागमानुदात्तत्वसिद्धये इह वचनमिति भावः । एतदुत्तरं भाष्यमेकदेश्युक्तिम् ॥ भाष्ये

---

तत्सार्वधातुकमनुदात्तम् । सुप्पितौ चेति षष्ठ एव सूत्र्यताम् । एवं स्वरप्रकरणे पाठात्सन्दर्भशुद्धिः । आद्युदात्तनुदात्तशब्दयोस्तत्रत्ययोरेवोपजीवनाल्लाघवं च । नन्वेवं प्रत्ययग्रहणपरिभाषया तदन्तस्य स्वरः स्यात् । इह

---

ये पुनरनेकाचः प्रत्ययास्तेषु देशस्याप्यनियमः प्राप्नोति कदा चिदादेः कदा चिन्मध्यस्य कदा चिदन्त्यस्येति तेषु वचनमिदमुदात्तार्थं तत्राप्यादेरुदात्तार्थमिति । किमर्थं पुनः प्रत्ययसंज्ञासन्नियोगेनायं स्वर उच्यते, न 'अनि-

वक्ष्यामीति। (भा)

व्याख्यास्यामि ज्ञापकादित्यर्थः॥

अन्यथेति। (कै)

शेषनिघातेनागमानुदात्तत्ववादी॥

के पुनः (भा)

इत्यस्य शेषनिघातेन यत्र न सिध्यति ते के इत्यर्थः। इम् इजन्तत्वे ङिमतीति चित इति चोदात्तत्वे शेषनिघातेन सिद्धेराह

लुडिति॥ (कै)

षष्ठाध्याये प्रत्ययस्य चेति सूत्रकरणवादी उत्तरति भाष्ये

इट्। लवितेति। (भा)

तद्गमयन् व्याचष्टे-

तासिभक्तत्वादिडुदात्त इति। (कै)

एवञ्च लवितेत्यादौ उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वसिद्धिरागमानुदात्तवचनस्य षाष्ठसूत्रवादिमते फलम् इत्यर्थः॥ अपरः फलं नास्तीत्याह भाष्ये

---

तु क्रियमाणे आद्युदात्तश्चेत्यस्य प्रतियोगमुपस्थाने सत्युत्पद्यमान एव तव्यादिरुदात्तः एवं तिबादिरनुदात्तः। अतः प्रत्ययसंज्ञासन्नियोगेन स्वरो विधीयत इति चेत्। नैवम्। षाष्ठत्वेऽपि ज्ञापकेन तदन्तविधिनिरास-

---

त्यादिर्नित्यं' प्रत्ययस्य च लसार्वधातुकमनुदात्तं सुप्पितौ चेति स्वरप्रकरण एवोच्येत। एवं हि प्रकरणमभिन्नं भवति, किञ्च द्विराद्युदात्तग्रहणं द्विरनुदात्तग्रहणं न कर्त्तव्यं भवति। स्यादेतत्। तत्र क्रियमाणे प्रत्यय-

इट् तावन्न प्रयोजयतीति । (भा)

षष्ठतृतीययोरन्यतरत्र पाठेऽपि अन्तरङ्गत्वात्पूर्वमेवाद्युदात्तत्व-प्रवृत्त्या ततः शेषनिघातेनेटोऽनुदात्तत्वे उदात्तनिवृत्तिस्वरसिद्धि-रित्यर्थः। परोऽन्तरङ्गत्वमपश्यन् स्वमते परत्वेन पूर्वमिडागमं स्थापयितुम् आह

इट्मिह (भा)

इत्यादिना परत्वादिडागम इत्यन्तेन ॥ अपरः स्वाशयं प्रकटयति

अन्तरङ्गस्तर्हीति । (भा)

पृष्ठे सूत्रकरणेऽपि ज्ञापकात्तदादिविध्यभावेनान्तरङ्गत्वात्पूर्वं स्वरे पश्चादिटि उदात्तनिवृत्तिस्वरे शेषनिघातसिद्धे उदात्तत्वं निष्फलमिति भावः ॥

उत्पत्तिसन्नियोगेनेति । (भा)

उत्पत्तिमात्र निमित्तत्वेनेत्यर्थः। नेदं भाष्यं तृतीये सूत्रमिति पक्षे उपक्रमोपसंहारविरोधात् । अतएव त्ववितव्यमित्यपि न

सम्भवात् । तथाहि । प्रत्ययस्य चेत्यत्र न तदन्तविधिरग्निरित्यादिरित्या-रम्भात् । सुप्तिङौ चेत्यत्रापि न, धातोरित्याद्यारम्भात् । यदि हि प्रत्यया-न्तस्यानुदात्तत्वं स्यात्तर्हि धातुप्रातिपदिकयोरन्तोदात्तविधिर्निर्विषय एव

ग्रहणपरिभाषया तदन्तस्य स्वरः प्राप्नोति, इह तु क्रियमाणे नायं दोषो भवेद् उत्पन्नो हि प्रत्ययस्तदाश्रयाणां तदन्तविध्यादीनां निमित्तं भवति न त्वत्पद्यमानः, न खल्वत्पद्यमानो घट उदकाहरणादीनां निमित्तमवकल्पते ततश्चाद्युदात्तत्वेऽस्य प्रतियोगमुपस्थाने सति उत्पद्यमान एव तव्यदादिरा-द्युदात्तो भवति, एवं तिबादिरनुदात्त इति दोषाभावः, अतः प्रत्ययसंज्ञा-

फलम्। अन्तरङ्गत्वात्पूर्वं स्वरप्रवृत्तेः इड्विधौ प्रकृतिप्रत्ययोभयाश्रयत्वे बीजम् आह

## अङ्गस्येति। (कै)

अङ्गसंज्ञानिमित्तस्येत्यर्थः। एवञ्च तस्या उभयाश्रितत्वादस्यापि तत्त्वमिति भावः॥ एवं शेषनिघातेनागमानुदात्तत्वमिति वादिना षष्ठे सूत्रारम्भवादिनं प्रति आगमा उदात्तवचनस्येष्टः प्रयोजनत्वाभावे उक्ते प्रयोजनान्तरमाह

## सीयुट् तर्हीति। (भा)

अनवकाशत्वेऽप्यस्यैव विशेषविहितत्वस्य बलवत्त्वप्रयोजकत्वादाह

## परत्वाद्वेति। (कै)

आदेशनिमित्ताद्युदात्तत्वस्य यात इत्यादिरवकाशः अपिषीष्टेत्यादौ असार्वधातुकानुदात्तत्वात्सीयुटश्चावकाशः प्रकृते उभयप्रसङ्गे परत्वात्सीयुडित्यर्थः। लावस्थापान्तु न स्वरस्तस्यानच्कत्वात्। न च पूर्वं सीयुटि अनिर्दिश्यमानत्वात्समुदायस्य व्यवहितत्वाच्चानिर्दिश्य-

स्यात्। यत्र हि प्रत्ययोनुदात्तो याति वृत्ताणित्यादौ तत्रैव प्रकृतिस्वरः श्रूयते। यातो यान्ति वृत्तत्वं वृत्ततेत्यादौ तु सतिशिष्टेन प्रत्ययस्वरेण बाध्यते। तस्मात् षष्ठे सूत्रकरणमेवोचितमिति चेत्। मैवम्। गोपायति

---

सन्नियोगेन स्वरो विधीयत इति। तन्न, ज्ञापकात्सिद्धं, यदयं अनित्यादिरुदात्तो भवतीत्याह, तज्ज्ञापयति प्रत्ययस्य चेत्यत्र न तदन्तविधिर्भवतीत्यनुदात्तत्वमपि तदन्तस्य न भविष्यति, धातोरन्त उदात्तो भवतीत्यादेः प्रकृतिस्वरस्य विधानसामर्थ्यात्। यत्र ह्यनुदात्तः प्रत्ययो याति वृत्ताभ्यामित्यादौ तत्र प्रकृतिस्वरः श्रूयते यातो यान्ति वृत्तत्वमित्यादौ सतिशिष्टेन

मानस्येत्यादेश्चाप्रवृत्तिरेवस्यादिति वाच्यम् । धातोरित्यस्य विहित-विशेषणत्वाङ्गीकारेण व्यवहितेऽपि प्रवृत्तेः । एवं च तृतीये एत-त्सूत्रपाठेऽपि आगमा उदात्तत्ववचनमावश्यकम् इत्याह भाष्ये

क्रियमाणेऽपीति । (भा)

यद्यपीति वादीनां प्रत्ययत्वं स्थानिवत्त्वेन सिद्धम् । तथापि अधिकृतस्यासंबन्धे मानाभाव इति प्रत्ययसंज्ञासन्नियोगेनेत्युक्तम् । परस्येत्यस्याप्यत्र संबन्धे बाधकाभावः । धातोः परत्वस्यापि सत्त्वात् । न च तृतीये सूत्रे तस्य स्थाने इडुदात्तो भवतीति उत्पत्तिकाल एव स्वरविधानादनुवादविषयाया यदागमा इति परिभाषाया अप्रवृत्तागमविशिष्टस्योदात्तत्वाप्राप्त्योच्चार्यमाणस्येट एवाद्युदात्तत्वे सीयुटः शेषनिघातेन सिद्धिरिति वाच्यम् । आगमसन्निधाने विधीयमानस्यापि तस्य प्रत्ययसंज्ञाविशिष्टे एवाद्युदात्तत्वं च तत्स-न्नियोगेन विशिष्टे एवेत्यभिमानात् । अन्यथा तावत एव पृथक्

---

धूपायतीत्यत्र उत्पत्तिसंनियोगेनाद्युदात्तत्वे कृते ततः सनाद्यन्ता इति धातुत्वे धातोरित्यन्तोदात्तो भवति । यदि तु ञ्नित्यादिर्नित्यम्, प्रत्ययस्य चेत्युच्येत । तदा परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत । सूत्रस्य सूत्रान्तरेण निमाने फलं वाच्यम् । सुप्पितौ चेत्यस्य षष्ठे न्यासोऽप्यनुचितः । तथासति

---

प्रत्ययाद्युदात्तत्वेन बाध्यते, यदि च प्रत्ययान्तस्यानुदात्तत्वं स्याद् निर्विषयं धातुप्रातिपदिकान्तोदात्तत्वं स्यात् । इदं तर्हि प्रयोजनं लवितव्यमित्यादौ प्रत्ययोत्पत्तिकाल एवाद्युदात्तत्वे कृते पश्चादुत्पन्नइडनुदात्तो यथा स्यात्, अन्यथा लूतव्यं इति स्थिते आद्युदात्तत्वं प्रत्ययान्तस्य प्राप्या ऽनित्यम् इट नु ... प्राप्नोति उभयोरनित्ययोः परत्वादिटि कृते तस्य प्रत्ययाद्य

प्रत्ययत्वे सीयुडन्तस्याङ्गत्वं स्यात् । तथा च तदन्तस्यापि चवि-षीढ्वामित्यादौ गुणः स्यात् ॥

इटोऽदित्यकारस्येति । (कै)

अत्र स्वरितत्वं नाशङ्क्यम् औपदेशिकप्रत्ययत्वाभावाद् द्वित्वाच्च ॥
भाष्ये

यदयं यासुडिति । (भा)

न च परस्मैपदेषु इति ङित्करणादस्यादेशोत्तरं प्रवृत्त्या पूर्वमेव अन्तरङ्गत्वात् परत्वाद्वा प्रत्ययाद्युदात्तत्वे ततो यासुट्स्वरको वा स्यात् शेषनिघातेनानुदात्तो वेति चरितार्थमुदात्तग्रहणं कथं ज्ञापकमिति वाच्यम् । परस्मैपदेष्वित्यस्य विषयसप्तमीत्वमाश्रित्य लावस्थायामेव यासुटि ततो लादेशे तन्निमित्तकाद्युदात्तत्वे यासुटः सिद्धे उदात्तग्रहणं ज्ञापकमित्याशयात् ॥ भाष्ये

---

तदन्तविधेर्दुर्वारत्वात् । यत्तूक्तं प्रकृतिस्वरविधानं ज्ञापकमिति । तन्न । आस्ते शेत इत्यादौ लसार्वधातुकमात्रस्यानुदात्तत्वे सति धातुस्वरस्य सावकाशत्वात् । प्रातिपदिकान्तोदात्तस्यापि अग्निमान् अग्नीनामित्यादौ ह्रस्वनुड्भ्यां मतुप्, नामन्यतरस्यामिति स्वरसिद्ध्यर्थत्वात् । तत्र ह्रस्वान्तो-दात्तादित्यनुवर्तते । तमश्वाममधुमन्तमित्यादौ मा भूदिति । भित्वा

---

योग ग्रहणे सति इट एवाद्युदात्तत्वं स्यात् । एतदपि ज्ञापकात्सिद्धं, यदयं 'यासुट् परस्मैपदेषूदात्तो ङिच्चे'त्याह तज्ज्ञापयति आगमा अनुदात्ता इति, अन्यथा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमित्य-नर्थकं तत्स्यात्, ननु पिदर्थमेतत्स्यात्, अन्यथा चिनुयादित्यादौ पिद्भक्तो यासुडनुदात्तः स्यात्, यद्येतावत्प्रयोजनं स्याद् यासुट् परस्मैपदेषु भवति

शक्यमेवं लब्धुमिति। (भा)

एवं रीत्येदं लब्धुं शक्यं यत्नपूर्वं वचनमेवेत्यर्थः॥

यद्येव वचनादिति। (भा)

तस्मिन्निति परिभाषासत्त्वे विषयमप्राप्यनुषिततेति भावः॥

अथापीति। (भा)

उक्त आशयः।

आगमैस्तु। (भा)

इत्ययं दोषः। पाष्ठवादिमते इत्याद्य

आरब्धे त्विति। (कै)

तृतीये आरब्धे त्वित्यर्थः॥

प्रत्ययसंज्ञेति। (कै)

व्यावस्थायां सीयुडादावप्याद्युदात्तत्वं केवलस्यैवेति पूर्वज्ञाता अपि शेष निघातो नानुदात्ता भवन्तीत्यर्थः॥ एवं च तस्यानुदात्तत्वाया-

---

प्रकरणं सोढ्वा गौरवं चेह सूत्रेण यत्नं धातुस्वरस्तद्धुत्तदन्ताद्यस्य यं स्थितम्॥ न चास्तु यत्नान्तरमपि। तथाहि। भवितव्यमित्यादौ प्रत्ययो-त्पत्तिकाल एवाद्युदात्तत्वे कृते पश्चाद्धुवन्निट् अनुदात्तः सिध्यति। अन्यथा तु भू तव्य इति स्थिते आद्युदात्तत्वं शब्दान्तरप्राप्त्या ऽनित्यम् इट् तु

---

अपिच लिङ् भवतीति पित्त्वमेव प्रतिषेधेत्। अवश्यं चैतज्ज्ञापकमाश्रय-णीयम् अन्यथा प्रत्ययमञ्ज्ञासन्नियोगेनाद्युदात्तत्वबाधावपि लविषीयेत्यादौ व्यावस्थायामनच्कत्वादसति स्वरे विशेषविहितत्वात्परत्वाच्च सीयुटि कृते पश्चाद्धादेशे प्रत्ययाद्युदात्तत्वमित्यानुपूर्व्या सीयुट् एव स्यान्न ज्ञापकाश्रयणे

गमानुदात्तत्ववचनमनावश्यकमिति तात्पर्यम्। अङ्गसंज्ञा तु न। तस्यां यदागमा इति न्यायेन विशिष्टस्यैव प्रत्ययग्रहणेन ग्रहणात्। एवं च यासुटोऽपि शेष निघातेनानुदात्तत्वे प्राप्ते उदात्तग्रहणस्य चारितार्थ्येन ज्ञापकासंभवोऽपि ध्वनितः। एवं च त्वविषौयेत्युदाहरणविषया "क्रियमाणेऽपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे" इत्यादिरेकदेश्युक्तिरसङ्गतेति बोध्या॥ ननु तृतीये सूत्रमतेऽपि अनुदात्तं पदमित्यस्य परिभाषात्वात्तेनैकवाक्यतायामाद्युदात्तविधिकाले सन्निहितानामेव तेन विघातविधानात्पश्चात् सन्निहितस्येतो निघाताप्राप्तेरागमानुदात्तत्ववचनमावश्यकमिति चेन्न। चिनुत इत्यादौ श्नोरनुदात्तत्वसिद्धयेऽसन्निहितस्यापि तेन निघातावश्यभावेन पदग्रहणं परिमाणार्थमिति वक्ष्यमाणया रीत्या न्यायसिद्धत्वेन च तन्मते वचनस्यानावश्यकत्वात्। न चैकपदे विशेषविधिं विना द्वयोरुदात्तयोरभावाद् उदात्तस्वरितयोरभावाच अस्वरकस्याच उच्चारणाभावादनुदात्तत्वमेवेति वाच्यम्। एकश्रुतिविषये

---

स्वरभिन्नस्येत्युभयोरनित्ययोः परत्वादिठि कृते तस्यैव प्रत्ययाद्यवयवत्वादुदात्तत्वं स्यात्। नैवम्। यासुडुदात्तवचनेन आगमा अनुदात्ता इत्यस्यार्थस्य ज्ञापितत्वात्। न च चिनुयादित्यादौ पिद्वृत्ते यासुटि चरितार्थमुदात्तवचनं कथं ज्ञापकमिति वाच्यम्। एवं हि उदात्तोङिच्चेत्यपहाय अपिच्चेत्येव

---

तु सीयुडनुदात्तः इटोदित्यकार उदात्तो भवति, कथं भवति, यावता सीयुटि कृते ऽकारस्य विच्छिन्नमादित्वं, नैष दोषः। यासुट उदात्तवचनं ज्ञापकं प्रत्ययाद्युदात्तत्वे कर्तव्ये आगमा अविद्यमानवद्भवन्तीति, अन्यथा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमित्यनर्थकं तत्

तदा न भवितव्यमिति । (भा)

भाष्ये क्यचेति शेषस्तथा च स्वरेऽनिष्टमिति भावः ॥

तदा च प्राप्नोतीति । (भा)

क्यजिति शेषः ॥

नैतत्सुवन्तमिति । (भा)

समुदायः कर्मेति भावः ॥ प्रत्येकं कर्मत्वे कर्मसमुदायस्याकर्मत्वादेवाप्रसङ्ग इति बोद्धुमसमानाधिकरणानामेकेन सम्बन्धिनाऽयोगादिति नार्थः । ऋद्धत्वविशिष्टस्य राज्ञः पुरुषेण सम्बन्धात् । अत आह

मध्ये इति । (कै)

निर्द्धारणे षष्ठीति भावः ॥

---

ष्यमाणं रूपं आत्मसम्बन्धित्वेन यदेष्यते तदा प्रत्ययः । इह त्वात्मीयत्वेन नेच्छा किन्तु परस्वामित्वेनेति न दोषः । सुबग्रहणं पदविधित्वार्थं, तेन समर्थपरिभाषोपस्थानान्महान्तं पुत्रमिच्छतीत्यादौ सापेक्षत्वान्न भवति । अन्यथा महान्तं पुत्रीयतीति स्यात् । न च सुबग्रहणं विनापि कर्मणा

---

दायाः पादमिच्छतीत्यादौ यत्राचेतनार्थं किंचिदिष्यते तद्यावर्त्यमिति चेत्, न । तत्रापि चेतनस्यैव परमर्थोर्थित्वात्, सर्वमेव हि भोग्यं चेतनानामेव शेषभूतं खट्वायाः पादमिच्छतीत्यत्रापि यस्य तत् खट्वादिकमुपभोग्यं तदर्थमेव तदिष्यते खट्वादिकं तु तस्यैव द्वारमात्रम्, अतः परस्याकृत्तिवचन एवात्मग्रहणस्तत्रापि यदीच्छया सम्बन्धः स्यात् पूर्वेनकर्तारि षष्ठीभावात्मग्रहणमनर्थकं स्यात् सर्वस्या एवेच्छाया इषिकर्तृकत्वादिति

**अयोगादिति ।** (कै)

इच्छत्यादीनामिति शेषः ॥

**न केवलस्येतीति ।** (कै)

स विशेषणप्रयोगविषये इति भावः ॥

**यस्य च सामर्थ्यमिति ।** (भा)

वाक्ये व्यपेक्षारूपमित्यर्थः । तदभावादेव तत् मूलक एकार्थीभावो नेति भावः ॥

**गुणेचेति ।** (कै)

इदं चिन्त्यम् । तस्मात् प्रातिपदिकसमुदायस्याप्रातिपदिकत्वेन समुदायान्तत् स्यात् । किं च महान्तं पुत्रमित्युभयत्रेष्टद्वितीयोपपत्तिरेवेति तत्त्वम् ॥ भाष्ये

---

इत्यनेनैव पदविधित्वं लभ्यतामिति वाच्यम् । यत्र हि पदस्यासाधारणं रूपमाश्रियते स पदविधिः कर्मत्वं तु अपदेऽपि दृश्यते । धातोः कर्मण इति यथा । कथं तर्हि कर्मण्यणित्यादौ पदविधित्वमिति चेत् । उपपदसंज्ञायाः अन्वर्थत्वबलादिति गृहाण । महापुत्रीयतीति तु महापुत्र-

---

सुबन्तेन सम्बध्यते, सुबन्तात्कर्मण इच्छायामभिधेयायां क्यच् भवति तच्चेत्सुबन्तमात्मनः स्वस्य सम्बन्धि भवति, कस्य स्वस्येत्यपेक्षायामिच्छया एषितुः सन्निधापितत्वात् तस्यैवैषितुरात्मनः सम्बन्धि इति विज्ञायते तदाह । 'एषितुरेवात्मसम्बन्धिनः सुबन्तादिति' । न चैवमात्मनः पुत्रं परस्य दासमिच्छतीत्यत्रापि सुबन्तस्यात्मसम्बन्धित्वात्प्रसङ्गः नात्र यथाकथंचिदात्मसम्बन्धित्वविवक्षितं किं तर्हि इष्यमाणमेव रूपमात्मसम्बन्धित्वेन यदेष्यते तदा प्रत्ययः । 'पुत्रीयतीति' । 'क्यचि चे' तीत्वम् । 'सुप इति

**यदि पुत्रो नैषिकर्मेति ।** (भा)

यतः पुत्रो नैषिकर्मेत्यर्थः ॥ ननूभयं कर्मेति वाच्ये पुत्र एवेत्यनुपपन्नमत आह

**तस्यैवेति ।** (कै)

प्रधानत्वादिति वक्तुं युक्तम् ॥

**सामानाधिकरण्यनिबन्धनेति ।** (कै)

समानाधिकरणविशेषणस्य विशेष्यसमानशक्तिकत्वादिति भावः ॥

**एकस्येति ।** (कै)

सुग्रहणेन पदविधित्वात् समर्थपरिभाषोपस्थितेरिति भावः ॥

**व्यपेक्षेति ।** (कै)

विशेषणेन व्यपेक्षाविशेष्येणैकार्थीभाव इत्यर्थः । इदमेव सुब्ग्रहणस्य फलमिति बोध्यम् ॥

---

मिच्छतीति विग्रहे बोध्यम् । आत्मनः किम् । राज्ञः पुत्रमिच्छति पुरोहितः । नन्वसामर्थ्यादेवात्र न भविष्यतीति चे, तर्ह्यात्मनः पुत्रमिच्छतीत्यत्रापि न स्यात् । ननु लौकिके विग्रहे आत्मन इति प्रयोगेपि अलौकिके

---

किमिति' । कर्मण इति वचनात्तिङन्तादप्रसङ्गः, नहि तिङन्तं कर्म, धातोश्चाप्रसङ्गो विशेषविहितेन सना बाधितत्वात् । ङ्याप्प्रातिपदिकादुत्पत्तावपि न कश्चिद्दोषः 'नः क्ये' इति पदसंज्ञाविधानात्, तत्र क्रियमाणे सुब्ग्रहणे नियमार्थे नान्तमेव क्ये पदमिति, तदेव ङ्याप्प्रातिपदिकादुत्पत्तौ विध्यर्थं भविष्यति । नन्वसति सुब्ग्रहणे ङ्याप्प्रातिपदिकात्सुबन्ताच्चोत्पत्त्यविशेषात्तस्य 'नः क्ये' इत्येतद्यदेवं नियमार्थ-

स विशेषणानामिति । (भा)

सापेक्षोपलक्षणम् ॥ अत एव ऋद्धस्य राज्ञः पुरुष इत्यत्र ऋद्धपदेनापि न समास इत्याशयेन शङ्कते भाष्ये

मुण्डयतिमाणवकमिति । (भा)

एतेन मुण्डस्य गुणशब्दत्वान्माणवकस्य द्रव्यशब्दत्वात्तस्यैव विशेष्यतायां न्याय्यत्वेन मुण्डस्य कथं सविशेषणत्वमित्यपास्तम् ॥

अनुमानादपीति । (कै)

साध्वनुमानादित्यर्थः ॥ अपि नासाधुस्मरणसङ्कटः । वस्तुतोऽपभ्रंशानामपि वाचकत्वमपि नाशास्त्रम् ॥ भाष्ये

एतस्माद्धेतोरिति । (भा)

"अपशब्दः स्यादिति" (भा) हेतोर्वृत्तिर्नेति । "न ब्रूमः" किं तर्हि "अगमकत्वाद्" इति हेतोरित्यन्वयः ॥ तदेवाह

---

प्रक्रियावाक्ये केवलात्पुत्रशब्दात् क्यजिति चेत्तर्हि तथैव परकीयपुत्रेच्छायामपि स्यादिति शङ्काशा । किन्तु पुत्रशब्दस्य नित्यसापेक्षत्वान्नासामर्थ्यम् । अपि च । यत्रार्थादेव परकीयत्वं गम्यते तत्र परस्येति

---

यथापि विध्यर्थम् उभयथापि दोषः, नियमार्थे हि वाच्यतीत्यादौ प्रातिपदिकात्सुबन्ताच्चोत्पत्तौ यद्यपि दोषभावो मकारान्तेषु प्रातिपदिकादुत्पत्तिपक्षे नलोपो न स्यात्, अथ तेषु प्रातिपदिकादुत्पत्तौ विध्यर्थम्, एवं सति वाच्यतीत्यादौ सुबन्तादुत्पत्तिपक्षे अपूत्वादिपदकार्यं स्यात्, अतः सुबन्तादेव यथा स्यात्प्रातिपदिकान्मा भूदिति नियमार्थं सुब्ग्रहणं कर्तव्यमेव, एवं तर्हि ममग्रहणाद् ङ्याप्प्रातिपदिकादप्रसङ्गः, सुबन्तमेव

**सिद्धानामिति ।** (कै)

अर्थप्रत्यापनायान्यासाधूनामिवास्य प्रयोगाभावात् किं तन्निवृत्त्यर्थेन वचनेनेत्यर्थः ॥ भाष्ये

**यच्च च गमकमिति ।** (भा)

मुण्डयतीति प्रयोगे मौण्ड्यस्य क्रियारूपत्वेन कारकांशे नित्यसापेक्षतया गमकत्वमिति भावः ॥

**कर्मभावेति ।** (कै)

लकारवाच्यसाधनानामेव प्रश्नादिति भावः ॥ नन्वेवं "कानि साधनानीति" (भा) प्रश्ने भाव इत्युत्तरमसङ्गतं तस्य क्रियारूपस्य साध्यत्वेन साधनत्वाभावादत आह

**भावस्य चेति ।** (कै)

लकारनिमित्तमेव साधनशब्देनोच्यत इति भावः ॥

---

प्रयोगाभावात्स्पष्टैवातिव्याप्तिः । अघमिच्छतीति यथा । न हि कश्चिदात्मनो ऽघमिच्छति । क्यचः ककारो नः क्ये इति सामान्यग्रहणार्थः । लोप इत्युक्ते हि सामसु साधुः सामन्यः अत्रापि स्यात् । चकारस्तदविघातार्थः ।

---

हि कर्माभिधायि पक्षकपक्षेपि द्योतकविभक्त्यपेक्षितत्वात्, तदेवं सुबन्तमपहाय न क्वचित्प्रसङ्ग इति मत्वा प्रश्नः । वाक्यादिति' । पदसमूहादित्यर्थः । 'महान्तं पुत्रमिच्छतीति' किं च स्याद्यद्यत्र स्यात्, प्रत्ययार्थे गुणभूतयोर्महत्पुत्रशब्दयोरसति परस्परसम्बन्धे समासो न स्यात्, तथा च तन्निबन्धनमात्वं न स्यात्, किमिदानीं न भवति महापुत्रीयतीति, भवति, यदैतद्वाक्यं भवति महान्पुत्रो महापुत्रः महापुत्रमिच्छतीति,

नियतविषयाया इति । (कै)

कर्मविशेषणैकार्थीभावादित्यर्थः ॥ अत एव न कर्मान्तरेणान्वयः । शतपुरुषो भार्याया इति वदिति भावः ॥

वाक्य एवेति । (कै)

क्यजुपचारस्य नियमेनोपमानविषयत्वेऽपि उपमानस्योपमेयसापेक्षत्वात्कर्मद्वयसद्भाव इति भावः । तत्र मुख्यं कर्म अयमेव उपमानेन उपमेयसमानशक्तिकत्वात्कर्मत्वव्यवहार इति तस्यान्तर्भूतत्वेऽपि न क्षतिरिति तात्पर्यम् । उपमानपुत्रकर्मक उपमेयमाणवककर्मक इति बोधः ॥ ननु मुण्डयतीत्यत्रापि द्वयोः कर्मत्वं मुण्डं करोति माणवकमिति विग्रहे दर्शनात् इति कथमत्र प्रश्न इत्यत आह

मुण्डगुणेति । (कै)

मौण्ड्यस्य कर्मत्वे सति तस्याश्रयसापेक्षत्वेनासामर्थ्यप्रसङ्गात् । मुण्डगुणविशिष्टद्रव्यस्यैव कर्मत्वमभ्युपेयन्तस्य च धात्वर्थे ऽन्तर्भाव इति भावः ॥ विशेषस्यापि कर्मत्वस्वीकारे ऽसामर्थ्यमिति शङ्कते भाष्ये

---

स्वरस्तु प्रत्ययस्वरेण धातुस्वरेण वा सिद्धः । अकारस्तु यद्यपि न श्रवणार्थः, आर्धधातुकेषु लोपात्सार्वधातुकेषु शपा गतार्थत्वात् तथापि गुणवृद्धि-

---

अथ क्रियमाणेपि सुब्ग्रहणे कस्मादेवात्र न भवति प्रत्ययग्रहण-परिभाषया समुदायस्यासुबन्तत्वात्, किं पुनरयं कर्मणोः समुदाय आहो-स्वित्समुदायः कर्म, किं चातः, यदि कर्मणोः समुदायो न कर्मग्रहणेन गृह्यत इति समुदायादप्रसङ्गः, अथ समुदायः कर्म अवयवाद् द्वितीया न प्राप्नोत्यकर्मत्वात्, एवं तर्हि कर्मणोरेवायं समुदायः सब्ग्रहणं तु यदत्र

**ननु चेति ।** (भा)

विषयविभागोक्तिमुण्डशब्दादेर्णिचि गमकत्वं क्यच्यगमकत्वमिति विषयविभाग इत्यर्थः ॥

**मौण्ड्यमेवेति ।** (कै)

वृत्तौ मुण्डशब्दो भावप्रधान अत एव भाष्ये

**न हि माणवकत्वं क्रियत** (भा)

इत्युक्तम् । तस्य च वृत्तौ साध्यावस्थस्यैव भावात्क्रियारूपत्वेन कारकांशे नित्यसापेक्षत्वाद्गमकत्वमित्यदोषः । धर्मिपरत्वे हि गुण-विशिष्टद्रव्यस्य उत्पादनेनासामर्थ्याद्वृत्तिर्न स्यादिति भावः । वस्तुतो नित्यसापेक्षत्वाभावेऽपि गमकत्वे वृत्तिर्न भवत्येवेति बोध्यम् ॥

**एकस्यैवेति ।** (कै)

मुण्डस्यैवेत्यर्थः ॥ मौण्डस्वरूपतदर्थस्यैवोत्पद्यमानत्वादिति भावः ॥ माणवकपदार्थस्य सर्वथा करोत्यर्थतया योग्यत्वमेवेति बोध्यम् ॥

---

निषेधार्थः सः । तथाहि । समिधं दृषदं वेच्छति समिध्यति दृषद्यति । ततो ण्वुल् अतोलोपः यस्य हलः, यस्य विभाषा । समिधकः । दृषदकः । अत्राल्लोपस्य स्थानिवद्भावात्पुगन्तेति गणो ऽत उपधाया इति

---

कर्म तस्मान्मा भूदिति, अथ क्रियमाणेऽपि सुब्ग्रहणे कस्मादेव तस्मान्न स्यात् सुबन्तमेव हि तत्, असामर्थ्यात्, कथमसामर्थ्यं, सापेक्षमसमर्थं भवतीति, अक्रियमाणे पुनः सुब्ग्रहणे साधं पदविधिर्भवति, यत्र हि पदस्यैवासाधारणं किञ्चिद् समाश्रितं स पदविधिः, कर्मग्रहणं तु न पदस्यैवासाधारणं धातोः कर्मण इत्यपदेऽपि दृष्टत्वात् । अन्ये त्वाहुः ।

द्वितीयस्मात्। (कै)

माणवकशब्दात्॥ ननु माणवको विशेष्यस्तत्सामानाधिकरण्यात् मुण्डात् द्वितीयेति युक्तं न तु विपरीतमत आह

गुणप्रधानेति। (कै)

परिच्छेद्यपरिच्छेदकनात्र इत्यर्थः। परिच्छेद्यसमानशक्तिकत्वं परिच्छेदकस्येति भावः। एवं च वाक्येऽपि मुण्डस्यैव करोति योग इति भावः॥ तदाह

माणवकादय इति। (कै)

यद्यपि वाक्ये मुण्डशब्दो धर्मिपरस्तथापि तस्य सामान्यशब्दत्वात् तद्विशेषाकाङ्क्षायान्तदन्वयेऽपि माणवकस्य न साक्षात्करोति युक्तत्वमिति बोध्यम्। एवं चात्र वृत्तौ कटोऽपि कर्म भीष्मादयोऽपीति न्यायो नास्त्येवेति तात्पर्यम्॥ ननु तस्य करोति योगाभावे कथं वृत्तौ माणवकस्य कर्मत्वं कथञ्च द्वितीयान्तत्वमत आह

---

वृद्धिश्च न भवति। किञ्च स्वरमिच्छति स्वयति। स्वयतेरच्चीयत्। अतोलोपादि पूर्ववत्। स्वयम्। यतोनाव इत्याद्युदात्तत्वम्। अपि च, पुत्रीयतीत्यादौ शपोनुदात्तता स्यात्। शपा सहैकादेशे तु स उदात्तो भवति।

---

समुदायस्यापि कर्मत्वमवयवयोश्च महत्त्वविशिष्टस्य पुत्रस्येष्यमाणत्वादिति तेषां समुदायादवयवाच्च मा भुदिति सुबग्रहणम्। 'राज्ञः पुत्रमिच्छतीति' नन्वसामर्थ्यादेवात्र न भविष्यति, कथमसामर्थ्यं सापेक्षमसमर्थं भवतीति, यत्र तर्ह्यन्तरेणापि तृतीयस्य पदस्य प्रयोगं परस्येति गम्यते तत्र मा भूद्यथा ऽघमिच्छति व्यसनमिच्छतीति, नहि कश्चिदात्मनो-

**मुण्डयतेश्चेति।** (कै)

**मौण्ड्यरूपक्रियाश्रयत्वात्** कर्मत्वमिति भावः॥ एवं च कृत-पूर्वीकटमिति वद्वृत्तिरिति तत्त्वम्॥ ननु बलीवर्दत्वस्य क्रियमाण-त्वासम्भवादाह

**बलीवर्दमेवात्मसम्बन्धित्वेनेति।** (कै)

बलीवर्दशब्दस्य चित्रादिपरत्वे तु न शङ्कापि॥

**प्रयोगो न भवतीति।** (कै)

राजपुरुषो देवदत्तस्येत्यादाविवासामर्थ्यादिति भावः॥

**उभयोः कर्मत्वे इति।** (कै)

इषिनिरूपिते इति शेषः॥

---

अपि च स्वयतेरनेकाच्त्वाद्यङोऽनुत्पत्तिरात्मनेपदस्य फलमिति दिक्। क्यचि मान्ताव्ययानां प्रतिषेधः॥ मान्तस्याव्ययं चेति द्वन्द्वः। तेन तत्प्रकृतिकं लक्ष्यते। मान्तप्रकृतिकादव्ययप्रकृतिकाच्च सुबन्तान्न क्यजित्यर्थः। यथाश्रुते तु पुत्रमिच्छतीत्यादौ क्यज् न स्यात् क्वचिच्छति कानिच्छतीत्यादौ च स्यात्। इदमिच्छति स्वरिच्छति। गोसमानाक्षरनान्तादित्येके। गामिच्छति गव्यति। वान्तो यि प्रत्यये। दधीयति मधूयति। अकृत्सार्वेति दीर्घः। कर्त्रीयति हर्त्रीयति। रीङृतः। मात्रीयति। तन्त्रीमति। नः क्ये, पदत्वान्नलोपे क्यचि चेतीत्वम्। न लोपः सुप्स्वरेति नियमान्नासिद्ध-

घमिच्छति। 'ककार इत्यादि'। स्यादेतत् 'नः क्ये' इत्यत्रापि मा कारि ककार इति, यद्येवं सामसु साधुः सामन्यः, अत्रापि प्राप्नोति। 'चकारस्तद्विघातार्थ इति'। स्वरस्तु प्रत्ययस्वरेण सिद्धो धातुस्वरेण वा, अकारस्तु दृषदमिच्छति दृषद्यतेर्गर्वम् 'अतो लोपः,' 'यस्य हलः,' 'कस्य

## सापेक्षत्वादिति। (कै)

मुण्डस्य माणवकसमानाधिकरणविशेषणमिति सापेक्षत्वमिति भावः॥ एतावता पर्यन्ते गमकत्वं वाच्यगमकत्वमिति दर्शितम्॥

भाष्ये

## माणवकस्थमसाविति। (भा)

एवं च तद्द्वारा माणवकस्येच्छाविषयत्वं च तत्करोत्यर्थविषयत्वमपीत्यभिमानः॥ यद्यपीषिफलेच्छाश्रयत्वं तस्य वक्तुं युक्तं न तु करोति फलोत्पत्त्याश्रयत्वं तस्येति "उभयोः करोति" युक्तत्वाभाव स्तथापि विशेषापेक्षेण तस्यापि तदाश्रयत्वमित्यभिमानेनैकदेशिनः

त्वम्। अस्मिन्पक्षे वाच्यति मध्वतीत्यादि न सिद्धेदिति नायं स्थितः पक्ष इत्याहुः। छन्दसि परेच्छायामपि॥ अहियोनो अघायति। मात्वा वृका अघायवो विदन्। ज्ञापकात्सिद्धम्॥ यदयं क्यचि प्रकृतेरीत्वबाधनार्थम् अश्वाघस्यादित्याकारं शास्ति न हि कश्चिदात्मनो अघमिच्छति। न चाचारक्यजर्थं तत्। छन्दसि अघशब्दादाचारे क्यचो ऽदर्शनात्। उदाहृतस्थले इच्छार्थस्यैव प्रतीतेरित्याहुः। क्यजन्तेषु प्रकृत्यर्थो यद्यपि कर्म तथापि तस्य धात्वर्थान्तर्भावात् जीवतिन्द्यतीत्यादिवदकर्मक एवेच्छाक्यजन्तः। अतोस्माद्भावे कर्तरि च लादयः। आचारक्यजन्ते तु पुत्रादेरुपमानकर्मणो धात्वर्थान्तर्भावेऽपि छात्रादेरुपमेयकर्मणोऽनन्तर्भावात्तस्मिन्कर्मणि लादयो भवन्त्येव। पुत्रीय्यते छात्रः, पुत्रीयितव्य इत्यादि यथा।

विभाषा' दृषदकः, अत्रातो लोपस्य स्थानिवद्भावा 'दत उपधाया' इति वृद्धिर्मा भूत्। मदमिच्छति मद्यति मद्यतेरचो यत्, अतो लोपादि पूर्ववत्, मद्यं, 'यतो ऽनाव' इत्याद्युदात्तत्वं यथा स्यादिति, पुत्रीयतीत्यादौ च शपा सहैकादेश उदात्तो भवति। 'क्यचि मान्ताव्ययप्रतिषेध इति'।

शङ्क्यम्। एवं च मुण्डपदार्थस्य विशेषापेक्षत्वेनासामर्थ्यं वृत्तावुभय-
त्रापि मुण्डशब्दो धर्मिपर इति तद्भावस्तमभ्युपेत्य परिहरति

**एवं तर्हीति** ॥ (भा)

**गुणवचनाः** (भा)

इत्यत्र गुणप्रवृत्तिनिमित्तका इत्यर्थः ॥

**सापेक्षा इति**। (भा)

अपरिशेषविषयविशेषसापेक्षा इत्यर्थः ॥ ननु मुण्डो नित्य-
सापेक्षः। अन्यथा वा। नाद्यः। राजपुरुषादौ सावकाशस्यापि

---

श्येनायते काक इत्यत्र उपमानकर्तुरन्तर्भावेऽपि उपमेयकर्तरि लो भवति,
तद्वत्। ननूक्तरीत्या मुण्डं करोति मुण्डयति माणवकमिति न सिध्येत्।
णिजन्ते मौण्ड्यगुणविशिष्टत्वेनैव कर्मान्तर्भूतं न तु माणवकत्वादिना
विशेषेणेति। यदि तर्हि तथैव मुण्डमिच्छति मुण्डीयति माणवकमित्यपि
स्यात्। सापेक्षत्वेनासामर्थ्यान्न क्यजिति चेत्तर्हि तत एव णिजपि न स्यात्।
तस्माण्णिच्क्यचोर्विशेषो वक्तव्य इति चेत्। उच्यते। तत्करोतीति णिच
सिद्धे मुण्डमिश्रेति पुनर्विधानं सापेक्षेभ्योपि यथा स्यादित्येवमर्थमेव।
क्यच् तु निरपेक्षेषु चरितार्थ इति स्पष्ट एव विशेषः। यद्वा। कण्ड्वादि-
वत् मुण्डादयो द्विविधाः। धातवः प्रातिपदिकानि च। तत्र सौत्रा एते
विशिष्टक्रियावचना धातवः तेभ्यश्चुरादिवत्स्वार्थे णिच्। प्रातिपदिकानां तु

---

मान्तग्रहणं प्रातिपदिकस्य विशेषणं न सुबन्तस्य, तेन पुत्रमिच्छतीत्यादौ
क्यच् भवति काविच्छति कानिच्छतीत्यादौ च न भवति। 'उच्चैर्नीचैरिति'।
अधिकरणप्रधानयोरप्यनयोरभिधेये यदा वृत्तिस्तदा कर्मत्वं गोसमानाक्षर-
नाम्नादित्येके, गोशब्दात्समानाक्षरान्तान्नाम्नाच्च क्यच् भवतीत्येके मन्यन्ते।

समासस्य गुरुकुलादौ प्रवृत्तिवदत्रापि क्यजापत्तिः । नान्त्यः । णिचोऽप्यनापत्तेः । समापेक्षे चारितार्थ्यादिति ॥

नैष दोष इति (भा)

वचनादिति भाष्यस्य तत्करोतीति सिद्धे वचनसामर्थ्यादित्यर्थ इति भावः ॥ न च तत्करोतीत्यनेन प्रातिपदिकादुत्पत्तेः सुबन्तादुत्पत्त्यर्थमिदमावश्यकं विशेषाभावात् । णिचि भत्वाच्च ॥

सौत्रा इति । (कै)

उत्तरसूत्रस्य धातुग्रहणस्य पूर्वमपकर्षादिति भावः ॥ भाष्ये

---

विग्रह एव । माणवकं मुण्डं करोतीति । अथवा मुण्डयतीत्यत्र कमिति विशेषाकाङ्क्षा अनुभवसिद्धा । मुण्डस्यैव वा शुद्धेन करोतिनान्वयः । मौण्ड्यविशिष्टेन तु माणवकस्य । यथा गां दोग्धि पय इति शुद्धस्य दुहेः पूर्वं गवा सम्बन्धः । पश्चात्तु गोदुहिना पयसः । क्यच्प्रत्ययस्तु अनभिधानान्न भवति माणवकं मुण्डीयतीत्युक्ते मुण्डमिवाचरतीत्यर्थान्तरमेव गम्यते । तदुक्तं हरिणा । सदपीच्छाक्यचः कर्म तदाचारक्यचाहृतम् । वाक्यवाच्यमतोऽव्यक्तेर्यथाभ्यासः क्रमादिष्विति ॥ अस्यार्थः । सदपि न्यायतः सम्भवदपीच्छाक्यचः कर्म वाक्यवाच्यं माणवकं मुण्डमिच्छतीत्येवंरूपेण बोधनीयम्, न तु क्यजन्तेन । यत आचारक्यचा हृतं निरवकाशीकृतम् । तदर्थस्यैव निरूढेः । आचारक्यचाहरणे वाक्यवाच्यत्वे वा हेतुमाह । अतो व्यक्तेरिति ।

---

अकारादयो दश समानाक्षरास्तत्र लृवर्णान्तस्य ऋकारान्तस्य च प्रातिपदिकस्याभावादेकारात्पूर्वेषां समानानामचां ग्रहणम् अस्मिन्पक्षे वाच्यतीत्यादि न सिद्ध्यति, तस्मान्नायं स्थितः पक्ष इत्याहुः । अत एवास्य वृत्तावनुपन्यासः । 'परे च्छायामिति' । शेषषष्ठ्याः समासो न कर्तृषष्ठ्याः, सुबन्तद्वारकस्य

न चैवेति (भा)

शङ्का।

क्रियावचनता (भा)

इत्युत्तरमिति व्याचष्टे

यद्यपीति ॥ (कै)

यथा कण्ड्वादय इति । (कै)

तथाच धातुभ्यो णिच्प्रातिपदिकेन वाक्यमिति भावः॥ भाष्य परिहारान्तरमाह

अतोऽस्मात् क्यचो व्यतिरेकाचारार्थस्यैव प्रतीतिः। अतो वाक्यादिच्छा-कर्मणः प्रतीतिरिति वा। यथा क्रमादिषु गत्यर्थेषु अभ्यासः पौनःपुन्यं वाक्येनैव गम्यते न तु यङा। कौटिल्ये निरूढेः। उक्तं च प्रकीर्णकाण्डे। सदपीच्छाक्यचः कर्म वाक्येनैव प्रयुज्यते। परिसिद्धेन हृतः शब्दो भावगर्हाभिधायिना॥ अभ्यासे तुल्यरूपत्वान्न यङन्तः प्रवर्तते, इति॥ एतेन यथेति क्रमादिषु यथा वेदादिविषयोऽभ्यासो व्यज्यते तथा वाक्ये इच्छाक्यचः कर्मेत्यर्थः। अथवा ऽभ्यासक्रमादिविषयकं पदम्। अभ्यासेन वर्णक्रमादि-विषयाभिव्यक्तिर्भवति तथा वाक्येन कर्मत्वविषयाभिव्यक्तिरित्यर्थ इति विवरणमप्युक्तम्। अत्र भाष्ये क्यजन्तस्य इष्टः पुत्र इष्यते पुत्र इत्यादयो विग्रहा निराकृताः। तस्यायमाशयः। यद्यपि वृत्तिवाक्ययोरत्यन्तसमाना-

---

परस्येच्छया सम्बन्धः, परस्य सुबन्तार्थो या इच्छा तस्यामित्यर्थः। 'अघायव इति, 'क्याच्छन्दसी'त्युप्रत्ययः, अश्वाघस्यादित्यात्वम्, एतदेव क्यचि परत आत्वविधानं ज्ञापकं छन्दसि परेच्छायामपि क्यचं भवतीति, नहि कश्चिदात्मनोऽघमिच्छति, न चापाराध्यमर्थं, छन्दस्य

**मुण्डविशिष्टेन वेति ॥** (भा)

ननु पक्षद्वयेऽपि पूर्वं करोतेर्मुण्डसम्बन्धः पश्चाण्णिजर्थस्य सम्बन्ध इति प्रतीतेः को विशेषोऽत आह

**पूर्वस्मिन्निति ॥** (कै)

**अथवा नेदमुभयमिति** (भा)

परिहारे इत्यर्थः ॥ तत्र पूर्वकर्मविशेषस्यानपेक्षणाद् असम्बन्ध उत्तरत्र त्वपेक्षायामपि बहिरङ्गत्वात्तत्पूर्वसम्बन्ध इत्युच्यत इति विशेष इत्यर्थः ॥

---

र्थकता नास्तीत्यदूरविप्रकर्षणैव सर्वत्र विग्रहस्तथापि सुसदृशसम्भवे मन्दसदृशोपादानमन्याय्यम् । इच्छाक्यजन्तस्य चाकर्मकतया कर्मप्रत्ययान्तैर्विग्रहोनुचितः । निरर्थकाधिकारापत्तेरिति । अत एव बाहुलकात्कर्मणि क्विबन्तस्य श्रीशब्दस्य श्रीयते इत्येव विग्रहो न्याय्यो न तु श्रयन्त्येतामिति कर्त्रर्थतिङन्तेनेति मान्याः । यदि तु कर्तरि क्विप् तर्हि श्रयतीत्येव विग्रह इत्यन्यदेतत् । एवं च श्रयन्त्येतामित्यत्र किं शब्दाशुद्धिरर्थाशुद्धिर्वेत्यादिवचनमत्रत्यभाष्यापर्यालोचनमूलकत्वादुपेक्ष्यम् ॥ अथ नामधातुषु प्रतिसूत्रे लेशतः प्रक्रिया व्युत्पाद्यते ॥ पुत्रीयतीत्यादौ अलौकिके प्रक्रिया वाक्ये सन्धिकार्यरहितात्पुत्र अमित्यस्मात्क्यचि सुपो लुक् अन्तरङ्गानपीति न्यायात् । ततः क्यचिचेतीत्वम् । अश्वस्यति । वृषस्यति । क्षीरस्यति ।

---

घशब्दचादारे क्यचो ऽदर्शनात् । अथास्मात्क्यजन्तात्सन्नन्तव्यक्तखलर्था भवन्तः क्त भवन्ति, यथायोगं भावे कर्त्तरि च, न तु कर्मणि, प्रकृत्यर्थविशिष्टाया नियतविषयाया इच्छायाः क्यजन्तेनाभिधानं न सा वस्त्वन्तरं विषयीकरोति, अतो जीवत्यादिवदकर्मकः क्यजन्तः, आचारक्यजन्ते

**गवा पूर्वमिति ।** (कै)

प्रधानव्यापारेणाप्यभानत्वादिति भावः ॥

**पश्चात्त्विति ।** (कै)

विशेषणव्यापारेणाप्यभानत्वादिति भावः । अवस्थितवस्तु-विधागानुकूलव्यापारो हि दृशेरर्थः ।

**मौण्ड्यविशिष्टस्तु माणवकेनेति ।** (कै)

मौण्ड्यद्वारेत्यर्थः ॥

---

लवणस्यति । अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचोऽसुगागमः । अत्रात्म-प्रीताविव्यपनीय अश्ववृषयोर्मैथुनेच्छायाम् । क्षीरलवणयोर्लालसायामिति वक्ष्यते । तेनाद्ययोरुदाहरणयोरश्ववृषयोर्मैथुनायेच्छतीत्यर्थः । अन्ये तु परित्यक्तप्रकृत्यर्था मैथुनेच्छेवार्थ इत्याहुः । तथा च कालिदासः । इति रामो वृषस्यन्तीं वृषस्कन्धः शशास तामिति । निघण्टुश्च, वृषस्यन्ती तु कामुकीति । इतरयोरपि, तृष्णातिरेकोऽभ्यवजिहीर्षातिरेको लालसा । तेन क्षीरलवणेच्छायां लालसारूपायामित्यर्थलाभात् क्षीरलवणं अतिशयेन अभ्यवहर्तुमिच्छतीत्यर्थः । अत्र प्रकृत्यसुगकारयोः सवर्णदीर्घं बाधित्वा अतो गुणे इति पररूपम् । अकारोच्चारणं तु पूर्वसूत्रोदाहरणे ब्राह्मणास इत्यादौ कृतार्थम् । तथा सर्वप्रातिपदिकेभ्यो लालसायामसुग् वक्तव्य इत्यनकारान्तादसुकि दध्यस्यतीत्यादौ च । सुगसुकौ च दधिमधुभ्यामेव स्तः ।

तृपमानकर्मणः पुत्रादेरन्तर्भावेऽपि उपमेयस्यच्छात्रादेरनन्तर्भावात्त-स्मिन्कर्मणि लादयो भवन्त्येव पुत्रीयतेच्छात्रः पुत्रायितव्य इत्यादि, यथा श्येनायते काकः इति उपमानकर्तुरन्तर्भावेऽपि उपमेयकर्तरि लो भवति तद्वत्, इह च माणवकं मुण्डं करोति मुण्डयति माणवकं मुण्डते माणवको

**व्यापार इति । (कै)**

सापेक्षेभ्योऽपि मुण्डादिसूत्रारम्भ सामर्थ्यादित्येवं रूपो धातव इत्येवं रूपो वा नेदमुभयमित्यादिरूपो वेत्यर्थः ॥

**गमकत्वादिति । (भा)**

अयं भावः । एवं वृत्तौ मुण्डशब्दो भावप्रधान इत्युक्तन्यायेन मत्वर्थेऽनुवृत्तावपि अननुवृत्तौ तु धर्मिपर एवातस्तत्र नेष्टाक्य-जसामर्थ्यात् । अत एव क्यजन्तात्तस्मादाचारार्थप्रतीतिरेव तदाह

---

भाष्ये दधिस्यति मधुस्यतीत्येवमर्थमित्युक्तिरित्येके । अन्ये तु सर्वप्रातिपदि-केभ्य इत्येके इति सर्वग्रहणाद्बहुवचननिर्देशाच्च सर्वत्र स्तः । एवमर्थमिति तूदाहरणान्तराणामप्युपलक्षणमिति वदन्ति । अशनोदकधनेभ्यः क्यचि अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु इत्यशनधनयोरात्वापवाद आत्वम् उदकस्योदन्नादेशश्च । अशनायति सद्यो भोक्तुमशनमिच्छतीत्यर्थः । बुभुक्षाया किम् । अशनीयति । कालान्तरकालिकमशनमिच्छतीत्यर्थः । उद-न्यति । पातुमुदकमिच्छतीत्यर्थः । उदकीयति । स्नानाद्यर्थमुदकमिच्छती-त्यर्थः । धनीयति । सत्यपि धने भूयोपीच्छतीत्यर्थः । धनीयति । दरिद्रः सन् धनमिच्छतीत्यर्थः । केचित्तु अशनादिप्रकृत्यर्थमनपेक्ष्य केवलं बुभुक्षादीनेव क्यजन्तस्यार्थान् मन्यन्ते । तथा च निघण्टुः । उदन्या तु पिपासा तृडिति । भारविश्च । किमु धनं धनायितुमिति । गार्ग्यमिच्छति गार्गीयति । अत्र

---

मुण्डयितव्यो माणवक इति, ण्यन्तो धातुर्मिण्डरगुणाविशिष्टद्रव्यमात्रमन्त-र्भावयितुं शक्तो न तु माणवकादिकं विशेषमिति तस्य धातावनन्तर्भा-वात्तत्र लादयो भवन्ति, यद्येवमनेन हेतुना क्यजन्तादपि प्राप्नोति, माणवकं मुण्डमिच्छति मुण्डीयति माणवकं मुण्डीयते माणवक इति,

सदपीति। (हरिः)

न्यायतः स भवदपीत्यर्थः।

आचारक्यचा ह्युतम्। (हरिः)

निरवकाशीकृतम्। निरूढतया तदर्थस्यैव प्रतीतेरिति भावः॥ अतस्तद्वाक्यवाच्यमेव माणवकं मुण्डमिच्छति इत्यनेनैव बोधनीयं न तु क्यजन्तेन। तत्र हेतुमाह "व्यक्तेः" इत्यर्थः॥ यथा क्रमादिधातुषु अभ्यासः पौनः पुन्यं वाक्येनैव गम्यते न तु यङा तत्प्रकृतिकस्य कौटिल्ये निरूढेरिति भावः। अन्यथोक्तं हरिणा—

क्यच्व्योश्चेति हलउत्तरस्य आपत्ययकारस्य लोपः। उपार्षभीयति। उपर्ष-भीयति। उपाल्कारीयति। उपल्कारीयति। अत्र वासुप्यापिशलेरिति वृद्धिविकल्पः; पक्षे गुणः। न च पक्षे ऋत्यक इति प्रकृतिभावः शङ्कनीयः। वा सुपीत्यत्र हि उपसर्गादृतिधाताविति सम्पूर्णमनुवर्तते; तत्र यत्क्रिया-युक्ता इति न्यायेनोपसर्गग्रहणादेव धाताविति लब्धेपुनर्धातुग्रहणं योगवि-भागेनाधिकविधानार्थं सत्प्रकृतिभावं बाधत इति षष्ठे वक्ष्यमाणत्वात्। उपगताऋषभीयका अमुन्देशम् उपर्षभीयको देशः। इह गुणप्रकृतिभावौ न तु वृद्धिः। गमिमन्त्युपसर्गत्वेपि सुब्धातुं प्रत्यतथात्वात्। न चोपसर्गाद-ध्वन इत्यादाविव प्राद्युपलक्षकत्वम्। तत्रैवात्र मुख्ये बाधकाभावात्। ऋष-भस्य समीपमुपर्षभं तदिच्छति उपर्षभीयति। अत्रापि गुणप्रकृतिभावौ न तु वृद्धिः पूर्ववत्। स्यादेतत्। धातुसंज्ञानिमित्ते प्रत्यये चिकीर्षिते उपसर्गा:

--

नात्र क्यचा भवितव्यमसामर्थ्यात्, कथमसामर्थ्यं सापेक्षमसमर्थं भवतीति, णिजपि तर्हि न प्राप्नोति। स्यादेतत्। नोभौ करोतियुक्तौ मौण्ड्यं माणवकस्य नहि माणवकत्वं क्रियते ततश्च मुण्डं करोतीत्यत्रैवार्थे मुण्डय-तीति णिजुत्पद्यते मुण्डं करोति माणवकमित्यत्र वाक्येपि मुण्डस्यैव कर्मत्वं

"सदपीच्छाक्यचः कर्म [1]वाच्य एव प्रयुज्यते ।

[2]प्रसिद्धेन ह्यतः शब्दोभावगर्भाभिधायिना ॥

अभ्यासे तुल्यरूपोऽपि न यङन्तः प्रवर्तते ।

इति ॥ एतेन वेदादिविषयोऽभ्यासो यथा क्रमादिषु व्यज्यते इत्यर्थः । यद्वा विसर्गरहितपाठेन अभ्यासेन वर्णक्रमादिविषयाभिव्यक्तिरित्यर्थो विवरणकारोक्तो ऽपास्तः । एतदेवाह मुख्यं समा-

१ "तदाचारक्यचा ह्यतम्" इत्यपि दृश्यते ॥

२ "वाक्यवाच्यमतो व्यक्तेर्यथाभ्यासः क्रमादिषु" इत्यपि दृश्यते ॥

पृथक क्रियन्तइति तावदुच्यते । उदमनायत उन्मनाय्य गतः उन्मिमनायिषते इति अट्ल्यप्द्विर्वचनानि तथा स्युरिति । एवं चेहापि ऋषभशब्दादेव क्यच् । तेन उपार्षभीयत् । उपर्षभीय्य । उपेन प्रादिसमासः । उपर्षिषभीयिषतीत्यादि सिध्यतु, वृद्धिस्तु कुतो नेति चेन्न । ऋषभीयतेरिह सुब्धातुत्वाभावात् । प्रत्ययग्रहणपरिभाषया हि उपर्षभशब्दोऽत्र सुबन्तः न तु केवल ऋषभशब्दः । तदिह यः सुबन्तो नासौ धात्ववयवः यश्च धात्ववयवः नासौ सुबन्तः । क्रियोपसर्गत्वाभावादपि न वृद्धिः । अत एव ल्यबर्थं प्रादिसमास इत्युक्तं न तु गतिसमास इति । न च सोपि क्त्वान्तेनासामर्थ्यात्कथमिति वाच्यम् । प्रकृत्येकदेशद्वारकस्य विशिष्टेन सामर्थ्यस्य क्त्वस्य सर्वत्र वाच्यत्वात् । न चोक्तरीत्या सुब्धातुत्वाभावे यथेष्टद्विर्वचनं न सिध्येदिति वाच्यम् । नामधातुत्वस्यैव तत्र प्रयोजकत्वात् । ऋकारमिच्छति ऋकारी-

तत्सामानाधिकरण्यात्तु माणवकाद् द्वितीयोत्पत्तिः, तदेवं माणवकादयो मौण्ड्यस्याधारविशेषप्रतिपादनार्थमुपादीयमानाः करोतियुक्ता न भवन्ति, यदा पुनरुभौ करोतियुक्तौ भवतो न भवति तदा वृत्तिः, तद्यथा बलीवर्दं करोति तं च मुण्डं करोति मुण्डयति बलीवर्दमिति शिष्टभवति,यद्येवमने-

धानमिति ध्वनयितुमस्य पुनरुल्लेखः। एवं च मुण्डादिसूत्रं प्रपञ्चार्थमेवेति बोध्यम् ॥ नन्वकर्मकत्वात्क्यजन्तात्कर्मणि प्रत्यया नेति प्रागुक्तमिव तत्किमर्थेहेत्यनेनोच्यत इत्यत आह

इच्छाक्यजन्तादिति ॥ (कै)

कर्मणोऽभिधानायेति । (कै)

पुत्रेति प्रथमान्तस्येष्टशब्दसामानाधिकरण्यात्कर्मत्वसद्भावेऽपि तस्य तद्वाचकत्वाभावात् ततः क्यचि तेन कर्मणोऽनभिधानादिति भावः। एवं सर्वत्राभिधानविषये बोध्यम् ॥

---

यति उपर्कारीयतीत्यत्र वा सुपीति वृद्धिः प्राकृतप्रकृतिभावस्येत्युभयं न भवति। ऋतीति तपरकरणात्। उस्रामैच्छत् औस्रीयत्। औंकारीयत्। आऊढ ओढः, औढीयत्। अत्र उस्यपदान्तात् ओमाङोश्चेति पररूपं प्राप्तम् आटश्चेति पुनर्वृद्धिविधानार्थेन चशब्देन बाध्यते। तथा च भाष्ये वार्तिकम्। उस्योमाङ्क्ष्वाटः प्रतिषेध इति। उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः। स्यादेतत्। उक्तवार्तिके आङ्ग्रहणम् औढीयदिति तद्भाष्यं चासङ्गतम्। उपसर्गाणां पृथक्करणस्य ज्ञापितत्वात्। न च सन्ध्यभावविषयकमेव तदिति वाच्यम्। उपर्षभीयतीत्यत्र तदभावापत्तेः। न चेष्टापत्तिः। माधवादिग्रन्थविरोधात्। अत्राहुः। तत्रोपसर्गस्वरूपमविकलं पृथक् प्रतीयते स ज्ञापकस्य विषयः। इह तु आङ् उकारेण सहैकादेशेन तथेति ओकारात्पूर्वमाङ्। तस्य अन्तवद्भावेनाङ्व्यपदेशेन ओकारेण सह प्राप्तं

---

नैव हेतुना कथमपि न प्राप्नोति, यदि आधारत्वेनापि माणवकोऽपेक्ष्यते पुनरपि सापेक्षता। किं च यदि न माणवकः करोतियुक्तः कथं तत्र सकार उत्पद्यते मुण्डयते माणवक इति, कस्यायं न्यायो न माणवकः करोतियुक्त इति, नह्यसौ मौण्ड्यमात्रेण सम्बुध्यति माणवकस्यमसौ मौण्ड्यमभिनिर्वर्त-

## दृष्टशब्देति । (कै)

एवं च तत्सामानाधिकरण्यात् तदर्थगतकर्मत्वस्य साक्षात्कर्मवाचिना क्तेनाभिधानात् प्रति सुबन्तस्य कर्मत्ववाचित्वाभावात् ततः क्यजिति भावः ॥

## निर्भुक्तेति । (कै)

इतरसामानाधिकरण्याज्जातकर्मभावाय न तु स्वत इत्यर्थः ॥ निर्भुक्तेति पाठे स्ववाच्यतया त्यक्तकर्मभावस्येत्यर्थः ॥

## स्वशब्देनोक्तत्वादिति । (भा)

भाष्यस्य स्वकर्मत्वं तद्वाचकशब्देन क्तेन कर्मत्वोक्तिः। पुत्र इत्यस्य सुबन्तस्य कर्मत्ववाचकत्वाभावान्न भवितव्यं तदर्थे क्यचेत्यर्थः ॥

---

पररूपं वृद्धिं मा बाधिष्टेति वार्तिके आङ्ग्रहणम् । उक्तवार्तिकभाष्यग्रन्थ एव च ज्ञापकस्य विशेषविषयत्वे प्रमाणमिति । एवं स्थिते आ इतः एतः । ऐतीयत् । एतिथित्वा । एतितीयिषतीत्यादि द्रष्टव्यम् । प्र एतीयतीति स्थिते एङिपररूपं बाधित्वा प्राप्तामेत्येधतीति वृद्धिं ओमाङोश्चेति पररूपं परत्वाद्बाधते । प्रेतीयति । आगतऋच्छः धा ईषदृश्यो वा अर्श्यः । प्रादिसमासः । अर् गुणः । अर्श्यमिच्छति अर्श्यीयति आर्श्यीयत् । अत्र गुणस्य अन्तवद्भावेन आङ्त्वादोमाङोश्चेति पररूपं प्राप्तं परत्वात्तद्बाधित्वा सवर्णदीर्घः प्राप्तः सोपि आटश्चेति पुनर्वृद्धिविधानार्थेन चकारेण बाध्यत इति केचित् । तन्न । रूपे विशेषाभावात् । पुनर्विधानस्य पररूपबाधेनोपपत्तौ गुण-

---

यति ततश्च स्वरूपेणाक्रियमाणोपि मायावको मुण्डरूपेण क्रियते, इष्यते च तदेवं सति यदि णिज् भवति क्यजपि स्याद् अथ क्यज् न भवति णिजपि न स्यादिति समानं वचः, एवं तर्हि मुण्डादयो गुणवचना, गुणवचनाश्च

## यदा क्रियाफलस्येति । (कै)

तथाच विग्रहे फलस्य विशेष्यतया पुत्रीयतीत्यादौ व्यापारस्य विशेष्यतयाभिधानार्थत्वान्न तदर्थोऽयं क्यच् किन्तु पुत्रमिच्छतीत्यत्रार्थ एव कर्मणि च फलस्य विशेष्यत्वमिष्टः पुत्र इत्यादौ सामानाधिकरण्यानुरोधेनावश्यमङ्गीकार्यमिति भावः ॥

## कर्मण इति । (कै)

कर्मसंज्ञाप्रयोजकस्येत्यर्थः । वस्तुत इयं व्याख्या इह भवन्न इतिमते उचिता । कर्मण इत्यस्य कर्मत्वविशिष्टबोधकस्येत्यर्थ इत्येव

---

त्वाच्च । अत एवोस्योमाङ्क्ष्विति वार्तिकेन पररूपमेव निषिद्धमिति दिक् । अश्वीयतीत्यस्य प्रादिपूर्वत्वे प्राश्वीयति । अत्र ओमाङोश्चेति बाधित्वा परत्वात्प्राप्तः सवर्णदीर्घः चकारेण पुनः पररूपविधानान्नेति माधवः । अरमिच्छति अरीयति । रीङृतः । अलमिच्छतीत्यत्रापि इदमेव रूपं सावर्ण्यात् । तपरकरणाद्दीर्घस्य न रीङ् नापि ऋत इत्वम् । अधातुत्वात् । ऋर्यति । हेशब्दमिच्छति हैयति गामिच्छति गव्यति । गव्यिता । अतो लोपे यस्यविभाषेति हल उत्तरस्य क्यप्रत्यययकारस्य प्राप्तो लोपः सन्निपातपरिभाषया न भवति । अगव्यीत् । वदव्रजेत्यत्र हल्ग्रहणस्य हल्समुदायस्य प्रतिपत्त्यर्थत्वेऽपि अल्लोपस्य स्थानिवत्त्वेनाङ्गस्य हलन्तत्वाभावान्न वृद्धिः । रैयति ग्लाव्यति ग्लाव्यिता । श्वलिह्यति । श्वलिह्यिता । श्वलिहिता । अश्वलिहीत् । अत्र हलन्तलक्षणा वृद्धिर्न । अल्लोपस्य स्थानिवत्त्वान्नेटीति

---

सापेक्षाः उच्यते च णिच् सो वचनात्सापेक्षेभ्योऽपि भविष्यति, क्यच् पुनरनपेक्षेभ्यः पुत्रादिभ्यः सावकाश इति मामकं पुत्रमिच्छतीत्यादौ सापेक्षेभ्यो न भविष्यतीति, यद्यप्ययमपि णिज् गुणमात्रकरणविवक्षायां सावकाशः

तद्व्याख्योचिता अग्रिम मतद्वये तु वस्तुतः कर्मत्वविशेषो यस्तद्वाचका-
दिति सूत्रार्थ इत्याशयः ॥

इह भवन्त इति । (भा)

सर्वत्र वृत्तिवाक्ययोः समानार्थत्वमेव । विषगुरित्यादिविषयेऽपि
विशेष्यविशेषणभावव्यत्यासात् तत्त्वमिति तदाशयः ॥ भाष्ये

• मान्ताव्ययेति । (भा)

मान्तत्वं न सुबन्तविशेषणं पुत्रीयतीत्यादेरसङ्गत्यापत्तेः । किन्तु
मान्तप्रकृतिकेत्यर्थकं तेन कमिच्छतीत्यादावपि नेति बोध्यम् ॥

---

निषेधाश्च । अत एव ओठ इति ढत्वं न । नः क्ये इति नियमेनापदान्तत्वात् ।
अत एव गोदुह्यतीत्यत्र दादेरिति घत्वं मित्रद्रुह्यतीत्यादौ वा द्रुहेति तद्वि-
कल्प उपानह्यतीत्यत्र नहो ध इति धत्वम् अनुडुह्यतीत्यादौ वसुस्रंसिति
दत्वं च न । पुरमिच्छति पूर्यति । हलि चेति दीर्घः । यत्तु अधातुत्वान्न दीर्घ
इति माधवेनोक्तम् । तन्न । पिपर्त्तेः क्विपि उदोष्ठ्यपूर्वस्येत्युत्वे रपरत्वे च
निष्पन्नस्य पुरशब्दस्य धातुत्वानपायात् । कथमन्यथा पूः पूर्भ्यामित्यादौ
दीर्घः । कथं च कटकपूरव्यूः पूः सर्वयोरित्यादिनिर्देशा इति दिक् । एवं
गिरमिच्छति गीर्यति । अत्रापि गिरतेः क्विपि ऋत इत्वे रपरत्वे प्राग्व-
द्दीर्घः । गीर्यिता । गिरिता । क्यस्य विभाषेति यलोपपक्षे हलपरत्वाभावान्न
दीर्घः । वोरिति पदस्य विधीयमानोपि न नः क्ये इति नियमेनापदत्वात् ।

---

मुण्डयत्ययं नापितः प्रवीणो मौण्ड्यकरणे इति तथापि तत्करोतीति सिद्धे
णिचि पुनर्विधानमिदं सापेक्षेभ्योपि यथा स्यादित्येवमर्थमेव, यद्वा द्विविधा
मुण्डादयो धातवः प्रातिपदिकानि च तत्र सूत्रे धातव उपात्तास्तेभ्यः
स्वभावत एव विशिष्टक्रियावचनेभ्यो णिज्भविष्यति प्रातिपदिकानां तु

**तच ऌवर्णेति । (कै)**

यद्यप्यनुकरणे ऌकारान्तम् ऋकारान्तं च सम्भवति तथापि तत्र क्यचः प्रयोगदर्शनाभाव इत्यर्थः ॥

**ऋकारान्तस्य चेति । (कै)**

असम्भवादित्यपकर्षः । वस्तुतस्तादृशानुकरणस्यैव लोके प्रयुज्यमानस्याभाव इति तात्पर्यम् ॥

---

स्वरिच्छतीति तु वाक्यमेव न तु क्यच् । मान्ताव्ययेभ्यः प्रतिषेधात् । चतुर्यति । दिव्यति । अनयोरधातुत्वाद्धलिचेति दीर्घो न चतुर् दिव्शब्दौ हि चतेरुरन्निति सूत्रेण दिवेर्डिविरिति न्यासोक्तिसूत्रेण च व्युत्पन्नौ । अव्युत्पन्नावेव वा । उभयथापि धातुत्वाभावः स्पष्ट एव । यत्तु प्रक्रियायां हलिचेति दीर्घः दिवमिच्छति दीव्यतीत्युक्तम् । तदप्रामाणिकमेव । तथा च हलिचेति सूत्रे काशिका, धातोरित्येव । दिवमिच्छति दिव्यतीति । यत्तु दिवेरौणादिके क्विपि दिवशब्दो धातुरेवेति व्युत्पत्तिपक्षमाश्रित्य प्रक्रियाग्रन्थः । अव्युत्पत्तिपक्षमाश्रित्य तु काशिकेत्यविरोध इति प्रसादकृतोक्तं, तत्तुच्छम् । क्विबन्तत्वे ऊठः प्रसङ्गात् भाष्यविरोधाच्च । दिवऔदिति सूत्रे हि अक्षद्यूरित्यत्र अतिव्याप्तिमेकदेशविकृतस्यानन्यत्वादाशङ्क्य निरनुबन्धकपरिभाषया उगिदचामिति सूत्रादधातुग्रहणानुवृत्त्या वेति द्वेधा समाहितम् । उभयथापि स्वत्पक्षे असङ्गतिः स्पष्टैवेति दिक् । नमिच्छति नम्यति । यव्यति । प्राशितीति प्राश् । प्राश्यति । अच्यर्यति । रोसपीति

---

विग्रह एव माणवकं मुण्डं करोतीति । अथ वा नेदं युगपदुभयं भवति वाक्यं च प्रत्ययश्च ततश्च मुण्डयतीति द्रव्यमात्रं प्रतीयते तत्र विशेषार्थिना विशेषो ऽनुप्रयोक्तव्यः, अथ वा मुण्डस्यैव शब्देन करोतिना ऽन्वयः मौण्ड्यविशिष्टेन तु माणवकस्य यथा गां दोग्धि पय इति शब्दस्य दुहेः पूर्वं

## मतभेदेति । (कै)

तथा चेदं मतमव्यवस्थितमिति भावः ॥ अन्ये तु अनन्तेभ्यो गोसमानाक्षरेभ्य एव अनुनासिकान्तेभ्यस्तु नान्तेभ्य एवेत्यस्यार्थः । अत एव रैशब्दात् क्यच्छान्दस इत्युक्तं स्थानेऽन्तरतमसूत्रे भाष्ये ॥ वाच्यतीत्यादौ च न दोषः । वाच्यतिस्तुच्यतीति च नः क्य इति सूत्रे भाष्ये प्रयुक्तमित्याहुः ॥

---

सत्वापवादो रेफः । स च नलोपे कर्तव्ये असिद्धो नेति वक्ष्यते । उब्भेः क्विप् उत् । तमिच्छति । उभ्यति । ककुभ्यति । म्रढं परिम्रढं वाचक्षाण-मिच्छति । म्रढ्यति । परिम्रढ्यति । णाविष्ठवदित्यतिदेशात्परिवृढेर्ऋकारस्य रेफः । बुद्धेः क्विप् । भुत् । तमिच्छति बुध्यति । त्वां मामिच्छति त्वद्यति मद्यति । अतित्वामतिमामिच्छति । अतित्वद्यति अतिमद्यति । प्रत्ययोत्त-रपदयोश्चेति त्वमौ । युवामावां वेत्यादिविग्रहे युष्मद्यति अस्मद्यति । अतियुष्मद्यति । अत्यस्मद्यति । उखां पन्थानं च आचक्षाणमिच्छति उख्यति । पथ्यति । मरुत्यति । अदस्यति । पयस्यतीत्यादि ॥

---

गवाभिसम्बन्धः पश्चात् गोदुहिना पयसः, क्यच् प्रत्ययस्त्वनभिधानान्न भवति माणवकं मुण्डीयतीत्युक्ते माणवकं मुण्डमिवाचरतीत्यर्थान्तरमेव प्रतीयते तदेवमिच्छायामाजन्माद्भावे कर्त्तरि च लावय इति स्थितम् ।

# काम्यच्च । ३ । १ । ९ ॥

ननु च स्यादिना पाठे सूत्रभेदः स्यादत आह

**अन्तेऽपीति ।** (कै)

नियमार्थतयादिपाठफलं सम्पन्नमित्यर्थः ॥

काम्यच्च ॥ उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । सुप आत्मनः क्यच्काम्यचाविति वक्तव्ये उत्तरत्र द्वयोरनुवृत्तिर्मा भूदित्येवमर्थो योगविभागः । न चैवमपि सन्निहितत्वात्काम्यजेवोत्तरत्र सम्बध्येतेति वाच्यम् । इह चकारेणानुकृष्टस्य क्यच उत्तरार्थत्वात् । सुप आत्मनः काम्यच क्यच्चेति तु सूत्रयितुं युक्तम् । काम्यचः ककारस्य इत्संज्ञा न । फलाभावात् । न च क्ङिति चेति निषेधः फलम् । अधातुविहितत्वेन आर्द्धधातुकत्वाभावादेव गुणाप्राप्तेः । वाक्काम्यतीत्यत्र सम्प्रसारणं फलं स्यादिति चेन्न । षष्ठान्ते भौणहत्ये तत्त्वनिपातनेन धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति ज्ञापयिष्यमाणत्वात् । तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्यय इति प्राञ्चः । स्वरूपग्रहणं च नेह प्रकृत्याग्रहिकयोपादानम् । तथा सति हृतस्पृग्भ्यामित्यादावनुदात्तस्यचर्दुपधस्येत्यमागमप्रसङ्गात् । किन्तु यत्कार्यं धातुं न व्यभिचरति तत्रेयं परिभाषोपतिष्ठते । तथा च स्वरूपग्रहणं नाम धातोरेवाश्रयणं तच्च यथा कथञ्चिदित्यास्तां

"काम्यच्च" ॥ किमर्थो योगविभागो न सुप आत्मनः क्यच्काम्यचाविर्त्येकयोग एव क्रियेत, एवं हि चकारो न कर्त्तव्यो भवति तत्राह । 'योगविभाग इत्यादि' । एकयोगे हि सति उत्तरसूत्रे द्वयोरप्यनुवृत्तिः स्यात् । ननु योगविभागेऽप्यानन्तर्यात्काम्यच एवानुवृत्तिः प्राप्नोति, नैष दोषः । चकारोऽत्र क्रियते स क्यचोऽनुकर्षणार्थः, तदनुकर्षणस्य चैतदेव प्रयोजनमुत्तरत्रानुवृत्तिर्यथा स्यात् काम्यचस्तु योगविभागसामर्थ्यादनम्

## वाक्काम्यतीति । (कै)

**क्विपि प्रच्छति वार्त्तिकेन क्विप्दीर्घसम्प्रसारणानि । अस्य प्रयोगस्य सत्त्वे दृढं मानं चिन्त्यम् ॥**

तावत् । चकारस्तु भाष्यवार्तिकयोः प्रत्याख्यातः । न्यासकारहरदत्तमाधवास्तु पुत्रकाम्यिष्यतीत्यादौ सतिशिष्टमपि स्वरं बाधित्वा धातुस्वरो यथा स्यादित्येतदर्थं चित्करणमित्याहुः । तत्तु प्रौढिवादमात्रं मुनिवचनविरोधेन स्वरेच्छितस्वरस्यागादर्त्तव्यत्वादिति सुहृदयैर्विभाव्यताम् । पुत्रकाम्यिता । पुत्रकाम्यिष्यति । इह यस्येति लः इति न भवति । अनर्थकत्वात् । यस्येति हि सङ्घातग्रहणादर्थवद्ग्रहणेनानर्थकस्येति वक्ष्यते । अत एव प्रयतौ पत्रकाम्ययेति सिध्यति । इहान्तर्वर्तिन्या विभक्त्या पदत्वाद्यायोगं पदकार्याणि । यशस्काम्यति । रुत्वं विसर्गः । सोपदादाविति सत्वम् । स्वः काम्यति । सोपदादावनव्ययस्येति वचनात्सत्वाभावः । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्रधानत्वात् । इषिणा कर्मत्वेन योगः । गीः काम्यतीत्यादौ । रोः काम्य इति रोरेव विसर्जनीयस्य काम्ये सत्वनियमात्सत्वाभावः । सर्पिष्काम्यति । सत्वं बाधित्वा इणः ष इति षः । अयं च सत्वापवादतया यत्र तत्प्रसक्तस्तत्रैव । तेनोच्चैः काम्यति गीः काम्यतीत्यादौ न भवति । पुंस्काम्यति । अत्र पुंसः संयोगा-

---

दृत्तिः । 'प्रयोजनाभावादिति' । अग्निकाम्यतीत्यादौ गुणनिषेधो न प्रयोजनम्, अनार्द्धधातुकत्वादेव गुणस्याप्रसङ्गात् 'विजुपे छन्दसि' उपयट्, उपयजमिच्छति उपयटकाम्यतीत्यत्र न संप्रसारणं प्रयोजनं, यजादिभिः कितो विशेषणात्, यजादिभ्यो यो विहितः किदिति, वाक्काम्यतीत्यत्रापि धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानान्न संप्रसारणं प्रयोजनम् । 'चकारादित्वादेति' । के चिदणाचक्षते, अन्तस्य चकारोऽनर्थकः, धातुस्वरेणैवान्तोदात्तत्वस्य सिद्धत्वात्, स आदौ कर्त्तव्यः, अथ वा कृन्तोऽपि कृतो नियमार्थं

पूर्वः परिहारेति । (कै)

यजादिभ्यो विहित इत्यर्थः। क्यच् प्रमित्यत्रव्याख्यायां काम्यच् प्रवृत्तेर्नायं वच्यादिभ्यो विहितः काम्यचश्चित्करणानर्थक्यमिति वार्त्तिकविरोधेन पुत्रकाम्यतीत्यादौ सति शिष्टस्य स्वरं बाधित्वा चित्स्वर एव यथा स्यादिति चित्त्वमिति हरदत्तोक्तमपास्तम् ॥

---

न्लोपे प्रमः सय्यमपर इति सत्वं निवर्त्य सम्पुम्कानां सो वक्तव्य इति सत्ववचनान्नास्ति विसर्जनीय इति न षत्वम्। मान्ताव्ययेभ्योऽप्ययं भवत्येव। किंकाम्यति। अनुस्वारपरसवर्णविकल्पौ ॥

उपमानादाचारे ॥ उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति च्छात्रम्। विष्णूयति द्विजम्। अधिकरणाच्चेति वक्तव्यम् ॥ प्रासादीयति कुट्यां कुटीयति प्रासादे। इहोपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमेवेति कर्मत्वाविवक्षया सूत्रेणासिद्धे वार्तिकारम्भः। सूत्रवार्तिकयोरुभयोरप्युदाहरणे क्यच् प्रत्ययस्य आचारमात्रमर्थः। प्रकृतेस्तु वृत्तिविषये एकत्र स्वार्थकर्मकाचरणसदृशमर्थः। अपरत्र स्वार्थाधिकरणकाचरणसदृशम्। तत्र प्रत्ययार्थेऽभेदेन संसर्गेण विशेषणम्। प्रत्ययार्थभूताचरणक्रिया तु उपमेया। सा च बाह्याभ्यां कर्माधिकरणाभ्यां सम्बध्यते ॥

---

संपद्यते चिदेवायं व्यपदेष्टव्यो नानुबन्धान्तरेणेति, तेनान्ते क्तत आदित्वफलसंपादनादादितः संपद्यत इति। अस्य तु सुप आत्मनः क्यच काम्यचेति द्विचकारकनिर्देशाश्रयेण चकारादित्वं वर्णयन्ति, चित्करणं तु पुत्रकामिस्यतीत्यत्र सति शिष्टमपि स्यस्वरं बाधित्वा चित्स्वर एव यथा स्यादिति ॥

"उपमानादाचारे" ॥ कुत्र इत्युपमेये सप्तमीश्रवणादुपमानमपि सप्तम्यन्तमेवेति कर्मविवक्षायामेतत्प्रयोगसम्भवाद्वचनारम्भः। कुट्यामिति तु युक्तः पाठः ॥

# कर्तुः क्यङ् सलोपश्च । ३ । १ । ११ ॥

एकवाक्यतोपपादकं

**सन्नियोगेनायम्** (भा)

इत्यादि । एतावतैवैकवाक्यतेति व्यवहारः । एतेन विधेया-

---

कर्तुः क्यङ् सलोपश्च ॥ उपमानात्कर्तुः सुबन्तादाचारे क्यङ् वा स्यात् । सान्तस्य तु कर्तुरलोऽन्त्यस्येति लोपो वा स्यात् । प्रत्ययविकल्पनात्पक्षे वाक्यम् । सान्तस्य लोपविकल्पस्तु व्यवस्थितः । ओजोऽप्सरसोर्नित्यमन्येषां तु विकल्प एवेति । कृष्ण इवाचरति । कृष्णायते कथं तर्हि चीरोदीयन्ति सद्यः सकलजलधयो वासुकीयन्ति नागा इति । चीरोदमिवात्मानमाचरन्तीत्यर्थे उपमानादाचारइति क्यच् । ओजायते । ओजःशब्दोत्र वृत्तिविषये तद्वति वर्तते । अप्सरस इवाचरति अप्सरायते । यशायते । यशस्यते । विद्वायते । विद्वस्यते । इह सूत्रे चकारोन्वाचये । तेन कर्तुः क्यङ् सर्वत्र भवति । यत्र तु सकारः सम्भवति तत्र लोपोपि । सेति च पृथक्पदं लुप्तषष्ठीकम् । तेन कर्तुर्विशेषणात्तदन्तविधिः । अतो हंसायतइत्यादौ सलोपो न । सान्तेष्वपि लोपो व्यवस्थितः । तथाच वार्तिकम् । ओजप्सरसोर्नित्यमिति । एवं स्थिते ओजसोप्सरसो नित्यं पयसस्तु विभाषयेति काशिकायां पयोग्रहणं ओजोप्सरोभिन्नसकारान्तस्योपलक्षणार्थम् । एतेन यशः प्रभृतेर्नैव भवतीति यत्तु प्रक्रियायां

---

"कर्तुः क्यङ् सलोपश्च" ॥ 'आचार इति' । तेन तदपेक्षमुपमानस्य कर्तृत्वं विज्ञायतइति भावः । 'सलोपश्चेति' । यद्ययं चशब्दः समुच्चयार्थः स्यात् यदेकमेव वाक्यं स्यात् क्यङ्सलोपौ भवत इति ततश्च यत्रैव सलो-

नेकत्वात्कथमेकवाक्यतेति परास्तम् इत्याहुरिति ॥ अत एवोप-
क्रमभाष्ये

पयायते (भा)

इत्यत्रैव क्यङ्स्यात् सलोपसंनियोगशिष्टत्वादिति शङ्कायां

सुपूर्वस्य मनसो नित्यमिति तदपार्थनीयम्। भाष्यतः परस्ताः। यत्तु विद्यमानः शास्त्रे ऽधिकारीति वाचस्पतिग्रन्थव्याख्यावसरे कल्पतरुकारैरुक्तम्। विद्यमान इति लोहितादिडाज्भ्यः क्यषिति। तल्लोहितादेराकृतिगणत्वेन प्रौढिवादमात्रम्। वस्तुतस्तु क्यङेवायं न तु क्यष्। लोहितादिसूत्रे नायं हलन्तादिहधीयते इति वदद्भिर्भाष्यकारैर्हलन्तानुप्रयोगनङ्गीकृतत्वात्। कथमन्यथाऽस्यविभाषेत्यत्र सामान्यग्रहणार्थं ककारं प्रत्याचख्युरित्यवधेयम्। अर्चिरिवाचरति अर्चिष्यते। नः क्य इति नियमेन पदान्तत्वाभावात्षत्वम्। त्वद्यते। मद्यते। अनेकार्थत्वे तु युष्मद्यते। अस्मद्यते। कुमारीवाचरति कुमारायते। हरिणीव गौरीव गुर्वीवाचरति हरिणायते। गौरायते। गुर्व्यते। क्यङ्मानिनोश्चेति पुंवत्। सपत्नीवाचरति सपत्नीयते। अत्र पुंवद्भावो नेति न्यासकारः। यदाह नित्यंसपत्न्यादिष्वित्यत्र समुदायोच्चारणं पुंवद्भावबाधनार्थमिति। तदेतद्युक्तिविरुद्धं भाष्यविरुद्धं च। तथाहि। समुदायनिपातनं ङ्यर्थं समानस्य सभावार्थं चेति न त्वदुक्तार्थज्ञापकम्। तथा तसिलादिष्विति सूत्रे भाष्यकारः। सपत्नीशब्दाच्छिवाद्यणि भस्याढे इति पुंवद्भावे सापत इति प्राप्य अङ्ग्रहणमपनीय अनपत्य इति विवक्षया परिगणय्य

---

पक्षेऽत्रैव क्यङपि स्याद् ओजायत इति, इह तु न स्यात् श्येनायते काक इति, अतो ऽन्याचये चशब्दे वाक्यभेदस्वाश्रयणीयः, अविशेषेणोपमाना-त्कर्तुः क्यङ् भवति यत्र तु सकारः सम्भवति तत्र तस्य लोप इति तदिद-

**तत्प्रयोगाभावरूपं समाधानमनभिधायान्यदेव समाधानं कृतम्। क्रियावचनत्वस्य धातुगणमध्ये तत्तदर्थविशिष्टानां पठितत्वादेव सिद्धत्वादाह**

---

गार्ग्यायण्या अपत्ये तु कुत्सिते गोत्रस्त्रियाः कुत्सनेचेति णप्रत्यये गार्ग्यायण इति स्यात् गार्ग्य इति चेष्यतइति दोषमुद्भाव्य भस्याढइति यथान्यासं स्थापयित्वा नित्यं सपत्न्यादिष्विति समुदायनिपातनं परिहारत्वेनानभिधाय शत्रुपर्यायात्सपत्नशब्दात् शार्ङ्गरवादिङीनन्तात् शिवाद्यणिति सापत्नशब्दं साधितवान्। शिवादिषु समानः पतिर्यस्या इति व्युत्पादितस्य समानस्वामिकाभिधायिनो भाषितपुंस्कस्य केवलयौगिकत्वाद्ग्रहणं नेष्टमिति तदाशयः। एवं स्थिते तस्माल्लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणे ण्ये सापत्य इति भवति। भावकर्मणोः पत्यन्तलक्षणे यकि सापत्यमिति सुध्यातुवृत्तौ माधवः। तस्मात्क्यङ्यपि प्रकृतिभेदेन सपत्नायते सपत्नीयत इति द्वयमपि साधु। यत्तु पा रक्षण इति धातौ माधवेनोक्तम्। भावकर्मणोः पत्यन्तलक्षणे यकि सापत्यम्। अभाषितपुंस्कत्वात्पुंवद्भावो नेत्यादि। तत्तु विवाहजन्यसंस्कारविशेषनिमित्तकं पतिशब्दमाश्रित्य। इतरत्तु स्वामित्वमात्ररूपमित्यविरोधः। एवं च शिवादौ नित्यस्त्रीलिङ्गस्यापि योगरूढस्य ग्रहणात्सापत्नशब्दो द्व्यर्थः सपत्नीयत इति च तृतीयमपि रूपं साध्वित्यवधेयम्। युवतिरिवाचरति युवायते। यत्तु ङ्यापसूत्रभाष्ये युवतितरेत्युदाहरणात् यौवनं जातिः। अन्यथा जातेश्चेति निषेधाभावात्तसिलादिष्विति पुंवद्भावः क्रियेतेति। तन्न। वयसो अनित्यत्वेन

---

मुक्तम्। 'अन्वाचयशिष्टः सलोपस्तदसम्भवेऽपि क्यङ् भवतीति'। 'श्येनायतइति' 'अकृत्सार्वधातुकयोर्दीर्घः'। 'सलोपविधावपीति'। सलोपस्यान्वाचयशिष्टत्वेन वाक्यभेदे सत्ययमपि गुणो भवतीत्यर्थः। अपिचशब्देन-

## आचारेति ॥ (कै)

### भाष्ये

अजातित्वात्। कथमन्यथा अचः परस्मिन्निति सूत्रे युवजानिरिति भाष्यं सङ्गच्छते। युवतितरेति तु भाष्यनिर्देशादेव न पुंवदिति कैयटे स्पष्टम्। पट्वी च मृद्वी च पटवीमृद्व्यौ। ते इवाचरति पटवीमृदूयते। पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत्। पाचिकायते। नकोपधायाः। चतुर्थायते। संज्ञापूरण्योश्च। श्रौघ्नीयते। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे। काषायायते कन्था। रक्तार्थत्वान्नेह पुंवद्भावनिषेधः। खदिरस्य विकारः खादिरी। पलाशादिभ्यो वेति विकारे अणोऽन्यतरस्मिन् ङीप। खादिरायते इत्यादि। आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा॥ क्यङपवादोऽयम्। पक्षे वा ग्रहणात्क्यङपि। गल्भ धार्ष्ट्ये। क्लीबृ अधार्ष्ट्ये। होडृ अनादरे। एते पचाद्यजन्ताः। अचो ऽकारस्य इत्वेव वार्तिके अनुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते। तेन क्विबन्तादात्मनेपदं सिध्यति। क्विप्प्रतियोगेनानुनासिकत्वप्रतिज्ञानात्क्यङ्पक्षे इत्संज्ञा न भवति। स्यादेतत्। उक्तधातूनामनुदात्तेत्त्वादवगल्भते क्लीबते होडते इति सिद्धम्। तेभ्य एव पचाद्यजन्तेभ्यः क्यङि अवगल्भायते इत्यादि। न च अवगल्भते इत्यादीनां धार्ष्ट्यादिकमेवार्थः स्यात् न त्वाचार इति वाच्यम्। धातूनामनेकार्थत्वेनाचारार्थताया अपि लाभात्। तत्किमनेन वार्तिकेनेति चेत्। सत्यम्। अवगल्भाञ्चक्रे क्लीबाञ्चक्रे होडाञ्चक्र इत्यत्र प्रत्ययान्तत्वादाम् यथा स्यादित्येवमर्थमिदं वार्तिकम्। अवगल्भेति किम्। अनुपसर्गादुपसर्गान्तर-

तद्दर्शयति क्यङ्विधौ तावत्सम्बद्ध्यते वाक्यसंपादनाय एवं सलोपविधावपीति। 'ओजायत इति'। ओजः शब्दो वृत्तिविषये तद्वति वर्तते। ओजसोऽप्सरसोर्नित्यं पयसस्तु विभाषयेति'। अन्यस्य तु यशःप्रभृतेरने

**न चैवं ह्यर्था इति । (भा)**

**अस्य धातुपाठ इति शेषः ॥ "अर्था" इत्यस्य सर्वे अर्था इत्यर्थः ॥**

---

विविष्टाश्च क्यङेव यथा स्यात् । गल्भायाञ्चक्रे इति माधवादयः । प्रक्रियायां तु अवेत्यपहाय केवलस्य पाठः । तदनुगामिप्रसादादिग्रन्थश्च प्रामादिक एव । धातुभ्य एव लिटि तु जगल्भे चिक्लीबे । जुहोडे । सर्वप्रातिपदिकेभ्यः । न केवलमवगल्भादिभ्य एव किन्तु सर्वेभ्य एव आचारे क्विब्वक्तव्य इत्यर्थः ॥ पूर्ववार्तिकन्तु अनुबन्धासंगार्थं स्थितमेव । प्रातिपदिकग्रहणादिह सुप इति न सम्बध्यते । तेन पदत्वाभावादुदाहरणेषु पदकार्याणि न । कृष्ण इवाचरति कृष्णति । अतो गुणे इति । शपा सह पररूपम् । एतेन चर्म वाचरति चर्मतीति प्रक्रियाग्रन्थः परास्तः । अपदान्तत्वेन नलोपायोगात् । कथमन्यथा इहैव शपा सह पररूपं स्यादिति यत्किञ्चिदेतत् । इह द्वितीयवार्तिके वाग्रहणं नानुवर्त्यम् । प्रातिपदिकविषयकेणानेन क्विपा सुबन्तविषयस्य क्यङो भिन्नविषयत्वादेव बाधस्याप्रसक्तेर्वचनद्वयप्रामाण्याद्विकल्पोपपत्तेश्च । पूर्ववार्तिकेऽपि एतत्सिद्धक्विबनुवादेनानुबन्धासङ्गमात्रे तात्पर्यस्य भाष्ये स्थितत्वेन प्रादिपदिकविषयता वाशब्दवैयर्थ्यं चेति तत्त्वम् । तस्य सुबन्तविषयत्वे हि अन्तर्वर्त्तिविभक्त्या पदत्वात् गल्भतेः संयोगान्तलोपो दुर्वारः । अथ क्विबन्तेषु रूपाणि लेशत उदाह्रियन्ते । अ इवाचरति । अति । अतः । अन्ति । णलि अचो ञ्णितीति वृद्धौ आत औणलः । औ । तथा च कशब्दस्य चकाविति हरदत्तः । माधवस्तु ण्यल्लोपाविति वचनात्सति वृद्धिं

भवतीत्येके, नेति वयम् । ओजोप्सरोव्यतिरिक्तस्य सकारान्तस्योपलक्षणार्थं पयोग्रहणम् । अत एवं सलोपो वा, ओजोप्सरसोर्नित्यमिति सामान्येन वार्त्तिकं तेन यशायते यशस्यतइत्याद्यपि भवति । सलोपोप्सरस एवेत्ययं

## क्रियावचनतेति। (कै)

ताद्रूप्यक्रियेत्यर्थः॥

बाधित्वा अतोलोपाच्चकेत्युदाहरणम्। तन्मतेऽपि भ्रूशब्दस्य भ्रौ। भ्रुवः। उः। सर्वत्रात्र द्विर्वचने अतोलोपादतः कृत्वा दतोगुणे परत्वे तस्याकृ ग्रहणेन प्रामादतोलोपात्परत्वादभ्यासग्रहणेन ग्रहणादत आदेरिति दीर्घः। आतोलोप इटि चेत्यालोपः किति। णलन्त औ वृद्धिः। स्यादेतत्। इह प्रत्ययान्तत्वादामा भाव्यम्। न च कास्यनेकाज्ग्रहणमिति वार्तिकेन प्रत्ययग्रहणस्थानेनेकाज्ग्रहणस्य कृतत्वात्प्रत्ययान्तेभ्योप्येकाजभ्य आमेति वाच्यम्। चुलुम्पादीनामप्रत्ययान्तानां संग्रहार्थमनेकाज्ग्रहणमधिकं कर्तव्यमित्येतावन्मात्रपरतयापि कार्त्तिकस्य कृतार्थत्वे सौत्रस्य प्रत्ययग्रहणस्यापनयने कारणाभावात्। अत एव वार्तिककृता चुलुंपाद्यर्थमित्युक्तं न त्वेकाजनिवृत्त्यर्थमिति। अत एवावगाहभाष्यक्र इत्यादि भाष्योदाहृतं सङ्गच्छते। न हि तत्रानेकाच्त्वमस्ति। आत्मनेपदार्थमनुबन्धासङ्गस्य निर्विवादत्वात् अत एव आमास आमकारेति प्रक्रियाकारोदाहृतं निर्बाधमिति चेत्। मैवम्। ह्रदत्तादिग्रन्थेषु कण्ड्वादावाशागादिभ्यश्चाचारक्विबन्तेभ्य एकाजभ्योपि प्रत्ययान्तत्वादाम् स्यात्। चुलुंपादिभ्यश्च न स्यात्। अतो व्याप्तनिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाज्ग्रहणं कर्तव्यमित्यर्थकतया वार्तिकस्य व्याख्यानत्वात् माधवादिभिरपि तदनुसारेणाव रूपाणामुदाहृतत्वाच्च। यत्तु चैतत्। कास्यनेकाज्-

तु पञ्चो भाष्येपि न स्थितः। 'सलोपविधौ कर्त्तुरिति स्थानषष्ठी संपद्यतइति'। प्रत्ययविधौ यत्पञ्चम्यन्तं तदेव लोपेन सम्बन्धे ऽर्थादिभक्तिविपरिणामो भवतीति षष्ठ्यन्तं संपद्यतइत्यर्थः। 'तत्राल्लोन्त्यस्येति नियमे सतीति'। सकारेण कर्त्तुर्विशेषणात्तदन्तविधिविज्ञानात्तदर्थमेव च सेति

गम्यते (भा)

इत्यस्य लोक इति शेषः । अनिर्दिष्टार्थधातूनामेवानेकार्थत्वमित्येतद्व्याख्यार्थम् । अन्ये वाक्ये इति वार्त्तिक इत्यर्थः ॥

---

ग्रहणमिति वार्तिकाक्षरस्वरसात् । अन्यथा हि अनेकाच उपसंख्यानमित्येव ब्रूयात् । न तु प्रत्ययशब्दावच्छिन्नकाम्युत्तरभागमनेकाचं निवेशयेत् । आगन्तूनामन्ते निवेशस्य न्याय्यत्वात् । चुलुंपाद्यर्थमिति वार्तिकशेषस्वरसो ममाप्यनुकूलोऽस्तीति चेत् । न । तदपेक्षया उपक्रमस्य प्राबल्यात् । न चैवं गल्भादावाम् न स्यादिति वाच्यम् । तेषां क्विप्सन्नियोगेन एकाच्त्वेपि पूर्वमनेकाच्त्वात् । काम्यनेकाच इत्यत्र भूतपूर्वगतेराश्रयणात् । आचारेवगल्भेत्यादिवार्तिकस्यैव च भूतपूर्वगत्याश्रयणे प्रमाणत्वात् । तद्धि आम्प्रत्ययो यथा स्यादित्येवमर्थमिति भाष्यादौ स्पष्टम् । इह ज्ञापकस्य सामान्यविषयत्वे घटपटप्रभृतिभ्यस्तत्करोतिण्यन्तेभ्यः । क्विप्चेति क्वौ तत आचारक्वौ लिटि आमा भाव्यम् । गल्भादिविशेषमात्रविषयत्वे तु नेत्यन्यदेतत् । इदं त्ववशिष्यते । सर्वप्रातिपदिकेभ्य इति क्विपि परस्मैपदे प्राप्ते आत्मनेपदप्रवृत्त्या चरितार्थं वचनं कथमाम्प्रवृत्तिं साधयेदिति । अत्रोत्तरम् । वाक्याभ्यनुज्ञानार्थं कृतस्यापि इच्छासनि वाग्रहणस्य पूर्वसूत्रद्वये व्यवस्थापकत्वमाश्रित्य गुपादेर्निन्दाक्षमादिष्वेव सन्नान्यत्रेति यथा सिद्धान्तितं तथेहापि तद्बलेनैव सर्वप्रातिपदिकेभ्य इति क्विप् गल्भादेर्न करिष्यते इति परस्मैपदनिवृत्तिस्तावत्सिद्धा । आत्मनेपदमपि स्वतन्त्र-

---

पृथक् पदं लुप्तषष्ठीकं, क्वचिदलोन्त्यनियमे सतीति पाठः, तत्र सूत्रैकदेशानुकरणत्वात्समासेपि विभक्तेर्लुगभावो यथास्यत्रामोयमिति । 'आचारइत्यादि' । क्यङपवादोऽयं, गल्भ धार्ष्ट्ये, क्लीब अधार्ष्ट्ये, होडृ अनादरे, एते पचाद्यन्ता गृह्यन्ते, तस्य चाकारस्य वाक्ये ऽनुदात्तत्वानुनासिकत्व

## अकारस्येति । (कै)

ननु क्विप् इकारस्यैव उदात्तत्वम् उनासिकत्वं च प्रतिज्ञायतां किमनेनानुबन्धत्रयकरणेनेति चेन्न । अश्वतीत्यादावप्यात्मनेपदाय-यतः अतिरिक्तक्विप्करणे तु गौरवमिति भावः ॥ भाष्ये

धातुभ्यो ऽन्यत्र । आचारार्थताप्यनेकार्थत्वात्सुलभा । तथा च वचनस्य नान्यत्र चरितार्थतेति ज्ञापकत्वं सुस्थमेव । एवं च सकलमहाग्रन्थविरुद्धं स्वामासेति प्रक्रियोदाहरणं न श्रद्धेयमिति स्थितम् । इणो अयतेर्वा णिजन्तात्क्विप्चेति क्विप् आययतीत्याः । आयमाचष्टाम आः स इवाचरति आति । यमरमेतादसकौ । आसीत् । आसिष्टाम् । एकादेशस्य पूर्वान्तत्वाल्लिङ्गविशिष्टपरिभाषया च मालेवाचरति मालाति । अमालासीत् । अमालासिष्टाम् । अमाल्लुङि अमालात् अमालाः । अत्र हल्ङ्यादिलोपस्तु न भवति । ङीसाहचर्यादापोऽपि सोरेव लोपविधानात् । कविरिव कवयति । कवयाञ्चकार । आशीर्लिङि कवीयात् । सिचिवृद्धिरित्यत्र ऋतइद्धातोरित्यतो धातोरित्यनुवृत्तेर्धातुरेव यो धातुरिति विज्ञानान्नामधातोर्न वृद्धिरिति कैयटहरदत्तौ । तन्मते गुणे अकवयीत् । वर्धमानोऽप्येवम् । माधवस्तु इक्परिभाषाश्रयपक्षे धात्वनुवृत्तेः कैयटेन प्रदर्शितत्वादिगन्ते नामधातावपि वृद्धिमिच्छति । तन्मते अकावयीत् । विरिव वयति । विवाय । विव्यतुः । अवयीत् । अवायीत् । इरिव अयति । इयाय । इयतुः । इयुः । इययिथ । इयथुः । इय ।

---

प्रतिज्ञायेते, तेन क्विबन्तादात्मनेपदं भवति, वावचनात्क्विपा मुक्ते क्यष् भवति, क्विप्सन्नियोगेनानुनासिकत्वप्रतिज्ञानात् क्यङ्पक्षे इत्संज्ञा न भवति । किमर्थं पुनरिदं यावता गल्भादयो धातव एवानुदात्तेतः पठ्यन्ते, तेभ्यो गल्भत इत्यादि सिद्ध्यति एतेभ्य एव पचाद्यजन्तेभ्यः क्यङि अवगल्भा-

## आत्मनेपदार्थान् (भा)

इत्यादेराम् विषये क्विपंनियोगेनेति शेषः ॥

---

इयाय । इयिव इयिम । अत्र कित्सु सवर्णदीर्घे कृते इयङ् । यदा । दीर्घात्परत्वेनोत्तरखण्डे एरनेकाच इति यण् । गुणवृद्धिविषये तु अचायोर्द्विर्वचनेऽचीति स्थानिवत्त्वात् । एदैतोर्द्वित्वमभ्यासह्रस्वः । अभ्यासस्यासवर्णे इतीयङ् । एदैतोऽपि स्थानिवत्त्वादिकारस्य द्वित्वमिति पक्षे तु सवर्णदीर्घात्परत्वादुत्तरखण्डस्य पुनर्गुणवृद्धी । ततोऽभ्यासस्येयङ् । लक्ष्मीरिव लक्ष्मयति । लक्ष्मयाञ्चकार । श्रीरिव श्रयति । शिश्राय । शिश्रियतुः । शिश्रियुः । उरिव । अवति । अवाञ्चकार । इणादेस्त्वयाम् । कुरिव कवति । चुकाव । भूरिव भवति । बुभाव । बुभूवतुः । अचिश्नुधात्विति उवङ् । गुणवृद्धिविषये तु ताभ्यां बाध्यते । पितेव पितरति । पितराञ्चकार । आशीर्लिङि रिङ्शयग्लिङ्क्ष्विति रिङादेशः । पित्रियात् । नेव नरति । ननार । एवाचरति अरति । पाघ्रेत्यादौ नायं गृह्यते । अभिव्यक्तपदार्था ये इति न्यायेन धातुपाठस्यैव ग्रहणात् । एवञ्चास्मादृघ्वद्राल्लिटि ऋच्छत्यॄतामिति न प्रवर्तते । तत्र धात्वभ्यासयोः सवर्णदीर्घे धातुग्रहणेन ग्रहणादृकारान्तलक्षणो गुणो अरतुरित्यादौत्येके । अन्येतु अभ्यासग्रहणेन ग्रहणादुरदत्वं हलादिः शेषः । अत आदेरिति दीर्घः । आतोलोप इटि चेत्यालोपः । आतुः । उरिति प्रत्ययमात्रमवशिष्यत इत्याहुः । इरिवाचरति इवति । अनभिव्यक्तपदार्थत्वेन णिश्रिद्रुस्रुभ्य

---

यतइत्यादि, यद्यपि धाष्टर्यादावर्थे गल्भादयः पठ्यन्ते तथाप्यनेकार्थत्वाद्धातूनाम् अवगल्भइवाचरतीत्यत्रार्थेऽपि त एव वर्त्स्यन्ते, सत्यम्, अवगल्भांचक्रइत्यादौ प्रत्ययान्तत्वादाम्यथा स्यादित्येवमर्थं क्विब्विधीयते । अथ यदा धातुभ्य एव क्विब्विधीयते तदा कथं भवितव्यम् अवजगल्भे विचि-

## आसंख्यामीति । (भा)

तद्गुणविशिष्टवर्णान्तरं प्रश्लेषेणोपदेक्ष्यामीत्यर्थोऽत एवेत्संज्ञा । अन्यथा क्लीवादीनां पचाद्यजन्तानां क्विबर्थमनुवादेनोपदेशाभावा-

---

इति चङोऽभावात्सिचि अद्रावीत् । भूरिवाचरति भवति । अत्र गातिस्थेति न प्रवर्तते । अभावीत् । अभाविष्टाम् । अभाविषुः । बुभावेत्यादि । एवं पिबतेर्विचि पाः । ततः क्विपि पाघ्राध्मेति गातिस्थेति च न प्रवर्त्तेते । पाति । अपासीत् । एवं प्रतिपदोक्तानामन्येषामपि इष्टाप्रवृत्तिरूह्या । कथं तर्हि बुभूवतुरिति प्राग्वदुदाहृत इति चेत् । धातुत्वप्रयुक्तोऽसौ न तु भूत्वप्रयुक्त इत्यवधेहि । पृरिवाचरति । परति । पपार । पपरतुरित्यादि । अयं पृशब्दानुकरणं धात्वन्तरं न पुनः क्र्यादौ जुहोत्यादौ वा पठ्यमान इति श्ना इत्वं च न भवति । क्विति लिटि ऋच्छत्यृतामिति ऋकारान्तलक्षणो गुणः । पृद्प्रामिति ऋत्वविकल्पस्तु न भवति । अनभिव्यक्तपदार्थत्वात् । ऋरिवाचरति । अरति । आरांचकार । इजादेश्चेत्याम् । लृरिवाचरति । अलति । लिटि द्विर्वचनम् । लृवर्णस्य दीर्घाभावात्सवर्णदीर्घाभावः । उत्तरखण्डस्य यणि अभ्यासस्योरदत्वादेव । आल । आलतुरित्यादीति माधवः । तत्र यणीति क्विद्विषयं पित्सु तु गुणवृद्धी बोध्ये । सवर्णदीर्घाभाव इति तु गुणवृद्धिस्थले भवतु नाम । अवर्णस्य लृकारं प्रत्यसवर्णत्वात् । गुणवृद्ध्योः स्थानिवद्भावेन लृकारद्विर्वचनेऽपि सवर्णदीर्घात्परत्वेन पुनरुत्तरखण्डे गुणादिप्रवृत्तेः । न चान्तरङ्गत्वात्सवर्ण-

---

क्लीबे विजुहोहे इति । अन्ये तु धातुभ्य एव क्विब् विधीयत इति वदन्त एतानि रूपाणि न सम्भवन्तीत्याहुः । तदयुक्तं भाष्यविरोधात् । भाष्यकारस्तावत्सर्वप्रातिपदिकेभ्य इत्यनेन सिद्धिमाशङ्कते न तर्हीदानीमित्यादिना, नहि धातुग्रहणे सति तेन सिद्धिराशङ्क्योपपद्यते । वार्त्तिककारोऽपि

त्मानस्यप्रश्लेषे तु तस्य मानान्तरेण सिध्यभावाद् उपदेश एव । तद्विशिष्टस्य क्लीबादेरप्युपदेश एवेति अनुबन्धानामेकान्तत्वे

दीर्घः। अभ्यासस्यासवर्णे इत्यस्य निर्विषयतापत्तेः। न च इयति इयृत इत्यादिरवकाशः। एवं ह्यभ्यासस्यर्त्तीत्येव ब्रूयात्' न च एषेरियेष। ओशोरवोशेत्यवकाशः। भाषायामिजादेरित्याम्प्रत्ययस्यौचितत्वात्। छन्दसि तु' तन्वादीनामुपसङ्ख्यानात् त्रियम्बकं सुवर्ग इत्यादिवदियङ्वङोरूपपत्ते-स्तथापि ऌवर्णस्य दीर्घाभावादिति माधवोपन्यस्तो हेतुरसङ्गत एव। होतृकार इत्यादाविव ऋकारस्य दुर्वारत्वात्। तथा च ऋशब्दात्क्विपीव एकदेशस्य धातुग्रहणेनाभ्यासग्रहणेन वा ग्रहणमिति मतभेदेन। अरतुः। अरः। अतुः। उगिति रूपद्वयमेवोचितम्। ऌतिऌवेति वार्त्तिक-विधेयस्य वर्णान्तरस्य प्रवृत्तौ तु ऌऌतुः ऌऌउरित्युचितम्। सर्वथापि अलतुः अलुरिति माधवोदाहृतं दुरुपपादमेवेति विभाव्यतां भाष्यज्ञैः। हेरिवा-चरति हयति। जिहाय। अहयीत्। यान्तत्वान्न वृद्धिः। एरिवाचरति अयति। इजादेरित्याम्' अयाञ्चकार। नेटीति वृद्धिनिषेधान्मा भवा-नयीत्। गौरिवाचरति गवति। अपदान्तत्वादवङ्पूर्वरूपे न स्तः। जुगाव। अगवीत्। अगावीत्। अतोहलादेरिति वा वृद्धिः। ओकारात्। अवति। अवाञ्चकार। मा भवानवीत्। रै। रायति रिराय। नौ। नावति। नुनाव। औ। आवति। आवञ्चकार। गोधुगिवाचरति गो दोहति। पयइवाचरति पयति। पयाय। लुङि यान्तत्वाद्वृद्ध्यभावात्। अपयीदिति माधवः। अत्रेदं वक्तव्यम्। अपपयइयधातुषु क्विपि चेति क्विपि अत् पत्

---

सर्वप्रातिपदिकेभ्य इति वदन् गल्भादिष्वपि प्रातिपदिकग्रहणमेव मन्यते, न केवलं गल्भादिभ्य एवापि तर्हि सर्वेभ्य एव प्रातिपदिकेभ्य इति हि तदर्थः। सर्वप्रातिपदिकेभ्य इत्यत्र सर्वेभ्य इति वक्तव्ये प्रातिपदिकग्रहणात्

करणसाधने उपदेशशब्दे च न दोषो ऽत एव च प्रत्ययान्तादाशो मित्त्वेन विशेष इति कृत्वनचाप इति सूत्रभाष्यं सङ्गच्छते।

---

इत् इति तावत्त्वयैवोदाहृतम्। आचारक्विपि तु अकृत्त्वात्तुगागमो मा भूत्। यकारस्तु कथं न श्रूयेत। तस्मात्कशब्दवदेवात्र रूपमुचितम्। द्यौरिवाचरति देवतीति माधवः, अत्र ऊठि द्यवतीत्युचितम्। फलेगौः क्विप् चेति क्विप्। तत आचारक्विप्, फलति। यङ्लुकि पम्फल्यते। अपम्फालीत्। एकदेशविकृतस्यानन्यत्वादभ्यासस्य नुगिति चरफलोश्चेति सूत्रे न्यासविस्तरौ। यद्यपि प्रतिपदोपात्तस्वभिव्यक्तपदार्थानामेव ग्रहणं तथापि उत्परस्यात इति सूत्रे अत इति तपरनिर्देशेन दीर्घनिवृत्त्यर्थं क्रियमाणेन इहास्यापि ग्रहणं ज्ञाप्यत इति तदाशयः। इदमिवाचरति इदामति। यड्विव याड्ति, अग्निव आग्नति। राजेव राजानति। अनुनासिकस्य क्वीति दीर्घः। यत्तु कश्चिज्झलादिः कृदिङ्ज्ञातोरेव सम्भवतीति तस्मात्स्वर्यादिधातुर्विहित एव क्विप् गृह्यत इति आचारक्वौ नानेन दीर्घ इत्याह तन्न; अस्य क्विपः ककारस्यात्रैव सामान्यग्रहणार्थत्वात्। पकारस्य च तदविधातार्थत्वात्साहचर्यस्य च सर्वत्रानियामकतायाः दिक्तिस्वतुरिति क्त्वोर्थग्रहणेन ज्ञापितत्वात्, एतेन इह क्विपि अनुबन्धयोः फलं चिन्त्यमिति वदन्न्यासकारः प्रत्युक्त इति दिक्। एवं च पयिसच्युभुक्तां परमप्युपधागुणं बाधित्वान्तरङ्गत्वाद्दीर्घे सति पयीनति मथीनति ऋभुक्षीयतीत्यादि बोध्यम्। इदं च माधवादिभिरनमनुकृत्यानुनासिकान्तानां दीर्घः प्रपञ्चितः; अपरं मतं कृत्येव दीर्घो न त्वाचारक्विपि साहचर्यस्य नियाम-

प्रातिपदिकादेव क्विब् विधीयते न सुबन्तात् तेन पदत्वाभावादश्वतीव तो गुणे' इति ग्रपा पररूपं भवति, विधरति ग्रब्दाभ्यां क्विपि ग्रपि गुणे 'एङः पदान्तादती' ति न भवति, विधवति, रवयति, राजनतीति नलोपो न

अन्यथा गल्भादिहलन्तप्रकृतिके विशेषः स्यात्। अन्यहलन्तेभ्यस्त्वा-चारक्विबेति तदाशयः॥

---

त्वेनापि क्वचिदाश्रयणात्। न चैवमनुबन्धवैयर्थ्यम्। वेरपृक्तस्येत्यत्रास्यैव ग्रहणं मा भूदिति ककारासङ्गात्। पित्त्वसामर्थ्यात्तु प्रकृतिः सर्वानुदात्तेति केषाञ्चिन्मतस्य न्यासग्रन्थे स्पष्टत्वात्। युक्तं चैतत्। कौमारव्याकरणसंवादात्। तत्र हि क्यङ् एव वैकल्पिको लोपो विहितो न तु क्विपः। तत्र च क्विबाश्रयस्य दीर्घस्याप्रसङ्गात्। गुणे सति पचेनति मचेनतीत्याद्युदाहृतम्। न्यायसाम्येन च्छ्वोःशूडित्यापि अस्य क्विपो ऽग्रहणात्। श्वौरिवाचरति देवतीत्यपि माधवोदाहृतमस्मिन्पक्षे निर्वहति। सलोपस्य भाष्ये प्रत्याख्यानात्। अत एव पदमञ्जर्यां बहुषु पुस्तकेषु राजनतीति ह्रस्वपाठः सङ्गच्छते। अत एव च न पदान्तसूत्रे प्रतिदीव्न इत्यत्रोपधायां चेति दीर्घ इति काशिकापि सङ्गच्छते। आचारक्विबन्तादिच् प्रत्यय इति तदाशयात्। चर्मेवाचरति चर्मतीति प्रक्रिया तु अत्रापि पक्षे असुद्धेव। नलोपपरत्वपयोः पदान्तपदान्तत्वप्रयुक्तयोः समावेशस्य दुर्घटत्वादिति दिक्। अप्रसिद्धा ये हलन्तास्तेषां कारितणौ कृते टिलोपे च णिलोपे च तद्धलन्तत्वमुह्यताम्॥ मठं मखं कफं रथं चाचक्षाणः कुर्वन् वा मठ्। मख्। कफ्। रथ्। स इवाचरति। मठति। मखति। कफति। रथतीत्यादिकमेषां यथालक्षणमप्रयुक्तेप्यूह्यमित्यर्थः। प्रकृतमनुसरामः॥

भवति, वाचतीत्यादौ तु कुत्वसत्वादि न भवति, येपि सर्वप्रातिपदिकेभ्यः क्विपमिच्छन्ति तैरपि गल्भाद्यनुक्रमणं कर्त्तव्यगात्मनेपदार्थमनुबन्धानासंख्यामीति॥

# भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।
## ३ । १ । १२ ॥

ननु भृशादीनां हलघटितानामेव सत्वात्तत्रैव प्राप्नोतीत्यस्य व्यावर्त्याभाव इत्यत आह

हलेति । (कै)

आवृत्त्या विभक्तिविपरिणामेनैवेति भावः । अन्यथा हि सर्वत्र हलो लोपः स्यादित्यापादयेदिति आशयः ॥

भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥ अत्राच्वेरित्येकवचनं भृशाद्यवयवापेक्षं सौत्रो वा वचनव्यत्ययः । पर्युदासात्सदृशग्रहः । अभूततद्भावविषयेभ्यो भृशादिभ्यो भवत्यर्थे क्यङ् स्यात् । हलन्तानां तेषां लोपोपि स्यात् । अभृशो भृशो भवति भृशायते । चशब्दोन्वाचये न तु सन्नियोगे । अजन्तानां गणे पाठस्य वैयर्थ्यापत्तेः । अच्वेरिति यदि प्रसज्यप्रतिषेधः स्यात्तर्हि असमर्थसमासो वाक्यभेदश्च स्पष्ट एव किं च भवतियोगे

"भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः" । लोपविधौ भृशादिभ्य इति पञ्चमी स्थानषष्ठ्या विपरिणम्यते, हला च भृशादयो विशिष्यन्ते, तत्र तदन्तविधौ सति हलन्तानांलोपो विधीयमानो भृशायत इत्यादावहलन्ते न भवति तदाह । 'हलन्तानां च लोप इति' । एवं च स्पष्टमेव प्रतीयतेऽन्वाचये चशब्द इति, सन्नियोगे हि विधायमाने ऽहलन्तानां पाठोनर्थकः स्यात् । 'अच्वेरिति प्रत्येकमभिसम्बध्यत इति' । तेनैकवचनमुपपद्यत इति

**भृशा आलोका इति । (कै)**

अधिकालोका इत्यर्थः ॥ भवत्यर्थे च्वेरभिधानेन च्विनोक्तत्वादित्यसङ्गतमित्यत आह

**च्विसहचरितेनेति ॥ (कै)**

भाष्ये

**डाजन्तादपीति । (भा)**

क्यषिति शेषः ॥ वचनप्रामाण्यस्य क्यष्प्रवृत्तत्वे तु क्यषन्तसमभिव्याहारभवतेरपि प्रयोगः स्यादत आह

---

च्वेर्विधानादनुप्रयुज्यमाने न भवति नैव उक्तार्थत्वात्क्यङो ऽप्रसक्तौ निषेधवैयर्थ्यम् । अतः पर्युदास एवोचितः । तथा च नञिवयुक्तन्यायेन सादृश्यलाभादभूततद्भावविषयेभ्य इत्युक्तं, तेनेह न । क्व दिवा भृशा भवन्ति । ये रात्रौ भृशा नक्षत्रादयः ते दिवा क्वप्रदेशे भवन्तीत्यर्थः । इह सुमनस् उन्मनस् दुर्मनस् अभिमनस् इति पठ्यते । तत्र शङ्क्यते । समासात्क्यङि विशिष्टस्य धातुत्वादट्त्वब्द्विर्वचनेषु दोषः । तथाहि । सुमनायत । उदमनायतेत्यादीष्यते । असुमनायत । औन्मनायतेत्यादि प्राप्नोति । तथा

---

भावः । 'किमर्थं पुनरिदमुच्यत इति' । अच्वेरित्येतदधिकृत्य प्रश्नः । 'तेनेति' । अनुप्रयुज्यमानेन भवतिनेत्यर्थः । न च भवतेरनुप्रयोगं बाधित्वा क्यङ् भवितुमर्हति, अच्व्यन्तेषु सावकाशत्वात् । किञ्च भवतेरभावे च्वेरपि निवृत्तिप्रसङ्गः तद्योगे तस्य विधानात्, कथं तर्हि डाजन्तात्क्यष् भवति यावता डाजपि भवतियोगे विधीयते, अत्र परिहारं वक्ष्यति लक्ष्यशक्तिभिरिव क्यषापि योगे डाज् भवतीत्येतदेव ज्ञापकमिति । 'तत्सदृशप्रतिपत्त्यर्थं तर्हीति' । नञिवयुक्तन्यायेन च्व्यन्तसदृशा भृशादयः कथन्नाम

अप्रयुक्त इति ॥ (भा)

भवत्यर्थेति । (कै)

च्व्यभूततद्भाव इत्यस्य डाज्विधावनुवृत्तस्य तदर्थयोगे इत्यर्थः । च्विविधौ तु शब्दयोग इत्येवार्थ इति भावः । अव्यक्तानुकरणादित्यत्र (?) इव क्यच् योगेऽपि डाजिति ज्ञाप्यत इति वृत्तिग्रन्थस्यापीदमेव तात्पर्य्यम् ॥ भाष्ये

अक्रियमाणमिति । (भा)

अभूततद्भावग्रहणमित्यर्थः ॥

---

सुमनाय्येत्यादौ ल्यबिष्टः । सु उद् इत्यादीनां क्रान्तशरीरप्रवेशे तु तद्युतिरिक्तपदाभावादसति समासे ल्यपो ऽभावात्सुमनायित्वेत्यादि प्राप्नोति । तथा क्यङन्तात्सनि सनन्तस्य प्रथमस्यैकाचो द्वित्वे सुमनायियिषते इत्यादि प्राप्नोति ; सुमिमनायिषत इत्यादीष्यते । अत्राहुः । चुरादिषु संग्राम युद्ध इति पठ्यते स न पाठ्यः । संग्रामशब्दाद्युद्धवाचिनः तत्करोतीत्येव णिचः सिद्धेरिति तत्पाठो नियमार्थः । धातुसंज्ञानिमित्तः प्रत्ययः सोपसर्गाच्चेद्भवति संग्रामयतेरेव नान्यस्मादिति । ज्ञापनार्थो वा सोपसर्गान्नुत्पत्ता-

प्रतीयेरन्निति अन्तपर्युदासः क्रियते सादृश्यं चाभूततद्भावविषयत्वेनेत्याह । अभूततद्भावविषयेभ्यो भृशादिभ्य इत्यादि'। 'भृशायत इत्यादि'। अजन्तानामकृत्सार्वधातुकयोरिति दीर्घः, हलन्तानां तु लोपः । असुमनाः सुमना भवति सुमनायते, दुर्मनायत इत्यादि । 'भृशीभवतीति'। इदानीमेवोक्तं नास्त्यत्र प्रसङ्ग इति तस्मादच्व्यर्थविषयं प्रत्युदाहरणं प्रदर्शनीयं क दिवा भृशा भवन्तीति । ये रात्रौ भृशा नक्तञ्चादयस्ते दिवा क प्रदेशे

नञिवयुक्तमिति (भा)

न्याये इव युक्तमिति दृष्टान्तार्थम् अन्यस्मिंस्तत्सदृशे इत्यनेना-भेदेऽपि सादृश्यमस्तीति सूचयति ॥

प्राक् प्रकृतेः पाठेन प्रत्ययार्थविशेषणत्वपक्षोऽसम्भावितोऽत आह

यदेति । (कै)

समस्तासमस्तत्वाभ्यां पक्षद्वयसम्भव इति भावः ॥ असुमनाः सुमना भवतीत्यर्थस्य क्यङन्तात्प्रतीतेः समास एवावश्यकोऽत आह

---

धातुसंज्ञानिमित्ते प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते । परिशिष्टा-देव तु प्रत्यय इति । संग्रामशब्दो हि चुरादौ पठ्यमानः सोपसर्गः संघात एव न तूपसर्गसदृशावयवम् आङ्ख्याप्ताविति वच्छब्दान्तरम् । तथा च वा पदान्तस्येति परसवर्णविकल्पो भवति । सङ्घातपाठफलं तु असंग्रामयत शूरः । संग्रामयित्वा । सिसंग्रामयिषत इत्यादि । ततश्चोक्तरीत्या नियमो ज्ञापनं वा निष्फलं फलमिति । अत्र हरदत्तः । अनुदात्तेदयं संग्रामयति-रिष्यते । ततश्च आत्मनेपदार्थं गन्धयत्यादीनामिवानुबन्धासंज्ञार्थः पाठः

---

भवन्तीत्यर्थः । इह मनःशब्दः सोपसर्गः पठ्यते सुमनस् दुर्मनस् अभिमनस्, उन्मनस्, अत्र किं सोपसर्गात्सङ्घातात्प्रत्ययो भवत्याहो स्विदुपसर्गरहिता-न्मनस्शब्दादेवेति विचारः, तदर्थं च किमुपसर्गः प्रकृत्यर्थविशेषणं सुमनश्शब्दाद् दुर्मनःशब्दादिति उत प्रत्ययार्थविशेषणं सुभवती दुर्भवती अभिभवती उद्भवताविति, कथं पुनर्मनश्शब्देन सह पठित उपसर्गः प्रत्ययार्थविशेषणमाशङ्क्यते, तद्विशेषणत्वे हि प्राग्भवते, पठ्येत, नैष शब्दः

**मनः शब्दस्येति ॥** (कै)

तदर्थे ऽभ्यादीनामेव साधुत्वाल्लक्षणार्थेऽपि प्रकृतिमात्रस्या-साधुत्वं स्यादत आह

**अन्ये त्विति ।** (कै)

असुमनाः सुमना भवतीत्यर्थस्तु पक्षद्वये ऽप्यर्थ इति भावः ॥

**मनः कर्मेति ।** (कै)

मनः कर्तृशोभनं कर्मप्राप्नोतीत्यन्वयः ॥

**प्रकृतेः ।** (कै)

प्राक् आट् एव ॥ असमस्तत्वसमस्तत्वाभ्यां पक्षद्वयोपपत्तेरुक्तत्वेनाह

स्यादिति कथं नियमो ज्ञापकं वा भवेदिति । न चानुबन्धासञ्जनार्थे पाठे ग्राम युद्ध इत्येव पठ्येत । संग्रामस्तु द्योतकः प्रयोगदर्शनवशादेव लभ्यते । यथा इङिकोरधिः । तस्मादिग्शब्दपाठः प्रागुक्तफलक एवेति वाच्यम् । एवं हि यथा इङिकोरधेः पूर्वमाट् न भवति तथास्यापि न स्यादिति । अत्र माधवः । अस्यानुदात्तेत्त्वमपाणिनीयमिति पाठस्यैतदर्थतया न ज्ञापकभङ्ग इति । एतत्तु संग्रामयतिरनुदात्तेद्बोद्धव्य इति कैयटेन विरुध्यते ।

प्राग्भवतः पठितुम्, एवं हि सर्वेभ्य एव भृशादिभ्य उपसर्गविशिष्ट एव भवत्यर्थे प्रत्ययः स्याद् मनश्शब्दादेव च विशिष्टेर्थेइष्यतइत्येवमर्थो मनश्शब्देन सह पाठः स्यात्, तत्र यदा मनश्शब्देन स्वादीनां बहुव्रीहिस्तदा प्रकृत्यर्थविशेषणं ते भवन्ति, यदा त्वसमस्ता एव तदा प्रत्ययार्थविशेषणं, मनश्शब्दश्च वृत्तिविषये तद्वति वर्तते मनस्वी सुष्ठु भवतीत्यादावर्थे क्यङ् प्रत्ययः, प्राग्भवस्य वा भवते 'राष्ट्रमाहेति' विकल्पितशिचोत्र विषये यङ्गण

## प्रकृतेरेवेति। (कै)

अवयवसम्बन्धे षष्ठीप्राप्तश्चावयवान्तरापेक्षयेति भावः॥ बहु-व्रीहिविवक्षयैवमुक्तमित्याशयः॥

## न चेदेवं जायते विचारणा। (भा)

इत्यस्य समस्तत्वासमस्तत्वाभ्यामिति शेषः॥

## समासाभावादिति। (कै)

क्त्वान्तेन समासाभावादित्यर्थः। अनञ्पूर्वे समासे विद्यमानस्य क्त्वो ल्यबिति सूत्रार्थ इति भावः। तत्राट् द्विवचनयोरनिष्टदेशे प्राप्तिः ल्यपस्त्वसिद्धिरेवेति भावः॥ भाष्ये

यदपि हरदत्तेन सिद्धान्तितं मनःशब्दस्य स्वादिभिर्न समासः किन्त्वसमस्ता एवैते प्रत्ययार्थविशेषणम्। मनःशब्दस्य वृत्तिविषये तद्वति वर्त्तते। मनस्वी सुष्टु भवतीत्यादिरर्थ इति, तदपि प्रभौ परिवृढ इत्यत्र परिवृढमाचष्टे इति णिचि क्त्वाप्रत्यये कृते परिवृढय्येति ल्यब् भवतीति भाष्यकारादिभिर्वक्ष्यमाणेन विरोधात्पराहतमेव। वस्तुतस्तु तत्रापि प्रत्ययार्थविशेषणत्वं सम्भवति। कथं तर्हीह इष्टार्थसिद्धिरिति चेत्। अत्रोच्यते। चुरादौ

तेन मनः कर्म शोभनं प्राप्नोतीत्यादिरर्थो भवति, तत्राद्ये पक्षे-ऽडाड्ल्यब्द्विर्वचनेषु दोषः, अट, सुमनायत, दुर्मनायत। आट्, अभ्यमनायत उदमनायत। उपसर्गस्यापि क्यङन्ते धातावन्तर्भावात्ततः पूर्वमडाटौ प्राप्नुतः, परौ चेष्येते, ल्यप, सुमनाय्य, अभिमनाय्य, उपसर्गस्य क्यान्तेऽनुप्रवेशात्तद्धतिरिक्तपदाभावादसति समासे ल्यपोभावात्सुमनायित्वेति स्यात्, द्विर्वचनं, क्यङन्तात्मनि कृते उपसर्गस्य सनन्तेऽनुप्र-

## अवश्यं संग्रामयतेरिति । (भा)

संग्रामयतेः सोपसर्गाद् यथा उत्पत्तिर्भवति तिङां तथा-णिजुत्पत्तिर्वक्तव्येत्यर्थः । अवश्यमित्यनेन चास्य फलान्तरमपि सूचितम् । तच्च मतः पूर्वमट् । अन्यथा तत्करोतीत्यनेन सिद्धे तद्वैयर्थ्यं स्पष्टमेव । तद् ध्वनयन् उदाहरति

## असंग्रामयतेति । (कै)

यद्यपि संग्रामशब्दे संशब्देनोपसर्गस्तथापि सोपसर्गादित्यस्य सोपसर्गसमानाकारादित्यर्थो बोध्यः॥ ननु प्रातिपदिकाद्धात्वर्थ इत्येव णिच्सिद्ध इति चेन्न । प्रजयतीत्यादावुपसारहितस्यैव धातु-

पच्यमानं संग्रामेत्येतत्प्रातिपदिकम्, अर्तिस्तुसु इति मन्नधिकारे ग्रसेरा चेति व्युत्पादनात्। न तु धातुः। तस्य च तत्करोतीति पूर्वप्रकान्तेन गणसूत्रेण णिचि सिद्धे तत्सन्नियोगे अनुबन्धासङ्ग एव फलं शम्भादिवत्। एवं स्थिते युद्धे योऽयं ग्रामशब्द इत्यत्रापि केवलस्य ग्रामशब्दस्य युद्धे वृत्त्य-भावात्सामर्थ्यात्संग्रामशब्दोऽभ्यत एव। तत्र च संग्रामेति विशिष्टस्य धातुत्वमपि सुलभम्। सनाद्यन्ता इति सूत्रेण विधीयमानायाः संज्ञायाः

वेधात्तस्य द्विर्वचने सति ससमनायिषत असिसिमनायिषतइति स्याद्, सुसिमनायिषते असिसिमनायिषतइति चेष्यते, नैष दोषः, चुरादौ संग्राम युद्धइति पठ्यते स न पाठ्यः, संग्रामशब्दाद् युद्धवाचिनः 'तत् करोति तदाचष्टे' इत्येव णिच सिद्धत्वात्, पठ्यमानस्तु ज्ञापयति सोपसर्गात्सङ्घातात्धातुसञ्ज्ञानिमित्तकप्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्ते परिशिष्टादेव तु प्रत्यय इति, संग्रामशब्दो हि सोपसर्गः

तया दृष्टत्वेनाचापि तद्द्योतकत्वं तस्यैव धातुत्ववुद्धिवारणाय तत्वत्त्वात् । प्रकृते तु विशिष्टस्यैव प्रकृतित्वेनोपदेशात् । स्वादीनां वाचकत्वाच्च विशिष्टस्यैव धातुत्वापत्तिरित्याशयात् ॥ तदाह

**ग्रामशब्द एवेति । (कै)**

अनेनेतरद्योतकसाम्यं बोधितम् ॥

**सामान्यत इति । (कै)**

क्रियावाचकयुक्तानां क्रियाविशेषद्योतकत्वस्य दृष्टत्वेन अत्रापि युद्धक्रियाद्योतकत्वमनुमीयत इत्यर्थः ॥

---

प्रकृतिप्रत्ययसङ्घाते विश्रान्तेः । एतेन इडिकोः प्रतिद्वन्द्विः परास्तः । तत्र हि पाठापेक्षा धातुसंज्ञा विशिष्टं न स्पृशतीति वैषम्यात् । एवं च संग्रामेति विशिष्टपाठो ज्ञापयति उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजकीभूते प्रत्यये चिकीर्षिते पृथक् क्रियत इति । तथाजहत्स्वार्थायां वृत्तौ स्वोत्तरभागेन धातुसंज्ञानिमित्तप्रत्ययप्रकृतिभूतेन समानार्थकमिति तद्घटितविशिष्टार्थेनापि क्तान्तेन सह समर्थत्वाद्गतीति सूत्रेण प्रादिग्रहणात्समस्यत इति परिहृठ्य्येत्यादिसिद्धिः । अवशिशलभिषते । अवागलभत ।

---

सङ्घात एव चुरादावपि पठ्यते न तूपसर्गसदृशावयवं शब्दान्तरं तथा च 'वा पदान्तस्ये'ति परसवर्णविकल्पो भवति, अन्यथा स न स्यात्, स एवमर्थः पठ्यते असंग्रामयत अग्रः संग्रामयित्वा सिसंग्रामयिषत इत्यादि रूपं यथा स्यादिति, ततश्चोक्तस्यार्थस्य ज्ञापकः नियमार्थो वा धातुसंज्ञाहेतुः प्रत्ययः सोपसर्गाद्यदि भवति संग्रामशब्दादेवेति । ननु चात्रानुदात्तेदयं संग्रामयतिरिष्यते ततश्चात्मनेपदार्थमनुबन्धमा-

## उपसर्गसदृशानर्थकेति । (कै)

अनर्थकत्वमात्रं निषिध्यते तत्सदृशो निपात इत्यर्थः । इदं चिन्त्यमुपसर्गसमानाकारत्वेन निपातत्वादनर्थकस्यापि निपातस्य प्रातिपदिकत्वेन सुबन्तत्वात् ॥

## तत्रेति । (कै)

तत्र वर्त्तमानो यो ग्रामशब्दस्तस्मादित्युक्तिसामर्थ्येन सम्पूर्वाद्भविष्यति णिच् तद्विशिष्टादेव च तिङ्भविष्यतीति भावः ॥

## नियमार्थ इति । (कै)

संग्रामयतेरेव सोपसर्गाद्यथातिङुत्पत्तिस्तथाप्रत्ययोत्पत्तिः । अन्यस्मात्तु सोपसर्गाद्यथातिङुत्पत्तिः न तथाप्रत्ययोत्पत्तिरिति नियमार्थस्तत्फलितमाह

---

अवगल्भ्येत्यादावपीयमेव गतिः । न चैवमुस्योमाङ्क्ष्वाट इति भाष्यवार्तिकेन औडीयदिति तद्भाष्येण च सह विरोधः । ज्ञापकस्य सजातीयविषयतया श्रूयमाणे पूर्वपदे प्रवृत्तिः न त्वादेशेनापहृते इति स्वीकारात् । अत्र च भाष्यवार्तिकधातुवृत्त्यादिग्रन्था अनुकूला इति गुणग्राहकैर्विभाव्यताम् । एवं च प्रमाणयित्वा विचारयित्वेत्यादयः केषांचित्प्रयोगाः प्रामादिका एव ।

---

संग्रामीति पाठः स्यादिति कथं ज्ञापको नियमार्थो वा भवेत् । स्यादेतत् । अनुबन्धासञ्जनार्थं हि पाठे ग्राम युद्ध इत्येव पठितव्यं संशब्दस्य द्योतकः प्रयोगदर्शनादेव लभ्यते इडिकोरिवाधिः, नियमार्थस्तु संग्रामेति पाठ इति, एवमपि यथा इडिकोरधेः पूर्वमण् न भवति तथाऽस्यापि न स्यात्, तस्माद् द्वितीयः पक्ष आश्रीयते, यद्येवं यथा

**प्रत्ययोत्पत्ताविति ।** (कै)

प्रत्ययोत्पत्तिकाले पृथक्करणेऽपि सामर्थ्यात्तद्विषयके लक्षणे सुमनआदित्वांशे यस्माद्विहितस्तदादीत्यंशाप्रवृत्त्याप्रत्ययोत्पत्तौ न दोष इति भावः । पृथक् करणं च जातसमासाभावः । अत एव सुमनायेत्यादौ पुनः क्यान्तेन समासेऽन्वयसिद्धिरिति ज्ञेयम् । ननु प्रत्ययार्थविशेषणपक्षोऽसङ्गतः । तत्र मनस्वीसुष्ठुभवतीत्याद्यर्थे भूते तद्भावाभावादत आह

**प्रत्ययार्थेति ।** (कै)

एवं चैतद्विरोधादेवप्रत्ययार्थविशेषणपक्षोऽसङ्गत इति भावः ॥

---

अत एव प्रशस्यमाचष्टे श्रापयति । ज्यापयतीति अज्यावुदाहरन्तः सुधाकरादयः । श्रपयति ज्यपयतीत्युदाहरन्तः शाकटायनादयश्च **प्रक्रियारत्ने** निराकृताः । प्रशब्दस्य पृथक्करणेन शस्यशब्दादेव णिजुत्पत्त्या श्रज्ययोरप्राप्तेः । अत एव माधवादिभिः प्रशस्ययतीत्येव स्वीकृतम् । एतेन प्राक्समाख्यत् अपप्रावत् । वीरधमाख्यत अविवीरदित्याद्युदाहरन्तो **धातुचन्द्रोदयकारादयः** परास्ताः । संग्रामयतेः पाठेन ज्ञापितस्याथस्य उस्योमाङ्ग्याट इति षाष्ठभाष्यवार्तिकबलेन अनित्यताज्ञापनमाश्रित्य कथं

श्येनायत इति आचारार्थस्य क्यङोक्तत्वादाङः प्रयोगो न भवति तथा स्वादीनामपि न स्यात् तद्विशिष्ट एवार्थो क्यङोविधानाद् युक्तमेकोपसर्गेण विशिष्टार्थे क्यङुत्पद्यतइति तस्य तेनाभिधानम्, इह पुनरनेकेन तत्र समायत इत्युक्ते संदेहः स्यात् सुभवतो दुर्भवतो वेति तत्रासंदेहार्थमुपसर्गः प्रयोक्तव्यः, अयं तर्हि दोषः, मनःशब्दात्क्यङि कृते समायतइत्यस्य तिङन्तस्य स्वादेरतिङन्तादुत्तरस्य निघातः प्राप्नोति, पक्षान्तरे

## सङ्ग्रामयविरनुदात्तेदिति । (कै)

सङ्ग्रामयुद्धे इत्यत्राकारस्यानुदात्तत्वानुनासिकत्वे प्रतिज्ञाते अवयवे च तस्याचारितार्थ्यात्समुदायविशेषकतेति भावः। न त्वकारस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञाने तत्सामर्थ्यादुच्चारणकालाव्यवहितोत्तरकाले हत्वे लोपे उपस्थितमान्तग्रामशब्दस्य तदन्तस्य वा लोके युद्धे वर्त्तमानत्वाभावेन युद्धे योऽयं ग्रामशब्द इत्यनुवादासम्भवेन सम्पूर्वस्यालाभ न च सङ्ग्रामयुद्धे वर्त्तते ततश्च णिजित्यर्थं विशिष्टपाठस्यावश्यकत्वेन कथं नियमार्थत्वमिति चेन्न द्वितीयमकार-

चिद्वा समर्थनीया इति दिक्। भृशादयस्तु प्राक्तनगणपाठानुरोधेन माधवीये उदाहृताः। तद्यथा। भृशायते, चपलायते, मन्दायते। पण्डितायते। रेहायते रेहशब्दो रहसि निर्हृत्वे भिक्षाभिलाषस्य च निवृत्तौ वर्त्तत इति **गणवृत्तिः।** तपायते, तपस्वन्तः समृद्रश्च वेहायते। वेहद्गर्भोपघातिनी। अधरायते। अधरो मूर्खः पुष्करस्येति **गणवृत्तिः।** ओजायते। वर्चायते। ओजोवर्चःशब्दौ वृत्तिविषये तद्वति वर्त्तेते रेफायते। रेफः-सरोष इति गणवृत्तौ। दुर्मनायते। सुमनायते। उन्मनायते। उत्सुका-

तु सुमनायत इत्यादि तिङन्तं संपद्यत इति तद्यतिरिक्ताभावान्निघाताभावः, एवं तर्हि भृशादिषूपसर्गस्य पराङ्गवद्भावं वक्ष्यामि सुबामन्त्रितइत्यस्यानन्तरं भृशादिषूपसर्ग इति, इहापि तर्हि प्राप्नोति अभिभृशायते सुभृशायत इति, यदि नेष्यते मनस्युपसर्ग इति वक्ष्यामि मनश्शब्दे परत उपसर्गस्तस्यैव परस्य मनसशब्दस्याङ्गवद्भवतीति स्वरे कर्त्तव्य इति, एवं च देवदत्तः सुमनायत इत्यादौ उपसर्गस्यापि 'तिङ्ङतिङः' इति निघातो भवति, योऽप्याह सुमनश्शब्दात्प्रत्यये विधित्सित उपसर्गः पृथक् क्रियते

प्रश्लिष्यतस्या उदात्तत्वानुनासिकत्वे प्रतिज्ञेये इति तत्तात्पर्यात् । अचामुदात्तत्वे मानं चिन्त्यं भाष्यप्रयोगस्य पाचिकात्मनेपदेनोपपत्तेः ॥ भाष्ये

**एवं तर्हि भृशादिषूपसर्गस्येति ।** (भा)

भृशादिषु पठितस्योपसर्गस्येत्यर्थः । तेनाभिभृशायते इत्यादौ न निघातः । देवदत्तः सुमनायत इत्यादौ च सोरपि तिङ्ङतिङ इति निघातः ॥

---

यते । प्रश्मायते । वृहायते । तान्तावेतौ । सुबामन्त्रितइत्यत्र पनस्युपसर्गस्य पराङ्गवद्भाव उपसंख्येय । तेन सुपनायत इत्यादौ तिङ्ङतिङ इति निघातो न भवति, देवदत्तः सुपनायत इत्यादौ सोपसर्गस्य निघातश्च भवतीति प्रकृतसूत्रस्य भाष्यपर्यालोचनया लभ्यते । अमी श्लोका गणपाठस्था भृशादयः गणवृत्तौ तु वृहच्छब्दो न पठ्यते । भद्रशब्दस्तु पठ्यते । कन्धरशब्दश्च त्वचोभ्यन्तरे स्थूलतन्त्वाभा असंयुक्ता स्नायुः कन्धरा । तद्वान् कन्धरः । मत्वर्थ अर्श आदिभ्योच् ॥

---

परिशिष्टादेव प्रत्यय इति तेनापि स्वरे पराङ्गवद्भावो वक्तव्य एव, तदेवं प्रत्ययार्थविशेषणां स्वादयः मनस्शब्दादेव केवलात्प्रत्यय इति स्थितं, यदि तु सामान्येन ज्ञापकमिष्यते सङ्घातात्प्रत्यये विधित्सिते उपसर्गाः पृथक् क्रियन्त इति नात्रैव, यथा 'प्रभो परिवृढ' इत्यत्र वक्ष्यते परिवृढमाचष्ट इति णिचि क्त्वाप्रत्यये कृते परिवृढय्येति ल्यब् भवतीति, ततो ज्ञापकान्तरं मृग्यं, वक्तव्यं च किं चिदुद्ग्रन्थाभिधानं सूरिभिरित्युपरम्यते ॥

# लोहितादिडाज्भ्यः क्यषः । ३ । १ । १३ ॥

भाष्ये

गुणवृद्धीति । (भा)

गणरत्नपठितेगन्तेभ्यस्तत् प्राप्तिः । पिच्छयतिरीङ्यस्येति लोपः ॥

ननु किङतीति निवृत्तौ असूयेत्यपि सिद्धमत आह

लोहितादिडाज्भ्यः क्यष् ॥ लोहितादिभ्यो डाजन्ताच्च भवत्यर्थे क्यष् स्यात् । वा क्यषः । लोहितायति । लोहितायते । अत्र च्वेरित्यनुवृत्त्या अभूततद्भावविषयत्वं लभ्यते । तच्च डाचो न विशेषणम्, असम्भवात् । अलोहितो लोहितो भवतीति विग्रहः । पटपटाति पटपटायते । कृभ्वस्तियोगं विनापि क्यषो डाजन्ताद्विधानसामर्थ्यादेवेह डाच् । भवत्यर्थे विधीयमानेन क्यषा उक्तार्थस्य भवतेरिह प्रयोगायोगात् । अत्र वार्तिकम् । लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति ॥ आदिशब्दप्रत्याख्यानपरमेतत् । लोहितशब्दात्परत्र पठ्यमानानि नीलहरितमन्द्रफेनदासमन्द इत्येतानि षट् भृशादिषु द्रष्टव्यानीत्यर्थः । क्यषः ककारषकारावपि प्रत्या-

“लोहितादिडाज्भ्यः क्यषः” ॥ ‘पटपटायतीति’ अव्यक्तानुकरणादिति डाचि विवक्षिते ‘डाचि बहुलं द्वे भवतः’ इति द्विर्वचनं, ततो डाच् पटत्पटा इति स्थिते ‘नित्यमाम्रेडिते डाचीति’ पटच्छब्दस्य यस्तकारो यश्च परः पकारस्तयोः पररूपं पकारः, ‘लोहितडाज्भ्यः क्यष्वचनं भृशादिष्वितराणीति’ वार्त्तिकं तदेतत्पठिताभिप्रायं न पुनरनेनादिग्रहणं प्रत्याख्यायत इत्याह । ‘यानि पठ्यन्त इति’ । निद्राकरुणा-कृपाशब्दा वृत्तिविषये तद्वति वर्तन्ते, अनिद्रो निद्रावान् भवति,

यदीति॥ (कै)

उत्तरमिति। (कै)

असूयया धनेच्छया च यजामहे इति श्रुत्यर्थः। अप्रत्यया-न्तटाबन्तादिभक्तेः छान्दसो लुगिति भावः॥

अथवेति। (कै)

पक्षे प्राणैर्वसुभिश्च यजामह इत्यर्थः॥ भाष्ये

---

ख्यातौ। तथाहि। ककारो गुणवृद्धिनिषेधार्थो नेति स्पष्टमेव। अप्रसक्तस्य प्रतिषेधायोगात्। नापि नःक्य इति सामान्यग्रहणार्थः। नान्तादविधा-नात्। नापि क्यचव्योश्चेति। अपत्यादविधा-नात्। नापि क्याच्छन्दसीति। याच्छन्दसीत्येव सुवचत्वात्। युक्तं चैतत्। शकुनय्भुरण्यमिति। कण्ड्वादियगन्तादपि दर्शनात्। नापि लोहितायत इत्यत्र अकृत्सार्वेति दीर्घप्रवृत्त्यर्थः। तत्र क्ङितीत्यस्याननुवृत्तेः। नन्वनु-वृत्तिरावश्यकी उरयाद्धृणायेत्येवमर्थमिति चेन्न। इह हि तृतीयास्थाने सुपां सुलुगिति यादेशः। स च छान्दसः। तत्र च ह्रस्वोपि छान्दस एव भविष्यति। उपगायन्तु सापत्नयो गाभण्याय इति वत्। नापि क्यस्य विभा-षेत्यत्र सामान्यग्रहणार्थः। हल इत्यनुवृत्तेः। न ह्ययं हलन्तादस्ति। न च

---

अकृतणः कृतणावान्भवति, अक्षुपः क्षुपावान् भवतीत्यर्थार्थं प्रत्ययः, अपरिपठितेभ्यस्तु क्यषेव भवतीत्यस्योपपादनम्। 'आकृतिगणश्चायमिति'। कुत इत्यत आह। 'तथा चेति'। क्व पुनः सामान्यग्रहणार्थः ककारः। 'क्यच्व्योश्चेति'। आपत्यस्येति वर्त्तते, न चायमापत्यादिष्यते, इह तर्हि 'क्यस्य विभाषा' हल इति वर्त्तते, न चाय हलन्तादिष्यते, इह तर्हि 'क्याच्छन्दसि' एतद्याच्छन्दसीति वक्तव्यं भुरण्युस्तुरण्युरिति कण्ड्वादि-यगन्तादपि यथा स्यादिति, 'वा क्यष' इत्येतद्वा यादित्येवास्तु, न चैवं

**नार्थः क्विडन्तग्रहणेनेति । (वा)**

**अत एव ज्यादादीयस इत्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वं सङ्गच्छते ॥**

**नियमार्थमिति । (कै)**

ननु नियमार्थत्वेऽपि पाशासभ्यादिशब्देभ्य आचारक्विबन्तेभ्यः पक्षे तङ्स्यात्तन्निवृत्त्यर्थं षकारोच्चारणमिति चेन्न । एतद्भाष्यप्रामा-

वा क्यष इति विग्रहणार्थः वाद्यादिभ्य सूत्रणात् । न चैवं पाशादिभ्यो यः पाश्या अत्र प्रसङ्गः सामान्यविहितानां तिङां नियमार्थं हि तत्प्रकरणम् । न च पाशादियान्तात्तिङः सन्ति; तन्नाचारक्विबन्तात्सन्तीति चेन्न । टापा व्यवधानात् । पूर्वस्मादपि विधौ एकादेशस्य स्थानिवद्भावात् । न च दण्डहस्त्यादिशब्देभ्य आचारक्विबन्तेभ्योऽतिप्रसङ्गः शङ्क्यः । तत्र दण्डादिभ्य इति सूत्रेण यदेव विधीयते । प्रोर्ध्वच्छन्दादाधर्ष्येति पूर्वसूत्रादयदनुवृत्तेः । न तु यप्रत्यय इति पञ्चमे वक्ष्यमाणत्वात् । अत एव षकारोऽपि व्यर्थः । स हि वा क्यष इत्यत्र विशेषणार्थः क्याच्छन्दसि क्यस्य विभाषेत्यादौ सामान्यग्रहणाविघातार्थो वेति फलं सम्भाव्यते । तच्च सर्वं दूषितमेव । तस्मादादिशब्दं कषौ च हित्वा लोहितडाज्भ्यो य इति भाष्ये स्थापितम् । यदि तु सभाया यः सभ्यः स इवाचरतीत्यादेशाचारक्विबन्तस्याभिधानमस्ति ।

'पाशादिभ्यो यः' पाश्या, अत्र प्रसङ्गः, सामान्यविहितानान्तिङां नियमार्थं प्रकरणं, न च पाशादियान्तात्परस्मैपदमात्मनेपदं वा प्राप्तमस्ति, अथाप्याचारक्विबन्तात्सम्भवेद्, एवमपि वा यष इत्येवास्तु तत्राह । 'नः क्य इति' । ककारमनुबन्धमासञ्जतः सूत्रकारस्याप्याकृतिगणत्वमभिप्रेतमित्याह । 'महीति' । भाष्ये त्वादिग्रहणप्रत्याख्यानपरमेव वार्त्तिकं व्याख्यातं, ककारोऽपि प्रत्याख्यातः, कथं पुनः पटपटायतीति क्यष्प्रयोगे डाच् भवति, यावता कृभ्वस्तियोगे स विधीयते, तत्राह । 'कृभ्वस्तिभिरित्यादि' ।

क्येन मूलभूतानुबन्धमन्यद्वा निमित्तमादायाचारक्विबन्ते एतत्प्रकरणाप्रवृत्तेः। अनभिधानादीदृशे विषये आचारक्विपोऽभाव एवेत्यन्ये ॥ भाष्ये

भृशादिष्वितराणीति। (भा)

ननु अभूततद्भावे

तर्हि वा यष इति सूच्यतां, षकारमात्रं वास्तु। अवशिष्टं तु व्यर्थमेव। वृत्तिकारस्तु वार्तिकस्यार्थमन्यथा मन्यते। तद्यथा। न किलानेनादिग्रहणं प्रत्याख्यायते। किन्तु यानि पठितानि नीलादीनि षट् तेषामेव इतोपकृष्य भृशादिषु निवेश उच्यते। अपठितानां तु क्यषेव, तानि चाकृतिगणत्वाल्लभ्यन्ते। आकृतिगणत्वे ज्ञापकं तु नः क्य इति सामान्यग्रहणार्थः क्यषः ककारः तदविघातार्थः यकारश्च, न हि पठ्यमानेषु लोहितादिषु नान्तः कश्चिदस्ति तानि चाकृतिगणसिद्धानि गणवृत्तिकारः सञ्जग्राह। लोहितश्यामदुःखानि हर्षगर्वसुखानि च। मूर्च्छानिद्राकृपाधूमाः करुणा नित्यचर्मणीति। निद्राकरुणादयः वृत्तिविषये तद्वति वर्तन्ते। निद्रायति निद्रायत इत्यादि। तदेतत्सर्वं भाष्यविरुद्धत्वादुपेक्ष्यम्। किञ्च लोहितडाज्भ्य इति वदतो वार्तिककारस्यापि आदिशब्दप्रत्याख्यानमभिप्रेतमिति

भवत्यर्थे क्यष् विधीयते स भवतिप्रयोगे न भवति तेनैवोक्तत्वात्तस्यार्थस्यातो भवतेरप्रयोग एव क्यषा भवितव्यं, यदि च क्यषा योगे डाज् न स्याड्डाजन्तात्क्यष्विधानमनुपपन्नं स्यादिति भावः। अथ किमर्थं 'वा क्यष' इति सूत्रमारभ्यते, य क्यष् चेति चकारोऽत्र कर्तव्यः, लोहितादिभ्यः क्यष् भवति चकारात्क्यङ् च, तत्र क्यङ्पक्षे आत्मनेपदं क्यषपक्षे परस्मैपदमिति सिद्धमिष्टम्, अहो सूक्ष्मदर्शी देवानांप्रियः यदिदमपि न दृष्टं 'क्यङ्मानिनोश्चे'ति, इह तर्हि प्रातिपदिकग्रहणे लिङ्गवि-

## क्यङ् क्यष् तु तद्भाव इति (कै)

तद्भावे पदद्वयार्थमावश्यकमादिग्रहणमिति चेन्न। भृशाद्यर्थे-रित्यनुवर्त्यास्यापि अभूततद्भाव एव प्रवृत्तेः। अत एव नित्यात्मने-पदार्थं भृशादिपाठ इत्युक्तम् ॥

## अपठितेति। (कै)

तेन चर्मायति चर्मायते इत्यादिवृत्त्याद्युक्तमसङ्गतम्। "नायं हलन्तादिर्धीयते" इति भाष्योक्तश्चेति बोध्यम् ॥

---

स्पष्टं लभ्यते। अन्यथा हि लोहितादिष्वेव ब्रूयात् अत एव निहस्य मान इत्यत्र लोहितादिडाज्भ्यः क्यषिति कल्पतरुग्रन्थो वृत्तिकाररीत्या सम्भवन्नपि भाष्यविरुद्धत्वाल्लोहितादमात्रमिति क्यङ्विधाववोचाम। स्यादेतत्। क्यष् चेति सूत्रमस्तु चात् क्यङ। तत्र क्यष्पक्षे परस्मैपदम्। क्यङ् पक्षे त्वात्मनेपदमिति वाक्यष इति सूत्रं मास्त्विति चेत्। नैवम्। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति लोहिनीशब्दात् क्यषि लोहिनीयति लोहिनीयत इति रूपद्वयमिष्यते। क्यङि तु क्यङमानिनो-श्चेति पूर्ववद्भावे सति लोहितायत इति स्यादिति फले भेदात् ॥

-

शिष्टस्यापि ग्रहणमिति लोहिनीशब्दादप्ययं क्यष् भवति, सति चैवं क्यङन्तादात्मनेपदं क्यषन्तात्परस्मैपदमिति विधायमाने आत्मनेपदपक्षे 'क्यङ्मानिनोश्चे' ति पुंवद्भावे सति अलोहिनी लोहिनीभवति लोहितायतइति प्राप्नोति, अद्य पुनः क्यषन्तादात्मनेपदे विकल्पिते लोहिनीयते लोहिनीयतीतीष्टं सिद्ध्यतीति स्पष्ट एव फलभेदः ॥

# कष्टाय क्रमणे । ३ । १ । १४ ॥

कष्टशब्दाच्चतुर्थ्यन्तात्क्रमणेऽर्थे क्यङित्यर्थेऽर्थविशेषो न लभ्येत तदर्थं निपातनमित्याह

विधाविति ॥ (कै)

भाष्ये

क्रमणे नार्तव इति । (भा)

यद्यच अनार्जवमेव क्रमणशब्दार्थः। तदा कष्टाय कर्मणे कुटिलो भवति इत्यर्थः स्यात् । न चायमर्थः कष्टायत इत्यतो गम्यते । किं च सत्रादिभ्य इति वार्त्तिकभाष्ये "सत्रादिभ्य इति किमर्थं कुटिलायानुवाकाय क्रामतौ"त्युदाहरणे कुटिलायेत्यस्य वैयर्थ्यापत्तिः ॥

---

कष्टाय क्रमणे ॥ कष्टं कृच्छ्रम् । कृच्छ्रगहनयोः कष इति कृच्छ्र इह भावः । तेन च तत्कारणं पापं कर्म लक्ष्यते । क्रमणमुत्साहः, इतिमर्गनाय-

"कष्टाय क्रमणे" ॥ 'चतुर्थीसमर्थादिति'। सङ्गतार्थः समर्थः, चतुर्थ्या समर्थ इति तृतीयासमासः, प्रत्ययार्थेन क्रमणेन सह सङ्गतार्थत्वं यस्य चतुर्थ्यन्तं तस्मादित्यर्थः, एतच्च कष्टायेति निर्देशादेव लभ्यते, क्रमणशब्दस्य पादविहरणे प्रसिद्धत्वात्तत्रैव प्रत्ययो मा विज्ञायीत्याह । 'क्रमणे ऽर्थेऽनार्जवइति'। अनार्जवं कौटिल्यम् इह त्वनार्जवशब्दोना-करणरूपे क्रमणे पर्यवस्यत्यर्थात्, किं पुनः क्रमणमुत्साहः, यथा व्याकरणाध्ययनाय क्रमते उत्सहत इत्यर्थ इति व्याख्यातम् । 'कष्टाय

## किं चतुर्थ्यन्तेभ्य इति । (कै)

किमर्थम् अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थकम । अत: कष्टं क्रामतीत्युदाहरणं भाष्ये दत्तमसङ्गतं स्याद् अनार्जवरूपे क्रमणेऽवृत्तेः तदङ्गं विकलत्वात् । तस्मादनार्जवे इत्यस्यानृजुविषये क्रमणे इत्यर्थः । स्वार्थिकाणां त्वार्जवशब्देन तत्पुरुषः । एवं चानृजौ वर्त्तमानात् कष्टशब्दात्क्रमणेऽर्थे क्यङित्यर्थः फलति । कष्टाय कर्मणे क्रामतीत्यस्य च कष्टम् अनृजुकर्मकर्त्तुं गच्छतीत्यर्थः । अनृजुं चायं तेन पापार्थककष्टशब्दात् प्रत्यय इत्यर्थ लाभार्थं निपातनम् । तेन दुःखपर्यायाद् दुःखं अनुभवन्तु क्रामतीत्यर्थेन ॥ एतदेव ध्वनयन्

## कष्टाय कर्मणे इति । (भा)

कर्मपदं प्रयुक्तम् । अत एव सूत्रार्थव्याख्यानोत्तरम् "अत्यल्पमिदमुच्यते कष्टायक्रमण इति सत्रादिभ्यः क एव चिकीर्षायामिति वक्तव्यमि"त्युत्तरभाष्यं सङ्गच्छते । चिकीर्षायां गम्यमाना-

नेष्विति सूत्रे हि सर्ग उत्साह इत्युक्तम् । तदयमर्थः । चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते । कष्टायते । पापं कर्म कर्त्तुमुत्सहत इत्यर्थः ॥ सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्त-

कर्मणे क्रमत इति'। 'कृच्छ्रगहनयोः कष' इति कृच्छ्र इह भावः, कृच्छ्रं दुःखम्, इह तु तत्कारणं पापं कर्म, कृच्छ्रं पापं कर्म कर्त्तुमुत्सहत इत्यर्थः। वृत्तिसर्गत्यात्मनेपदं, प्रायेण तु परस्मैपदं पठ्यते, तत्र पापं कर्म कर्त्तुंकामः कुटिलमाचरतीत्यर्थः, अनुत्साहत्वात्परस्मैपदम्, 'अत्यल्पमिदमुच्यत इति' सर्वमव्याख्यासंग्रहात्, कथं तर्हि वक्तव्यमित्याह। 'सत्र-

यामित्यर्थः । न च चिकीर्षोत्साह एव तस्यागम्यत्वे क्रामतीति परस्मैपदप्रयोगानुपपत्तिः । गमनरूपक्रमणपदार्थेनोत्साहस्य गम्यत्वेऽपि क्रमेस्तदर्थत्वाभावात् । नन्वेवं वृत्तिमर्गत्यादौ क्रमोत्साहार्थत्वमेवाश्रित्य चिकीर्षाया एवोत्साहरूपायाः प्रत्ययार्थत्वमाश्रित्य क्रमत इत्यात्मनेपदं प्रयुक्तं तद्भाष्यविरुद्धम् ।

अनार्जवमेव क्रमणमिति । (कै)

अनृजुविषयमेव क्रमणमित्यर्थः ॥ तध्वनयन्नाह्यति

अनार्जवयुक्तं पन्थानं गच्छतीत्यर्थ इति । (कै)

अपर आहेत्यनेन च परस्परं वाक्यानां व्याख्येय व्याख्यानभावो गम्यते इति न कश्चिद्विरोधः ॥

व्यवस्थितेति । (कै)

अनभिधानादिति तत्त्वम् ॥

---

त्वम् ॥ कष्टं पापम् । सत्रादयो वृत्तिविषये पापपर्यायाः । तेभ्यो द्वितीयान्तेभ्यः चिकीर्षायां क्यङ् । पापं चिकीर्षतीत्यस्वपदेन विग्रहः । सत्रायते । कक्षायते । कष्टायते । कृच्छ्रायते । गहनायते ॥

कष्टेत्यादि' । अस्मिन्पक्षे द्वितीयान्तेभ्यः प्रत्ययः चिकीर्षां प्रति कर्मत्वात् । 'कण्वचिकीर्षायामिति' । प्रकृतिप्रत्ययसमुदायस्यायमर्थनिर्देशः, कण्वं पापं, सत्रादयो हि वृत्तिविषये पापपर्यायास्तेभ्यश्चिकीर्षायां प्रत्ययः, पापं चिकीर्षतीत्यस्वपदेन विग्रहः । 'अजः कष्टं क्रामतीति' । क्रमिरत्र पादविहरणे वर्त्तते, कष्टं गहनदुर्गं क्रामति गच्छतीत्यर्थः ॥

# कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः । ३ । १ । १५ ॥

भाष्ये

अवगीर्णस्य वा मन्थ इति । (भा)

मन्थो मथनं तच्चोद्गीर्णस्य चर्वणम् । अन्यस्याशनरूपमस्तु चलनम् इत्यन्या उद्गीर्णविषये एव प्रयोगस्तदुपपादयति

कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ कर्मणा इति पञ्चमी रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात् । प्रत्येकं सम्बन्धात्त्वेकवचनम् । वर्तीति ण्यन्ताद्वृतेः ण्यासश्रन्थोयुजिति युचि प्राप्ते अत एव निपातनात् क्तिन् । चरतेः सम्पदादित्त्वाद्भावे क्विप् । रोमन्थतपोभ्यां कर्मभ्यां यथासङ्ख्यं वर्तिचरोरर्थयोः क्यङ् स्यात् । रोमन्थं वर्तयति रोमन्थायते । हनुचलन इति वक्तव्यम् ॥ हनुचलनेनात्र चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं लक्ष्यते । नेह कीटो रोमन्थं वर्तयति । अपानप्रदेशान्निःसृतं द्रव्यम् । कीटो वर्तुलं

"कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" ॥ कर्मणा इति पञ्चमी रोमन्थतपोभ्यामित्यनेन सामानाधिकरण्यात्, प्रत्येकसम्बन्धात्त्वेकवचनम् । 'वर्त्तीतीति' । ण्यन्ताद्वृते 'ण्यासश्रन्थो युज' ति युचि प्राप्ते ऽस्मादेव निपातनात् क्तिन्, यद्यपि भवति वर्त्तना, चरणं चर्, संपदादित्वाद्भावे क्विप् । 'हनुचलनइति' । हनुचलनमत्र चर्वितं चर्वितस्य मुखप्रदेशे आकृष्य चर्वणं तत्रेत्यर्थः । 'कीटो रोमन्थं वर्त्तयतीति' अवगीर्णमपादानप्रदेशान्निःसृतं रोमन्थाख्यं द्रव्यं वर्त्तयति वृत्तं करोति गुलिकां

(कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः । (अ. ३ । पा. १ । आ. २ )
३ । १ । १५ । )

**सहचरितमति ॥** (कै)

**अश्नातीत्यर्थ इति ।** (कै)

वर्त्तुलं करोतीत्यर्थः ॥

**क्यङन्तेनेति ।** (कै)

एवं च तत्र प्रयोगाभावात् किं तन्निवृत्त्यर्थेन यत्नेनेति भावः ॥

---

करोतीत्यर्थ इति न्यासकारहरदत्तौ । अपानप्रदेशान्निःसृतमश्नातीत्यर्थ इति तु कैयटो व्याख्यत् । तपस्यति, इह तङ् प्राप्तः । तस्मात्तपसः परस्मैपदं चेति वक्तव्यम् । एवं च नमोवरिव इत्यादि सूत्र एव तपःशब्दः पठितुमुचितः । तथा तु न कृतमित्येव ।

---

करोतीत्यर्थः, नात्र ह्यनुचलनमस्ति । 'तपसः परस्मैपदं चेति' । एवं च नमोवरिवआदिसूत्रे तपःशब्दः पठितव्यस्तथा तु न कृतमित्येव । इह तपस्यते लोकं जिगीषन्मेरिति छान्दसत्वादात्मनेपदम् ॥

# सुखादिभ्यः कर्तृवेदनायाम् ।
## ३। १। १८॥

भाष्ये

सुखं वेदयत इति। (भा)

सुखप्रसाधादिना देवदत्तस्य सुखं प्रसाधको वेदयत इत्यन्वयः॥ यद्यप्यन्तरङ्गत्वात् कारकत्वेन वेदनायामन्वयो न्याय्यः तथापि सामर्थ्यात्सुखादिभिरन्वय इत्याह

सुखादिभ्यः कर्तृवेदनायाम् ॥ कर्तृ इति पृथक्पदं लुप्तषष्ठीकम् । वेदना ज्ञानम् । विद चेतनाख्याननिवासेष्विति चुरादिण्यन्तात् भावे ण्यास-श्रन्थो युच् घट्टिवन्दिविदिभ्यश्चेति औपसङ्ख्यानिको वा । कर्तृत्वं च श्रुतवेदनक्रियापेक्षम् । तदयमर्थः । वेदनक्रियायाः कर्त्रभिधेयभावेन सम्बन्धिभ्यः सुखादिभ्यः कर्मभ्यो वेदनायामर्थे क्यङ् स्यात् । सुखं वेदयते सुखा-

"सुखादिभ्यः कर्तृवेदनायाम्" ॥ 'वेदनायामिति'। विद चेतनाख्याननिवासेष्विति चुरादिण्यन्ताद्भावे 'ण्यासश्रन्थो युच्,' घट्टिवन्दिविदिभ्यश्चेत्यौपसंख्यानिको वा। 'वेदनायामर्थेऽनुभव इति'। प्रत्यक्षज्ञानमनुभवः, यद्यपि वेदनाशब्दो ज्ञानमात्रवचनस्तथापि कर्तृग्रहणेन सुखादीनि विशिष्यन्ते, कर्तृगतानां च सुखादीनां वेदना ऽनुभवरूपैवेति मन्यैवमुक्तं, क्रियापेक्षं कर्तृत्वं वेदनासंनिधानात्तदपेक्षमेव विज्ञायते, कर्त्रा च सुखादीनि विशिष्यन्ते न वेदना, व्यभिचाराभावात्, सर्वत्र हि वेदना वेदयितुरेव भवति तदेतदाह। 'वेदयितुश्चेत्कर्तुः सुखादीनि

**वेदनाया इति॥** (कै)

समस्तस्यान्यत्रान्वयासम्भवादाह

**सुपां सुलुगिति।** (कै)

वेदनाशब्दे विदलनेति चौरादिकण्यन्ताद्ण्यासश्रन्थेतियुच्॥

**नान्यदीयेति।** (कै)

सुखप्रसाधादिना लिङ्गेति भावः॥

---

यते। कर्तृग्रहणं किम्। सुखं वेदयते प्रसाधको राज्ञः। अयं वेदिः आकुस्मीयः। एवं च वेदयतीति केषांचित्परस्मैपदपाठः प्रामादिकः। अत्र श्लोकगणकारः। सुखदुःखगहनकृच्छ्राः टप्रालीकप्रतीपकरुणाश्च। कृपणाः सोढ इतीमे सुखादयो दशगणे पठिताः॥ सोढं सहनमभिभवो वा। गणरत्नमहोदधौ तु आस्रशब्दोपीह पठ्यते॥

---

भवन्तीति'। आश्रयाश्रयिभावलक्षणश्च सम्बन्धो न जन्यजनकभावलक्षणः, एवं च कर्तृग्रहणं लुप्तषष्ठीकं पृथक्पदम्. 'वेदयतइति'। आ कुस्मादादात्मनेपदीत्यधिकारे वेदिः पठितः, एवं च प्रत्युदाहरणे परस्मैपदपाठः प्रमादतः, प्रसाधको ऽभ्यङ्गादेः कर्ता संप्रसाध्यमानस्य नेत्रविकारादिना सुखमनुमानतो जानाति॥

# नमोवरिवश्चित्रङः क्यच्। ३। १। १९॥

नमस्य शब्दस्य प्रकृतत्वस्मरत्वेऽपि नमः शब्दात् क्यचोविधानेन तद्योगे चतुर्थी स्यादत आह

**नमस्यतीति।** (भा)

**निपात एवेति।** (कै)

अव्ययत्वोपलक्षणमेतत्। अन्यथा मात्राप्रभृतीनीत्यनेन हल्-योगे एव स्वार्थम् एवं च निपातत्वविधानादत्र तदभावे क्यज-प्रकृतिः स्यादत आह

**अर्थवत्त्वादिति।** (कै)

अस्य शुद्धरूढत्वेन वृत्तेर्जहत्स्वार्थत्वादिति भावः॥

**इत्यर्थाङ्गीकारेणेति।** (कै)

अनेनैतत् सूचयति नायमर्थोऽतः प्रतीयते किं तु वरिवस्य-शब्दादिभ्यः सपर्यादिमात्रप्रतीतिवदस्मात् पूजामात्रप्रतीतिरित्याद्य

---

नमोवरिवश्चित्रङः क्यच्॥ करणग्रहणमनवृत्तं अभिधानशक्तिस्वाभा-व्यात्। इह क्रियाविशेषणपरम। तेन नमसः पूजायां वरिवसः परिचर्यायां चित्रङ आश्चर्य इत्त स्यात्। नमस्यति देवान नमस्कारेण पूजयतीत्यर्थः।

---

"नमोवरिवश्चित्रङः क्यच्"। 'करणविशेषे पूजादाविति'। करण इति सामान्यानुवृत्तावप्यभिधानशक्तिस्वाभाव्याद्विशेष उपलभ्यत इति भावः। 'नमस्यति देवानिति'। नमःस्वक्तिस्वाहेति चतुर्थी न भवति,

एव समाधिरत्र युक्तोऽयं लेकदेशिन इति करणपदानुवृत्त्या क्रियासामान्ये विधावपि प्रयोगवशादेव तद्विशेषप्रतीतिर्भविष्यतीति किमेतैरित्यत आह

करणग्रहणस्येति ॥ (कै)

भाष्ये

साधने तव्यदादय इति । (भा)

भावोऽपि क्रियारूप एवेति भावः ॥

शब्दान्तरेति । (कै)

स्वार्थिकत्वात् क्यजाद्यन्तानां द्रव्यवाचित्वेऽपि शब्दान्तरवाच्य क्रियाकारके तव्यादीनामुत्पत्तिः स्यादेवेत्यन्वयः । तत्र दृष्टान्तो वृत्तमित्यादि ॥

तव्यादयस्त्विति । (कै)

एवं च धातुसंज्ञाविधानमेवैषां वाचकत्वे मानमिति भावः ॥

भाष्ये

अथवाऽधातव एवेति । (भा)

क्रियावचनाय वेत्यर्थः ॥

---

वरिवस्यति गुरून् । शुश्रूषत इत्यर्थः । चित्रीयते । विस्मयत इत्यर्थः । विस्मापयत इत्यन्ये । तथा च मायामृगं प्रकृत्य भट्टिराह । ततश्चित्रीयमाणोऽसाविति । अत्र चित्रङो ङित्करणादवयवे कृतं लिङ्गं समुदायस्य विशेषकं

---

प्रत्ययार्थे गुणीभूतस्य नमःशब्दस्य निष्कृष्य सम्बन्धाभावात्, अथ वा नमस्यति नमस्कारेण पूजयतीत्यर्थस्तत्रोपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीयैव भवति । एवं च नमस्करोति देवानित्यादावपि

**कः खल्वपीति ।** (कै)

पश्वादीनामर्थरहितानामेव पाठात् ॥

**क्वचिदर्थानिति ।** (भा)

अनेकान् क्वचित्त्वेकमित्यर्थः ।

**एवमप्यर्थादेशनमिति ।** (भा)

नमसः पूजायामित्यादि ।

**बुध्येरनिति ।** (भा)

निवृत्तप्रेषणात्स्वार्थे णिचा बुध्येरन्नित्येव क्वचित्पाठः ॥

---

भवतीति वाच्यम् । तथा सति क्यङन्तादात्मनेपदम् । न चैवं शब्दवैरादिसूत्रे चित्रशब्दोपि पठ्यतां क्यङेव तङ् भविष्यतीति वाच्यम् । तथा सति हि क्यचि चेति इत्वं न स्यात् । तस्मात् क्यजेव कार्यो ङित्वं च ॥

द्वितीयैव भवति । 'परिचर्यायामिति' । परिचर्या शुश्रूषा । 'चित्रीयत इति' । अवयवकृतं लिङ्गं समुदायस्य विशेषकं भवतीति क्यजन्तादात्मनेपदं भवति, 'क्यचि चे'तीत्वम्, एतदर्थमेव च शब्दवैरादिसूत्रे चित्रशब्दो न पठितः । 'चित्रीयत इति' । विस्मयत इत्यर्थ इत्येके, विस्मापयत इत्यर्थ इत्यन्ये, तथा च भट्टिकाव्ये मायामृगं प्रकृत्य भवति ततश्चित्रीयमाणोऽसाविति ॥

# मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहल-कलकृततूस्तेभ्यो णिच् । ३ । १ । २१ ॥

मुण्डमिश्र निर्देशादेवाकारान्तनिर्णयेन प्रश्नानुपपत्तिरत आह

**किमिकारेति ॥** (कै)

भाष्ये

**इमाविति ।** (भा)

समानार्थावित्यर्थः ॥ यद्यप्यकारान्तयोरेव ग्रहणेऽपि तयोर्नियमार्थत्वादिकारान्ताभ्यां णिजभावेन सर्वदोषपरिहारोऽस्ति तथाप्येकदेश्याह भाष्ये

---

मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ॥ एभ्यो दशभ्यः करणार्थे णिच् स्यात् । मुण्डं करोति मुण्डयति । मिश्रयति । श्लक्ष्णयति । लवणयति । व्रताद्भोजने तन्निवृत्तौ च ॥ पयः शूद्रान्नं वा व्रतयति । वस्त्रात्समाच्छादने । संवस्त्रयति । इह भोजनतन्निवृत्ती व्रतशब्दस्यार्थौ । समाच्छादनं तु वस्त्रशब्दस्य । प्रत्ययस्तु करणार्थे । श्रूयते च भोजने व्रतशब्दः ।

---

"मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्" ॥ किमर्थमिदं, न प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धं, न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः क्रियते राजानमतिक्रान्तवानत्यराजदित्यपि दर्शनात्,

## यावदिति । (भा)

एवं च एतत्सजातीयानुपूर्वीकाणामेतदर्थकानाञ्चोद्दलकतयोरे-वेति प्रकारान्तरेणाप्येकदेश्युक्तित्वमस्यानुपदं वक्ष्यते ॥ भाष्ये

## वृद्धिरपिनित्येति । (भा)

कार्यमात्रमिति भावः ॥

## वाचनिकमिति । (कै)

शब्दान्तरस्येति वचनमिति भावः ॥ वस्तुतस्तदपि न्यायसिद्ध-मित्याह

---

यदस्य पयोव्रतं भवति । आत्मानमेव तद्वर्धयति त्रिव्रतो वै मनुरासीत् । द्विव्रता असुराः । एकव्रता देवा इति । पयश्शायां च । शूद्रान्नेन श्वमां-सादीन्यपि व्रतयितुमिति । अयमेव व्रतशब्दो दर्शादिवद्विपरीतलक्षणया तन्निवृत्तौ वर्त्तते । संवस्त्रयति प्रावारमित्यत्र प्रावारमाच्छादयतीत्यर्थ इति माधवः । हलादिभ्यस्त्रिभ्यो ग्रहणे प्रत्ययः । हलिं गृह्णाति हलयति । कलिं गृह्णाति कलयति । कृतं गृह्णाति कृतयति । तूस्तानि विहन्ति वितूस्त-यति । तूस्तं केशा इति श्रीभद्रः । जटीभूताः केशा इति न्यासः । पापमिति वैजयन्ती । स्यादेतत् । प्रातिपदिकाद्धात्वर्थे इत्येव सर्वमिदं सिद्धम् । न च तत्करोतीत्यादिना तत्र धात्वर्थनियमः । राजानमतिक्रान्तवान् अत्यरा-जदित्यादेरपीष्टत्वात् तत्किं मुण्डादि सूत्रेणेति चेत् । अत्राहुः । मुण्डयति माणवकं मिश्रयत्यन्नं श्लक्ष्णयति वस्त्रं लवणयति व्यञ्जनमिति सापेक्षेभ्योपि

---

मुण्डं करोति माणवकमित्यादौ सापेक्षेभ्योपि णिच् यथा स्यादित्ये-वमर्थं प्रपञ्चार्थं वा, हलिकल्योरदन्तत्वनिपातनार्थमन्यथा हलिइ कलिइ इति स्थिते 'ऽचोऽञ्णिती' ति वृद्धिः प्राप्नोति णाविष्ठवदिति

**अथवेति प्राप्तौ सत्यामिति ।** (कै)

अत्र तूभयोरनित्ययोः परत्वादन्त्यस्यैव वृद्धिर्न तूपधाकारस्येति भावः । तदनाश्रयापि समाहितमित्यत्र तात्पर्यम् ॥ ननु पूर्वमन्त्यवृद्धिप्राप्तमपि लोपे उपधावृद्धिप्राप्तिरिति नैकस्या अनित्यत्वमिति शङ्कते

**यद्यपीति ॥** (कै)

**भिन्नस्वभावेति ।** (कै)

भिन्नस्थानिकेत्यर्थः । वस्तुतो "अचोञ्णिती"त्यस्य लोपेन बाधेऽपि "अत उपधाया" इत्यस्याप्रवृत्तिरेव स्थानिवत्त्वेन वाच्या । "अचोञ्णिती"त्यस्य चानित्यत्वं लोपे कृतेऽप्राप्त्यैवेत्याशयेनाह

णिजर्थमिदम् । हलिकल्योरत्वनिपातनार्थम् । तथा च वार्तिकम् । हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति । तथाहि । हलि इ कलि इ इति स्थिते अचोञ्णितीति वृद्धिः प्राप्नोति णाविष्ठवदिति टिलोपश्च । तत्र लोपः शब्दान्तरप्राप्त्या अनित्यः । वृद्धिस्तु टिलोपे सत्यप्राप्तेः । उभयोरनित्ययोः परत्वाद्वृद्धौ कृतायां ऐकारस्य आयादेशात्पूर्वमेव परत्वात् वार्णादाङ्गस्य बलीयस्त्वाच्च लोपेनायं लोपोऽयम्भवतीति सन्वल्लघुनीति सन्वद्भावः स्यात् । दीर्घो लघोरिति दीर्घश्च । न च टिलोपस्य अचः परस्मिन्निति स्थानिवद्भावात्तेन व्यवधानान्न दोष इति वाच्यम् । चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सन्वत् लघोर्दीर्घ इति हरदत्तादिभिः पुरस्कृते कैयटेनैकीयमततयोपन्यस्ते व्याख्याने स्थानिवद्भावस्याकिञ्चित्करत्वात् ।

---

टिलोपश्च, तत्र लोपः शब्दान्तरप्राप्त्या ऽनित्यः, वृद्धिस्तु टिलोपे कृतेऽप्राप्तैवेत्युभयोरनित्ययोः परत्वाद्वृद्धौ कृतायामैकारस्य लोपस्तन्नाल्लोपश्च भवतीति सन्वल्लघुनीति सन्वद्भावः स्यात्, 'दीर्घो लघो'रिति दीर्घश्च,

## तत्त्वतस्त्विति ॥ (कै)

## न्याय्येति । (भा)

पूर्वोक्तेत्यर्थः ॥ परेत्यादिभाष्यं त्वेकदेश्युक्तिः । भिन्नलक्षणाया भिन्नस्थानिकाया वृद्धेर्नित्यत्वोक्तेः । सिद्धान्त्युक्तित्वाभावात्कृते लोपे स्थानिवद्भावेन वृद्धेरप्राप्तेरपि तदुक्तेस्तदुक्तित्वाभावात् । अत एव णौ चङीति सूत्रे लोपस्य शब्दान्तरप्राप्त्या वृद्धेर्लोपोत्तरमप्राप्त्योभयोरनित्ययोः परत्वाद् वृद्धिरित्याशङ्क्य नाग्लोपीति सूत्रे ग्रहणाद् वृद्धेर्लोपो बलीयानिति सिद्धान्तितत्वेनात्रत्यास्यैकदेश्युक्तित्वं स्पष्टमेवोक्तम् । इदमेवाभिप्रेत्य सप्तमे कैयट आह

षड्परे णौ यल्लोपः तत्र परतो योऽभ्यासः तस्येति भाष्यकैयटमतेऽपि अभ्यासस्य टिलोपाद्यनन्तरं जातत्वेन आदेशादचः पूर्वत्वेन स्थानिवत्त्वाप्रसङ्गात् । अत्त्वनिपातनं तु यद्यपि परत्वाद्वृद्धिस्तथापि अगेव लुप्यत इति सन्वद्भावदीर्घौ न भवतः । एवं च वलिपटप्रभृतिभ्यो णिचि अवीवलत् अपीपटदिति भवति न त्ववबलदपपटदिति । स्यादेतत् णौचङ्यत्रत्यभाष्येण सहैतद्विरुध्यते । तत्र हि वृद्धेर्लोपो बलीयानिति स्थितम् । युक्तं चैतत्, शब्दान्तरप्राप्तौ सत्यामपि कृताकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यत्वाभ्युपगमात् । यदाह भुवो वुको नित्यत्वादित्यादीति । ज्ञापकं चात्र नाग्लोपिशास्मिति सूत्रे अगिति प्रत्याहारग्रहणम् । तथाहि, अवर्णान्तेष्ववर्णोपधेषु ऋवर्णान्तेषु च वृद्धावप्यवर्ण एव लुप्यते, तत्र अग्लोपिनां नेत्येव वाच्यम् । इवर्णोवर्णान्तयोस्तु वृद्धौ कृतायामिकारो लुप्यते न त्वक । न च स्थानि-

अत्त्वनिपातनं तु यद्यपि परत्वाद्वृद्धिस्तथाप्यगेव लुप्यत इति सन्वद्भावो न भवति तदाह । 'हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थ-

**अनाश्रित्य ज्ञापकमत्वनिपातनमुक्तम् ।** (कै)

ज्ञापकाश्रयणमेव तु न्याय्य इति ॥

**प्रातिपदिकाद्धात्वर्थे इति ।** ( ग-सू )

चुरादिगणसूत्रमिदमिति भावः ॥

**तत्करोतीति ।** (कै)

हेतुमति च (३।१।०६) इत्यत्र वार्त्तिकादिदं गणसूत्रमप्रामाणिकमत एव सत्यापेति (३।१।०५) सूत्रे पाशादिग्रहणं चरितार्थं वार्त्तिके करोतिर्धात्वर्थोपलक्षणमस्तेनात्यरराजदित्यादीनां सिद्धिः । सत्यापेति सूत्रेऽनुवृत्तकरण इति वक्ष्यन्ते ॥

नमाख्यत् असस्वामत् । गोमिनमाख्यत् अजुगोमत् । प्रादुराख्यत् अपप्रादत् । यादृशमाख्यत् अययादत् । तादृशमाख्यत् । अततादृदित्यादौ यत्र वृद्धेरप्रसङ्गादिको लोपस्तत्र ह्रस्वनिवृत्तये अग्ग्रहणमिति वाच्यम् । अनभिधानात्तत्र णिच एवानुत्पत्तेः । एवञ्च भाष्यकारेण ज्ञापकत्वस्य समर्थनादवसीयते । न चैवमपि स्रग्विणमाख्यदसस्रजदित्यत्र विन्मतोर्लुकि उपधाया वृद्धौ ह्रस्वनिवृत्त्यर्थं अग्लोपग्रहणं स्यात् अस्ति ह्यत्राभिधानम् । टेरित्यत्र भाष्ये स्रजयत्यादावप्यणादिति वाच्यम् । एवमपि स्रजयतीत्यत्र वृद्ध्यभावस्य सिद्धान्तसम्मतत्वेन टेरित्यत्र भाष्यकारेण स्रजयतीति निर्देशादकृवत्तु इति परिभाषया वा वृद्धेरप्रसङ्गेन ह्रस्वभाविन्या उपधाया एव अभावात् । अतः प्रत्याहारग्रहणं ज्ञापकं वृद्धेः पूर्वं टिलोप-

मिति' । उपलक्षणमेतत्, 'दीर्घो लघो'रिति दीर्घाभावार्थं च, दीर्घो लघोरित्यत्राप्यग्लोप इति वर्त्तते, एवं च वलिपट्प्रभृतिभ्यो णिचि

## धात्वर्थानियम इति । (कै)

एवं च धात्वर्थमात्रे विधानार्थः स्यात् । करणे इति च धात्वर्थमात्रोपलक्षणं स्यात् । अत एव वर्मणा संवर्मयतीत्यादि सिद्धिरिति भावः ॥

## सापेक्षेभ्योऽपीति । (कै)

अयमभ्युच्चय इति सुप आत्मन (३।१।८) इत्यत्र भाष्ये स्पष्टम् ।

---

इति । तत्कथमिष्यते वृद्धौ सत्यां टिलोप इतीति चेत् । अत्र माधवः । परत्वाद्वृद्धिरिति मुख्यः पक्षः । वृद्धेर्लोपो बलीयानिति तु प्रौढिवाद-मात्रमित्येकं मतम् । तद्विपरीतं मतान्तरम् । भाष्यद्वयप्रामाण्याद्वृद्धेः पूर्वं पश्चाद्वा कामचारेण टिलोप इति अपपटत् अपीपटदिति रूपद्वयमपि साध्विति चापरं मतमिति मतत्रयमपि दुःख्यातुदृत्तावुपनिबद्धवान् । तत्राद्यं मतं हरदत्तस्य द्वितीयं कैयटस्य तृतीयं त्वन्येषामिति विवेकः । एतद्बलाबलचिन्ता तु करिष्यते । अयं च भेदो णिभिन्नविषय एव । णिचि तु णौ लोपाविति विप्रतिषेधाधिक्यसंगत्या ऽपवादत्वाद्वा प्रागेव णिलोपः । उपधाह्रस्वत्वे सन्वद्भावदीर्घयोश्च णौ चङ्युपधाया ह्रस्वः इति निर्देशाद्वा अवीवददित्येव रूपमिति सप्तमे वक्ष्यामः । प्रकृतमनुसरामः । मृडादिसूत्रे केषां चिद्ग्रहणं प्रपञ्चार्थं मृडादयः सर्वेऽपि सत्यापपाशेत्यत्रैव पठितुं युक्ताः । एवं हि एकवाक्यता लभ्यते । द्विर्णिग्रहणं च न कर्तव्यमिति लाघवम् । तथा तु न कृतमित्येव ॥

अवीवददपीपटदिति भवति, न त्ववदत् अपपटदिति, सत्यापपाशेत्यत्र मृडादयः पठितव्यास्तथा तु न कृतमित्येव ॥

# धातोरेकाचो हलादेः क्रियासमभि-व्याहारे यङ् । ३ । १ । २२ ॥

इहेति । (कै)

यथा पूलादीनाम् । समभिव्याहारश्चोत्तरा तेन क्रियाया विशेषणानुपपत्त्या प्रश्न इत्यर्थः ॥

एककालस्येति । (कै)

एकदेशस्याप्युपलक्षणमेतत् ॥ ननु दिवेर्विजिगीषाक्रीडाद्यनेकार्थत्वदर्शनादाह

धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥ एकाच् हलादिः समभिक्रियमाणक्रियावृत्तिर्यो धातुः तस्मात्स्वार्थे यङ् स्यात् समभिहारोऽत्र पौनःपुन्यं भृशार्थो वा । यद्यपि विप्रकीर्णानां एकत्र राशीकरणं समभिहारशब्दस्य मुख्योऽर्थः, तथाप्यसौ धान्यादीनामेव सम्भवति । न

"धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" ॥ हलादेरिति विशेषणादेकाच इति बहुव्रीहिः । 'क्रियासमभिहारे वर्त्तत इति'। समभिक्रियमाणायां क्रियाया हि वर्त्तत इत्यर्थः । अनेन समभिहारस्य प्रकृतिविशेषणत्वं दर्शयति, क्रिया हि धातुवाच्या, समभिहारविशिष्टापि क्रियैव भवति, अतः प्रकृतिविशेषणत्वमेव युक्तं, यथातिशयेन शुक्लोपि शुक्ल एवेत्यतिशायनं प्रकृत्यर्थस्तद्वत् । 'तस्माद्यङ्प्रत्ययो भवतीति' । क, अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति तत्रैव, समभिहारे द्योत्ये प्रकृत्यर्थसमभि-

युगपदिति ॥ (कै)

ननु विषयभेदात्कर्तृभेदाच्च पाकादीनां नानात्वेन कथमेकैवेत्यत आह

सा चेति ॥ (कै)

एतद्युक्तमेव साध्यत्वमित्याह

साध्यैकेति । (कै)

अत एव भवद्भिरास्यत इत्यादौ बहुवचनं नेति भावः ॥ अधिश्रयणादीनां नानात्वादाह

तु धातुवाच्यायाः क्रियायाः । अमूर्तत्वात् । अतो गौणोऽर्थो गृह्यते । स च न प्रत्ययस्य वाच्यः । प्रकृत्यर्थं प्रति विशेष्यतापत्तेः किन्तु द्योत्योऽर्थः । अत एव टाबादयस्तरबादयश्च स्वार्थिका एवेति निरूढः पन्थाः । यदा तु प्रकृत्यर्थप्राधान्यमौत्सर्गिकं व्याख्यात इव टाबादिष्वपि त्यज्यते तदा टाबादयो वाचका इत्यपि पक्षः सम्भवत्येव । स्वीकृतश्चायं लिङ्गादिविधौ

क्रियमाणस्य द्योतनायेत्यर्थः, यथा प्रकृत्यर्थस्यातिशयद्योतनाय तरबादयस्तद्वत् । इह विप्रकीर्णानां पदार्थानां मूर्त्तानामेककालानामेकत्र राशीकरणं समुदायभावापत्तिर्मुख्यः समभिहारो यथा पुष्पादीनां, धातुवाच्या तु क्रियैकैव, यद्यपि दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिष्वित्यनेकार्थो दिविः पठ्यते तथापि न युगपदनेकमर्थमाचष्टे किं तर्हि प्रयोगभेदेन, यद्यपि चाश्रयभेदाद्विषयभेदाच्च भिद्यते पाको ऽन्य एव हि देवदत्तकर्तृकः पाको ऽन्य एव चान्यकर्तृको ऽन्यश्चौदनस्य पाको ऽन्य एव तंका-दीनां, तथापि धातुना निवृत्तभेदैव सा प्रत्याय्यते, अत एव भवद्भिरास्यत इत्यादौ बहुवचनं न भवति, न खलु कर्तृभेदः क्रियाशक्तिभेदेन व्याप्तः,

## अधीति युगपदिति । (कै)

उत्पन्नविनाशित्वादिति भावः । अमूर्त्तत्वाच्चेत्यपि बोध्यम् ॥ भाष्ये "कोऽयमि"त्यस्य किमर्थकोऽयमित्यर्थः ॥ "माल्लाभिहारे" कर्मधारयः ॥ "उत्पलाभिहारे" षष्ठीतत्पुरुषः ॥

## बुद्धौति । (कै)

अनेकासां सकलानाम् अवयवक्रियाणां बुद्धिविषयत्वेन यौगपद्यमिति भावः । बुद्धौ युगपदवस्थानमत्र समभिहार इति बोध्यम् ॥

भाष्येपीति तत्रतत्र स्फुटम् । पुनः पुनरतिशयेन वा पचति पापच्यते । दीर्घोकित इति दीर्घः । देदीप्यते । गुणो यङ्लुकोरिति गुणः । ननु क्रियासमभिहारे चेति वार्त्तिकेन नित्यवीप्सयोरिति वा पदद्विर्वचनमिह कुतो नेति चेन्न । यङैव क्रियासमभिहारस्य द्योतितत्वात् । न चैवं लुनीहिलुनीहीत्यत्रापि न स्यादिति वाच्यम् । केवलेन लोटा तुल्यरूपो हि क्रियासमभिहारे लोट्समभिहारं द्योतयितुं सहायतया द्वित्वम-

---

एकफलावच्छिन्नामेकामेव क्रियां कुर्वत्स्वपि बहुषु पचन्तीति दर्शनात्, तदेवं धातुवाच्या समूहरूपा प्रधानक्रियैकैवेति समभिहाराभावः, अधिश्रयणादीनां तु गुणक्रियाणां युगपदेकधातुवाच्यत्वेऽपि क्रमजन्यत्वादुत्पन्नापवर्गित्वेन युगपदवस्थानाभावादमूर्त्तत्वाच्च समभिहाराभावः, तदेवं मुख्यस्य समभिहारस्य धात्वर्थविषये ऽसम्भवाद्गौणो गृह्यते तद्दर्शयति । 'पौनःपुन्यं भृशार्थो वेति' । द्रव्याणां द्रव्यान्तरैरव्यपेतानां समभिहारो भवति, तथा क्रियाणामपि क्रियान्तरैरव्यपेतानामेतदुभयं भवति, तत्र प्रधानक्रियायां पौनः पुन्यं समभिहारः पुनःपुनरनुष्ठीयमानविषयं हि तत्, प्रधानक्रियैव च पुनःपुनरनुष्ठीयते ऽवयवक्रियायां तु भृशार्थता समभिहारः,

प्रधानेति । (कै)

पौनःपुन्येन तस्या एवानुष्ठानादिति भावः। अत्रापि समभिहारो बौद्ध एवेति बोध्यम् ॥ क्रियाया जातित्वरूपसामान्यत्वासम्भवादाह

साधारणीति । (कै)

सकलावयवसाधारणीत्यर्थः ॥ तदाह

समूहरूपेति ॥ (कै)

गुणभूतैरिति । (कै)

क्रमजन्मनाम् अधिश्रयणादीनां बुद्ध्या प्रकल्पितो यो भेदस्तद्रूपसमूहस्तैरेव गुणभूतैरवयवैः सह क्रियेत्युच्यत इत्यन्वयः ॥ ननु प्रकृतः कटं देवदत्त इत्यादौ कथं भूते क्त इत्यत आह

पेक्षते। अन्यथा संशयापत्तेः। यङ तु द तथेतिवैषम्यात्। धातोरिति किम्। आर्धधातुकत्वं यथा स्यात्। तेन बोवधिरित्यादि सिध्यति। एकाचः किम्। पुनःपुनर्जागर्ति। हलादेः किम्। भृशमीक्षते। यङो ङित्वं बोभूयते मरीमृज्यत इत्यादौ गुणवृद्धिनिषेधार्थम्। न चैवमवयवे

---

बुद्धिगोचरानेकसकलावयवक्रियाविषया हि सा। 'पापच्यत इति'। 'दीर्घोऽकित' इति दीर्घः। 'देदीप्यत इति'। 'गुणो यङ्लुकोः,' यङैव समभिहारस्य द्योतितत्वात् 'क्रियासमभिहारे द्वे भवत' इति वा 'नित्यवीप्सयो'रिति वा द्विर्वचनं न भवति। 'धातोरिति किमिति'। अन्यस्य क्रियासमभिहारे वृत्त्यसम्भवात्प्रश्नः। 'भृशं प्राटतीति'। अत्र धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात्ततो यङ् स्यात् ततश्चोपसर्गस्य द्विर्वचनं स्यात्,

समूहः स इति । (कै)

तथा भूतः उद्भूतावयवः समूहिषु अवयवेषु प्रतिभेदं प्रत्येकम् ॥

अभेद इति । (कै)

बुद्धिकृताभेदेऽपीत्यर्थः ॥

तस्याश्चेति । (कै)

पदव्यवधानेन फलोत्पत्तिसाध्या इत्यर्थः ॥

अनन्तरमिति । (कै)

अव्यवधानेन फलोत्पादिकां प्रधानां क्रियामाह । अन्यासां तु तादर्थ्यात्तदात्मता गौणो व्यवहार इत्यर्थः ॥

---

चरितार्थस्य समुदायं प्रत्यविशेषकत्वात् यङन्तादात्मनेपदं न स्यादिति वाच्यम् । ङिदन्ताद्धातोस्तदिति अनुदात्तङित इति सूत्र एव प्रपञ्चितत्वात् । भृशं शोभते भृशं रोचते इत्यत्रानभिधानाद्यङ् नेति भाष्यम् । कथं तर्हि रुच दीप्तौ शुभ शोभायामिति धातुव्याख्यातारः धातुवृत्तिकारैः रोरुच्यते शोशुभ्यते इत्युदाहृतमिति चेत् ; भाष्ये भृशार्थोपादानात्

---

यदि सोपसर्गसङ्घातस्यैव क्रियासमभिहारे वृत्तिः, प्रपापच्यत इत्यादौ यङ् न प्राप्नोति योऽत्र धातुः स न क्रियासमभिहारे यश्च क्रियासमभिहारे न स धातुरिति, तस्माद्धातुरेव समभिहारविशिष्टक्रियावाची, उपसर्गास्तु सन्निधिमात्रेणोपकारकाः, ततश्च सङ्घातात्प्रत्ययाभावान्नार्थो धातुग्रहणेन, यत्र तर्हि सङ्घातेनैव विशिष्टा क्रियोच्यते प्रतेष्ठीयत इति, अत्र हि केवलस्तिष्ठतिर्गतिनिवृत्तिवचनः प्रपूर्वस्तु सङ्घातेन गतिक्रियैवोच्यते यथा प्रतिष्ठत इति, अत्राप्यनेकार्थत्वाद्धातूनां तिष्ठतिरेव गतौ तन्निवृत्तौ च

## विजातीयेति । (कै)

यथा द्रव्याणां द्रव्यान्तरैरव्यवहितानां समभिहारस्तथा क्रियाणामपि क्रियान्तरैरव्यवहितानामेव स इत्यर्थः ॥

## पुनःपुनर्वेति । (कै)

भाष्ये समूहरूपायाः क्रियायाः कालभेदाद्भेदेऽपि सातत्यात्त्वेव ॥

## पुनःपुनरनुष्ठीयत इति । (भा)

बुद्ध्या पौनः पुन्यमिति तात्पर्यम् ॥

पौनःपुन्ये भवत्येवेत्याशयेनेत्याहुः । शोभत इति शुम्भिकारणस्योदाहरणा-
त्तौदादिकस्य यङ् भवत्येवेति धातुचन्द्रोदये सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां
ग्रहणम् । सूच पैशुन्ये । सूत्र अवमोचने । मूत्र प्रस्रवणे चुरादिण्यन्ताः ।
अट गतौ । ऋ गतौ । अश भोजने अशू व्याप्तौ । द्वयोरपि ग्रहणम् ।
अत्र आद्यानां त्रयाणां अनेकाच्त्वात् ततोऽन्येषां अजादित्वात्, ऊर्णो-

र्वर्तते, उपसर्गस्तु सन्निधिमात्रेणोपकारक इति धातोरुत्पत्तिरविरुद्धा
तस्मादार्धधातुकसंज्ञार्थैव धातुग्रहणं, तेन 'ब्रुवो वचि' रित्यादि भवति
आनुषङ्गिकी त्वधातुनिवृत्तिः अथ कथं यङन्तादात्मनेपदं भवति, कथं
च न स्यात्, ङितो धातोरात्मनेपदमुच्यते, यश्चात्र धातुर्न स ङिन् नह्ययं
समुदायस्यानुबन्धः, यस्तु ङित्प्रत्ययो नासौ धातुः, यत्र चावयवे कृतं लिङ्ग-
मचरितार्थं तत्र समुदायस्य विशेषकं भवति, अयं ङकारस्तु वेभिद्यत
इत्यादौ गुणनिषेधादौ चरितार्थः कश्चिदाह, क्रियासमभिहारे यङि-
त्यकारेण प्रश्लिष्यते स चानुदात्तोऽनुनासिकः प्रतिज्ञायते, तत्रानुदात्तत्व-
मवयवेऽचरितार्थं समुदायस्य विशेषकं भवति, 'अनुदात्तेतश्च हलादेः'

## धातुरेवेति । (कै)

क्रियासमभिहारे इत्यस्य समभिव्याह्रियमाणक्रियावाचकादित्यर्थ इति भावः । क्रियाबोधकादित्यर्थोऽपि संभाव्येतेत्युक्तरम् । सनिति । एवं चार्धधातुकसंज्ञार्थं धातुग्रहणमित्याद्यपि तत्रत्यमत्र बोध्यमिति ध्वनितम् । तत्फलं च सोसूच्यत इत्यादौ णिलोपः ॥

## प्रयायच्यते इति । (कै)

सूत्रं तु केवले धातौ चरितार्थमिति भावः ॥ एकाज्ग्रहणादिग्रहणप्रत्याख्यानादाह

तेस्तु अनेकाच्त्वादहलादित्वाच्चाप्राप्तौ वचनम् । तत्र ऊर्णोतेर्वक्ष्यमाणेन गुणवद्भावेनापि सिद्धम् । सोसूच्यते । सोसूत्र्यते । सूचिसूत्री अदन्तौ चुरादिणिच अतोलोपः । यङि णिलोपः द्वित्वं हलादिः शेषः । अभ्यासस्य गुणः । अभ्यासात्परस्य षत्वं तु न भवति । अनादेशत्वात् । न चेमौ षोपदेशौ । अदन्तत्वेनानेकाच्त्वात् । षोपदेशलक्षणे हि सेकृसृवादिपर्युदासात् तत्सादृश्यं एकाच्त्वं विवक्षितमिति निष्कर्षः । सोसूच्यते

रित्येतच्च न भवति जुचङ्क्रम्यदन्द्रम्येत्यत्र चङ्क्रम्यदन्द्रम्यग्रहणाल्लिङ्गादिति, स वक्तव्यः । अथ कथं ऋतेरीयङन्तादात्मनेपदं भवति, सोऽपि हि ङकारो गुणनिवृत्तौ चरितार्थ इति, स चेद् ब्रूयात्तस्याप्यादित इकार ईकारो वा, अनुदात्तः प्रश्लिष्यत इति प्रतिब्रूयादेनमिकारे नुम्प्रसज्येत ईकारे 'श्वीदितो-निष्ठायामितीण्निषेधः स्यादिति । नैष दोषः । नुम्विधौ 'गोः पादान्त' इत्यतोऽन्तग्रहणमनुवर्तते, तेनान्ते इकार इत्संज्ञको येषां तेषां नुम् । 'श्वीदितो निष्ठायामि' त्यत्राप्येकाच इति वर्तते । सत्यं, प्रतिविहितमायुष्मता मुधा पुनरयं प्रयास, स्तथाहि । अनुदात्तङित इत्यत्र न धातुग्रह-

**यथान्यास इति ॥** (कै)

वचनेन वचनप्रत्याख्याने लाघवाभावादाह

**कार्यान्तरेति ॥** (कै)

इङुपपदस्य फलत्वेन हेतुत्वाभावादाह

**फलस्य चेति ॥** (कै)

**प्रोर्णुत इति ।** (कै)

श्र्युकः किकीति इट् प्रतिषेधः ॥

**इति वेति ।** (कै)

वस्तुतस्तद्वार्त्तिकस्य लोड्विषयत्वेवेति लोड्विधायके वक्ष्यते ॥

---

सोसूच्यत इति भाष्योदाहरणं च्यत्र प्रमाणम् । योपदेशलक्षणो णकाभावं विशेषणं देयमिति वदतो भाष्यस्यायमेवाशयः । सोसूच्यत अटाच्यते । अजादेर्द्वितीयस्येति सूत्रान्तस्य द्वित्वं न न्द्राः संयोगादय इति रेफस्य द्वित्वनिषेधः पकारपरस्य नायं

समस्ति ततः किमिदन्ततो भवति प्रत्ययमेव ङितमाश्रित्यात्मनेपदं सिद्धं भवति, न चैवमपिश्रियद् अवोचदित्यादौ चङ्भ्यामपि प्रसङ्गः, प्रागेव विकरणेभ्यो ऽनुदात्तङित इत्यतत्प्रकरणं प्रवर्तते ऽन्यथा वर्तेत इत्यादौ विकरणव्यवधानान्नियमो न स्यात्, यथा च प्रागेव विकरणेभ्यो नियमः प्रवर्तते प्रवृत्ते तु नियमे विकरणा इति तथा तत्रैव प्रतिपादितमित्यलमि- यता। 'सूचिसूत्रीत्यादि'। सूच्यादिभ्यो यङ् वक्तव्यः, किमर्थं, सूच्यादीनामनेकाजर्थमणादीनामहलाद्यर्थमूर्णोतिस्त्वनेकाजर्थमहलाद्यर्थं च। 'सोसूच्यत इति'। सूच पैशुन्ये, सूत्रावमोचने, सूच प्रसवणे मूत्रादिप्रयुक्ताः,

भवत्येवेति । (कै)

नित्यवीप्सयोरित्यनेन ॥

सामान्येति । (कै)

लोडन्तार्थः सामान्यम् अनुप्रयोगार्थस्य कर्त्राद्यालिङ्गितत्वा-द्विशेषः । अन्यथार्थभेदाभावेन धातुसम्बन्धाभावात् प्रत्ययो दुर्लभः स्यादिति भावः ॥ भाष्ये

लोड् भवति विप्रतिषेधेनेति । (भा)

पुनःपुनर्लवनाभिन्न वर्त्तमानं लवनमित्येवं विवक्षायां धातु-सम्बन्धस्य सत्त्वादुभयप्राप्तिः ॥ ननु विप्रतिषेधाश्रयो लोटा भाव्यं

निषेध इति षष्ठे वृत्तिकारोक्तेः । न चैतदप्रामाणिकम् । प्रकृतसूत्रस्थस्य अपर्यंत इति भाष्यस्यैव तत्र प्रमाणत्वात् । अशाश्यते । ऊर्णोनूयते । ऊर्णुञ् आच्छादने । नोपधोयम् । तस्याष्टमिकं णत्वम् । तस्यासिद्धत्वान्नु-शब्दस्य द्वित्वं पूर्वत्रासिद्धीयमद्विर्वचन इत्यनित्यम् । उभौ साभ्यासस्येति लिङ्गात् । स्यादेतत् । लुनीहिलुनीहीत्येवायं लुनाति । अत्र यङा लोट्-

अत्र णिलोपोऽपि यङ आर्द्धधातुकत्वे प्रयोजनम् । 'अटाट्यते' । अट पट गतौ, 'अजादेर्द्वितीयस्ये' ति ट्यशब्दस्य द्विर्वचनम् । 'अरार्यत इति' । ऋ गतौ 'गुणोर्ऋतिसंयोगाद्योः' 'यङि चे'ति गुणः, '.न्द्राः संयोगादय' इत्यत्र यकारपरस्य प्रतिषेध इति वचनाद्रेफस्य द्विर्वचनम् । 'अशाश्यत इति' । अश्नोतेरशेश्च यङ्यणमित्यागमः । 'प्रोर्णोनूयत इति' । ऊर्णुञ् आच्छादने नोपधोयम्, आष्टमिकं तु णत्वं तस्यासिद्धत्वान्नुशब्दस्य द्विर्वचनम् । ननु 'पूर्वत्रासिद्धीयमद्विर्वचने' । स्यादेतत् । आष्टमिकं तु द्विर्वचनमभिप्रेत्य तदुच्यते यथा चौगऽदित्यत्र ढत्वादीनामसिद्धत्वाद्धत इत्येतद् द्विरुच्यते इति । तत्र, एवं हि षुपिभूतो द्विरुच्यत इति वक्ष्यमाणं व्याहन्येत, एवं

स्वार्थिकत्वाद्ङोत्तरम् एत्वे तेनैव भाव्यमिति किमुच्यते भवति चेतीत्यत आह

भृशार्थेति ॥ (कै)

तत्रैकतरार्थे धातुसम्बन्धे यङं कृत्वा परार्थे धातुसम्बन्धे लोडिति भावः ॥

लोटश्चेति । (कै)

विध्यादिष्वपि लोटो विधानाद् इति भावः ॥

---

बाध्येत । अन्तरङ्गो हि यङ् क्रियासमभिहारमात्रापेक्षत्वात् । लोट् तु बहिरङ्गः क्रियाभेदाश्रये धातुसम्बन्धे भावकर्मकर्तृषु विधानात् । तथा लोट् सावकाशोऽपि क्व? अनेकाचि अनादौ च । जागृहि जागृहीत्येवायं जागर्ति ईहस्वेहस्वेत्येवायमीहते । अत्राहुः । वेत्यनुवर्तते । यदा न यङ् तदा लोट् भविष्यति ।

---

तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इत्येतदनित्यम्, 'उभौ साभ्यासस्ये'ति लिङ्गात्, अन्यथा 'ऽनिति' रिति णत्वे कृते तस्य सिद्धत्वाभिप्रायस्य द्विर्वचने सति सिद्धं स्यात्प्राणिणिषतीति, इह कस्मान्न भवति लुनीहि लुनीहीत्येवायं लुनातीति, भवत्येव. लोलूयत इति लोट् तर्हि न प्राप्नोति यङा बाधितत्वात्, अन्तरङ्गो यङ् क्रियासमभिहारमात्रापेक्षत्वात् लोट् तु बहिरङ्गः क्रियाभेदाश्रये धातुसम्बन्धे भावकर्मकर्तृषु च विधानात्, सावकाशश्च लोट्, कोऽवकाशः, अनेकाजहलादिषु, जागृहि जागृहीत्येवायं जागर्ति, ईहस्वेहस्वेत्येवायमीहत इति, एवं तर्हि वेत्यनुवृत्तेः पक्षे यङ्, यदा न यङ् तदा लोड्भविष्यति । यङोऽकारो ऽटाट्यत इत्यादौ द्विर्वचनार्थः ।

# नित्यं कौटिल्ये गतौ । ३ । १ । २३ ॥

# लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ ॥

उत्तरयोरिति । (भा)

यदस्वरमाद्धातोरेकाच इति सूत्र एवेदं वार्त्तिकमिति लभ्यते । तेनेतः पूर्वं नित्यमित्यादिसूत्रद्वयं लेखकप्रमादात् । तत्राद्यविषयं

---

नित्यं कौटिल्ये गतौ ॥ गतौ वर्तमानाद्धातोः कौटिल्य एव द्योत्ये यङ् स्यात् न तु क्रियासमभिहारे । क्रमु पादविक्षेपे द्रम गतौ । चंक्रम्यते । दन्द्रम्यते । अवधारणार्थान्नित्यग्रहणान्नेह भृशं क्रामति ।

---

"नित्यं कौटिल्ये गतौ" ॥ धातोरिति वर्त्तते गताविति तस्य विशेषणं, गतौ वर्त्तमानाद्धातोरिति, 'कौटिल्य इति' । सन्निधानाद्गतिविषयमेव कौटिल्यं गम्यते । 'चङ्क्रम्यते दन्द्रम्यत इति' । क्रमु पादविक्षेपे, द्रम मीम

---

लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् ॥ एभ्यो यङ् स्यात् धात्वर्थगर्हायां द्योत्यायाम् । लुप्लृ छेदने । षद विशरणादौ । यस्तु आङः सदिः पद्यर्थ इति चौरादिको ण्यन्तः स इह न गृह्यते एकाच

---

"लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" ॥ लुप्लृ छेदने, षद्लृ विशरणगत्यवसादनेषु, आङः सदिः पद्यर्थ इत्यस्य तु चौरादिकणिजन्तस्य एकाच इत्यस्यानुवृत्तेरग्रहणं, चर गत्यर्थः, जप जल्प व्यक्तायां

(लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ । )

नित्यग्रहणानर्थक्यमिति । द्वितीयविषयं क्रियासमभिहारे चेति तथैव भाष्ये उदाहरणादिति सुधियो विभावयन्तु ॥

नासाविति । (कै)

कुटिलं पन्थानं क्रामतीत्यर्थप्रत्ययादित्यर्थः ॥

---

ननु यथा वडवाया वृषे वाच्ये इत्यनेन अपत्ये प्राप्तस्ततोपकृष्य विधीयते । यथा वा भीतः क्तो भूते प्राप्तः ततोपकृष्य वर्तमाने विधीयते । एवमत्रापि धातुमात्रात् क्रियासमभिहारे यङ् विहितो गतिवचनात्तु कौटिल्य इति तक्रकौण्डिन्यन्यायेनैव बाधः सिद्धः । सत्यम् । अत एव नित्यग्रहणं भाष्यवार्तिकयोः प्रत्याख्यातम् ॥ पपस्पार्थम् । मालिन्या

गतौ, नुगतोऽनुनासिकान्तस्य,' योऽन्यायस्य ध्वनि गतागतानि करोति सकुटिलां गतिं सम्पादयन्नेवमुच्यते, नित्यग्रहणमनर्थकमनभिधानादेव वाक्यं न भविष्यति । न हि चङ्क्रम्यत इति कुटिलं क्रामतीति वाक्यं शक्नोति गमयितुं, संशयो हि वाक्याद्भवति, किं गतिकौटिल्यमुत वक्र-

इत्यनुवृत्तेरिति हरदत्तस्तच्चिन्त्यम् । प्रकृतिग्रहणं ण्यधिकस्याप्राप्तेः । अन्यथा लुपादेरपि हेतुमण्ण्यन्तस्य वा गर्हायतया सदेरेवोपन्यासे बाधाभावाच्च । चर गतौ । जप व्यक्तायां वाचि । जभी गात्रविनामे । दह भस्मीकरणे । अत एव दंशीति निपातनात् यङ्लुकि नलोपः दन्दशीति ।

वाचि, जभी जभि गात्रविनामे, दह भस्मीकरणे, दंश दशने, अनुनासिकलोपनिर्देशो यङ्लुक्यप्यनुनासिकलोपार्थो दन्दशीतीति, गृ निगरणे तुदादिः, गृ शब्दे क्र्यादि, तत्राकारान्तविकरणेन साहचर्यादाद्यस्य ग्रहणमित्येके, द्वयोरपीत्यपरे । 'धात्वर्थगर्हायामिति' । भावशब्दो धात्वर्थे वर्तत इति दर्शयति । 'गर्हितमिति' । क्रियाविशेषणं, तेन भावगर्हा

( नित्यं कौटिल्ये गतौ । ३ । १ । २३ । ) (अ. ३ । पा. १ । आ. २ )
( लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् । ३ । १ । २४ । )

## अर्थान्तरे पथि । (कै)

तक्रकौण्डिन्यन्यायेनेति चिन्त्यमिदम् । विशेषविहितेन सामान्यविहितस्य बाध उत्सर्गापवादस्थले इत्यचैवायं दृष्टान्तो मिद्‌चो-

उपश्लोकयतीत्यादौ सापेक्षाद्‌त्यत्त्वर्थे च । धात्वर्थे इत्यविशेषोक्तावपि स्वभावलभ्योऽर्थविशेषो वृत्तिकारादिभिर्निर्दिश्यते । तद्यथा । सत्यमाचष्टे सत्यापयति । सत्यं करोतीति तु भाष्यम् । अर्थवेदसत्यानामापुग्वक्तव्यः ॥ आपुग्वचनसामर्थ्याट्टिलोपो न । अर्थापयति वेदापयति । पुकैव सिद्धे आकारोच्चारणमन्यतो विधानार्थं तेन लिखापयतीत्यादि सिद्धमिति कश्चित् । तन्न । पुगेव करिष्यत इति भाष्यविरोधात् । तस्माल्लिखापयतीत्यपप्रयोग एवेत्याहुः । पादौ प्रक्षालापयतीति शत्रुप्रयोगस्तु

हृदयस्थनिबन्धनं जिह्माचरणमिति, वृत्तौ तु गतिकौटिल्यमेव नियतं, गम्यते कौटिल्यमात्रप्रतिपादने च वाक्यं निवारयितुमशक्यमनिष्टं स्यात आह । 'नित्यग्रहणं विषयनियमार्थमिति' । गतिकौटिल्यं विषयः, तत्रैव यङ् यथा स्यादित्येवमर्थमित्यर्थस्तदाह । 'गतिवचनान्नित्यं कौटिल्य एव

गॄ निगरणे, तुदादिः । गॄ शब्दे क्र्यादिः । तत्र अदन्तविकरणसाह-चर्यात्तुदादेरेव ग्रहणमित्येके । द्वयोरपीत्यन्ये । गर्हितं लुम्पति लोलुप्यते । सासद्यते । चञ्चूर्यते । चरफलोश्चेति नुक् । उत्परस्यातः । ह्रलि चेति दीर्घः । जञ्जप्यते जञ्जभ्यते । दन्दह्यते । दन्दश्यते जपादीनां

गम्यते, गर्हितत्वं तुच्छेदनस्य निषिद्धत्वादिविषयत्वात्, 'लोष्ठमर्दी तृणच्छेदी नखखादी च यो नरः' इति । एवमुत्तरत्रापि यथा सम्भवं गर्हितत्वं भेदेन द्रष्टव्यम् । 'चञ्चूर्यत इति' 'चरफलोश्चे'ति नुक्, 'उत्परस्यातः,' 'हलि चे'ति दीर्घः, जञ्जप्यत इत्यादौ 'जपजभदहदशभञ्जपशां चे'ति नुक् । 'निजेगिल्यत इति' । 'ऋत इद्धातोः,' रपरत्वं, द्विर्वचनम्, अभ्या-

न्यात् (१।१।४७) सूत्रे भाष्ये उक्तो "न हि विशेषानुवादेन सामान्यानुवाद इति बाधे दृष्टान्तो लौकिकोऽस्ति नाप्येतद्विषये नियमेन तत्प्राप्तिरस्ति तस्माद्यकारेण क्रियासमभिहारे चेत्यत्रापि

---

छन्दोवदृषयः कुर्वन्तीति समाधेय इति हरदत्तादयः। पाशं विमुञ्चति विपाशयति रूपं पश्यति रूपयति। वीणयोपगायति उपवीणयति। तूलेनानुकुष्णाति अनुतूलयति इत्यग्रम्। अनुकुष्णाति अनुघट्टयतीत्यर्थ इति हरदत्तः। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभियाति अभिषेणयति उपसर्गात्सुनोतीति षत्वम् अभ्यषेणयत। प्राक्सितादड्व्यवायेऽपीति षत्वम् त्वच संवरणे, पुंसि संज्ञायामिति घः। त्वचं

भवतीति'। व्यवच्छेद्यं दर्शयति 'न तु क्रियासमभिहार इति'। ननु यथा 'वडवाया वृषे वाच्य' इत्यपत्ये प्राप्तस्तोपलक्षण्य विधीयते यथा वा 'जीतः क्तः' भूते प्राप्तस्तोपलक्षण्य वर्तमाने विधीयते, एवमत्रापि धातु-मात्रात्क्रियासमभिहारे यङ्विहितो गतिवचनात् तु कौटिल्य इति,

---

चतुर्णामभ्यासस्य जपजभदहदशभञ्जपशां चेति नुक्। निजेगिल्यते ऋत इद्धातोः रपरत्वं द्विर्वचनम्। अभ्यासस्य गुणः जेगिर य इति स्थिते ग्रो यङीति लत्वम् न च परत्वाद्धलि चेति दीर्घः। तस्यासिद्धत्वात्। लत्वे कृते तु विहतनिमित्तत्वाद्दीर्घः भावेति किम्, साधनगर्हायां

मस्य गुणः, जेगिरय इति स्थिते 'ग्रो यङी'ति लत्वं च प्राप्नोति 'हलि चे'ति दीर्घश्च तत्र दीर्घस्यासिद्धत्वाल्लत्वे कृते विहतनिमित्तत्वाद्दीर्घाभावः अन्ये तु 'न मु ने' इत्यत्र नेति योगविभागेनासिद्धत्वं बाधित्वा दीर्घं कृते लत्वमिच्छन्ति, नात्रास्वाक्यमस्ति। 'गर्हायामिति किमिति' भावस्यैव तद्धर्मविशेषो लभ्यत इति प्रश्नः धर्मविशेषानुपादाने प्रशंसायामपि

(लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्।३।१।२४।)

विशेषाभ्यप्रत्ययादित्यस्य सम्बन्धात् सूत्राज्जपतीत्याद्यर्थविशिष्टस्य यङन्तादप्रत्ययादित्यर्थ इत्याहुः॥

---

गृह्णाति त्वचयति। टिलोपस्य स्थानिवत्त्वादुपधावृद्धिर्न। उक्तादेव धातोः क्विपि हलन्तात्तत्करोतीति णौ त्वाचयतीत्युपधावृद्धिर्भवत्येव। प्रकृत्यैकाजिति टिलोपाभावः तस्मात्सूत्रे त्वचेत्यकारो विवक्षितो न तु सत्यापेतिवदुच्चारणार्थ इत्यवधेयम्। वर्मणा सन्नह्यति संवर्मयति। वर्णं गृह्णाति संवर्णयति चूर्णैरवध्वंसयति अवचूर्णयति। चुरादिभ्यः स्वार्थे। चोरयति। चिन्तयति॥

तत्कौण्डिन्यन्यायेनैव बाधः सिद्धः, यथा वा विवक्षितार्थानभिधानाद्वाक्यं न भवति तथा समभिहारानवगमादत्र प्रत्ययो न भविष्यति, अथैवमपि वचनापेक्षा वाक्यनिवृत्तावपि वचनमपेक्षस्व, तदेतन्नित्यग्रहणं चिन्त्यप्रयोजनम्॥

---

मा भूत्। मन्त्रं जपति वृषलः। अत्र स्वरवर्णादिभ्रंशाभावाद्गर्हा नास्ति। कर्माख्यं साधनं तु गर्हितं शूद्रस्य वेदे अनधिकृतत्वात्। नित्यग्रहणमवधारणार्थमिहानुवर्तते। तस्य व्याख्यानं प्रत्याख्यानं च पूर्ववत्॥

स्यादित्याह। 'साधु जपतीति'। 'जपति वृषलो मन्त्रमिति'। अत्र स्वरवर्णादिभ्रंशाभावाद्भावगर्हा नास्ति वैदिकमन्त्रजपं प्रति शूद्रस्यानधिकारात् साधनभावे गर्हितः, यस्य खल्वीदृशी गतिः शूद्रस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोतप्रतिपूरणम् उच्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति नासौ जपितुमर्हति। 'नित्यग्रहणमित्यादि'। पूर्ववदेतद्व्याख्येयम्।

# सत्यापपाशरूपवीणातूलश्लोकसेना-लोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्। ३। १। २५॥

सर्वत्र सामर्थ्यादेव टिलोपवारणे नानामतोपन्यासो व्यर्थोऽत आह

**आचार्येति॥** (कै)

अग्निधौ पुक्सिद्धये आह

सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्॥ एभ्यो णिच् स्यात्। सत्यादिभ्यश्चूर्णान्तेभ्यः प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे सत्यस्यापुगर्थं वचनम्। अन्यथा प्रपञ्चार्थम्। सान्निध्या उपश्लोकयतीत्यादौ सापेक्षत्वादप्रत्ययं च। धात्वर्थ इत्यविशेषोक्तावपि स्वभावलभ्योऽर्थविशेषो वृत्तिकारादिभिर्निर्दिश्यते। तद्यथा। सत्यमाचष्टे सत्यापयति। सत्यं करोतीति तु भाष्यम्। अर्थवेदसत्यानामापुग्वक्तव्यः॥

“सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्”। सत्यापेत्यकार उच्चारणार्थः। ‘सत्यमाचष्ट इति’॥ ननु भाष्ये सत्यस्य कृञ्यापुक्, सत्यशब्दात्करोत्यर्थे णिज्भवति आपुक्च, सत्यं करोति सत्यापयतीत्युक्तम्, सत्यं, कृञ्ग्रहणमनार्षं प्रदर्शनार्थं वा करोतिर्दृष्टश्च इति मन्यते। ‘आपुग्वक्तव्य इति’। आपुग्वचनसामर्थ्याट्टिलोपो

**तत्रेति।** (कै)

प्रातिपदिकाण्णिजिति भावः। यद्यप्यत्रापि टिलोपप्राप्तिरस्ति तथापि दूषणं तदसद्भावात्तदनुपन्यासोऽनर्थकं स्यादिति॥ न च टिलोपबाधनद्वारा वृद्धिसिद्ध्यर्थमेतद् इति वाच्यम्। अन्यादेशाकारविधानसामर्थ्येनैव टिलोपविधिसिद्धे आगमलिङ्गककारोच्चारणसामर्थ्येन वृद्धेरपि बाधः स्यादित्यभिमानः॥ भाष्ये

आपुग्वचनसामर्थ्याट्टिलोपो न। अर्थापयति वेदापयति। पुकैव सिद्धे आकारोच्चारणमन्यतो विधानार्थं तेन लिखापयतीत्यादिसिद्धमिति कश्चित्। तन्न। पुगेव करिष्यत इति भाष्यविरोधात्। तस्माल्लिखापयतीत्यपप्रयोग एवेत्याहुः। पादौ प्रक्षालापयतीति गृह्यप्रयोगस्तु छन्दोवदृषयः कुर्वन्तीति समाधेय इति हरदत्तादयः। पाशं विमुञ्चति विपाशयति। रूपं पश्यति रूपयति। वीणयोपगायति। उपवीणयति। तूलेनानुकुष्णाति अनुतूलयति तृणाग्रम्। अनुकुष्णाति अनुघट्टयतीत्यर्थ इति हरदत्तः। श्लोकैरुपस्तौति उपश्लोकयति। सेनया अभियाति

न भवति, क्वचित्तु वृत्ताविवायं ग्रन्थः पठ्यते, अथ कथं पुनः शब्दापयेदिति, छन्दोवदृष्यः कुर्वन्ति। एतेन प्रक्षालापयेदिति गृह्यप्रयोगो व्याख्यातः। 'पाशाद्विमोचन इति' प्रायिकोयमर्थनिर्देशः, अन्यत्रापि भवति, अन्यथा विपाशयतीति विशब्दस्य प्रयोगो न स्यात्, विशब्दविशिष्टस्यैव मोचनस्य अर्थत्वात्, यथाचारकचक्यडः प्रयोगो न भवति, एवमुपवीणयतीत्यादावपि द्रष्टव्यं, तूलं तृणाग्रं तेनानुकुष्णाति अनुघट्टयतीत्यर्थः, अनुगृह्णातीति तु पाठे नासमाधानोऽर्थः। 'अभिषेणयनाति'। उपसर्गात्सुनोतीत्यादिना

**एवं तर्ह्यापुगिति ।** (भा)

**न लघ पदे चङि णौ चङीति (७।४।१) ह्रस्वानापत्तिः ॥**

**आपुकि प्राप्नोतीति ।** (कै)

**फलभेद इति चेन्न लुक्यस्यानभिधानात् ॥**

---

अभिषेणयति । उपसर्गात्सुनोतीति षत्वम् । अभ्यषेणयत् । प्राक्सितादड्व्यवायेऽपीति षत्वम् । त्वच संवरणे, पुंसि संज्ञायामिति घः । त्वचं गृह्णाति त्वचयति टिलोपस्य स्थानिवत्त्वादुपधावृद्धिर्न । उणादेव धातोः क्विपि हलन्तात्सत्वमेतीति णौ त्वाचयतीत्युपधावृद्धिर्भवत्येव । प्रकृत्यैकाजिति टिलोपाभावः । तस्मात्सूत्रे त्वचेत्यकारो विवक्षितो न तु सत्यापेतिवदुच्चारणार्थ इत्यवधेयम् । वर्मणा सन्नह्यति संवर्मयति । वर्णं गृह्णाति संवर्णयति । चूर्णैरवध्वंसयति अवचूर्णयति । चुरादिभ्यः स्वार्थे । चोरयति । चिन्तयति ॥

षत्वम् । अकारान्तस्त्वचशब्द इति । त्वच सम्वरणे इत्यस्माद्धातोः पुंसि संज्ञायामिति घः । 'अवध्वंसयतीति' । विकिरतीत्यर्थः । प्रातिपदिकाद्धात्वर्थ इत्येव सिद्धे सत्यस्यापुग्विधानार्थं वचनमन्येषां प्रपञ्चार्थं, मालिन्यो ह्युपश्लोकयन्तीत्यादौ सापेक्षेभ्यो यथा स्यादित्येवमर्थं वा, कथं पुनर्विमोचनादिरर्थोऽनिर्दिष्टो लभ्यत इत्यत आह । 'स्वाभाविकत्वादिति' । 'प्रत्ययार्थो निर्दिश्यत इति' सूत्रकारेणानिर्दिष्टोऽपि प्रत्ययार्थो व्याख्याकारैर्निर्दिश्यत इत्यर्थः ॥

# हेतुमति च । ३ । १ । २६ ॥

हेतुमच्छब्दार्थज्ञाने सन्देहस्योपपादयितुं शक्यत्वादाह

**क्वचिमस्येति** । (कै)

तस्यैव व्याख्यानं क्वचित्पारिभाषिकस्येति तत्प्रयोजको हेतुरित्यस्येत्यर्थः । उत्कृष्टेन निकृष्टे प्रेरणं आद्यम् । विपरीतं द्वितीयम् । प्रयोज्यव्यापारानुकूलमाचरणं तृतीयम् । यथा भिक्षावासयतीत्यादौ ॥

**पाकाद्यपेक्ष इति** । (कै)

तद्विषयत्वात् प्रेरणाया इत्यर्थः ॥

---

हेतुमति च ॥ हेतुः कर्तुः प्रयोजकः तद्व्यापारः प्रवर्तनारूपो हेतुमान् तस्मिन्वाच्ये धातोर्णिच् स्यात् । पाचयति देवदत्तो यज्ञदत्तेन । यज्ञदत्तनिष्ठविक्लित्त्यनुकूलव्यापारविषयिणी प्रवर्तना देवदत्ताश्रयेत्यर्थः । प्रवर्तनानेकधा । प्रेषणमध्येषणं तत्समर्थाचरणं चेति । भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणम् । आज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्तना अध्येषणम् । प्रार्थनेत्यर्थः । तत्समर्थाचरणमपि बहुधा अनुमतिव्यपदेशोनुग्रह इति । तत्र यस्यानुमतिं विना क्रिया न निष्पद्यते सोनुमतिमात्रे प्रयोजकः ;

---

हेतुमति च" ॥ लोके फलसाधनयोग्यः पदार्थो हेतुरित्युच्यते, तस्य ग्रहणे ऽध्ययनेन वसतीत्यत्रापि प्रसज्येत, हेतुमद्ग्रहणं चानर्थकं स्यात्, कथं, करण इति वर्तते तस्य विशेषणं हेतुमतीति, करणं क्रिया सर्वैव च क्रिया हेतुमतीति किं विशेषणोपादानेन, ननु शब्दोपात्ते हेतौ यथा स्यादित्येव-

न तु तदर्थेति । (कै)

तन्निमित्तेत्यर्थः । हेतुरस्यास्तीति विग्रहेण हेतुत्वनिरूपकस्य तत्कार्यपाकादेरेव प्रतीतेस्तत्रैव णिच् स्यादित्याह

पाकादेरेवेति ॥ (कै)

तत्रैवार्थे इति । (कै)

तथान्यप्रयुक्तः पचतीत्यर्थं प्रतिपादनाय णिच् । णिजन्तेन तादृशार्थप्रतीतेरिति भावः ॥ एवमपि हेतुसम्बन्धिकार्यरूपार्थाभिधायिना हेतुमच्छब्देन कथं प्रेरणोच्यतेऽत आह

यथा राजादिः । वैद्यादिस्तु ज्वरितः कषायं पिबेदिति उपदेशमात्रेण प्रवर्तकः । यस्तु केन चिच्छिक्षासितं पलायमानं समाश्लि सोऽपि हन्तृनुराधकत्वात् प्रयोजक एव । तदिह अध्येषणादिगम्या अमी विशेषाः । सर्वानुगतं प्रवर्तनासामान्यं तु णिचोऽर्थः । स च णिचः शक्य इति मुख्यः पक्षः । बोध्य इति पक्षान्तरमप्याकरे स्थितम् । यद्यपि हेतुशब्दस्य ससम्बन्धिकत्वात् हेतुमानित्युक्तेऽयं प्रति प्रयोजकत्वं स एव लभ्यते । यथा पितृमानित्युक्ते पुत्रः । तादृशश्चेह कर्ता कारकाधिकारे हेतुसंज्ञोक्तेः क्रिया च । तथा च पक्तुः पाकस्य वा हेतुमत्त्वं युक्तम् । तथापि कारके इत्यधिकारात् नेह कर्ता गृह्यते । प्रकृत्यर्थेनोक्तत्वाच्च न पाकः ।

---

मर्थमेतत्स्याद्यथा 'समस्तृतीयायुक्तादि'त्यत्र श्रूयमाणायां तृतीयायामात्मनेपदं यथा स्यात्तदर्थयोगमात्रे मा भूदित्येवमर्थं तृतीयायुक्तग्रहणम्, एवं तद्वदत्र विरोधे कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तमिति । 'तत्प्रयोजको हेतुश्चे'ति यस्य संज्ञा विहिता तस्यैव पारिभाषिकस्य ग्रहणमिति मत्वाह । 'हेतुः स्वतन्त्रस्य कर्तुः प्रयोजक इति' । 'तदीय व्यापार

**तस्मादिति** (भा)

स्वः पाकाद्यपेक्षो हेतुव्यपदेशो येन स चासौ हेतुत्वोपलक्षितश्चासौ प्रयोजकस्य तत्वाख्यो व्यापार इति विग्रहः । तत्प्रयोजक इत्यत्रापि कारके इत्यधिकारात् । णिजुत्पत्तेः प्राक् हेतुत्वस्याभावाद्धेतुत्वोपलक्षितेत्युक्तम् । स च व्यापार एव करणे इत्यधिकारादिति भावः । तत्र मतुपः साधुत्वं तु हेतुः कर्त्तास्येत्यर्थेनेति भाष्यकृदेव वक्ष्यति । पक्षद्वयोपपादनपूर्वकं प्रत्ययार्थेनेति वक्ष्यमाणे प्रत्ययार्थविशेषणेत्युक्तेरर्थमाह

**पदेति ॥** (भा)

**प्रत्ययार्थविशेषणम् ।** (भा)

इत्यस्य प्रत्ययार्थपरिच्छेदकमित्यर्थः ॥

किन्तु पाकपक्षापेक्षया यो हेतुस्तदीयव्यापार एव स्वभावतो लोके णिजर्थतया प्रसिद्धो हेतुमच्छब्देनोच्यत इति सिद्धान्तः । एवं च हेतोरित्येव सूत्रं युक्तम् । हेतोः करणे व्यापारे णिजित्यर्थः । तथा तु न कृतमित्येव । इह यद्यपि फलव्यापारयोर्धातुवाच्यत्वाद्विक्लित्त्यनुकूलव्यापारत्वस्य च प्रेषणादावपि सुलभत्वात्तस्यापि पच्यर्थतामाश्रित्य णिचो द्योतकतेति वर्णितं भाष्यादौ तथापि प्रौढिवादमात्रमेतत् । तथाहि । अधिश्रयणादिरेव व्यापारविशेषः पचेरर्थः । न तु ततः प्राचीनोपि क्रयणाद्यवस्थायां

इति' । प्रवर्त्तना, तस्यास्त्ववान्तरभेदमाह । 'प्रेषणाध्येषणादिलक्षणा इति' । भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेषणमाज्ञेत्यर्थः । गुर्वादेराराध्यस्य प्रवर्त्तनाध्येषणं प्रार्थनेत्यर्थः । आदिशब्देन तत्समर्थाचरणं गृह्यते, तच्च बहुधा भिद्यते ऽनुमतिव्यपदेशो ऽनुग्रह इति, तत्र यस्यानुमतिमन्तरेणार्थो न निर्वर्त्तते

प्रकृतिविशेषणेति । (भा)

भाष्ये प्रकृत्यर्थविशेषणमित्यस्य प्रकृतेरर्थद्वाराविशेषणमित्यर्थ इत्यभिमानः । वस्तुतः प्रकृत्यर्थस्य पाकादेर्विशेषणमित्यर्थः ॥ द्योतकद्योत्यार्थस्य विशेषणत्वनियमाद् धातोः शब्दस्य प्रागुक्तहेतुमत्त्वासम्भवाच्च

हेतुमदर्थेति । (भा)

हेतुमदर्थविशेषणकार्याभिधायिन इत्यर्थः ॥ भाष्ये

विषयसप्तम्योऽपीति । (भा)

प्रमाणे इत्यादेस्तद्विषयकबोधजनकं प्रातिपदिकमित्यादिकमेवार्थ इत्याहुः ॥ हेतुमच्छब्दस्य प्रेरणापदत्वात् कारकोपादानमित्यंशगतमत आह

---

पचतीत्यप्रयोगात् । अन्यथातिप्रसङ्गात् । क्वाचित्कप्रयोगस्य भाक्तत्वेनाप्युपपत्तेश्च । पचतिपाचयत्योरर्थवैलक्षण्यस्य अनुभवसिद्धत्वाच्च । अणौ कर्तुर्णौ कर्मत्वमित्यादिश्चवस्याभ्युपगमाच्च । प्रणाययति अभिषावयतीत्यादौ उपसर्गस्य प्रकृत्यर्थगतिविशेषद्योतकत्वे णत्वषत्वे स्तः । णिचा सम्बन्धे तु नेत्यस्मे स्फुटत्वाच्च । अतोऽत्र पक्षे नातीवाभिनिवेष्टव्यम् । स्यादेतत् । प्रवर्त्तनामात्रस्य णिजर्थत्वे णिचो लोडादीनाञ्च पर्यायप्रसङ्गः । ततश्च गच्छतु मां भवानिति वक्तव्ये णिजपि प्रयुज्येतेति चेत् । कर्त्तुः

तस्य राजादेरनुमत्या प्रयोजकत्वं, वैद्यादेस्तु मुस्तापर्पटकं पिबेज्ज्वरित इत्याद्युपदेशेन प्रवर्त्तकत्वं, यः पुनः केनचिज्जिघांसितं पलायमानं निरुणद्धि निरुद्धश्च हन्यते तत्र निरोद्धा हन्तुरनुग्रहं करोतीत्यनुग्रहेण तस्य प्रवर्त्तकत्वं, सर्वत्रायं विशेषः प्रकरणादिगम्यः, सर्वत्रानुगतं प्रवर्त्तनामात्रमेव तु

कारकशब्देनेति ॥ (कै)

अन्वयव्यतिरेकाश्रयेति। (कै)

पञ्चभिर्हलैः कृषतीत्यादौ पञ्चभिर्हलैरित्यस्यानन्वयात् वाचकान्तराभावाच्च धातोर्लक्षणेति भाव. ॥

कर्त्ताभिधीयते इति। (कै)

बाहुलकात्कर्त्तर्यन इति भावः। तनूकरणस्य धात्वर्थत्वं विना तत्कर्त्तरि कथं प्रत्ययः स्यादिति तदर्थाक्षिप्तमिति बोध्यम्। यदि इदं तद्वत् तर्हि प्रकृत्यर्थविशेषणमेव भवतीति भाष्येऽन्वयः॥
"अस्ति"त्यनेन तत्पक्षोपपत्तिः सूचिता तामाह

---

प्रयोजको हि हेतुः प्रैषविषयस्तु नाद्यापि कर्तृत्वेनावधारितः। तथा च प्रयोज्यप्रवृत्त्युपहिता प्रवृत्तिर्णिजर्थः। केवला तु लोडर्थ इति विवेकः। उक्तं च। इच्छामात्रस्य तु प्रैषे पृच्छादेर्लोड् विधियते। सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति। किञ्च प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः। अनियतकर्तृका तु णिजर्थः। पचेति हि वक्तुरेव प्रेरणा गम्यते। पाचयतीत्यत्र तु वक्तृभिन्नस्य। तत्करोतीत्युपसंख्यानम्। सूत्रयत्याद्यर्थं। गणपाठसिद्ध एवायमर्थ उपसंख्यानेनापि प्रदर्शितः। इह करोतीत्यत्र प्रकृत्यर्थमात्रं विवक्षितं न प्रत्ययार्थः। तेन ण्यन्तात् भावकर्मणोः भूतभविष्यतोः द्वित्वबहुत्वयोश्च लः सिध्यति अयं णिच् प्रातिपदिकादेव न

णिजर्थः। ननु यथा पितृमानित्युक्ते यं प्रति पितृत्वं स एव गम्यते तथात्रापि यं प्रति हेतुत्वं स एव हेतुमानिति युक्तं कं च प्रति हेतुत्वं तत्प्रयोजक इति वचनात्कर्त्तारं प्रतीति प्राप्तं कारक इत्यधिकारात्क्रियापेक्षत्वाच्च कारकभावस्य यस्मिन्व्यापारे प्रयोजकरूपेणोपयुज्यते तमेव प्रति,

**विनापीति॥** (कै)

**द्योतको णिज्नास्तीति।** (कै)

हसतीत्यादौ तु पञ्चभिर्हसैरिति एकाक्ष तूष्णीमासीनत्वादिकं च तद्द्योतकमिति भावः॥

**एवमुक्तप्रेषितेति।** (कै)

प्रकृतिविशेषणपक्षे शब्दान्तराभिहितद्योतनायैव णिज्वृत्तिरिति भावः॥

**हेतुमद्विशेषणत्वादिति।** (कै)

प्रयोजकव्यापारविषयत्वादित्यर्थः। हेतुमतीत्यस्य विषयसप्तमीत्वादिति भावः॥

**शब्दान्तरेति।** (कै)

वाचकशब्दान्तरेत्यर्थः॥

न सुबन्तादिति माधवः। युक्तश्चैतत्। सुप इत्यधिकारस्येह विच्छिन्नत्वात्। किञ्च चुरादिषु ह्येवं पठ्यते प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। तत्करोति तदाचष्टे। तेनातिक्रामति। कर्तृकरणाद्धात्वर्थे इति। अस्यार्थः। प्रातिपदिकाद्धातोरर्थविशेषरूपे वाच्ये णिच स्यात्। इष्ठानीव चास्मिन् बहुलं कार्यं स्यादिति। कूलमुद्रुजयति उत्कूलयति। अस्यैव प्रपञ्चः तत्करोतीत्यादिः। एवञ्च प्रातिपदिकादित्युपक्रमादिदं सुबन्तादिविधायकम्।

स च प्रयोज्यव्यापारोऽधिश्रयणादिः सर्वसाधनसाध्यो विक्लित्त्यादिर्वेति तयोरेव हेतुमत्त्वं युक्तं न पुनः प्रयोजकव्यापारस्य, न हि तत्रासौ प्रयोजकरूपेणोपयुज्यते किं तर्हि कर्तृरूपेण यथा काष्ठस्य पाकापेक्षं करणत्वं न तु

## यदा चेति। (कै)

पच्यादिभिः पाकानुकूलत्वेन द्वयोरप्यभिधानमितिमते इदं भाष्यमिति भावः। एवं चोभयोरपि व्यापारयोः समकक्षत्वेन विशेषणविशेष्यभावानापन्नतयोरपि कर्त्रोः प्राधान्यमिति हृदयम्। अत एवाऽत्रपक्षे प्रयोज्यस्य कर्मत्वं नापादितं प्रयोज्यव्यापारस्य विशेषणतयाऽबोधेन तस्य फलत्वाभावेन फलाश्रयत्वाभावात्। गत्यादिसूत्रं चैतत्पक्षे विध्यर्थमेवेति बोध्यम्। परे त्वेवं हि प्रकृत्यर्थविशेषणमिति भाष्याच्चरमकृतिस्तस्मात्प्रवर्त्तना प्रयोज्या पाकः पचेरर्थः। तथान्यानधीनत्वलक्षणार्थं प्राधान्यं प्रयोजकव्यापारस्य शाब्दं च प्रयोज्यव्यापारस्येत्युभयाश्रययोः कर्तृत्वं "स्वतन्त्रः कर्त्ता"त्यत्रोभयविधप्राधान्यस्यापि विनिगमनाविरहेण ग्रहात्। एवं च ण्यन्तोत्तरत्वेन पर्यायेण द्वयोरप्यभिधानापत्तिरिति भाष्याशयः॥

---

तथा च प्रकृतवार्त्तिकमपि तत्समानार्थकत्वात्तथैव तेनातिक्रामतीत्येतत् कर्तृकरणादित्यस्यैव प्रपञ्चः। कर्तृग्रहणाच्च करणस्यैव विशेषणं करणत्वेन लोके प्रसिद्धानां चक्षुरादीनामेव ग्रहणमिति शङ्काव्युदसनाय। अन्यथा चक्षुषा पश्यति चक्षुयतीत्यादावेव स्यान्न तु करिभिरवभाति अवकरयतीत्यादौ। एवञ्च तत्तेनेतिशब्दौ कर्मकरणयोरुपलक्षकौ करणस्य कर्मणश्च समर्पकात्प्रातिपदिकादित्यर्थः। सुबन्तादुत्पत्तौ तु हस्तिनाति-

क्रमणापेक्षं तदपेक्षं तु कर्तृत्वमेव, उच्यते। णिच प्रकृतिभूतेन धातुनैवाभिधीयते सोऽर्थस्तेन फलाभावात्तत्र णिच्च भविष्यति। ननु पचतीत्युक्ते न ज्ञायते किं स्वयमेव पचति उतान्येन प्रवर्त्तित इत्यतोऽन्येन प्रवर्त्तितस्येयं प्रवृत्तिरिति द्योतनाय णिज् भवतु, एवं तर्हि हेतोरिति वक्तव्यं करण

## प्रधानकर्त्तरीति । (भा)

प्रकृतिभूतण्यन्तार्थकर्त्तरीत्यर्थः । प्रयोज्यकर्त्ता तु पच्यर्थस्य न तु ण्यन्तार्थस्येति । ण्यन्तप्रकृतित्वेन तदभिधानमिति भावः ॥

## प्रधानकर्त्ता । (भा)

स्वप्रकृत्यर्थप्रधानव्यापाराश्रयरूपः कर्त्तेत्यर्थः ॥

## अप्रधानमिति । (कै)

णिच्प्रकृत्यर्थप्रधानव्यापाराश्रय इत्यर्थः ॥

## अव्यतिरिक्त इति । (कै)

प्रयोजकव्यापारवाचकातिरिक्तवाच्य इत्यर्थः । णिचस्तदर्थकत्वे तु प्रयोजककर्त्ता न गत्यर्थकर्त्ता किं तु ण्यन्तकर्त्तेति न दोष इत्याहुः ॥ ननु प्रत्ययार्थविशेषणपक्षेऽपि कथमचात्मनेपदं चि साध्यप्रयोज्यव्यापारस्यैव व्यतिहारो न तु णिज्वाच्यप्रयोजकव्यापारस्य अोऽत आह

नामति अतिहस्त्यतीत्यादौ णौ सुपो लोपे टिलोपे च कृते अन्तर्वर्ति-विभक्त्या पदत्वाज्जश्त्वं स्यात् । न च टिलोपस्य स्थानिवत्त्वम् । पूर्वत्रा-सिद्धत्वात् । हरदत्तस्तु सुबन्तात्सिद्धमभिप्रैति । यदाह तदिति द्वितीयान्तोपलक्षणमिति । न चास्मिन्पक्षे पदकार्यप्रसङ्गः । इष्ठवदित्य-तिदिष्टया भसंज्ञया पदत्वस्य बाधात् । अत एव हि पटिष्ठ इत्यादौ

इत्येव, हेतोः कर्तुः व्यापारेऽभिधेये णिच् भवतीत्यर्थः । तथा तु न कृतं, का गतिरिदानीं सूत्रस्य, अभिधानस्वाभाव्यमत्र हेतुः, स्वभावतो हि णिच् प्रत्ययः प्रयोजकव्यापारमाचष्टे तेन पाकाद्यपेक्षया यो कर्त्राहेतुव्यपदेशः

प्रयोजकव्यापारस्य व्यतिहार इति ॥ (कै)

तद्व्यापारेणेप्सिततमत्वादिति । (कै)

तद्व्यापारप्रयोज्यव्यापारफलाश्रयत्वादित्यर्थः ॥ भाष्ये

तस्य प्रयोजकस्य । (भा)

तस्मिन्प्रयोज्ये। एतेन स्वव्यापारे स्वातन्त्र्यात्परत्वेनान्तरङ्गत्वेन च कर्तृत्वमेवेत्यपास्तम्। अन्तरङ्गादपि प्रधानकार्यस्य लोके बलवत्त्वाया दर्शनादिति भावः ॥

एकधातुवाच्यत्वादिति । (कै)

एकप्रकृतिकधातुवाच्यत्वादित्यर्थः ॥ ननु प्रयोज्यस्य स्वार्थव्यापारापेक्षया कर्मत्वेऽपि ग्रामादेर्गम्यर्थनिरूपितमेव कर्मत्वमत आह

---

सुबन्तादिष्टनि अप्रत्वादिपदकार्यप्रवृत्तिः, किञ्च स्रग्विणमाचष्टे स्रजयतीत्यादौ माधवमतेनैव गतिः। सुबन्तादुत्पन्नयोर्विन्मतोर्लुकि तत्प्रकृतेः सुबन्तत्वात्प्रत्ययलक्षणेन पदकार्यप्रसङ्गस्य स्पष्टत्वात्। तदिह मतभेदेन प्रातिपदिकात्सुबन्ताद्वा णिजिति स्थितम्। आद्यपक्षेऽपि यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टग्रहणाद् ङ्याबन्तादपि भवति। अत एव गार्गिस्थविदित्यत्र भाष्ये इष्ठवदित्यतिदेशस्य पुंवद्भावटिलोपयणादिलोपविन्मतोर्लुगर्थमिति पुंवद्भावोऽपि प्रयोजनतयोक्तः। इदञ्च दिङ्मात्रं न

---

स हेतुत्वेनोपलक्षितो यस्यास्तीत्येवं प्रयोजकव्यापार एव मतुपोच्यते, अत्र द्वौ पक्षौ सम्भवतः, हेतुमतीति प्रकृत्यर्थनिर्देशो हेतुमति यो धातुर्वर्तत इति, प्रत्ययार्थो वा, हेतुमति कारणे ऽभिधेये णिज् भवतीति। ननु पचति पाचयतीति च शब्दमर्थान्तरं गम्यते तत्प्रत्ययस्य प्रकृत्यर्थत्वं प्रख्यायते।

ण्यर्थस्यैवेति ॥ (कै)

प्राधान्याद् (कै)

इत्यादि उत्तरदेशसंयोगे ण्यर्थव्यापारजन्यतायापि सत्त्वादिति भावः ॥ प्रतियत्नवाचिकरोत्यपेक्षया सुट्षष्ठ्योर्विधानविशिष्टे षष्ठ्यप्राप्तिरेव कथमुक्तेत्यत आह

सुट्त्विति । (कै)

कर्मणिविधानादर्थमापेक्षा षष्ठी "उपात् प्रतियत्ने" इति सुट् धातुस्वरूपापेक्ष इति भावः ॥

तस्याप्राधान्यादिति । (कै)

कृत्प्रकृत्यर्थकर्त्रादौ हि तत्र षष्ठी कृत्प्रकृतिस्थ व्यक्ता । एवं च तदर्थकर्त्र्यैव स्यात् न तु णिच्प्रकृत्यर्थकर्त्तरि । अप्राधान्यं च कृत्प्रकृत्यर्थकर्त्तृत्वमेवेति बोध्यम् ॥ नियमत्वे उपपत्तिमाह

तु परिगणनमिति यत्तु एवाकारे स्पष्टम् । उदाहरणानि तु प्रपञ्चयामः । एनीमाचष्टे एतयति । हरिणीमाचष्टे हरितयति । न चात्र पुंवद्भावस्य इष्ठनि विशिष्याविधानात्कथमतिदेश इति वाच्यम् । विशेषातिदेशे सामान्यस्याप्यतिदेशात् । तमिष्ठवदत्र वर्त्तितव्यमित्युक्ते हि श्राद्धगतं सामान्यनिबन्धनमप्यतिदिश्यत एव । तथेह भसंज्ञानिमित्ततद्धितस्वप्रयुक्तः पुंवद्भावोऽपीत्यदोषः । नन्वेतयतीत्यादौ टिलोपेन ङीपि निवृत्ते

---

उच्यते । इह हि कः पचेः प्रधानार्थो यासौ तण्डुलानां विक्लित्तिः, अधिश्रयणादीनां तु तादर्थ्यात्तदवच्छेदेन पच्यर्थता, यो हि पानार्थमुदकमाहरति विज्ञायते च काष्ठान्याहरतीति प्रीतं पाययन्तुमर्धं सम्मिश्रे नासौ पच-

**ण्यर्थस्येति ॥** (कै)

**परत्वादिति ।** (कै)

अन्तरङ्गत्वादुपजीव्यत्वाच्चेत्यपि बोध्यम् ॥

**प्रधानेति ।** (कै)

सर्वापेक्षया प्रधानकार्यस्य बलवत्त्वात् । न चोद्देश्यतालक्षणमात्रं प्राधान्यं प्रयोज्यव्यापारस्यापि अन्यानधीनत्वलक्षणार्थप्राधान्यस्य प्रयोजकव्यापारेऽपि सत्त्वात् । शब्दशास्त्रे शाब्दप्राधान्यस्यैव मुख्यत्वाच्चेति भावः ॥

**गुणेति ।** (कै)

प्रेषणे कर्मतां प्राप्तोऽपि पदार्थः कर्मसंज्ञाया अनियमादप्राप्त्या गुणक्रियायां स्वातन्त्र्याच्च स्वधर्मेण कर्तृत्वेनाभिधीयत इत्यर्थः ॥

तत्सन्नियोगशिष्टत्वान्नकारोऽपि निवर्त्यताम् । तथा च टिलोपेनैव गतार्थत्वे किमर्थं पुंवद्भावोऽपि पृथक् प्रयोजनतया भाष्ये गणित इति चेत् । अत्र कैयटः । सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनायेदं तेन एनेयः श्यैनेय इत्यत्र वस्येति लोपे कृतेऽपि नकारो न निवर्तते इत्याह । हरदत्तस्तु फलान्तरमपि मतान्तरत्वेनाह । इडविडमाचष्टे ऐडविडयति । दरदं दारदयति । इडविडशब्दो जनपदस्य क्षत्रियजातेश्च वाचकः ।

नीयुच्यते, तत्रास्य हेतोः, विक्लित्तिं प्रति तादर्थ्याभावात् तदवच्छेदाभावाच्च, अतस्तादर्थ्यादेवाधिश्रयणादीनां पच्यर्थता, तद्वत्प्रयोजकव्यापारोऽपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यति, णिच् प्रत्ययस्तु द्योतकस्तथा च योऽप्येकान्ते तूष्णीमासीनो भक्तबीजबलीवर्दैः प्रतिविधत्ते स उच्यते पच-

स्वातन्त्र्येणेति (कै)

पाटेऽपिकर्तृत्वेनेत्येवार्थः ॥

ग्रामः प्रकृत्यर्थस्येति । (कै)

गमेः सकर्मकत्वेनावश्यकर्मापेक्षत्वात् । ण्यर्थस्य कर्माकाङ्क्षायाः प्रयोज्यकर्मणाशान्तत्वाच्चेति भावः ॥

साधनविशिष्टां क्रियामसौ प्रेष्यते । (भा)

इत्यत्र कथं द्विकर्मकत्वं कणं च प्रयोज्ये कर्मणि लकार इत्यत आह

प्राप्नोतीति । (कै)

तथा च प्र पूर्व इषिः प्राप्त्यर्थः । तस्माण्ण्यन्तात्कर्मणि प्रत्यये प्रेष्यत इतीति भावः ॥

तस्माज्जनपदशब्दात् क्षत्रियादञ्, दरच्छब्दात् तद्राजमनपत्यम् । जनपदो-त्तद्राजसंज्ञा तेतद्राजा इति सूत्रेण, अञादीनामापादपरिसमाप्तेस्तद्वि-धानात् । अतश्चेतिलुक् । अकाररूपस्य तद्राजप्रत्ययस्य स्त्रियां लुगिति हि सूत्रार्थः । ततश्च इडविद् दरत् स्त्री । ऐडविडो दारदश्च पुमान् । पुंवद्वचनेन च स्त्रीशब्दस्य पुंशब्दे ऽतिदिष्टे सिद्धमिष्टम् । न चैवं गोत्रत्वेन जातित्वाज्जातेश्चेति पुंवद्भावनिषेधः प्रसङ्ग्यः । चोपसंख्यानिकस्य नाय

भिर्हन्तेः हनतीति, तदेवं पक्षद्वयसम्भवे यद्याद्यः पक्ष आश्रीयते ततो यथा प्रकृत्यभिहिते णिज् भवति एवमुक्तप्रेषितादिशब्दाभिहितेपि स्याद् उक्तः करोति प्रेषितः करोतीति, हेतुमद्विषयत्वात्करोत्यर्थस्य, प्रत्ययार्थ-पक्षे तूक्तार्थत्वाण्णिजभावः । नैष दोषः । प्रयोक्तव्यापारस्य द्योतनाय

प्राप्नोतीत्यर्थ इति (कै)

पाठे प्रेष्यति पदस्य श्लोकस्येदमर्थकथनं न तु भाष्ये तथापाठ इति भ्रमितव्यम ॥ भूतपूर्वत्वस्यानुपपत्तेराह

प्रधानचरेऽपीति । (कै)

तत्प्रकृतिघटकधात्वर्थकर्त्तर्यपीत्यर्थः । तत् सूत्रस्थतद्ग्रहणसामा-र्थ्येनैतदर्थकमपीति भाव ॥

अपित्विति । (कै)

एवं चाभेर्न कदाचिदपि व्यर्थविशेषणतेति भावः ॥ भाष्यमम्मा-तेन कैयटोक्तेन प्रयोज्यव्यापारस्यैवेत्येवकारेण तु तदभिमुख्यद्यो-तकत्वाभाव एवाभेर्लभ्यत इति बोध्यः । यद्यपि पूर्वं प्रमाणे द्वयस्य शेषे समूत इति सप्तमीनिर्देशस्तथापि दर्शनादिचार उपपा-दितस्तथापि अन्वयव्यतिरेकाभ्यामिदानीं विचार आक्षिप्यत इत्याह

---

निषेध इति वक्ष्यमाणत्वात् । न चैवमप्यणादौ गुणवचनादेवेत्युक्तेरिष्ठन् श्रवाभ्यामसम्भवेन कथं तद्वदित्यतिदेश इति वाच्यम् । नहीष्ठनि दृष्टस्ये-वातिदेशः किन्तु सम्भावितस्य । अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात् । नन्वस्मिन्पक्षे गेनेयः ग्लनेय इति कथं सिद्धेदिति चेत् । अत्र माधवः । अनन्यथासिद्धमपि गेडविडयतीत्याद्युदाहृत्य एतयति श्येतयती-त्यदाहरन् भाष्यकारः सन्नियोगशिष्टपरिभाषाया अनित्यत्वं ज्ञापयती-

---

श्चिच्चिधीयते तस्य स्वशब्देन द्योतितत्वाद्योत्याभावान्न भविष्यति । इह तर्हि पाचयत्योदनं देवदत्तो यज्ञदत्तेन, द्वयोः कर्त्रोर्लिङाभिधानं प्राप्नोति धातुवाच्यव्यापारे हि कर्तरि लो भवति पचिना च प्रयोजकव्यापारो

**अन्वयेति ॥** (कै)

भाष्ये

**व्यक्तमर्थान्तरङ्गम्यत इति ।** (भा)

अन्वयान्वयाभ्यां परस्मादिति शेषः ॥ विक्लितेः प्रधानार्थत्वे युक्तिमाह

**तदर्थत्वादिति ।** (कै)

विक्लितिपदपदं फलाव्यवहितपूर्ववर्त्तिव्यापारोपलक्षणम् । स्पष्टं चेदम् उपपदं स्वयं वक्ष्यति तद्ध्वनयन्नाह

**तदनन्तरञ्चेति ॥** (भा)

**तथा प्रेषणादिरपीति ।** (भा)

विक्लित्यनुकूलत्वेनेत्यर्थः । वस्तुतः प्रवर्त्तनाप्रयोज्येत्येवं तस्य विशेषणतान्याय्यः ॥

---

त्याह । वस्तुतस्तु पुंवद्भावस्यैकान्तटिलोपस्याभाषितपुंस्केषु च चारितार्थ्येऽपि एतयतीत्यादावन्तरङ्गत्वेन पुंवद्भाव एव प्राप्यः सिद्धस्य प्रत्ययविधाविव्युक्तत्वेन प्रत्ययोत्पत्तेः पूर्वमेव प्रवृत्तत्वात् । अत एव नकाररहितप्रयोगसिद्धिः । न चात्र टिलोपेऽपि सन्नियोगशिष्टन्यायेन नकारनिवृत्तिः सुलभेति वाच्यम् । उक्तन्यायेन नकारनिवृत्तौ कर्त्तव्यायामचःपरस्मिन्निति स्थानिवद्भावस्य दुर्वारत्वात् । अत एव पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्र इत्यादौ स्थानिवद्भावेनानुगादिश्रवणे प्राप्ते स्थानिवद्भावनिषेधार्थं क्विलु-

ऽप्यभिधीयते प्रत्ययस्तु द्योतक इति धातुवाच्यव्यापारत्वस्याभात् कर्त्रोरपि साम्यमिति द्वयोरप्यभिधानं प्राप्नोति पाचयतो देवदत्तयज्ञदत्ताविति, प्रत्ययार्थपक्षे तु प्रकृत्यर्थोपसर्जनस्य व्यर्थस्य प्राधान्यात्तस्यैव कर्त्तरि

सम्भावनेति । (कै)

उपसम्वादाशङ्कयोश्चेति सूत्रभाष्यपठितेनोपसम्वादाशङ्कयोर्लि-ङित्यनेन तत्राशङ्कोत्प्रेक्षासम्भावनाप्युत्कटकोटिकाशङ्कवेति बोध्यम् ॥

भाष्ये

तदभिसन्धिपूर्वकम् (भा)

इत्यस्य तद्विशेषणभूतमिति शेषः ॥

अपरिहारादिति (कै)

युक्तं तथापि स्वपक्षो दुष्ट इति शेषः । दोषाणामुक्तत्वादिति भाष्यार्थ इति भावः ॥

अथवेति । (कै)

अथ पक्षे सर्वं पद्यार्थः स्यादिति आविष्कर्त्तुमेवेति भाष्यार्थ इति भावः ॥

---

गुपधेति वार्त्तिके लग्यहणमिति भाष्यवार्त्तिकादौ स्पष्टम् । अत एवा-च्यासेकारसहितमेतदिति रूपं सिद्धम् । टिलोपे तु प्रक्रियादशायां परिनिष्ठिते रूपे वा ऽत्वर्णोपरत्वाभावेन स्थानिवद्भावानतिप्रसत्तावुक्तरूपा-सिद्धिः । न चाल्लोपस्यापि स्थानिवद्भावः । तस्य ङीनिमित्तत्वेपि णिज-निमित्तत्वादिति ध्येयम् । एष्माचष्टे प्रथयति । चङि वृद्धेः पूर्वं टिलोप इति पक्षे अग्लोपित्वात्सन्वल्लघुनीत्यस्याप्रवृत्तेः अपप्रथत् । परत्वाद्वृद्धौ

---

अकारः, इह च गमितो ग्रामं देवदत्तो यज्ञदत्तेनेति प्रयोजकव्यापार-स्यापि गमिवाच्यत्वादव्यतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थानां कर्त्तरि क्तः प्राप्नोति प्रयोज्यस्य तु कर्मत्वात्तत्रैवेष्यते, उक्तं हि 'ण्यन्ते कर्त्तुश्च कर्मणः'

## प्रयोज्यव्यापारेति । (कै)

प्रयोज्यव्यापार उपसर्जनं यस्येति विग्रहः । लोके प्रयोज्यप्रयोजकयोर्गुणप्रधानभावावगतेस्तद्व्यापारयोरपि तत्त्वमेवोचितम् ॥ ननु फलानुकूलत्वेन समकक्षतया बोध उचितः । एवं वाचकतापक्ष इव द्योतकतापक्षेऽपि द्वयोर्व्यापारयोर्गुणप्रधानभावेनैवोपस्थितेः प्रधानकर्त्तुरेव तेनाभिधानमिति । अप्रधाने कर्त्तरि तृतीयादि भवति । परे तु द्योतकत्वान्नास्य विशेषणतैवोचितेति भाष्योक्तदोषानुद्धारः । अत एवास्य पक्षस्य भाष्ये प्रत्यर्थविशेषणशब्देनोल्लेखः । किं च ण्यन्तात्प्रत्ययस्तत्प्रकृत्यर्थकर्त्तरि सामर्थ्यादित्यवश्यं वाच्यमेतत्पक्षे । एवं च प्रयोज्ये कर्त्तरि तृतीयेव लकारोऽपि दुर्वारः । दुहादीनामप्रधाने कर्मण्यपि लादिस्वीकारेण लादिविधौ कर्तृकर्मणोः प्रधानाप्रधानन्यायाप्रवृत्तेरुचितत्वाच्च । वाचकत्वे तु न दोषः । प्रयोज्यस्य ण्यन्तप्रकृत्यर्थकर्तृत्वेऽपि ण्यन्तकर्त्तरि ण्यन्तात्प्रत्ययानुत्पत्तेः । एवमन्ययोरपि दूषणत्वमेवेत्याहुः ।

---

आवादेशात्पूर्वं टिलोपे अनग्लोपित्वादपिप्रथत् । पक्षद्वयमपीदं मुग्ध-मिश्रेति सूत्रे प्रपञ्चितम् । एवं म्रदुमाचष्टे म्रदयति । अमम्रदत् । अमिम्रदत् । भ्रशयति क्रशयति द्रढयति एषां चङि सर्वथाप्यग्लोपित्वात् । अबभ्रशत् । अचक्रशत् । अदद्रढत् इत्येकमेव रूपम् । परिव्रढयति । अत्रोपसर्गस्य पृथक्करणात्पर्यवव्रढयत् पर्यवव्रढत् । पृथुं मृदुं भृशं चैव कृशं

---

इति । इह च व्यतिच्छेदयन्ते व्यतिभेदयन्ते ऽव्यतिरिक्तो हिंसार्थ इति कृत्वा प्रयोजकव्यापारव्यतिहारविवक्षायामपि 'न गतिहिंसार्थेभ्यः' इति प्रतिषेधः प्राप्नोति, तदेवमाद्ये पक्षे दोषदर्शनाद् द्वितीयं पक्षमाश्रित्याह ।

**णिचेति ।** (भा)

प्राधान्येनोत्तरदेशसंयोगानुकूलव्यापारार्थक एव गत्यर्थ इति भावः ॥

**अर्थग्रहणसामर्थ्यादिति बोध्यमिति ।** (कै)

सोऽपि प्रागुक्तयुक्त्यैव प्रधानभूतप्राणवियोगानुकूलव्यापारार्थक एवेति भावः ॥

**प्रयोजक इति ।** (कै)

तथाच पारिभाषिकस्यैव हेतोर्ग्रहणमिति भावः । वस्तुतस्तु कोमलार्थं इत्यस्य क्रियाकारकादिरूपप्रयोजकव्यापार इत्यर्थः । कृत्रिमाकृत्रिम न्यायेन हेतुसंज्ञाविधानसामर्थ्येन च तस्यैव ग्रहणं भविष्यतीति तत्प्रश्नानौचित्यात् ।

**हेतुः कर्तास्येति ।** (कै)

प्रयोजकव्यापार एवेत्युत्तरम् ॥ प्रयोजकस्य पारिभाषिकहेतुत्वेऽपि लक्ष्यानुरोधेनाच भाष्ये

---

च वृंठमेव च । परिपूर्वं हठश्चैव महेतान् रविधौ स्मरेत् ॥ कविं पटुं वा आचष्टे कवयति पटयति । अचकवत् । अचीकवत् । अपपठत् । अपीपठत् । कुमारीमाख्यत् । अचुकुमारत् । अत्र एकमेव रूपम् । सन्वल्लघुनीति दीर्घोलघोरिति च सूत्रे चङ्परे णौ परे यथा अव्यवहितं यल्लघु तस्मिन्परे योभ्यासः तस्येति कैयटादिसम्मते सूत्रार्थे यदत्राभ्यासात्परं लघु न

---

'तस्मिन्नभिधेय इति' । किं चान्वयव्यतिरेकाभ्यां शब्दार्थावसायः, न च पचति पठति गच्छतीत्यादावन्तरेण णिचं कश्चिदपि प्रयोजकव्यापारो

**हेतुनिर्देशश्चेति ।** (भा)

पारिभाषिकेऽपि लक्ष्यसिद्धिमाह

**नावश्यमिति ॥** (भा)

तदाशयमाह

**तत्समर्थेति ॥** (कै)

भाष्ये

**ब्रवीति ।** (भा)

अनेन तादृशशब्दप्रयोग एव मुख्याप्रवर्त्तनेति सूच्यते ॥ ननु प्रश्नक्रियाकर्त्तृतया कस्यचित्सिद्ध्यभावात् प्रयोज्यस्याभावे प्रयोजकस्याप्यभावात् कथं णिच्शङ्का तत्राह

**प्रश्नेति ।** (कै)

भावीति शेषः ॥ समानार्थत्वाद्युगपत्प्रयोगे णिचोरप्रसक्तेराह

---

तत्रापि परत्वात्परमिति दीर्घत्वस्याप्रसङ्गात् । लघुपरे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्येति हरदत्तादिपक्षेऽपि कुमारीशब्दस्य पुंवद्भावेन ह्रस्वभावप्यल्लोपित्वात् । नदीमाख्यत् अननददित्यादि । ननु कैयटमते येननाव्यवधानमितिन्यायेन एकव्यञ्जनव्यवहिते अजीहरदित्यादौ सन्वद्भावोऽस्तु नाम । अचिकीर्षदित्यादौ तु कथमिति चेत् । अमस्मरदित्यादावित्वाभावार्थमत्स्मृदृत्वरेति अत्वविधानेन संयोगव्यवधानेऽपि भवतीति

---

ऽवसीयते, उत्पन्ने तु णिचि प्रतीयते ऽतत्तदर्थत्वमेव युक्तं, पञ्चभिर्वैः ज्ञायतेत्यत्र त्वनेकार्थत्वाद्धातूनां ज्ञपिरेव प्रतिविधानेऽपि वर्तत इतियुक्तं न पुनस्तदर्शनेन सर्वत्र प्रकृत्यर्थत्वं, नन्वथापि पक्षे पाचयत्योदनं देवदत्तो

पृथक् विषयत्वादिति । (कै)

वस्तुतस्तु लोडन्ते प्रयुज्यमानलोडन्तशब्द एव प्रयोजकव्यापारः तस्य सत्त्वाच्चिन् स्यादिति प्रश्नाशयः। पर्यायस्य प्रश्नविषयत्वे लोटोक्तत्वात् प्रेषणस्य णिज्भविष्यतीत्युत्तरभाष्यासङ्गतिः । न हि पर्याये लोटोक्तत्वमस्ति पर्यायो नाम कदाचिल्लोडेव कदाचिण्णिजेवेत्याकारः । तत्तूक्तः करोतीत्यचोक्तन्यायेनाचापि णिचो ऽप्राप्त्या भवदुक्तव्याख्याने भाष्यासङ्गतिरिति चेन्न लोडन्तशब्दप्रयोगरूपप्रयोजकव्यापारस्य लोड्वाच्यत्वमित्यभिमानेन शङ्कासत्त्वात् । लोटोक्तत्वादित्युत्तरस्य चायमाशयः। सम्प्रेरणात्वेन लोड् वाच्य एवेति । एतच्च विधिनिमन्त्रणेति सूत्रे उपपादयिष्यते। मतुपायां च निपुणतरमुपपादितम् ॥

न कर्त्तेति । (कै)

तत्र प्रश्नक्रियाया अभावादिति भावः ॥

चापनात्। ऊढमाख्यत् औजढत्। ऊढिमाख्यत् औजिढत्। कर्तारमाचष्टे करयति। भर्तारं भरयति। दोग्धारन्दोहयति। तुश्छन्दसीति तृशब्दलोपोपि णावतिदिश्यतइत्येके। अन्येतु छन्दस्युपदिष्टोसौ णावपि छंदस्येवातिदिश्यतां नाम भाषायान्तु कथं भवेत् । तस्माट्टिलोपे कर्त्तयतीत्याद्येव रूपमित्याहुः। त्वां मां वा आचष्टे त्वापयति। मापयति।

यद्यदत्तेनेत्यत्र ण्यर्थस्य प्राधान्यात्तेन व्याप्यमानस्य प्रयोज्यस्य कर्मसंज्ञा प्राप्नोति, गतिबुद्धिप्रत्यवसानार्थेति नियमान्न भविष्यति, इह तर्हि ग्रामं गमयति ग्रामाय गमयतीति चतिरिक्तो गत्यर्थ इति कृत्वा गत्यर्थकर्म-

**कुतस्तद्विशेष इति।** (कै)

**तूष्णीमास्त इति** (भा)

भाष्यं कैमुतिकन्यायोपलक्षणं बोध्यम् ॥

**आधीयमानम्।** (कै)

विधीयमानमित्यर्थः। एतेन लोटा कर्त्तृत्वस्याभिधानात्कथमकर्त्तृत्वमित्यपास्तम् ॥ तदुपपादयति

**यस्तु प्रवृत्तेति।** (कै)

अस्य विध्यर्थकलोडादिप्रयोगं विनापीत्यादि ॥ प्रवृत्तक्रियोऽपि ग्रेष्याय प्रेर्यत एव भाष्ये

**अभिसम्बन्ध इति।** (भा)

बुद्धिकृतोऽभिसम्बन्ध इत्यर्थः ॥ भाष्ये

**न चासौ प्रक्ष्यतीति।** (भा)

लोडन्तप्रयोगकृतप्रेरणां विनेत्यर्थः।

इह प्रत्ययोत्तरपदयोश्चेति एकार्थयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमौ। अतोगुणइति पररूपात्पूर्वं नित्यत्वाट्टिलोपे वृद्धौ युगित्येकं मतम्। वस्तुतस्तु परादप्यन्तरङ्गस्य बलीयस्त्वात्पररूपत्वे प्रकृत्यैकाजिति टिलोपाभावादुपधावृद्धौ त्वादयति मादयतीत्येव रूपमिति बहवः। प्रकृत्यैकाजित्येतत्सूत्रव्याख्यानभाष्यन्तदाहरणविशेषे ऽन्यथासिद्धिरित्येतावन्मात्रपरम्। तद्य-

---

यतीति द्वितीयाचतुर्थ्यौ न प्राप्नुतः, नैष दोषः। ग्रामोऽत्र गमेरेव कर्म ग्रामकर्मकं गमनं कुर्विति प्रैषार्थः, इह तर्हि एधो दकस्योपस्कारयतीति अतिरिक्तः करोत्यर्थ इति 'कृत्वः प्रतियत्न' इति षष्ठी न प्राप्नोति, षट् तु

बुद्धीति । (कै)

बुद्ध्या विषयीकृतस्यैव सर्वत्र बोधात् । प्रकृते च क्रियाया इव कर्तृत्वस्यापि तथाभूतस्यैव विधानमिति भावः ॥

आधीयमानत्वादिति । (कै)

विधेयत्वादित्यर्थः । द्रव्यमात्रस्य कर्तृत्वरहितस्य प्रयोगः प्रैषः ॥

दुर्बलेति । (कै)

ईदृशकर्तुरपि यदि हेतु संज्ञासूत्रे ग्रहणमिति भावः ॥

पाक्षिकत्वात् । (कै)

पर्यायेणाजायमानत्वात् । एतद्भाष्यनिष्कर्षः प्रागेवोक्तः । कैयटोक्तव्याख्याने हि लोडिविशिष्टे तद्धारणेऽपि तद्दकरीत्याग्रहिततात्पर्यविषयस्य पर्यायस्यावारणाच्चिन्त्यमिदम् ॥ नन्वेवं णिच्लोटोः समावेशाभावे भासयेत्याद्यनुपपत्तिरत आह भाष्ये

था । वृत्तिकारोदाहृतेषु मध्ये प्रेक्षादय आभात्स्त्रेण सिद्धाः । तथ्यागेऽपि ओष्ठ्यदकारोच्चारणसामर्थ्यात् । इष्टेभ्यः स्वनेकाचोऽप्यवशिष्टस्य नेष्यते । टिलोपो भाष्यकारेण प्रवृत्ते विन्मतोर्लुकि लुकोपवादभूतस्य तस्मिन्पक्षे प्रवर्तनात् । कनिष्ठादाविदं तुल्यं टिलोपस्य प्रवर्तनात् । कैयटमाधवादिग्रन्थास्त्विहानुकूला इति वक्ष्यामः । अकृतवृत्तपरिभाषया वृद्धिमकृत्वा त्वदयति मदयतीत्यन्ये प्रतिपन्नाः । युवामावां वा आचष्टे । युवयति

करोतिधातुमात्राश्रयत्वात्सिञ्जुत्पत्त्याऽपि तस्य रूपस्य भावात्सिद्ध्यति, अत्राप्येधोदककर्मके करोत्यर्थे प्रयुज्यत इति षष्ठी भविष्यति, इह तर्हि अभिषावयतीति कतिविक्तः सुनोत्यर्थे इत्युपसर्गात्सुनोतीति षत्वं न

# BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 1268.

# महाभाष्यप्रदीपोद्योतः ।

# MAHĀBHĀṢYAPRADĪPODDYOTA




BY

NĀGEÇA BHAṬṬA

EDITED BY

PAṆḌIT BAHUVALLABHA ÇASTRI.

VOL. IV. FASCICULUS II.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET.

1911.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London, W.*, AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1–3 @ /10/ each ... | Rs. 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1–8 @ /10/ each ... ... | 14 | 6 |
| Aitareyalocana ... ... ... ... ... | 2 | 0 |
| *Anu Bhāshya, Fasc. 2-5 @ /10/ each ... ... | 2 | 8 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Ātmatattvaviveka, Fasc. I ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1–5 @ /10/ each ... ... ... | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1–8. Vol. II, Fasc. 1–8 @ 1/ each ... ... ... | 16 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhāyana Srauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1-3 @ /10/ each | 3 | 12 |
| Bhāṭṭa Dīpikā, Vol. I, Fasc. 1-6; Vol. II, Fasc. 1, @ /10/ each ... | 4 | 6 |
| Bauddhastotrasangraha ... ... ... | 2 | 0 |
| Brhaddevatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Çri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 1 | 14 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5 Vol. III, Fasc. 1–7; Vol. V, Fasc. 1–4 @ /10/ each ... | 14 | 6 |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... | 3 | 2 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1–14 @ /10/ each ... | 8 | 12 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1–25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ /10/ each ... | 36 | 14 |
| Ditto Vol. IV, Fasc. 7-8, @ 1/4/ each ... | 2 | 8 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... | 1 | 4 |
| Çlokavartika, (English), Fasc. 1–7 @ 1/4/ each ... ... | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol I, Fasc. 1-7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. 4, Fasc. 1 @ /10/ each ... | 10 | 0 |
| Çrī Bhāshyam, Fasc. 1–3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudī, Fasc. 1–2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1–7 @ /10/ each ... | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1–4 ... ... ... | 3 | 2 |
| Gobhilīya Grhya Sūtra, Vol. I, @ /10/ each ... ... ... | 3 | 2 |
| Ditto Vol. II, Fasc. 1–2 @ 1/4 /each ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. 1 ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... | 17 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāsya-pradipodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1–10 @ /10/ each ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. 1 @ 1/4 ... ... ... | 1 | 4 |
| Manuṭīkā Saṅgraha, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| *Mīmāṁsā Darçana, Fasc. 10-19 @ /10/ each ... ... | 6 | 4 |
| Nyāyavārtika, Fasc. 2-6 @ /10/ each ... ... ... | 3 | 2 |

## यत्र च द्वितीय इति । (भा)

प्रयोजकोऽपि ण्यर्थो यदान्यापेक्षया प्रयोज्यो भवति तदा तयोः समावेश इत्यर्थः ॥ ननु प्रयोजकव्यापारस्य पञ्चभिर्हलैरित्यनेनैव द्योतितत्वात्तद्द्योतनाय कर्षन्ति इत्यादिव्यर्थमत आह

अस्मयति। युवावौ द्विवचने इत्यत्र यद्यपि द्विवचने इत्यर्थग्रहणं तथापीह युवावौ न स्तः। विभक्तिपरत्वाभावात्। प्रातिपदिकादेव हि णिजिति माधवादयः। सुबन्तादिति हरदत्तपक्षेऽपि अन्तरङ्गानपीति न्यायेन विभक्तेर्लुकापहारात्। त्वामतिक्रान्तमतिक्रान्तौ वा अतित्वाम्। अतित्वान्। अतित्वान् आचष्टे अतित्वयति अतिमयति युष्मदस्मदोरेकार्थत्वेन प्रत्ययोत्तरपदयोश्चेति त्वमौ। अन्तरङ्गत्वात्पूर्वरूपं ततष्टिलोप इति माधवः। तच्चिन्त्यम्। उपसर्गस्य पृथक्करणेन प्रकृत्यैकाजिति प्रकृतिभावात्। तस्मादतित्वादयति अतिमादयतीत्यत्र बोध्यम्। अत्रापि पररूपात्पूर्वं नित्यत्वाट्टिलोप इति मते अतित्वापयति अतिमापयति। युवामावां युष्मानस्मान्वा अतिक्रान्तमतिक्रान्तावतिक्रान्तान्वा आचष्टे अतियुष्मयति अत्यस्मयति। इदानीं णयन्तेष्वपि कश्चिद्विशेष उच्यते॥ तत्र त्वां मां वा आचष्टे इति आख्येयैकत्वे त्वापि मापि त्वाद् माद् त्वद् मद् इति प्रागुक्तमतभेदेन त्रिधा प्रातिपदिकानि। युवामावां युष्मानस्मान् वा आचष्टे इति आख्येयस्यानेकत्वे त्वमयोरभावात्तौ टिलोपे कृते णिलोपे क्यस्याप्यल्लोपे युष्म अस्म इति मान्ते प्रातिपदिके भवतः। ततः स्वादयः। तत्र प्रातिपदिकाष्टकादपि विभक्तीनां यथायथं ए प्रथमयोरम्, शसोन,

प्राप्नोति, अथात्रानभिधानं कुर्वित्युपसर्गविशिष्टे प्रकृत्यर्थे प्रयुक्तिरिति सिद्धं षत्वं, यदा तु धात्वन्तेनैवोपसर्गस्य संबन्धस्तदा षत्वं भवति न चेति चिन्त्यम्, इह तर्हि भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति प्रयोज्य

**कश्चिदिति ॥** (कै)

**तथेति ।** (कै)

एवं च प्रयोजकव्यापारस्यापि प्रतीतेस्तद्बोधनाय णिच्स्यादिति भावः ॥

**अनेकार्थत्वादिति ।** (कै)

प्रतिविधानम् । तत्र धात्वर्थः फलानुकूलत्वेन स एव चाकरणस्य च फले एवान्वयः । भाष्ये तत्कर्मत्वस्य ह्यर्थफलमित्यर्थः ॥ आद्ये च प्रयोज्यस्य कर्मत्वं इष्टापत्तिः । गतिबुद्धीति सूत्रं तु

भ्यसोभ्यम्, पञ्चम्या अत्, एकवचनस्य च, युष्मदस्मद्भ्यां ङसोऽश्, साम आकमिति सूत्रसप्तकेन विहिता आदेशा भवन्ति । एवं युष्मदस्मदोरनादेशे, द्वितीयायाश्च, प्रथमायाश्च द्विवचनेभाषायामिति त्रिसूत्र्या विहितमात्त्वं योऽचीति यत्वं च भवत्येव । शेषेलोपस्तु आत्वयत्वनिमित्तेतरविभक्तौ परतोऽन्त्यलोप इति व्याख्याने भवत्येव । शेषशब्दस्य मान्ताच्छेषपरत्वमाश्रित्य टिलोप इति व्याख्याने तु न भवत्येवाव्ययस्यानेकत्वे । तत्र हि शेषे लोपेनापहार्यं मान्तात्परं शात्विद्भवदित्यतिदिष्टेन टिलोपेनैवापहृतम् । आव्ययैक्ये तु भवत्येव प्राक् टिलोपाभावात् । टिलोपं स्वीकृत्य पुका पान्तत्वमिति मते तु न भवत्येव । अनादौ यत्वविधानादात्वं हलादावेव पर्यवस्यति । त्वाहौसौ, यूयवयौजसि, तुभ्यमह्यौ ङयि, तमवमौ ङसौति चतुःसूत्रीविहिताः प्रकृत्यादेशास्तु आव्ययैक्ये न भवन्त्येव सपर्यन्ताभावात्, आव्ययद्वित्वबहुत्वयोस्तु वैकल्पिकाः । तथाहि सपर्यन्तस्येत्यत्र

कर्त्तरि कृद्योगलक्षणा षष्ठी न प्राप्नोति अप्रधानत्वात्, तृतीयावद्भविष्यति, तद्यथा पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति प्रयोज्ये कर्त्तर्यप्रधानेपि तृतीया भवति एवमिहापि षष्ठ्यपि भविष्यति, अथेह कथं गाज भवति भिक्षा

नियमस्य सजातीयापेक्षत्वादन्यप्रत्यन्ते एव व्यावर्त्तकमन्ते तु तत्प्राप्ति-
रेव नेति दिक् ॥

णिजभाव इति । (कै)

द्योतकतापक्षेऽप्युपपदेनैव द्योतितत्वात् द्योतकणिचोऽभाव इति
भावः ॥ वस्तुतो द्योतकत्ववादिनो वचनारम्भद्योतकसमुच्चयदर्शनाद्
वाचकत्ववादेन तत् खण्डनमिति तत्त्वम् ॥ प्रयोजकव्यापारफलस्य
कर्त्तृगामित्वात्परस्मैपदमाशङ्क्य आह

मान्तस्यैव सिद्धे परिग्रहणसामर्थ्याद्युष्मदस्मदोर्मान्तत्वावस्थायां मादेशा
इत्येकं मतम्। परिग्रहणाभावे मान्तस्यैव स्यात्। सति तु तस्मिन्
मान्ते ततोधिके च भवतीति मतान्तरम्। उभयमिदं तस्मिन्नेव सूत्रे
व्युत्पादयिष्यते। मतभेदाच्चेह फलितो विकल्पः। तत्र आख्येयद्वित्वे
मुञ्ङ्गस्य परत्वात् त्वाहादिप्रवृत्तावपि औ अम् इत्यादिषु वचनान्त-
रेषु विभक्तिपरत्वाद्युवावौ एकस्मिन्मते त्व एव मतान्तरे तु न त्वाहा-
दयो नापि युवाविति विवेकः। अथ रूपाणि, आख्येयैकत्वे सौ त्वां
माम्। वृद्धिर्नेतिवादिनात्तु प्रथमयोः त्वं मं प्रथमयोः पूर्वसवर्णलोपः। स
चाचत्वाणे न प्रवर्त्तत इति पक्षे आख्येयैकस्यैव दान्तयोरित्युक्तम्। यान्त-
योस्तु पक्षे त्वयम्, मायम्। इत्थं सङ्कलनया त्रीणि, औङि त्वां मामि-
त्येकमेव। प्रथमायाश्च द्विवचनइत्यात्वं जसि साविव त्रीणि प्रथमलोपस्य
यान्तयोः पाक्षिकत्वात्। अमशसोः त्वां माम्। शसि त्वान् मान्
द्वितीयायाश्चेत्यात्वम्। आङि। त्वाया माया। अवृद्धौ तु त्वया मया

वासयन्ति कारीषोऽग्निरध्यापयतीति, कथं च न स्यात्, अचेतनत्वात्,
चेतनावत एतद्भवति प्रेषणमध्येषणमिति, नैष दोषः। नावश्यं स एव
वासं प्रयोजयति य आहोपनामिति, योपि तूष्णीमासीनस्तत्समर्थमाच-

विभाषेति । (कै)

सा च प्राप्तविभाषेति भावः ॥ तद्विषये एव

प्रश्नेपेति । (कै)

अविपर्यायपदेनेष्टप्रयोगसिद्धिरेव न तु विपरीतप्रयोगव्यावृत्तिरित्यर्थः ॥ भाष्ये

तदिति । (भा)

प्रातिपदिकोपलक्षणं प्रातिपदिकादित्यर्थः ॥ कर्मत्वाद्यन्तर्भावे नैवैकार्थीभावो लोकव्यवहारात् । करोतीति बहुलार्थोपलक्षणेनाश्वेनातिक्रामत्यश्वयतीत्यादिसिद्धम् । एवं च "प्रातिपदिकाद्धात्वर्थे" इत्यादिगणसूत्राणि प्रक्षिप्तानि । धातुपाठे सूत्र सूत्रधातू चेति बोध्यम् । तत्सत्त्वे तेनैव सिद्धे वार्त्तिकमफलं स्यात् ।

---

त्वभ्यां माभ्या त्वाभिः माभिः । ङयि अम् ष्टेर्मलोपः वृद्धिपक्षे आतोधातोरित्यालोपः त्वं मम् । पक्षे त्वायं मायम् । त्वाभ्यां माभ्याम् । त्वाभ्यम् माभ्यम् । भ्यमि ष्टेर्मलोपः, अभ्यमादेशपक्षे तु ष्टेर्मलोप आल्लोपे च त्वभ्यं मभ्यम् । अवृद्धिपक्षेप्येवम् । मान्तपक्षे त्वयभ्यं मायभ्यम् । तत्र भ्यामि अङ्गवृत्तपरिभाषया बहुवचने झल्येदित्येत्वं न । त्वत् मत् । ष्टेर्मलोपे वृद्धिपक्षे आल्लोपः । त्वायत् मायत् । त्वाभ्यां माभ्याम् । त्वत् मत् । त्वायत् मायत् । त्वाम । त्वाय माय त्वायोः मायोः । अवृद्धौ तु त्वयोः मयोः । त्वाकं माकम् । त्वायाकं मायाकम् । त्वायि मायि । त्वायोः मायोः । अवृद्धौ तु त्वयि मयि । त्वयोः मयोः । त्वासु मासु । इत्यत्र । आख्येयैकत्वे सुजसोश्चतुर्थ्यां भ्यमि च त्वयम् । टौसिङिटाम्भ्यस्सु

---

इति सोपि वासं प्रयुङ्क्ते, भिक्षाश्च प्रचुराश्च व्यञ्जनवत्यश्च लभ्यमाना वासं प्रयुञ्जते, तथा कारीषोग्निर्निर्वात एकान्ते सुप्रज्वलितः शीतहतमध्ययन-

श्च्योस्तद्ज्ञानकल्पनापेक्षया मद्कस्यैवौचित्यात् । एवं च मुण्ड-
मिश्रेति सूत्रस्थकैयटः चिन्त्य एवेति बोध्यम् ॥

लक्ष्ये इति । (कै)

व्याकरणशब्दः कर्मल्युडन्त इति भावः ॥

लक्षणसमुदाये वेति । (कै)

अष्टाध्यायीरूपेऽर्थे करणल्युडन्तः स इति भावः ॥

यदा तु लक्षण एवेति (कै)

प्रतिसूत्रं व्याकरणशब्द इत्यर्थः ।

यद्देति । (कै)

व्यपदेशिवद्भावाद्यनाश्रयण इत्यर्थः ॥

रूपे द्वे निश्चिनुध्वैकमत्यतः ॥ इदं त्ववधेयम् । अतः कर्त्रर्थसंज्ञायामिति विशेष्यनिघ्नतोऽभिधानाच्चाणास्य स्त्रीत्वे सुजसोः सर्वनामस्थानत्वेन भत्वादातोधातोरित्यालोपे त्वं मस्मिन्त्येन रूपम् । अत्वङ्ख्वादिनां सम्बोधने एङ्ह्रस्वादिति हल्मात्रलोपे हे त्व हेम् । स्त्रीत्वे तु टाप् प्राप्तः । सन्निपातपरिभाषया समाधेयः यत्तु केवले समाधानद्वयम् अलिङ्गत्वाट्टिलोपादेति तदिह न भवतीति दिक् अथाख्येयादिनि रूपाणि । सौ त्वं अहम् । प्रकृत्यादेशाभावे युषं असम् । षषिलोपस्याप्यभावे युष्मम् अस्मम् इत्थं त्रीणि । युवाम् आवाम् । युषाम् असाम् । जसि । यूयं वयम् । युषम् असम् । युष्मम् अस्मम् अम्शौटोः युवाम् आवाम् । युषाम् असाम् । युवान् आवान् । युषान् असान् । युवया आवया । युष्या अस्या । युवाभ्याम् आवाभ्यां, युषाभ्याम् असाभ्याम् । युवाभिः आवाभिः । युषाभिः

विरोधिनमुपद्रवमपनयन् अध्ययनेऽनुकूलो भवति, तत्र यथानुमतिव्यपदेशानुग्रह इत्येतेषु णिज् भवति तथाऽत्रापि भविष्यति, यद्यप्यनुमत्यादिषु

**करोतीति ।** (कै)

करोत्यर्थाभिधायीत्यर्थः ॥

**सूत्रेति ।** (कै)

सूत्रे वृत्तिर्बोध्या ॥ भाष्ये

**व्याकरणेन सामर्थ्यमिति ।** (भा)

तज्जन्यफलाश्रयत्वरूपमित्यर्थः ॥ नित्यशब्ददर्शने सूचयतीत्य-र्थावयवार्थाभावाच्छङ्कैव नास्तीत्याह

**एतच्चेति ॥** (कै)

**आख्यायत इति ।** (कै)

बाहुलकात्कर्मणि ल्युड्भावः । ल्युटि हि आख्यानक्रियायां कर्मत्वं न स्यात् ॥

स्माभिः । तुभ्यं मह्यम् । युषम् असम् । युष्मम् अस्मम् । युवाभ्याम् आवाभ्याम् युषाभ्याम् असाभ्याम् । युवभ्यम् आवभ्यम् । युष्मभ्यम् अस्मभ्यम् । भ्यमादेशपक्षे तु युष्मभ्यम् अत्र संयोगान्तलोपो न भाष्ये झल इत्यनुवर्त्तनात् । अननुवृत्तिपक्षे तु युङ्भ्यम् । अस्मदस्तु स्कोरिति सलोपे अम्भ्यम् । शेषेलोपे तु अभ्यम् । युवत् आवत् । युषत् असत् । युष्मत् अस्मत् । युवाभ्याम् आवाभ्याम् । युषाभ्याम् । असाभ्याम् । भ्यसिङसि च पौर्णि । तव मम । युष अस । युष्म अस्म । युवयोः आवयोः । युष्योः । अस्योः । युवाकम् । आवाकम् । युषाकम् । असाकम् । युष्मा-कम् । अस्माकम् । युवयि आवयि । युष्मि अस्मि । युवयोः । आव-योः । युष्मोः अस्मोः । युवासु आवासु युषासु असासु । एवञ्च चतुर्थी

प्रयोज्यव्यापारोद्देशेन प्रवृत्तिरिह तु न तथा तथाप्यनुकूलाचरणमेव प्रयो-जकव्यापारत्वेनाध्यारोप्यते, इह कश्चित्कंचिदाह पृच्छतु मां भवान्

**णिच् इति ।** (कै)

कृतो या प्रकृतिरिति तु नोक्तम् । प्रत्ययलक्षणेन कृदन्ततयाने-नातिदेशेन च षष्ठीप्रसङ्गात् । राजागमनमित्यादौ राज्ञः कर्तृतया राजानमिति द्वितीयापत्तेश्च । तदयमर्थः । णिच् प्रकृतेर्यथा आख्यानक्रियायां कारकता । तथा कंसादेरपीति तदाह

**यथेति ॥** (कै)

नन्वेवमडाद्यव्यवस्थेत्यत आह

**प्रकृतिवद्भावातिदेशेनेति ।** (कै)

अप्रकृताविव प्रकृतिवद् अत्र प्रकृतिशब्देन कृतः प्रकृतिः तस्यां यथा कंसादेरनन्तर्भावस्तथाकृदन्तप्रकृतिकणिजन्तेऽपीत्यर्थः ॥ नन्वेवं

भ्यसि चत्वारि व्याख्याने द्वे तथान्यतः । सुजमङ्ङमङ्गमिभ्यश्च आमि च चौणि निश्चिनु ॥ अथास्येयवङ्ले रूपाणि । त्वम् अहम् । युवम् आवम् । युष्मम् । अस्मम् । युषाम् असाम् । यूयं वयम् । युषम् असम् । युष्मम् अस्मम् । युषाम् असाम् । युषान् असान् । युष्मा अस्मा । युषा-भ्याम् असाभ्याम् । युषाभिः असाभिः । तुभ्यं मह्यम् । युषम् असम् । युष्मम् अस्मम् । युषाभ्याम् । असाभ्याम् । युषभ्यम् असभ्यं युष्मभ्यम् । युडभ्यम् असुभ्यम् ओभ्यम् । युषत् । असत् । युष्मत् अस्मत् युषाभ्याम् सत्राभ्याम् । उषत् असत् । युष्मत् अस्मत् । तव मम । युष अम । युष्म । अस्म । युष्योः । अस्योः । युषाकम् । असाकम् । युष्माकम् । अस्माकम् । युष्यि अस्यि । युष्योः । अस्योः । युषाम् असाम् ।

अनुयुक्तां मा भवानिति, तत्र प्रष्टा प्रयोज्यस्तस्य प्रेरकः प्रयोजक इति तद्व्यापारे णिच् प्राप्नोति, एकविषयत्वाच्च णिचो लोडादीनां च पर्याय-प्रसङ्गः । नैष दोषः । कर्तुः प्रयोजको हेतुरित्युक्तं प्रयोज्यमात्रं न कर्ता

पुष्येण योजयती- (कै)

त्यत्रापि द्वितीयापत्तिरत आह

वत्करणादिति ॥ (कै)

क्वचिदिति । (कै)

पुष्ययोगेऽपीत्यत्र च प्रकृतेरिव प्रकृतिवदित्येव अपनीयमिति भावः । एवं च द्वितीयाद्यन्तत्वाय पृथक्त्वाय चातिदेशद्वयमाश्रयणीयं भवति वैरूप्यं च भवतीति गौरवम् । अतः प्रकृतिवच्चेत्यस्य तत्प्रकृतेर्हन्यादेर्ण्यन्तत्वे यथा कारकं द्वितीयाद्यन्तं धातावनन्तर्भूतञ्च तथेत्यर्थ उचितः । प्रकृतिप्रत्यापत्तिरित्यत्र कृतेरेव ग्रहणेनापि तथैवौचित्याच्च । पुष्येणयोजयतीत्यत्र च न दोषः ॥

एवञ्च, ङसिभ्यसाम्सु द्वे रूपे चतुर्थ्या भ्यसि तु त्रयम् । सुजस्ङङस्सु च तथाख्येयमुन्यैकमन्यतः ॥ इह सर्वत्र प्रकृत्यादेशाश्रयत्वात्वणाषेलोपेषु कर्तव्येषु णिलोपो न स्थानिवत् क्वौ लुप्तत्वादिति दिक् । स्वानमाचष्टे शावोयति । श्वन् इ इति स्थिते णाविष्ठवदित्यतिदेशेन द्वौ टिलोपौ प्राप्तौ टेरित्येकः नस्तद्धित इत्यपरः । तत्र प्रकृत्यैकाजिति प्रकृतिभावो येननाप्राप्तिन्यायेन टेरित्यस्यैवेति तस्मिन्निवृत्तेऽपि नस्तद्धित इति भवत्येव । तत इष्ठवदित्यतिदिष्टया भसंज्ञयैव वकारस्य सम्प्रसारणं वृद्धावावादेशः । न च दविष्ठ इत्यादौ इष्ठनि ओर्गुणः पूर्वस्य दृष्ट इति इहाप्यतिदिश्येतेति वाच्यम् । तस्मिन्कर्तव्ये सम्प्रसारणटिलोपयोरसिद्धवदत्रेत्यसिद्धत्वात् । अन्ये तु ब्रह्मिष्ठ इत्यादौ नान्तलक्षणाट्टिलोपात्परत्वाट्टेरित्येव प्रवर्तते ।

---

न ह्यसौ सम्प्रति पृच्छति तूष्णीमास्ते तस्य निर्व्यापारत्वात् कारकत्वमेव नास्ति कुतस्तद्विशेषः कर्तृत्वं, कर्तृत्वमेव हि तस्य विधीयते प्रश्नक्रियायां

## प्रकृतिप्रेति । (भा)

कृत्प्रकृतेः प्रत्यापत्तावपि राजन्शब्देन लोपनिवृत्तिः कथमिति चिन्त्यम् । वस्तुतः प्रकृतिवत् कारकमित्यतिदेशात् पृथक् करणेन समासाभावेनापदत्वान्निवृत्तिरिति बोध्यम् ॥ अथ

## प्रकृतिवच्चेति (भा)

चः कारकमित्यनन्तरं बोध्यः । प्रकृतिवत्कारकञ्चेति ॥ तेन तद्वत्कार्यमपि अतिदिश्यते तेन घातयतीत्यादौ कुत्वतत्वे सिध्यतः । अन्यथाधातोः स्वरूपग्रहण इति परिभाषया न स्याताम् । केचित्तु उभयत्रापि प्रकृतिपदेन हेतुमण्ण्यन्तप्रकृतिः । हेतुमण्ण्यन्तस्य प्रत्यासत्त्योपस्थितकृत्प्रकृतिप्रकृतिक एव ।

---

तत्रेह प्रकृतिभावेन निवृत्तम् । नन्वह्नित इति तु इष्टनि क्वापि न दृष्टमिति तस्येष्टानतिदेशात् । सम्प्रसारणपूर्वत्वयोः भुनयतीति रूपमाहुः । न च टिलोपयोराभीयत्वेन अन्योन्यस्यासिद्धत्वात्कथं विप्रतिषेध इति वाच्यम् । विप्रतिषेधे आभीयमसिद्धत्वं नास्तीति वक्ष्यमाणत्वात् । विद्वांसमाचष्ट इत्यत्र णौ टिलोपे विदयतीति दीर्घः । अत्र संप्रसारणाभवस्थिन्त्य इत्याचेयः । अकृतत्वपरिभाषया विन्योद्धारो बोध्यः । संप्रसारणे वृद्धाववादेशे च विदावयतीत्येके । अन्ये तु विदयतीत्याहुः । तथाहि । नित्यत्वाट्टिलोपात्प्राक् संप्रसारणान्ततोन्तरङ्गत्वात्पूर्वरूपे पश्चाट्टिलोपः । न च टिलोपस्यापि नित्यत्वम् । शब्दान्तरप्राप्त्या अनित्यत्वात् ।

---

कर्त्ता भवेति यथा राजा भव पृथ्व्यामिति राजत्वमेव विधीयते तत्र तदेवं प्रयोज्योऽकरोतीति प्रयोजकोपि न हेतुः, किमिदानीं पूर्वमेव कर्त्तुः मनः

**प्रत्यापत्तिः ।** (भा)

प्रत्यभिज्ञाता च तत् सूत्रे तत्प्रत्ययकार्यसत्त्वे च भवतीति । अनेनैव कारकवद्भिर्भावो बधादेशनिवृत्तिः । कुत्वत्वादिकञ्च सिद्धम् ॥ नन्वेवं प्रत्ययलक्षणेन हदन्तत्वात्कंसादेः षष्ठीस्यादतः

**प्रकृतिवच्चकारकमिति ।** (भा)

यद्विभक्त्यन्तं तत्र तादृशमत्रापीत्यर्थः । एवं चावृत्तिकल्पना न कुत्रापि प्रत्यापत्तिशब्दस्य च प्रत्यभिज्ञाविषयतयापत्तिः स्थितिरित्यर्थः । न तु नष्टस्य पुनः प्रादुर्भावः प्रत्यापत्तिः । अत एव

ननु समसारणमात्रेण न शब्दान्तरप्राप्तिः किन्तु पूर्वरूपेण । यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति चेन्न । यस्यचेत्यस्य असार्वत्रिकतायाः ह्वरदत्तादिभिरुक्तत्वात् । उदञ्चमाचष्टे उदीचयति । अत्र उपसर्गस्य पृथक्करणात् क्विबन्तात् लुप्तनकारादच्छब्दाण्णिच् । प्रकृत्यैकाजिति टिलोपाभावे इष्ठवदित्यतिदेशेन भत्वे अच इत्यल्लोपे प्राप्ते तदपवाद उद ईदितीत्वम् । चङि तु उदैचिचत् । अत्र णिलोपस्य द्विर्वचनेऽचीति स्थानिवत्त्वादजादेर्द्वितीयस्येति चिशब्दस्य द्वित्वम् । आङ्त्वाट् वृद्धिः । ल्यपि लघुपूर्वत्वाभावेन अयादेशाभावाण्णिलोपे उदीच्य । प्रत्यञ्चमाचष्टे प्रतीचयति । अत्राच इत्यल्लोपः । चाविति पूर्वपदस्य दीर्घः । चङि चिशब्दात्पूर्वमटि यणादेशे प्रत्यचिचत् । इकोऽसवर्णे इति प्रकृतिभावपक्षे प्रति अचिचत् । ल्यपि प्रतीच्य । सम्यञ्चमाचष्टे समीचयति । चङि । सम्यचिचत् । समि अचिचत् । समीच्य । तिरोच-

---

प्रयोजको हेतुः, यद्यपि अर्थाप्रयुक्तिः, अथाप्यपरतिशङ्कया क चित्प्रयुक्तेर्थवत्त्वं तथापि यत्राप्रवृत्ततो बलादिना प्रवर्त्यते तत्र णिज् न प्राप्नोति, न भ्रमः प्रवृत्तप्रवर्तन एव णिजिति किं तु प्रवर्तितोपि प्रयोज्यो यत्र

रात्रिं विवासयति मृगान् रमयतीत्युदाहरणविषयवचने प्रकृति-प्रत्यापत्तिवचः सङ्गतिरन्यथा तत्र प्रकृतेरादेशानपहारात्प्रत्यापत्ति-व्यवहारासङ्गतिः स्पष्टैव कारकवद्भावस्य तस्याः फलमित्याहुः ॥

**यद्यप्यत्र सन्नियोगेति ।** (कै)

एवं च तदनित्यत्वज्ञापकं प्रकृतिप्रत्यापत्तिवचोऽवत्यमिति बोध्यम् ॥ भाष्ये

**संज्ञाभूतानी-** (भा)

त्यस्य प्रसिद्धानीत्यर्थः ॥ भाष्ये

**राजानमागमयतीति ।** (भा)

एवं च देवदत्तपाकमाचष्टे इत्यर्थे देवदत्तेन पाचयतीत्येव । गतिबुद्धीतिनियमेन देवदत्तस्य कर्मत्वाभावात् ॥

तीति तिर्यङ् । तिरसस्तिर्यलोपे इति तिर्यादेशः । तमाचष्टे तिराययति इष्ठवद्भावेन टिलोपेनाश्वतरपहारे वृद्ध्यायौ । न चात्र अञ्चतेर्लोपात् तिरसस्तिरिः कथमिति वाच्यम् । अलोपे इति हि अच इति विधी-यमाने लोपे तिर्यादेशो वार्यते । तस्यैवानन्तरत्वात् । इह तिरेकारस्य वृद्ध्यायोः कृतयोरकृतयोर्वा लोपः प्राप्तो ऽकृतव्यूहपरिभाषया न भवति । यद्वा चिणोलुङ्न्यायेन प्रथमप्रवृत्तटिलोपस्य असिद्धवदत्रेत्यसिद्धत्वात् पुनष्टिलोपो न । अत एव तिरेः स्थानिवत्त्वेनाच्यत्वात् अव्ययानां भमात्रे इति प्राप्तोपि टिलोपो न भवति, एवं यस्येति लोपोपि न भवति । परया वृद्ध्या बाधाद्वा । चङि अग्लोपित्वेन उपधाह्रस्वो

प्रवर्त्तत एव न तु विवर्त्तते तत्र णिजभवति, अनुवर्त्तमाना प्रयुक्तिः प्रयो-ज्यप्रवृत्तौ हेतुर्न मध्ये विच्छिन्ना, अतः प्रयोज्यप्रवृत्तिवेलायामपि बुद्धौ

**दृश्यर्थैति।** (भा)

दृशु क्षयादिभ्य इति दृशिः साधुः ॥

**मृगान् रमयतीति।** (भा)

एतेन मृगरमणशब्द आखेटे रूढ इत्यपास्तम् ॥

**प्रवृत्तिर्भवतीति।** (कै)

आख्यानविषयेत्यर्थः ॥

**इत्येतच्चेति।** (कै)

प्रयोगानुसारादिति भावः ॥

**यावदिति।** (कै)

रात्रिरूपकालेनात्यन्तसंयोगः। कथाख्याने कर्मेति भावः। आरात्रिविवासशब्देन तावत्पर्यन्तकथा लक्ष्यन्त इति बोध्यम् ॥

न। अतितिरायत्। सह अञ्चतीति सध्र्यङ्। सहस्यसध्रिः। सध्र्यञ्चमाचष्टे सध्र्याययति। असध्र्ययत्। पूर्ववत्पुनष्टिलोपो न। स्यादेतत्। यदि तिरिसध्र्योरिकारे टिलोपस्याप्रवृत्तौ चिणोलुङ्न्यायेनासिद्धत्वं मूलम्। तर्हि कुमारीमाचष्टे कुमारयतीति न सिध्येत्। तत्रापि इष्ठवद्भावेन प्रवृत्तस्य पुंवत्त्वस्य तेनैव कुमाराकारलोपे असिद्धत्वापत्तेरिति चेन्नैवम्। अतिदिश्यमानानाञ्कार्याणामुत्पत्तिदेश एव देश इत्यभ्युपगमात्। पुंवत्त्वस्य च भस्याढे तद्धित इति आभीयेभ्यः प्रागेवोत्पत्तेः। अत

विपरिवर्त्तमाना सैव प्रवृत्तिर्हेतुस्तस्यामेव च दशायां णिज्वाच्यो भवति तदेवं प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्णिजर्थः केवला तु कोऽर्थ इति विवेकः, उक्तं च।

**कालात्यन्तसंयोगे** (भा)

गम्यमाने इत्यर्थः । वसेरकर्मकतया गतिबुद्धीति रात्रेः कर्मत्वं हेतुमण्णिचि तद्वदिहापि बोध्यम् ॥ भाष्ये

**प्राप्नोति ।** (भा)

सम्पदादित्वेन भावक्विबन्तात्सप्तमी ॥

**भूप्राप्ताविति ।** (कै)

सम्भावयत इत्यस्य प्राप्नोतीत्यर्थः ॥

**उभयप्राप्ताविति ।** (कै)

नियमेन चन्द्रमसः प्रतीतेरुभयप्राप्तिः । वस्तुतः सहयोगेऽत्र

एव भाष्यकारेण लोहिनीमाचष्टे लोहितयतीत्युदाहृतम् । विश्वग्यश्व-माचष्टे विश्वद्र्यययति । देवद्र्यञ्चमाचष्टे देवद्र्याययति । विष्वग्देवयो-श्चेति चकारात् सर्वनाम्नोऽद्र्यादेशे सर्वद्र्याययति । अदसोऽद्र्यादेशे अमुमु आययति । अदमुआययति अदद्र्याययति । चङि । अजादित्वात् द्वितीयस्य द्वित्वम् । अल्लोपित्वान्नोपधाह्रस्वः । आममुमुआयत् । आददमु-आयत् । आददद्र्यायत् । आद्ये पूर्वत्रासिद्धीयमद्विर्वचन इति मुत्वस्या-सिद्धत्वाभावः । इमाचष्टे आययति, प्रकृत्यैकाजिति प्रकृतिभावाट्टि-लोपाभावे वृद्धौ आयादेशः । चङि उपधाह्रस्वे द्वितीयस्य द्वित्वे माभ-वानाययत् । न च द्वित्वे कर्तव्ये णौ कृतं स्थानिवदिति वृद्ध्यादेः स्थानिवत्त्वं प्राङ्क्यम् । स्थानिरूपस्य यत्र द्विर्वचनं लभ्यते तत्र हि तत् । इह तु णेरेव द्विर्वचनमिति माधवः । वस्तुतस्तु अचिकीर्तदित्यत्र अतिव्याप्तिं वारयितुमोः पुयण्ज्यीति ज्ञापकस्य सजातीयविषयतामाश्रित्य

इत्थमात्रस्य तु प्रैषे एचश्चादेशेोङ् विधीयते ।
सत्त्रियस्य यदा प्रैषस्तदा स विषयो णिच, इति ।

तृतीयाकर्तव्यः। प्रयोगाभावेनोभयप्राप्तेरभावात्। मतान्तरोक्ते प्रकृतिवदित्यस्यार्थेऽपि न दोषः। हेतुमणिचि गत्यादिनियमात् तृतीयाया एव पुग्ण्येत्यत्र प्राप्तेः॥

## नातिदेशिके इति। (कै)

णिच्प्रकृत्यर्थकर्तृत्वादतिदेशेऽपि णिजर्थकर्तृत्वातिदेशाभावाच्च तदुत्तरत्वेनास्याभिधानमित्यर्थः॥

## सूर्यमुद्गमयतौ (भा)

त्यादौ आदित्यस्य प्रयोज्यत्वाच्चेन देवदत्तस्यापि तत्सजातीयताध्वननाद्धेतुतेत्यनुपपन्नमत आह

अवर्णवदुत्तरखण्ड एव स्थानिवद्भावप्रवृत्तिरिति द्विर्वचनेऽचीतिसूत्र एवावोचाम। सस्वेदेतदेवमुरदितिसूत्रे रक्षितपदमञ्जर्यादिष्वपि। उत्तरखण्डस्यावर्णवत्त्वापि न प्रयोगपर्यवसायिन्येवेत्याग्रहः किन्तु प्रक्रियावस्थागतापि। तेन औजिढदपीप्यदित्यत्र द्विर्वचनोत्तरकालं टिलोपेन लोपः पिबतेरित्यनेन च उत्तरखण्डे अवर्णापहारेपि न क्षतिः। भुवमाचष्टे भावयति। चङि अबीभवत्। णौ कृतस्य स्थानिवत्त्वात् भूशब्दस्य द्वित्वम्। पुनरुत्तरखण्डे वृद्ध्यावौ ह्रस्वः। ततः सन्वद्भावे ओः पुयण्ज्यपरे इतीत्वम्। दीर्घो लघोरिति दीर्घः। नन्विह भू इत्यस्य द्वित्वे सत्युत्तरखण्डे वृद्ध्यात्व ह्रस्वत्वानि प्रवृत्तानि। एवञ्च अभ्यासस्यानादिष्टादचः पूर्वत्वात् तस्य सन्वद्भावेन पुयण्ज्यपरत्वाभावे इत्वेकर्तव्ये णौचङीति ह्रस्वस्य अचःपरस्मिन्निति स्थानिवत्त्वे अलघुपरत्वात्कथमित्वमिति चेत्। उच्यते। ओः पुयण्-

किं च प्रयोक्तृधर्मः प्रयुक्तिर्णेरर्थः, अनियतकर्तृका तु प्रयुक्तिर्णिजर्थः। 'तत्करोतीत्युपसंख्यानमिति'। तदिति कर्मपरमेतत्, तेन द्विती-

## देवदत्तविषयान्यस्येति॥ (कै)

भाष्ये

## स्वतन्त्रस्य प्रयोजक इति। (भा)

स्वाभिप्रेतमात्रोद्देशेन प्रवृत्तस्य प्रवर्त्तक इत्यर्थः॥

## एवं प्रयोजयती (कै)

त्यस्य च स्वाभिप्रेतोद्देशेन प्रवृत्तं प्रवर्त्तयतीत्यर्थः। स्वाभिप्रेतमात्रोद्देश्यकप्रयोज्यनिष्ठप्रवृत्त्यनुकूलव्यापारवत्त्वं हि प्रयोजकत्वमिति

ईतीत्वस्य सन्वदतिदेशस्य च आरम्भसामर्थ्यात् स्थानिवद्भावस्येहाप्रवृत्तेः भुवमाख्यत् अबुभवत्। अत्र यः अवर्णपरो यण् नासावभ्यासात्परः, यस्य परः अवर्णः नासाववर्णात्पर इति इत्त्वाभावः। आशाश्रयत्। णौ कृतस्य स्थानिवत्त्वेन श्रिशब्दस्य द्वित्वम्। हेशब्दमाख्यत्। अजीहयत्। गाम् अजूगवत्। रायम् अरीरयत्। नावम् अनूनवत्। स्वम्। असस्वत्। स्वराचष्टे। स्वयति। अव्ययानां भमात्रे इति टिलोपः। प्रकृत्यैकाजिति प्रकृतिभावस्तु येननाप्राप्तिन्यायेन आनन्तर्याच्च टेरित्यस्यैव टिलोपस्य नान्यस्येत्युक्तम्। णौ कृतत्वेन टिलोपस्य स्थानिवत्त्वात् स्वरशब्दस्य द्वित्वे असस्वरदित्येके। अजादेशस्यैव स्थानिवत्त्वं, अयं त्वज्झलादेश इति स्थानिवत्त्वाभावात् स्वशब्दस्य द्विर्वचने असस्वदित्यन्ये। बहूनाचष्टे भावयति। अत्रेष्ठस्य यिट्चेति इष्ठनि विहितत्वात् बहोर्भूभावः। यिडागमस्तु न भवति णाविष्ठवदिति सप्तमीश्रवणेन इष्ठवदिति उपमानादपि सप्तम्यन्ताद्वतिः। तेन इष्ठनि परे पूर्वस्य यत्कार्यं तस्यैवातिदेशो नत्विष्ठनः कार्यस्यापीति सिद्धान्तात्।

यान्तात्प्रत्ययः करोतीत्यत्र प्रकृत्यर्थमात्रं विवक्षितं न प्रत्ययार्थस्तेन ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च णो भवति। 'सूत्रं करोति सूत्र-

फलितं सर्वत्र स्वशब्देन प्रयोजका एवं प्रयोगाभिप्रेतमात्रोद्देश्यक-प्रवृत्त्याश्रयत्वं प्रयोज्यत्वं तदेव च स्वतन्त्रत्वं न चेत्सूर्य इति भावः॥
समाधत्ते भाष्ये

**स्वतन्त्रेति।** (भा)

स्वतन्त्रप्रयोजकस्य हि हेतुत्वम् अयमुक्तनतेत्यप्रयोजको हेतु-रिति चेदित्यर्थः॥

---

प्रातिपदिकस्येति वचनस्य प्रत्ययकार्यातिदेशार्थत्वाच्च टेरिति सूत्रे कैयटेन भवयतीत्युदाहृत्य यिट्सन्नियोगशिष्टत्वाद्भभावस्य यिडभावे अस्याप्यभावात्। बहयतीत्येकीयमतत्वेनोपन्यस्तम्। हरदत्तेन तु सोप-पत्तिकत्वात्तत्रैव प्राबल्यमिति मान्यमानेन बहयतीति स्वपक्षत्वेनोक्ता भावयतीत्येकीयमतेनोक्तम्। अत एव पुरुषकारोपि भावयतीति चिन्त्य-मित्युक्तम्। वस्तुतस्तु कैयटपक्ष एव प्रबलः। तथाहि। इष्ठवदिति कार्यातिदेशः। कार्यस्यैव प्राधान्यात्। तथा च इष्ठवद्वचनमेव प्रकृतौ दृष्टानामिह विधायकमिति तदेव भूभावं विधत्ते, तथा च सन्नियोगा-भाव एव। चान्द्रकौमारशाकटायनेषु तु इष्ठनि पुनर्वेति बहोरेव यकं विधाय भूययतीति स्वीकृतम्। स्थूलमाचष्टे स्थवयति। दूरं दवयति। युवानं यवयति। क्षपयति। क्षेपयति। क्षोदयति। अत्राद्येषु गुणस्य अचोञ्णितीति वृद्धिः प्राप्ता। अकृतस्य इति वा प्रातिपदिकाद्धात्वर्थे बहुलमिति बहुलग्रहणाद्वा न भवति। युवतिशब्दादपि इष्ठनि लिङ्ग-विशिष्टपरिभाषया स्थूलदूरेति यणादिपरलोपादेः सत्त्वात्तावपि तदति-देशात् यवयतीत्येव रूपम् यद्वा पुंवद्भावे कृते यणादिपरलोपात्तदेव

---

यतीति' इह व्याकरणस्य सूत्रं करोतीति वाक्ये इच्छरूपं सूत्रं सूत्रशब्दे-नोच्यते तत्र अपदेशिवद्भावेन व्यतिरेकनिबन्धना षष्ठी कृत्तौ तु व्याकरणं

**प्रवृत्तिर्ह्युभयत्रानपेक्षेति ।** (भा)

प्रयोज्यप्रवृत्तिरुभयत्रापि प्रयोजकाभिप्रेतामपेक्षा तन्मात्रानुद्देश्यिकेत्यर्थः ॥

**उभयत्रानपेक्ष्यैव किञ्चिदिति ।** (भा)

किञ्चिदित्यस्य प्रयोजकाभिप्रेतमात्रम् । किञ्चिदनपेक्ष्यैवोभयोर्देवदत्तादित्ययोर्भवतीत्यर्थः । तन्मात्रांशेन निवेश्य अन्यथाणिजनवकाश इति भावः ॥ तदेव व्युत्पादयति

---

रूपम् । शीकरव्यतिकरमरीचिभिर्दूरयत्यवनते विवस्वतीति कालिदासप्रयोगस्तु चिन्त्य इति सुधाकरादयः । वस्तुतस्तु दूरमयते दूरात् तं करोतीति समाधेयम् । अश्विनमाचष्टे अश्वयति अश्वातिदेशादिना लुक् । प्रकृत्यैकाजिति टिलोपो न । अत उपधाया इति वृद्धिस्तु अकृद्वृत्त इति न भवतीति भाष्ये स्थितम् । गोमन्तमाचष्टे गावयति मतुब्लुकि अचोञ्णितीति वृद्धिः । चङि अग्लोपित्वात्सन्वद्भावदीर्घत्वयोरभावे अमस्वगत् । अजुगवत् इत्यादि । युवानमल्पं वाचष्टे कनयति, युवाल्पयोः कनन्यतरस्यां, पक्षे यवयति । युवतिमल्पां वेति विग्रहेऽप्येवम् । अन्तिकमाचष्टे नेदयति । बाढमाचष्टे साधयति । अन्तिकबाढयोर्नेदसाधौ । प्रशस्यमाचष्टे प्रशस्ययति । इह प्रशस्यस्य श्रः, ज्य चेति श्रज्यौ न भवतः । उपसर्गस्य पृथक्करणादिति माधवः । यत्तु सुधाकरेण श्रापयतीत्युदाहृतम् । यच्च शाकटायनेन श्रयति ज्ययतीति । तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । वृद्धमाचष्टे ज्यापयति । अयञ्च ज्यादेशः वर्षादेशेन सह विकल्प्यते । प्रियस्थिरेति प्रादयः । प्रियमाचष्टे प्रापयति ।

---

सूत्रयतीति प्रत्ययार्थभूतकरोत्यर्थाभिधायी सूत्रशब्दः सम्पद्यते, उक्तं हि 'परार्थाभिधानं वृत्ति'रिति । तेन सत्त्वभावो निवृत्त इति सूत्रव्याकरण-

**नेह कश्चिदिति ।** (भा)

सत्यामपि प्रेरणायामिति शेषः । सनिन्द उपालम्भः परिभाषणन्तदाह

**दण्डनादिका इति ।** (कै)

अनेन सर्वत्र स्वेष्टसाधनताज्ञानं प्रवर्त्तकमित्युक्तम् ॥ भाष्ये

स्थिरं स्थापयति स्फिरं स्फापयति । उक्तम् बंहयतीति मुख्यातो माधवः । ऊर्णुधातौ तु वृद्धिं स एवोदाजहार । बहुलं बंहयति । गुरुं गरयति । वृद्धं वर्षयति तृप्रं दुःखं तदाचष्टे त्रपयति । दीर्घं द्राघयति वृन्दारकं वृन्दयति इति इष्ठवद्भावोदाहरणप्रपञ्चः ॥ प्रकृतमनुसरामः । सूत्रङ्करोति सूत्रयति । इह व्याकरणस्य सूत्रङ्करोतीति वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते । लक्ष्यलक्षणसमुदायस्य व्याकरणशब्दार्थः । तयोरङ्गाङ्गिभावात् षष्ठी । वृत्तौ तु सूत्रशब्दो ऽनर्थकः करोत्यर्थपरो वेति पक्षद्वयेऽपि सूत्रस्य पदार्थैकदेशत्वात् न तेन व्याकरणं सम्बध्यते । किन्तु करोत्यर्थेनैवेति व्याकरणं सूत्रयतीति द्वितीयैव भवति । तत्रापि सम्बन्धसामान्यविवक्षायां मातुः स्मरतीतिवत् षष्ठी भवत्येवेति दिक् । आख्यानात्कृतस्तदाचष्ट इति णिच् कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् ॥ आख्यायत इत्याख्यानम् । बाहुलकात्कर्मणि ल्युट् । आख्यानशब्देन च तदभिधायी शब्दो गृह्यते अर्थे कृदन्तत्वासम्भवादिति प्राञ्चः । वस्तुतस्तु करणे ल्युट् । कंसवधमाचष्टे कंसं घातयति । इह कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् कंसवध इति कृदन्त आख्यानशब्दः । ततो द्वितीयान्तात्प्रातिपदिकाद्वा णिच् ।

योरभिसम्बन्धो निवर्त्तते ऽस्ति च व्याकरणस्य करोतिना सामर्थ्यमिति द्वितीया भवति, यदि तु व्याकरणं सूत्रं करोतीति वाक्य एव सामानाधि-

## कुर्वतः प्रयोजक इति । (भा)

प्रयोजकाभिप्रेतमात्रोद्देशेनैव कुर्वतः पुंसः प्रयोजको दृश्यते यथा गुरुः शिष्यानध्ययने प्रवर्त्तयति इत्यादौ तद्वत्सूर्यस्यापि इति भावः ॥

## प्रयोज्यार्थ इति । (भा)

प्रेरणाजन्यप्रवृत्त्याश्रयः प्रयोज्यः तस्य प्रेरणया कोऽर्थः । प्रयोजनं किम् इति प्रश्नः । उत्तरमाह

---

क्तौ ऽपप्रत्ययस्य लुक् तस्य या प्रकृतिः हन् इति, तस्याः विकार-परित्यागेन स्वेनैव रूपेणावस्थानम् । यद्यपि क्तौ लुकि कृते तत्सन्नि-योगशिष्टस्य वधादेशस्य निवृत्तिः सिद्धैव । हनस्त्वध इति सूत्रेण हि अप्प्रत्ययवधादेशौ सन्नियोगशिष्टौ तथापि सातायोगमात्रे, घातयतीत्यत्र कृत्वस्यासन्नियोगशिष्टत्वेन तन्निवृत्त्यर्थं प्रकृतिप्रत्यापत्तिवचन-मिति कैयटहरदत्तमाधवादयः । वस्तुतस्तु निमित्तापायन्यायेनैव तन्निवृ-त्तस्यानित्यत्वज्ञापनार्थमिदम् । नहीदं वचनं नापि न्याय इति वदद्भिरपि अकृतव्यूहपरिभाषायाः तत्स्थानापन्नायाः एतत्कृतत्वात्तस्या एवानित्यत्व-मनेन ज्ञाप्यत इति निष्कर्षः । इदञ्चाचःपरस्मिन्निति सूत्र एव प्रपञ्चितम-स्माभिः । एवञ्च कंसहन इ इति स्थिते अकृतसन्धा धातुसंज्ञा च कंसविशिष्टस्यैव प्राप्ता ततश्चाट्द्विर्वचनयो दोषः स्यात् अत उक्तं प्रकृति-वत्कारकमिति अस्यार्थः प्रकृतिर्हेतुमण्णिच प्रकृति षष्ठ्यन्तादिति वधादेः कृदन्तस्य यत्कारकं कर्मादिकं तस्य कृत्प्रकृतेर्हन्यादेः हेतुमण्णौ धातावनन्तर्भूतं द्वितीयान्तं यद्रूपं तदेव भवतीति अत एव राजगमन-

करणं तदा माणवकं सूत्रं करोति माणवकं सूत्रयतीति न व्याकरणे सूत्रयतीत्ययत्नसिद्धं, सूत्र अवमोचने सूत्र प्रस्रवणे इति चुरादौ पाठादेव

**यदभिप्रायेषु सज्जन्त इति।** (भा)

प्रेरकाभिप्रायेषु सज्जन्ते तदभिप्रायं ज्ञात्वा तन्निवर्तयति यद् एष एव प्रयोज्यस्य प्रेरणार्थ इत्यन्वयः। एवं च क्रियायां स्वाभिप्रायोद्बोधफलकन्तद्ज्ञापनमेव प्रेरणाफलमिति भावः॥ अभिप्रायपदेन तत् फलमुच्यते तदाह

---

माचष्टे राजानमागमयतीत्यत्र नकारश्रवणमप्युपपन्नम्। अनेन चातिदेशेन कारकस्य धातावनन्तर्भावे लब्धे तद्व्यतिरिक्तादर्थादेव णिच्। एतेन कंसमजीघनदित्यड्द्विर्वचने यथाभिमतं सिध्यतः। नन्वेवमपि होहन्तेरिति हनस्तोचिण्णलोरिति च कुत्वतत्वे न प्राप्नुतः धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानादिति चेत्। अत्र हरदत्तमाधवादयः। प्रकृतिवच्चेति चकारो भिन्नक्रम। कारकमित्यस्यानन्तरं द्रष्टव्यः। कार्यशब्दस्याध्याहार्यः हेतुमण्णिचप्रकृतौ यादृशङ्कारकं तथेहापि, यादृशश्च तत्र कार्यम् अड्द्विर्वचनतत्वकुत्वादि तदपीह तथैवेत्यर्थः। इह च अड्द्विर्वचने अतिदेशद्वयेनापि सिध्यतः। असङ्कीर्णोदाहरणान्तु द्वितीयादिकं कुत्वतत्वादिकञ्चेति विवेकः। इह कंसवधमुदाहरणादिनिष्ठोपाख्यान एव णिजिति नाग्रहः। किन्तु प्रतिपादनमात्रम्। तेन राजागमनमाचष्टे राजानमागमयति। यद्यपाह कृत्प्रकृतौ राजा कर्तासीत्। तथापि गमेर्हेतुमत्यौ गतिबुद्धीति कर्मीभूतः। तद्वदिहापि। राजानमित्यस्य प्रकृतिभागो यद्यपि अन्तर्वर्त्तिन्या षष्ठ्या प्रत्ययलक्षणेन पदम्। तथापि नकारश्रवणं भवत्येव रूपातिदेशबलात् देवदत्तपाकमाचष्टे देवदत्तेन पाचयतीति तृतीयैव भवति। गतिबुद्धीति नियमेन

---

सूचयतीति सिध्यति, अनेकार्थत्वाद्धात्वर्थान्तरे ऽपि भविष्यति, गणपाठसिद्ध एव त्वर्थ उपसंख्यानेनापि प्रदर्शितः। आख्यानादिति वाक्यं व्याचष्टे।

ईदृशी (भा)

इत्यादिना॥ तदाह

निमित्तेभ्य इति। (प्रदीः)

स्वभूतिसाधनत्वज्ञापकप्रेरणादिभ्य इत्यर्थः॥ ननु स्वभूतिफलकप्रवृत्तौ प्रयोजकाभिप्रायानुरोधोऽपि किमर्थं इत्यत आह

अभिप्रायेति॥ (प्रदीः)

ननु शिष्यादीनां स्वार्थसिद्धये गुर्वाद्यभिप्रायानुरोधेऽपि सूर्यस्य तदनुरोधे मानाभावः। फलाभावश्चेति चेन्न। अभिप्रायः सम्मति

---

कर्मत्वापहारे कर्तृत्वस्यैव स्थितिरिति दिक्। हृष्यर्थायां च प्रवृत्तौ मृगाणां रमणं मृगरमणम्। कर्तृषष्ठ्या समासः। तदाचष्टे मृगान् रमयति। यदा प्रतिपाद्यकर्तृकदर्शनाख्यमाख्यानं तदेव णिजिष्यते नान्यादित्येतदर्थं वचनम्। सेयमाख्यानरूपा वृत्तिः सा यदि हृष्यर्थैः तेन स्वयं मृगरमणमनुभवन् अन्यस्मै दर्शयितुमाचष्टे इत्यस्मिन्विषये मृगान् रमयतीति प्रयोगः। यदा तु अरण्ये दृष्टं मृगरमणं ग्राममेत्यान्यस्मा आचष्टे एवं तत्र मृगा रमन्त इति तस्मिन्नाख्याते बोधनीये मृगरमणमाचष्टे इति वाक्यमेव भवति। अत्र कैयटादयः हृष्यर्थायामेवेति नियमो मृगरमणादिविषयक एव। न तु सार्वत्रिकः। तेन राजागमनादौ हृष्यर्थप्रवृत्त्यभावेऽपि णिज् भवत्येवेत्याहुः। सोपस्य कालान्तसंयोगे मर्यादायाम्। इह आख्यानादिति न सम्बध्यते। शेषं पूर्ववत्।

'आख्यानात्कृदन्तादिति'। आख्यायत इत्याख्यानं, 'कृत्यल्युटो बहुलमि'ति कर्मणि ल्युट्, यत्किञ्चिदाख्यायते तत्सर्वं राजागमनादिकमप्याख्यानमिहाभिप्रेतं न कंसवधबलोपाख्यानादिकमेव संज्ञाभूतम्, कृदन्तादिति

मात्रेण । तदुद्देश्यकप्रवृत्त्याश्रयत्वादिरूपप्रयोज्यप्रयोजकभावाध्यारोपेणेतितात्पर्यात् ॥

भाष्यकारवचनादिति । (कै)

भाष्यप्रयोगादस्यानुदात्तेत्त्वपि पाठोऽनुमीयत इति भावः ॥ ननु चिरहते कंसे इत्युक्त्या प्रयोजकव्यापारस्य वर्तमानकालत्वाभावो नोक्त इत्यत आह

सन्निहितया आख्यानक्रियया सह कालस्य साकल्येन सम्बन्धे बोधनीये णिच्। मर्यादावचनस्याङो लोपश्चेत्यर्थः। उदाहरणन्तु विवसनं विवासः, अतिक्रमणं घञ्, रात्रेर्विवास इति कर्तृषष्ठ्या समासः। ततः आङ्मर्यादाभिविध्योरित्याङासहाव्ययीभावः। आरात्रिविवासमाचष्टे रात्रिं विवासयति। यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीत्यर्थः। वसिक्रियायां कर्तृभूतया रात्रेर्हेतुमण्णौ तत्कर्मत्वं वसेरकर्मकत्वात्तदत्रापि णौ कर्मत्वं रात्रिमित्यस्य लुप्तषष्ठ्यन्तत्वेन प्रकृतिभागस्य पदत्वे इकोऽसवर्णे इति पाक्षिकः प्रकृतिभावः प्राप्तः पूर्ववद्रूपातिदेशान्निवर्तते।

कृद्ग्रहणेन गतिकारकपूर्वस्यापि ग्रहणमिति कंसवधराजागमनसूर्योद्गमनादेरपि कृदन्तत्वम्। 'प्रकृतिप्रत्यापत्तिरिति'। कृतो या प्रकृतिः सा विकारपरित्यागेन स्वेनैव रूपेणावतिष्ठत इत्यर्थः। 'प्रकृतिवच्च कारकमिति'। यत्तत्र कृदन्ते सन्निहितं कारकं तत्प्रकृतिवद्भवति कृत्प्रकृतेः शुद्धे णिचि यादृशं भवति तादृशमस्यापि ण्यन्तस्य भवतीत्यर्थः। 'कंसं घातयतीति' हन्ते 'हनश्च वध' इत्यप् प्रत्ययो वधादेशश्च, हननं वधः कंसस्य वध इति कर्मणि षष्ठ्या समासः, ततो णिच्, कृतो लुक्, प्रकृतेः प्रत्यापत्तिर्वधादेशपरित्यागेन हन्तिरूपेणावस्थानं, यद्यप्यत्र सन्नियोगशिष्टानामन्यतराभावादुभयोरप्यभाव इत्येव वधादेशनिवृत्तिः सिद्ध्यति तथापि

**चिरप्रवृत्तेति ।** (कै)

कंसकृष्णयोर्वध्यघातकभावस्य चिरप्रवृत्तत्वेन तत्प्रयोजकव्यापारस्यापि तत्त्वमेवेति भावः ॥

**कंसाद्यनुकारिणाम् ।** (कै)

कंसादिसदृशानाम् ॥ भाष्ये

इहाख्येयं णिच्प्रकृत्या अनुपात्तमपि अर्थाद्गम्यते । तदाचष्टे भारतकथामित्यादि शब्दो नेह प्रयोक्तव्यः । तत्समभिव्याहारे हि सति णिजेव नोत्पद्यते अनभिधानात् । अत्र च प्रमाणं वक्ष्यमाणं भाष्यकारीयं प्रत्याख्यानमेव, नहि फलभेदे प्रत्याख्यानं सम्भवति । प्रत्याख्यानपक्षे च कथामित्यादेर्यथा न प्रयोगस्तथा प्रत्याख्यानावसर एव स्फुटीभविष्यति । तथाप्रकृतिवच्चकारकमित्यस्य पूर्वोक्तो विपरीतक्रमा-

पुष्येण योगं जानाति पुष्येण योजयतीत्यत्र कुत्वस्यासन्नियोगशिष्टत्वात्सन्निवृत्तिर्न सिद्ध्यतीति प्रकृतिप्रत्यापत्तिवचनम् । अथ कथं कंसमघातयत् राजानमगमयत् यावता कंसवधराजागमनशब्दाभ्यां णिचि विहितेऽङ्गसंज्ञा नामधातुत्वं च तयोरेव स्यातां ततश्चाड्द्विर्वचने अपि तयोरेव स्यातां, नैष दोषः । प्रकृतिवच्चकारकमित्युक्तं कृत्प्रकृतेस्स शुद्धे णिचि विहिते कंसादिकारकं कीदृशं भवति धातावनन्तर्भूतं द्वितीयाद्यन्तं तेनात्रापि तादृशेनैव रूपेण भवितव्यं, तेन राजानमागमयतीत्यत्र नलोपाभावोऽप्युपपन्नो भवति, एवमपि कंसं 'घातयतीत्यत्र 'हो हन्तेर्ञ्णिन्नेषु' ति कुत्वं 'हनस्तो चिण्णलो' रिति तत्वं च न प्राप्नोति, किं कारणं धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते, एवं तर्हि प्रकृतिवच्चकारकमिति चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः, कार्यशब्दश्चाध्याहार्यः एतदुक्तं भवति कृत्प्रकृतिर्हन्त्यादिस्तस्याः शुद्धे णिचि यादृशं रूपं भवति

**प्रत्यक्षं कंसं घातयन्तीति ।** (भा)

तादृशेनैव वासुदेवेनेत्यर्थः ॥

**उद् गूर्णा इति ।** (भा)

गूरी उद्यमने इत्यस्य रूपम् । एवं च चित्रलेखका अपि

व्याहारव्याख्यानेऽपि भाष्यकारीयप्रत्याख्यानं प्रमाणमितिदिक् । चित्रीकरणे प्रापि ॥ आख्यानादिति विहाय णिचं सम्बध्यते । कृतन्तादाश्चर्यकरणे गम्यमाने प्राप्नोत्यर्थे णिच् स्यात् कृल्लुगादि पूर्ववत् । उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं प्राप्नोति सूर्यमुद्गमयति । इह उज्जयिन्या माहिष्मती दूरदेशस्थेति तावतो देशस्य प्रागुदयादतिक्रमणमाश्चर्यकरणम् । प्रकृतित्वचकारकमिति सूर्यस्य पृथग्भावः ।

तथा ऽस्यापि ण्यन्तस्य भवति कार्यं च तद्वदेव भवतीति, एतेनाड्द्विर्वचने अपि व्याख्याते । 'बलिबन्धमिति' । बन्धनं बन्धः बलेर्बन्धो बलिबन्ध, पूर्ववत्कर्मणि षष्ठ्याः समासः, शेषं पूर्ववत् । 'राजागमनमिति' । अत्र कर्तरि षष्ठ्याः समासः । 'राजानमागमयतीति' । अत्र कृत्प्रकृतौ राजा कर्ता तस्य गमेः शुद्धे णिचि गतिबुद्धीत्यादिना कर्मसंज्ञा भवतीत्यस्मिन्नप्यौपसंख्यानिके णिचि तथैव कर्मसंज्ञा भवति, इह तु देवदत्तपाकमाचष्ट इति णिचि विहिते देवदत्तेन पाचयतीति भवति, नहि देवदत्तस्य शुद्धे णिचि कर्मसंज्ञास्ति गत्यर्थादीनामेवेति नियमात् इह तु मृगरमणमाचष्टे मृगान् रमयतीति यदा प्रतिपाद्यस्य दर्शनार्थमाख्यानं तदा णिजिष्यते नान्यदा, तत्र यदा ऽरण्यस्थो रममाणान्मृगान्प्रतिपाद्यमाचष्टे एतस्मिन्नवकाशे एवं मृगा रमन्तइति तदा तस्य प्रतिपाद्यदर्शनार्था प्रवृत्तिरिति णिज् भवति, यदा तु ग्रामे मृगरमणमाचष्टे तदा तत्र मृगाणामसम्भवान्न तद्दर्शनार्था प्रवृत्तिरिति मृगरमणमाचष्टइति वाक्यमेव भवति, एतच्च

चिचक्षं कंसं तादृशेनैव कृष्णेन घातयन्तीत्यर्थः ॥ ग्रन्थिकपदे "अत इनिठनाविति(५।२।११५)ठन् ॥

'शब्दग्रन्थगडुरिति । (भा)

शब्दः कथकमुखोच्चार्यमाणः । ग्रन्थस्तद्बोधकपुस्तकरूपः । गडुरो

१ शब्दगडुमात्रम्, शब्दगडुकः, शब्दग्रन्थगडुः, शब्दग्रन्थमात्रम्, शब्दग्रन्थगडुः, अत्र भाष्ये एते पाठभेदाः ॥

संग्रामयतेरेव सोपसर्गादित्युक्तेरुपच्छब्दस्यापि पृथक्करणम् । सूर्यस्य हेतुमत्त्वे कर्मत्वात् इहापि कर्मत्वे सूर्यमुद्गमयदित्यादि । नक्षत्रयोगे णिः ॥ नक्षत्रयोगवाचिनः कृतन्ताज्ज्ञानात्यर्थे णिच् । पुष्यं प्राग्वत् पुष्येण योगः कर्तृकर्मकः योग इत्यर्थः । पुष्यो हि चन्द्रमसं यनक्ति सन्दधाति । इह कर्मणोऽपि गम्यमानत्वादुभयप्राप्ताविति नियमात्कर्तरि षष्ठ्यभावे तृतीया । अन्तर्द्धायेनादर्शनमिच्छतीतिवत् । पुष्ययोगं जानाति पुष्येण योजयति । युजेः कर्तुः पुष्यस्य गत्यादिकर्तृत्वनन्तर्भावेण हेतुमत्त्वा

स्वगडुमण्यादिविषयमेव राजागमनादौ त्वन्यदापि भवति । 'अल्लोप इति' । अचाख्यानादिति न सम्बध्यते, मर्यादया य आकारस्तस्य लोपो भवति इष्ठवदित्यादि पूर्ववत् । 'आरात्रिविवास इति' विवसनं विवासः--ऽतिक्रमणं, रात्रेर्विवासो रात्रिविवासः कर्मणि षष्ठ्याः समासः, ततः 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावः, यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीत्यर्थः । वसेरकर्मकत्वाद्गतिबुद्ध्यादिना रात्रेः कर्मसंज्ञा हेतुमण्णिचि भवति तदर्थस्मिन्नपि णिचि भवति । 'रात्रिं विवासयतीति' । 'चित्रीकरणं प्राप्नोति' तदित्येव, चित्रीकरणमाश्चर्यकरणं, प्रापि प्राप्नोत्यर्थे चित्रीकरणे गम्यमाने तत्प्राप्नोतीत्यस्मिन्नर्थे णिच भवति, इष्ठवदित्यादि-

मनुष्यमन्नातः । न तत्र कश्चिदपि कंसादिबुद्धिविषय इत्यर्थ इत्याहुः ॥

तेऽपि । (भा)

ग्रन्थिका अपि ॥

न कर्मता किन्तु कर्तृत्वमेवेति । इहापि तथा, तेन तृतीयैव । इदञ्च व्याख्यानात्कृत इत्यादि वार्त्तिकजातं भाष्यवार्त्तिकयोरेव प्रत्याख्यातम् तदीयलक्ष्यजातस्य आरोपेणापि सूपपादत्वात् । तथाहि । कंसं घातयतीति तावदारोपः ; ये हि कंसाद्यनुकारिणां नटानां व्याख्यानोपाध्यायाः ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृप्येनैव वासुदेवेन घातयन्तीव । येऽपि चित्रं व्याचक्षते इयं मथुरा अयं प्रासादः अयं भगवान् वासुदेवः प्रविष्टः इत्यादिक्रमेण, तेपि

पूर्ववत् । 'सम्भावयत इति' । भू प्राप्तावात्मनेपदी, उज्जयिन्या माहिष्मती विदूरे देश इति तावतो देशस्य प्रागुदयादतिक्रमणमार्थम् । 'सूर्यमुद्गमयतीति' । प्रकृतिवच्च कारकमिति सूर्यशब्दस्य पृथक्करणं, संग्रामयतेरेव सोपसर्गादिति न्यायादुच्छब्दस्यापि पृथक्करणम्, अत्रापि सूर्यस्य हेतुमण्णिचि कर्मत्वादस्मिन्नपि णिचि कर्मत्वम् । 'नक्षत्रयोगे चेति' । तदित्येवंचि ज्ञानार्थे नक्षत्रयोगे यत्कृदन्तं वर्त्तते तस्मात्तज्ज्ञानातीत्यस्मिन्नर्थे णिज् भवति, हलक्षणमित्यादि पूर्ववत् 'पुष्ययोगमिति' । पुष्येण चन्द्रमसो योगः पुष्ययोगः, पुष्येणेति कर्त्तरि तृतीया, 'उभयप्राप्तौ कर्मणी'ति नियमात् षष्ठी न भवति । 'चन्द्रमस इति' । नियमेन गम्यमानत्वादुभयप्राप्तिः, पुष्यो हि चन्द्रमसं युनक्ति सम्बध्नाति तत्र युजेर्गत्यादिष्वनन्तर्भावाद्णौ कर्त्तुः पुष्यस्य युङ्क्ते णिचि कर्तृत्वमेवेत्यस्मिन्नपि णिचि कर्तृत्वात्तृतीया भवति । 'पुष्येण योजयतीति' । लकारस्तु प्रधान एव कर्त्तरि भवति यथा युङ्क्ते णिचि, तत्रहीदं बहु वक्तव्यं, वक्तव्यम् इह तावत्सूर्यमुद्ग

बुद्धीर्व्याचक्षाणा इति । (भा)

तदैश्वर्याणीत्यर्थः ॥ तानि कथयन्तो ग्रन्थिकाः (कथकाः) स्वबुद्धिविषयान् सतो विद्यमानात् कंसादीन् प्रकाशयन्ति श्रोतृबुद्धौ समर्पयन्तीत्यर्थः ॥ अविद्यमानत्वेन बुद्धिविषयत्वे हेतुमाह

तथैव । येपि ग्रन्थं वाचयन्तः कंसवधमाचक्षते ग्रन्थिका नामतेति तत्तत्पदार्थविषयकनिश्चयोत्पादनात्तास्ताः क्रिया निर्वर्तयन्तीव । तथा च. स्पष्ट आरोपः । किंच गच्छ हन्यते कंसः गच्छ घानिष्यते किं गतेनेह तेन हतः कंस इत्यादिषु निरूढेषु व्यवहारेषु तथाप्येषैव गतिः । नह्यत्र शिष्टविधिः किञ्चिदुपकरोति । उक्तोदाहरणेषु शिष्टप्रवेशा-भावात् । उक्तञ्च शब्दोपहितरूपांश्च बुद्धेर्विषयताङ्गतान् । प्रत्यक्षमिव

नयतीति यो यस्य प्रवर्त्यः स तस्याभिप्रायं निर्वर्तयति गन्तुश्चायमभि-प्रायो माहिष्मत्यां सूर्योद्गमनं सम्भावयेयमिति, तं च सूर्यो निर्वर्तयति एतदेव प्रवर्त्यस्य प्रवर्त्यत्वं यदुत प्रवर्तयितुरभिप्रायसम्पादनं, नहि कश्चित्परो ऽनुग्रहीतव्य इति प्रवर्तते सर्वऽमे स्वभूत्यर्थं, ये तावदेते गुरून् शुश्रूषन्ते तेपीह प्रीतो गुरुरध्यापयिष्यति परत्र चाभ्युदेष्याम इति प्रवर्त्तन्ते, दासाश्चापि भक्तं च लप्स्यामहे परिभाषाश्च न नो भविष्यन्तीति प्रवर्तन्ते, यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणां, शिल्पिनोपि मित्राणि च नो भविष्यन्ति वेतनं च लप्स्यामह इति प्रवर्त्तन्ते, यद्यप्यत्र सर्वत्र तत्तदुद्देशेन प्रवृत्तिः सूर्ये तु न, तथाप्यभिप्रायसंपत्तिमात्रेण प्रयोज्यप्रयो-जकभावाध्यारोपेण णिज् भविष्यति, इह च कंसं घातयतीति ये तावदेते कंसघातानुकारिणां नटानां व्याख्यानोपाध्यायास्ते कंसानुकारिणं नटं सामाजिकैः कंसबुद्ध्या गृहीतं तादृशमेव वासुदेवेन घातयन्ति, येपि चित्रं व्याचक्षते ऽयं मथुराप्रसादो ऽयं कंसो ऽयं भगवान्वासुदेवः प्रविष्ट एताः

¹आतश्च सतो व्यामिश्रिताश्चेति । (भा)

यो हेतौ यतो विरुद्धपक्षाश्रिता दृश्यन्ते इत्यर्थः। नष्टेती-तत्वबुद्धौ तत्सम्भवतीति भावः। तत्कालस्मृते स्वपक्ष इव "वर्णा-न्यत्वं पुष्यन्ति" पुष्टं कुर्वन्ति दधतीत्यर्थः॥ तत्रैव युक्त्यन्तरमाह

१ आतश्च सतः व्यामिश्रा हि दृश्यते इति-व्यामिश्रिताश्च-इत्यपि पाठो दृश्यते॥

कंसादीन् साधनत्वेन मन्यत, इति॥ एवं राजानमागमयतीत्यादावपि बोध्यम्। राजानमागमयतीत्यादौ हि णिजभावात्तत्राप्येषैव गतिः। रात्रिं विवासयतीत्यत्रापि विचित्रकथाख्यानेन रात्रिरनेनैव गमितेति आरोपः। निशाग्निनायेत्यादौ च तत्राप्येषैव गतिः। सूर्यमुद्गमयतीत्यत्रापि प्रयोज्य-प्रयोजकभावाध्यारोपः तदालम्बनन्तु माहिष्मत्यां सूर्योद्गमनं लम्भयेत्येवं-रूपस्य देवदत्ताभिप्रेतार्थस्य निर्वृत्तिरेव। यो हि यस्य प्रवर्तकः स तस्याभिप्रेतं निर्वर्त्तयति। तत्र स्वभूत्यर्थं प्रवर्तमाना अपि शिष्यादयो गुर्वभिप्रेतमपि उद्दिशन्त्येव। सूर्यस्तु न देवदत्ताभिप्रेतोद्देशेन प्रवर्तत-

कंसकर्षिणो रज्जव एते उद्गूर्णा निपातिताश्च प्रहारा अयं हतः कंसो ऽयमाकृष्ट इति तेऽपि चित्रगतं कंसं ताडयन्त एव वासुदेवेन घातयन्ति, चित्रेऽपि हि तद्बुद्धिरेव पश्यताम्। एतेन चित्रलेखका व्याख्याताः, येऽपि ग्रन्थं वाचयन्तः कंसवधमाचक्षते काथिका नाम तदुत्पत्तिप्रभृत्याविनाशा-त्कंसादीन् वर्णयन्ति तेऽपि वर्णम[illegible]: श्रोतॄणां बुद्धिस्थाः प्रत्यक्षवद्भवन्ति चित्तमपि तेषां तदात्मकमिव भवति, अत एव व्यामिश्राश्च भवन्ति, नानापक्षसमाश्रयो व्याश्रयः, केचित्कंसभक्ताः केचिद्वासुदेवभक्ताः वर्णान्यत्वं खल्वपि पुष्यन्ति, केचिद्रक्तमुखाः केचित्कालमुखाः त्रैकाल्यमपि लोके लक्ष्यते, कथायां वा श्रूयमाणायां हि वक्तारो भवन्ति गच्छ हन्यते

**त्रैकाल्यं खल्वपीति।** (भा)

एवं च बुद्धिविषयः स तथैव सर्वोऽपि व्यवहार इति भावः॥

[1]**शब्देति।** (वृत्तिः)

शब्दसमर्पितबुद्धिविषयवधादेरित्यर्थः॥

## इति नागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

---

इति वङ्गदेशीयकाश्यपगोत्रोत्पन्न-चट्टोपाध्यायवंशसम्भव-बङ्गवल्लभ-शर्मविरचिते महाभाष्यप्रदीपोद्द्योतविषमपदव्याख्याने तृतीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम्॥

१ शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥ हरिः॥

इति वैषम्यम्। तथापि अभिप्रेतांशमात्रेण आरोपे न काचित् क्षतिः। एवं पुष्येण योजयतीत्यत्रापि ज्योतिःशास्त्रपरिशीलनेन पुष्य-योगस्य सर्वान्प्रत्यभिव्यक्तत्वात् योजयतीत्यारोपः।

कंसो गच्छ घातयिष्यते कंसः, किं गतेन हतः कंस इति तदेवं कार्थिकादि बुद्धिस्थेन वासुदेवेन घातयति श्रोतापि॥

शब्दोपहितरूपांस्तु बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥

एवं गाजानमागमयतीत्यादावपि यथासम्भवं द्रष्टव्यम्॥

# महाभाष्यप्रदीपोद्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।



कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



## कण्ड्वादिभ्यो यक् । ३ । १ । २७ ॥



कण्ड्वादिधातुभ्यो यकि गुणनिषेधकतया कस्य चारितार्थ्यादाद्
द्वैविध्यमिति ॥ (कै)

प्रातिपदिकत्वमात्रं तु प्रष्टामन्यते

कण्ड्वादिभ्यो यक् ॥ एभ्यो धातुभ्यो यक् स्यात्स्वार्थे । कण्डूञ् । कण्डूयति । कण्डूयते । न च कण्ड्वादीनि प्रातिपदिकान्येवेति वाच्यम् । गुणनिषेधार्थेन यकः कित्त्वेन तेषां धातुत्वसिद्धेः । न चैवं धातोरित्यनुवृत्त्यैव वैयर्थ्यमिति वाच्यम् । प्रातिपदिकानां वारणीयत्वात् । न चैते धातव एवेति वाच्यम् । कण्ड्वादिषु केषां चिद्दीर्घपाठेन प्रातिपदिकत्वसिद्धेः ।

"कण्ड्वादिभ्यो यक्"। यदीमे कण्ड्वादयो धातव एव स्युस्ततो वाग्रहणमनुवर्तते वा न वा, अनुवृत्तौ यगभावपक्षे लडादिषु सत्सु कण्डूवतीत्याद्यनिष्टं प्रसज्येत कण्डूरित्यादि च न स्यात्, धातोः सुबभावात्,

## उपक्षिप्यते इति । (कै)

तत्समाधानेनैव ककारप्रयोजनमप्युक्तमेव भवतीति भावः ॥

## यद्वेति । (कै)

प्रातिपदिकान्येवेत्यर्थः । केवलधातुपक्षे तु वा वचने क्रियमाणेऽपि कण्ड्वतीत्यनिष्टप्रसङ्गः । कण्डूञावित्यादावुवङादिप्रसङ्गश्चेति भावः । न च प्रातिपदिकान्येव सन्तु । अत्र च सूत्रे करण इत्यनुवर्त्तते कण्डूमकरोतीत्यर्थे यको ऽन्यदाऽभावः । तेन कंडूञावित्यादेः सिद्धिः । यगन्तेभ्यस्तु न क्विप् अनभिधानात् तेन

यदि हि धातव एव ते स्युस्तर्हि वाग्रहणं निवर्त्य नित्यो यगिति तावदास्थेयम् । अन्यथा पक्षादौ कण्डवतीत्याद्यनिष्टरूपप्रसङ्गात् । एवं स्थिते हलन्तादपि यकि मन्तूयतीत्यादिवदकृत्सार्वधातुके दीर्घत्वे कण्डूयतीत्यादिसिद्धेः किं दीर्घपाठेन । तस्मात् कित्त्वदीर्घाभ्यां ज्ञापकाभ्यां धातवः प्रातिपदिकानि चेति द्विविधाः कण्ड्वादय इति स्थितम् । उक्तञ्च भाष्ये । धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ॥ आह चायामिमं दीर्घं मन्ये धातुर्विभाषित इति । तत्र धात्वधिकारात् धातुभ्य एव प्रत्ययः स च नित्य इति सिद्धान्तः । स्यादेतत् । एषां प्रातिपदिकत्वमेवास्तु तज्ज्ञापनाय दीर्घपाठः प्रत्ययस्य कित्त्वञ्च । नचैवमकृत्सार्वधातुके दीर्घे क्ङिति विधीयमान इह न स्यादिति वाच्यम् । तत्र क्ङितीत्यस्य निवृत्तेः । न चैवमुरुया धृष्णुयेत्यादावतिप्रसङ्गः । तस्य छान्दसत्वात् । न च यको नित्यत्वे कण्डूरिति न

क्विबन्तात्सुपसम्भवेऽपि कण्डूरिति न वेदनामात्रं गम्यते कर्त्तरि क्विपो विधानात्, संपदादित्वाद्भावे क्विब् भविष्यति, एवमपि कण्ड्वौ कण्ड्वः, अचि श्नुधात्वित्युवङ् प्राप्नोति, कण्ड्वा कण्ड्वे 'नोङ्धात्वो'रिति विभक्त्युदात्त-

नोवङ् सहितः प्रयोगः । एवञ्च वा वचनं किमर्थमिति वाच्यं मुख्यतौत्यादावतो लोपानापत्तेः ॥

क्विपा । (कै)

सम्पदादिक्विपा ॥

यथेष्टमिति । (कै)

वीप्सायां "यथा सादृश्ये" इत्यव्ययीभावः ॥ एकवचने कुतो नोदाहृतमित्यत आह

कण्डूयेति (कै)

क्विपि क्वौलुप्तं न स्थानिवदिति निषेधादिति भावः ॥

सिद्धेदिति वाच्यम् । कण्डूयशब्दात्सम्पदादित्वाद्भावे क्वौ अल्लोपे लोपो-व्योरिति यलोपे च तत्सिद्धेः । न च यलोपेल्लोपस्य स्थानिवत्त्वं शङ्क्यम् । नपदान्तेति निषेधात् । न चैवमल्लोपस्य स्थानिवत्वादुवङ् स्यादिति वाच्यम् । सति स्थानिवत्वे अकारान्तस्यैव धातुतेति पूर्वदले उवङोप्राप्तेः । तर्हि यण् स्यादिति चेत् । अस्तु, तस्य ऊठ् करिष्यते । न च ऊठि कर्तव्ये अल्लोपस्य स्थानिवत्वेन क्विप्परत्वं नाप्नोति वाच्यम् । वकारस्य आदिष्टादचः पूर्वत्वात् । ननु स्थानिद्वारकमनादिष्टादचः पूर्वत्वमस्त्येव । न च तस्याश्रीयत्वा-द्नातिदेश इति माधवोक्तं युक्तम् । अनादिष्टादचः पूर्वत्वमाश्रित्य कर्तव्यस्य अचःपरस्मिन्नित्यतिदेशस्य शास्त्रीयतया स्थानिवत्सूत्रेण अतिदेशातिदेशस्य दुर्वारत्वात् । अन्यथा नपदान्तेति सूत्रे सवर्णग्रहणस्य वैयर्थ्यापत्तेरिति

निषेधः स्यात्, मन्तुर्वल्गुरित्यत्र च तुक् प्रसङ्गः, अथ नानुवर्तते कर्त्तरि इति न सिध्यति, यगन्तात्सम्पदादित्वाद्भावे क्विप्यल्लोपयलोपयोः कृतयोर्भवि-ष्यति, न चैवमल्लोपस्य स्थानिवत्त्वादुवङ् प्रसङ्गः, क्वौ लुप्तं न स्थानिवदिति

## अथापीति । (कै)

तदसार्वत्रिकं किन्तु क्वौ विधौ नेत्येव सार्वत्रिकमिति भावः। इदं प्रौढ्या। आदिष्टादिति क्वौ विधिमिति निषेधादित्यपि बोध्यम् ॥

## अत एवेति । (कै)

आदिष्टादचः पूर्वत्वेन स्थानिवत्त्वाभावादेवेत्यर्थः ॥

## पुनरुवङ्नेति । (कै)

लक्ष्ये लक्षणस्येति त्यागादित्यपि बोध्यम् ॥ न चानादिष्टादचः पूर्वत्वं स्थानिवद्भावेन लभ्यम्। वस्यादेशत्वाभावात्। उवङ् आदेश-

त्वेन। स्थानिद्वारकस्य अनादिष्टादचःपूर्वत्वस्य असार्वत्रिकतायाः प्रागेव निर्णीतत्वात्। अत एव ऊठि कृते पुनरुवङ् न। यदा क्वौ लुप्तं न स्थानिवदिति निषेधाग्रयैव मास्तु। नन्वेवमपि कण्ड्वादित्वाद्वौ संयोगपूर्वकत्वेन ओःसुपीत्यस्याप्रवृत्तौ उवङ्स्यादिति चेत्। अस्तु, क्विपः प्रत्ययलक्षणेनोठं करिष्यामः। तस्मात् प्रातिपदिकान्येवैतानि दीर्घकित्वे च निष्पन्ने इति चेत्। नैवम्। उवङो बहिरङ्गत्वेनासिद्धतया ऊठो दुर्बलत्वात्। किञ्चोष्ठ-यौष्ठा हि कण्डूरितिवत् मन्तुरित्यादि स्यात् मन्तुरित्यादि न च सिद्ध्येत्। अथ धातोःकर्मणः इत्यतो वाग्रहणमनुवर्तेत तर्हि यद्यपि मन्तुरित्यादि रूपं सिद्धं तथापि कण्डूरितिवल्लोपयलोपाभ्यां मन्तूरित्यपि स्यात्। तथा यगनुत्पत्तिपक्षे मन्तुरित्यादिवत् कण्डुरित्यपि स्यात्। किञ्च सुखा-

वचनात्। ननु च क्वौ विधिं प्रति स प्रतिषेधः, अन्यथा लवमाचक्षाणो लौरित्यत्रक्वौलुप्तस्यणेः स्थानिवत्त्वाभावेपि णौ कृतस्य टिलोपस्य स्थानिवत्त्वादूठ् न स्यात्, अत्रोत्र स्थानिवत्त्वे सत्युवङ् स्यादेव, अस्तु, क्वोः शुद्धि-

ल्वेऽपि तस्य कार्य्याभावात्। न च सर्वे सर्वपदादेशा इति कण्डू इत्यस्य कण्डुवादेशे तस्य स्थानिवत्त्वादनादिष्टादचः पूर्वत्वेन तस्य कण्डूय इत्यादेशे कार्य्ये स्थानिवत्त्वं सर्वे सर्वपदादेशा इत्याश्रित्याचः परस्मिन् इत्यस्याप्रवृत्तेः। अत एव स्वरादिग्रहणस्य व्यवहितसाधारणपूर्वत्वग्रहणज्ञापकता आकरोक्ता सङ्गच्छते। न च प्रातिपदिकानीत्युपक्रम्य भाष्ये वा वचनात् यदा कण्ड्वादीनि प्रातिपदिका-

---

दिभ्यो यप्रत्यये तस्य अनार्द्धधातुकत्वादतोलोपाभावे अकृत्सार्वेति दीर्घे सुखायतीत्यादि स्यात्। सुख्यतीत्यादि चेष्यते। अथ हलन्तमेव पठ्येत, तर्हि सुखं दुःखमित्यकारान्तं न सिध्येत्। तस्माद्यथान्यासमेव मनोरमम्। नन्वेवमपि प्रातिपदिकैः कण्ड्वौमन्तुरित्यादि यद्यपि सिद्धं तथापि यगन्तेभ्यः क्वौ अनिष्टं स्यादेव। तद्यथा। कण्डूयतेः कण्डुवौ कण्डुवः। मन्तूयतेः मन्तूः सुखादेः सुगित्यादि हलन्तम्। नैष दोषः। यगन्तेभ्यः क्विप एवानुत्पत्तेः। उक्तं हि भाष्ये। नैतेभ्यः क्विप् दृश्यत इति। कथन्तर्हि कण्डूयतेरप्रत्ययः कण्डूरिति मयदान्तसूत्रे उक्तमिति चेत्। क्यजन्तात्क्विपत्ययेहि तत्र च कण्डूवावित्युवङिष्ट एव। एवं प्रातिपदिकादाचारक्विबन्तात्क्यङन्ताद्वा क्विप्यपि बोध्यम्। स्यादेतत्। कण्ड्वादयः प्रातिपदिकान्येव यथान्यासं दीर्घाश्च सन्तु। ककारस्तु त्यज्यतां वाग्रहणञ्चानुवर्त्यताम्। यगन्तात्क्विपोनभिधानञ्च आवयोस्तुल्यं तत्किं कण्ड्वादीनां

त्यूठ् करिष्यते, न चोठ्यपि कर्तव्ये स्थानिवत्त्वं, तस्य क्वौ विधित्वाद् आदिष्टादचः पूर्वत्वाच्च, अत एवोठि कृते पुनरुवङोप्रसङ्गः, एवमपि कण्ड्वौ कण्ड्वः कण्ड्वा कण्ड्वे, धातुविधिः प्राप्नोति, मन्तुर्वल्गुरिति च न सिद्धति यकि दीर्घे कृते मन्तूर्वल्गुरिति स्यात्, अथ प्रातिपदिकान्येव, तत्रापि

नीत्यादिना स्वयं तथैव व्याख्यानाच्चाल्लोपस्य स्थानिवत्त्वेऽपि तत्र परे पूर्वस्य कण्डू इत्यस्य धातुत्वाभावादुवङोऽप्राप्त्याऽसङ्गतोऽयं कैयटः। स्पष्टं चेदं लोपो व्योरिति (६।१।६६) सूत्रे कैयटे इति वाच्यम्। अतिदेशेनाकारे सत्यपि श्रवणाभावेन तस्य लौकिकसत्त्वाविरहात्। छिन्नपुच्छश्वदृष्टान्तमूलकेन प्राग्दीव्यतोऽणिति सूत्रभाष्योक्तेनैकदेशविकृतन्यायेन कण्डू इत्यस्य धातुत्वमित्यभिमानात्॥

---

धातुत्वेनेति चेत्, उक्तरीत्या सुख्यतीत्याद्यसिद्धेः, प्रातिपदिकात्प्रत्यये तस्यानार्द्धधातुकत्वेन सुखायतीति स्यादिति हि स्पष्ट एव दोषः। यत्तु कौमुद्याम्। कृञर्थे यक् स्यात्। धातवः प्रातिपदिकानि चेति कण्ड्वादयो द्विविधाः। कण्डूं करोति कण्डूयते। नामधातुत्वाद्यथेष्टं द्वित्वे प्राप्ते कण्ड्वादेस्तृतीयस्य इत्युक्तं तदेतत्सर्वमाकरविरुद्धमनेकदोषग्रस्तञ्च। तथाहि। कृञर्थ इति व्याख्यानेन करणे इत्यस्यानुवृत्तिर्लभ्यते तच्च स्वयं धात्वर्थमात्रस्यानुवृत्तिं विनापि लाभात्। ततोतिरिक्तस्य चानन्वयात्। एवञ्च कण्डूं करोतीति विग्रहप्रदर्शनमप्ययुक्तम्। नामधातुत्वादिति च सुतरामशुद्धम्। धात्वधिकाराद्धातुभ्य एव यगिति सिद्धान्तात्। अथ प्रातिपदिकादेव यकमभ्युपैषि तर्हि लङादौ कण्डूवतीत्यादि स्यात्। अथ प्रातिपदिकान्येव कण्ड्वादीनीत्यभिप्रैषि तर्हि सुख्यतीत्यादि न सिद्ध्येत्। द्विविधाः कण्ड्वादय इति स्वोक्तिविरोधश्च। आकरविरोधस्तु स्पष्ट

---

वाग्रहणाननुवृत्तौ स एव दोषो यो धातुपक्षे, अनुवर्त्ततां तर्हि वाग्रहणं सन्तु च प्रातिपदिकान्येव तत्राप्ययमर्थः ककारो नानुबन्धश्चो भवति अनार्द्धधातुकत्वादेव गुणो न भविष्यति, नैवं शक्यम्, इह हि सुख्यति दुःख्यति महीयतीत्यतो लोपो न स्याद् अनार्द्धधातुकत्वादेव, न च अन्न-

**तत्रेति ।** (कै)

औत्वनिमित्तक उवङ् प्राप्नोति । एकदेशविकृतन्यायेन कण्डू इत्यस्य धातुत्वात् न चैतन्निमित्ते उवङि अलोपस्य स्थानिवत्त्वम् क्वौ लुप्तमिति निषेधादिति भावः ॥ भाष्ये

**ह्रस्वस्य पितीति ।** (भा)

ह्रस्वोच्चारणसामर्थ्याद्दीर्घाभावं मन्यते तद्ध्वनयन्नाह

**ह्रस्वयलोपौ चेति ॥** (भा)

**अन्तरङ्गत्वादिति ।** (भा)

अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः ॥

---

एवं व्याख्यातं तावत् । मान्यास्तु अनेकदोषदुष्टमपीमं प्रक्रियाप्रघट्टकं कथञ्चित्समर्थयन्ते । तद्यथा । प्रातिपदिकान्येव कण्ड्वादयः तेभ्यश्च वैकल्पिको यक् इति पक्षान्तरार्थं ग्रन्थः । अत एवोक्तं छन्दर्थ इति विगृहीतश्च कण्डूं करोतीति च । नहि धातुभ्यो यकि प्रातिपदिकेभ्यो वा नित्ये यकि अयं विग्रहः सम्भवति । एवञ्च नामधातुत्वादित्याद्यपि सम्यगेव । कथन्तर्हि द्वैविध्यमुक्तमिति चेत् । यगन्ताः सन्तो धातवः । केवलास्तु प्रातिपदिकानीत्याशयात् । यद्वा यगन्तधात्ववयवेषु तेषु धातुशब्दो गौणः । प्रत्ययसदसद्भावाभ्याम् अवस्थाभेदाद् द्वैविध्यम् । न चैवं सुख्यतीत्यादौ अतोलोपो न स्यादिति वाच्यम् । यकः कित्त्वेन आवश्यकत्वाल्लाघवाच्चार्द्धधातुकत्वस्यैव ज्ञापनात् । अत एव द्विविधा इत्येवोक्तं न तु धातुभ्य एव यगिति । तदिदं

---

नान्त एव प्रश्नः पठितुं यगभावपक्षेऽपि तथा प्रयोगप्रसङ्गादत उभये कण्ड्वादय इत्याह । 'द्विविधाः कण्ड्वादय इति' । 'धातुभ्य एव प्रत्ययो विधीयतीति' । नित्यमिति भावः । तेन पक्षे कण्डूवतीत्यादि न भवति ।

**वेरपृक्तलोपादिति । (कै)**

इदं क्वाप्तीति लोपो व्योरिति (६।१।६६) सूत्रे क्वावुपसंख्यानमितिवार्त्तिकम् ॥

**कर्त्र्यर्थानवगमादिति । (कै)**

यत्र तु कर्त्र्यर्थावगमस्तत्र भवत्येव । अथ भिषज्यतेः क्विपि भिषक् शब्द इत्याहुः ॥ केचित्तु इदं भाष्यं क्विबन्तपरमेवेत्याहुः ।

**संपदादित्वादिति । (कै)**

तेन वेदनामात्रप्रतिपादनेऽपि कण्डूरित्यादि सिद्धमिति भावः ॥ भाष्ये

---

भाष्यादिविरुद्धमपि लक्ष्ये विसंवादाभावादस्तु कथञ्चित् । अथोदाहरणानि । कण्डूञ् गात्रविघर्षणे । अवयवे कृतं लिङ्गं समुदायं विशिनष्टि । एवमग्रेऽपि । कण्डूयति । कण्डूयते । मन्तु अपराधे । रोष इत्येके मन्तूयति । चन्द्रस्तु ञितं पठित्वा मन्तूयते इत्यप्याह । वल्गु पूजामाधुर्ययोः । वल्गूयति । तद्वल्गुना युगपदुन्मिषितेन । असु उपतापे । असूयति । असूयुः स्मरगत्रादयस्त्यप्रत्यय इति माधवः । एतेन मन्तुः प्रज्ञायिवाक्यानि गृह्णन्ति ह्यनसूयव इति भट्टिप्रयोगो व्याख्यातः । केचित्तु असूञ् इति पठित्वा आद्यस्य सान्तस्य असूयति, द्वितीयस्य दीर्घान्तस्य असूयति असूयते इत्याहुः लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च । लेट्यति ।

---

'न तु प्रातिपदिकेभ्य इति' । तेन कण्ड्वौ कण्ड्वो मन्तुरित्यादिप्रयोगसिद्धिः, न चास्मिन्नपि पक्षे यगन्तात्सम्पदादिक्विब्विधीयते तदा पूर्वोक्तदोषानुषङ्गः, किं कारणं दृषिग्रहणादेतेभ्यः क्विप् स्याद् न चैतेभ्य इदानीं क्विब् दृश्यते, पूर्वत्र तु पक्षे कण्डूरित्यादिसिद्ध्यर्थमेव क्विब् द्रष्टव्यः । कथं पुनर्ज्ञायते

**एतानीति ।** (भा)

कण्डूरित्यादीनि दीर्घान्तप्रथमैकवचनान्तानीत्यर्थः ॥ एवमपि कंड्वादित्याद्यर्थं वा वचनं कर्त्तव्यमेवेत्याह

**तत्रहीति** (भा)

भाष्ये "उभयं कंड्वादीनीति" उभययेत्यर्थे उभयमित्यव्ययं द्विप्रकाराणीत्यर्थः ॥ उभयाङ्गीकारे प्रमाणमाह

लोट्यति । लेटिता लोटिता । अल्लोपयलोपौ । केचित् लेट्लोटौ दीप्त्यर्थावाहुरिति माधवः । पूर्वभावः पूर्वत्वम् । अत्र केचित् पूर्वशब्दं प्रकृतिनिर्देशार्थमाश्रित्य पूर्व्यतीत्युदाहरन्ति । तथा चान्तःकरणवृत्तिवर्गे भट्टमल्लेनोक्तम् । शेते द्रायति निद्राति सस्ति स्वपिति पूर्व्यति । निद्रायते संविशति निद्रायां मन्ति सन्दते इति ॥ अस्यार्थो धातुचन्द्रोदये उक्तः । शेतेप्रभृतीनि दशाख्यातानि निद्रायाम् । षस स्वप्ने अदादिः षसि प्रयनइत्येके पेट्टिति तत्रैव क्षीरस्वामी पूर्व्यतीति कण्ड्वादियगन्त इत्यादि । तथा देवेनाप्युक्तम् । पूर्व्यतीति तु यत्स्वप्ने तत् कण्ड्वादिषु दर्शनादिति । एतच्च अमोघायां शाकटायनधातुवृत्तौ अर्थनिर्देशरहिते गणपाठे पूर्वस्य पाठाभावादयुक्तमिति पुरुषकारैरेव दूषितम् । युक्तञ्चैतत् । जयादित्येनापि लेट्लोट् इत्येव पाठात् । हरदत्तेन च धौर्त्ये पूर्वभावे स्वप्ने चेति तद्विवरणात् । एतेन बुद्धिवर्गे मनस्तागोचरीकारे मनस्विते मनस्यतीति भट्टमल्लोक्तिरपि प्रत्युक्ता । न्यायसाम्यात् जयादित्येन हि

उभये कण्ड्वादय इति तच्छ्लोकेन दर्शयति । 'धातुप्रकरणादिति' । अनुवृत्तेन धातुग्रहणेन विशेषणात्कारासम्भवाच्च धातुत्वमेषामभिमतमिति विज्ञायत इत्यर्थः । यतस्तु स्वल्पमाचार्यः क्वचिद्दीर्घमुच्चारयति कण्डूञ् इयोञ् मह्नीङित, ततो मन्ये धातुर्विभाषित इति, धातुत्वमेषां

आतश्चेति ॥ (भा)

ननु भावक्विबन्तेन वेदनामाचे कण्डूरित्यादिसिद्धिरत आह

सत्त्वरूपेति । (कै)

सैवेत्यर्थः ॥ भावक्विबन्ते हि प्रकृत्या साध्यरूपेणापि प्रतीतिः स्यादिति भावः ॥ एवं चैतेभ्यो भावे क्विब् नास्त्येवेति तत्त्वम् ॥

---

असु इत्येव निर्दिष्टम्। हरदत्तेन तु अथ कण्ड्वादीनामर्थनिर्देश इत्युपक्रम्य कण्ड्वादीन् विवृण्वता असु इति प्रतीकमुपादाय मानस उपतापे इति विवृतम्। अत एव असु मनस उपतापइति पठतामपि मनस इति षष्ठ्यन्तमुपतापविशेषणम्। न तु प्रकृतिनिर्देशः। वृत्तिपदमञ्जर्यादिविरोधात्। धातुचन्द्रोदयकारस्य तु मनस्यतीति कण्ड्वादियगन्तमिति भूयसा ग्रन्थसन्दर्भेण व्याचक्षाणस्यापि तत्रापरितोषोऽस्त्येव। अत एव मनस्यते इति पाठमाश्रित्य मनःशब्दाद्वृत्तिविषये तदतिवर्तमानात् क्यङमुक्त्वा इदं शोभतेतरामित्युपसञ्जहार। लेला दीप्तौ। ध्यायतीव लेलायतीवेति श्रुतिः। इरस इरज इरञ् ईर्ष्यायाम्। इरस्यति। इरज्यति। ईर्यति। ईर्यते। हलि चेति दीर्घः। एषां त्रयाणां यथायथमन्येऽप्यर्थाः सन्ति। तथाहि। इरज्यन्नग्ने प्रथयस्व जन्तुभिरिति मन्त्रे दीप्त्यर्थोऽयमिति भट्टभास्करादयः। इरज्यन्तावसव्यस्य भूरेरिति मन्त्रऐश्वर्यार्थ इति। ईर्यतिर्मार्गविस्तारणेऽपि। उक्तञ्चामरेण चर्यात्वीर्यापथिस्थितिरिति। इयस् ऐश्वर्यइति गणरत्नमहोदधौ। इयस्यति। उषस

---

विभाषितमिति मन्य इत्यर्थः। अथ कण्ड्वादीनामर्थनिर्देशः। कण्डूञ् गात्रविघर्षणे। मन्तु अपराधे। हृणीङ् रोषे। वल्गु पूजामाधुर्ययोः। असुमनस् उपतापे। महीङ् वृद्धिपूजनयोः। लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने। इरस

स्वार्थे इति । (कै)

नित्यमिति शेषः ॥ वा ग्रहणमनुवृत्तिः । तेन पक्षे कण्डूवतीत्यादिर्न ॥

आर्धधातुकसंज्ञेति । (कै)

न च धापि मास्तु कोऽपि मास्त्विति वाच्यं सुख्यतीत्यादावतो लोपार्थं तस्या आवश्यकत्वात् ॥

---

प्रभातीभावे । उषस्यति रात्रिः । वेद धौर्त्ये स्वप्ने च । वेदयति । मेधा आशुग्रहणे । मेधायति । कुषुभ क्षेपे । कुषुभ्यति । मगध परिवेष्टने । नीच दास्य इत्यन्ये । मगध्यति । तन्तस् पम्पस् दुःखे । तन्तस्यति । पम्पस्यति । सुख दुःख तत्क्रियायाम् । तच्छब्देन सुखदुःखार्थौ । सुखदुःखरूपायां क्रियायामित्यर्थः । सुख्यति । दुःख्यति । सुखं दुःखं चानुभवतीत्यर्थः । सपर पूजायाम् । अकारान्तोयं महीदेधो । सपर्यति । अरर आराकर्मणि । आरा प्रतोदः । अरर्यति । भिषज् चिकित्सायाम् । भिषज्यति । भिष्णज उपसेवायाम् । भिष्णज्यति । सारस्वती त्वा मघवन्न भिष्णक् । छान्दसो लुक् । इषुध शरधारणे । इषुध्यति । चरण वरण गतौ । चरणयति वरणयति । चुरण चौर्ये । चुरणयति तुरण त्वरायाम् । तुरण्यति । भुरण धारणपोषणयोः । रणधारणयोरित्यन्ये भुरण्यति गद्गद वाक्स्खलने । गद्गद्यति । एला केला खेला विलासे । एलायति । केलायति । खेलायति । एला स्यानइलेत्यपरे । इलायति । लेखा स्खलने च । लेखायति । अकारान्तोयमित्यन्ये । तत्रातोलोपः । लेख्यति । लिट

---

इरज् इरस् ईर्ष्यायाम् । इवस् परिचरणे । मेधा आशुग्रहणे । कुषुभ क्षेपे । मगध परिवेष्टने । तन्तस् पम्पस् दुःखे । सुख दुःख तत्क्रियायाम् । सपर पूजायाम् । अरर आराकर्मणि । भिषज् चिकित्सायाम् । भिष्णज्

## दीर्घपाठ इति । (कै)

वल्गु मन्तु प्रभृतीनां ह्रस्वपाठः प्रातिपदिकविषये चरितार्थ इति तेषामपि दीर्घो भवति। यत्तु केषाञ्चिद्दीर्घपाठेन वल्गु-प्रभृतीनां दीर्घाभावो ज्ञायते तन्न भाष्यविरोधात्। शास्त्रबाध-कल्पनापेक्षया प्रातिपदिकत्वकल्पनस्यैव लघुत्वाच्च। एतेन ककारे-णार्धधातुकत्वमेव कल्प्यतामित्यपास्तं धातुत्वकल्पनस्यैव लघुत्वात्॥

---

अल्पकुत्सनयोः। लिख्यति लाट जीवने। लाट्यति। हृणीङ् रोषणे लज्जायाञ्च। कथं न पद्या धरणी हृणीयत इति श्रीहर्षः। महीङ् पूजायाम्। अत्र पूजा पूज्यमानकर्तृका तेनायमकर्मकः। महीयते पूजामधिगच्छतीत्यर्थः। मातापितरौ चास्य स्वर्गे लोके महीयेते इति भाष्यम्। रेखा श्लाघासादनयोः। आसादनं प्राप्तिः प्रापणं वा। रेखायति। श्लाघामनुभवत्यनुभावयति वेत्यर्थः। द्रवस परितापपरि-चरणयोः। द्रवस्यति। तिरस् अन्तर्धौ। तिरस्यति। अगद नीरोगत्वे। अगद्यति। उरस् बलार्थः। उरस्यति, बलवान् भवतीत्यर्थः। तरण गतौ। तरण्यति। पयस् प्रसृतौ। पयस्यति। सम्भूयस् प्रभूतभावे। सम्भूयस्यति। अम्बर संवर सम्भरणे। अम्बर्यति संवर्यति। गणस्त्वमहीदयौ आकृति-गणत्वात् दैधबलादिभ्यो यकि रायति धवल्यतीत्याद्युक्तम्। कण्ड्वादीनां तृतीयस्य द्वे इति वक्ष्यते। तेन सनि कण्डूयियिषतीत्यादि॥

उपसेवायाम्। इषुध शरधारणे। चरण भुरण गतौ। तुरण त्वरायाम्। चुरण चौर्ये च। भुरण धारणपोषणयोः। गद्गद वाक्स्खलने। एला केला खेला विलासे। लिट् अल्पार्थे कुत्सायां च। लोट् दीप्तौ॥

# कमेर्णिङ् । ३ । १ । ३० ॥

भाष्ये

णिङ्करणमपि सावकाशमिति । (भा)

एवं च परत्वाद्वृद्धिः प्राप्नोतीति भावः ॥

यदयमिति । (भा)

ह्रस्वनिषेधो ह्रस्वाभावफलकः । वृद्ध्यभावे स्वत एव ह्रस्वसत्त्वा-पत्तेः । स वृद्धिमतां ज्ञापयतीत्यर्थः ॥ ननु णिच्येवेत्ययुक्तप्रतिषेध-प्रवृत्तौ ह्रस्वस्यैव भावादत आह

कमेर्णिङ् ॥ स्वार्थे । कामयते । नन्विह अत उपधाया इति वृद्धेः ङ्क्ङिति चेतिनिषेधः प्राप्नोति न च णित्वसामर्थ्याद्वृद्धिः । णेरनिटीति-विशेषणेन चरितार्थत्वात् । न च ङकारोऽप्यात्मनेपदेन चरितार्थ इति वाच्यम् । तावता प्रतिषेधस्य बलीयस्त्वानपायात् । न च कमेर्मित्संज्ञा-प्रतिषेधार्थं न कम्यमिचमामितिवचनं वृद्ध्यभावे व्यर्थं सत् वृद्धिमिह

---

"कमेर्णिङ्" ॥ इह णिङो णकारो 'णेरनिटी'ति विशेषणे चरि-तार्थो ङकारोऽप्यात्मनेपदार्थ इत्युभयोश्चरितार्थयोः प्रतिषेधबलीयस्त्वा-'दत उपधाया' इति वृद्धेः 'क्ङिति चे'ति प्रतिषेधः प्राप्नोति, ज्ञापका-त्सिद्धं, यदयं 'न कम्यमिचमा' मिति कमेर्मित्संज्ञायां प्रतिषेधं शास्ति तत् ज्ञापयति भवत्यत्र वृद्धिरिति, तस्य हि प्रयोजनं 'मितां ह्रस्व' इति ह्रस्वो मा भूदिति, यदि चात्र वृद्धिर्न स्याद् ह्रस्व एवोपधेति कृत्वा मित्संज्ञा-

णिङ्निमित्तेति । (कै)

तान्त्वसौमन्यते ह्रस्व इति वृद्धेरसिद्धत्वे ह्रस्वस्य ह्रस्वे प्रयोजनाभावात्तस्यां प्रवृत्तौ ज्ञापकत्वमेवस्थितमिति भावः ॥ ननु पर्जन्यवल्लक्षणप्रवृत्तेर्ह्रस्वदृष्टावपि प्राप्तह्रस्ववारणेन दीर्घश्रवणाय मित्त्वनिषेधः सार्थकः ॥ अन्यारुचेराह भाष्ये

नैव वेति ॥ (भा)

प्रत्ययविधावेवेति । (कै)

पारिषीय इत्यादौ ॥ भाष्ये

इदं तर्हि प्रयोजनं यत्तच्चिण्णमुलोरिति । (भा)

मित्संज्ञाप्रतिषेधस्येति शेषः ॥ चिण्णमुलोरित्यत्र ह्रस्वघटितत्वाद्दोषमाह भाष्ये

ज्ञापयतीति वाच्यम् । णिङन्तात्कृतयोः कृतयोः चिण्णमुलोर्दीर्घोन्यतरस्यामिति वैकल्पिके दीर्घे प्राप्ते तन्निवृत्त्या मित्त्वप्रतिषेधस्य सार्थक्यात्, न च तत्र दीर्घग्रहणं परित्यज्य प्रकृतो ह्रस्व एव विकल्प्यताम् । तथा च कमेर्मित्संज्ञाप्रतिषेधोपि मास्त्विति वाच्यम् । णिजन्तात्कृतादा णिचि सति ततश्चिण्णमुलोः अकामि अकामि कामं कामं कामं कामम्

प्रतिषेधो ऽनर्थकस्स्यात् । नैतदस्ति ज्ञापकं यदा णिङन्ताद्धेतुमण्णिच् क्रियते तदा णिङन्तस्य णिचि या वृद्धिस्तस्या ह्रस्वो मा भूदित्येवमर्थमेतत्स्यात्, न च णिजपेक्षाया अपि वृद्धेर्णिङमेव ङितमपेक्ष्य प्रतिषेधः, किं कारणं, ङितीति निमित्तसप्तमी, ननु च न णिङन्तस्य णिचि वृद्ध्या भवितव्यं णिङा व्यवहितत्वात्, णिलोपे कृते स्थानिवद्भावाद्व्यवधानमेव, यदा तर्हि णिङन्ताच्चिण्णमुलौ भवतस्तदा 'चिण्णमुलोर्दीर्घो ऽन्यतरस्या'-

**णिङ्व्यवहितेष्विति ॥** (भा)

**पाक्षिकेति ।** (कै)

वृद्धेर्वैकल्पिकत्वार्थं वृद्धिर्वेत्युपसंख्यानं कर्त्तव्यमित्यर्थः ॥ दीर्घविधाने तु कृतह्रस्वस्य दीर्घविधानात् सिध्यतीति भावः ॥ भाष्ये

**दीर्घविधिं प्रतीति ।** (भा)

न पदान्तसूत्रे तस्यादिमाहचर्य्येण त्रैपादिकदीर्घस्यैव ग्रहणेन पूर्व्वत्रासिद्धे न स्थानिवदित्याश्रित्य भगवता न पदान्तसूत्रे तेषां प्रत्याख्याते न च स्थानिवत्त्वनिषेधाप्रसक्तेरिदं भाष्यमेकदेश्युक्तिरिति नार्थसाधकम् । णिजन्ताणिचि उपसंख्यानेन सिद्धं ग्रामं ग्रामं

---

अग्रंग्रामि अग्रंग्रामि, ग्रंग्रमं ग्रंग्राममिति रूपद्वयस्य दीर्घग्रहणं विना अनिर्वाहात् । दीर्घविधिम्प्रति हि णियङ्लोपस्य न स्थानिवत्त्वं न पदान्तेति निषेधात् । ह्रस्वविधिम्प्रति तु स्थानिवत्त्वे सति णिसमुत्परस्य णिचः णियङ्भ्यां व्यवधाने ह्रस्वविकल्पो न प्रवर्त्तेत । यथाश्रुतसूत्ररीत्या चेदम् । पूर्व्वत्रासिद्धीयेनेत्युक्त्वा सवर्णानुस्वारादिग्रहणं न कर्तव्यमिति

---

मित्येव विधिर्मा भूदित्येवमर्थो मित्संज्ञाप्रतिषेधः स्यात्, किं पुनः कारणं तत्र दीर्घान्यतरस्यामित्युच्यते न प्रकृतो ह्रस्व एव विकल्प्येत, एवं हि कमेर्मित्संज्ञाप्रतिषेधो न कर्त्तव्यो भवति, कथं यदा णिङि वृद्धिर्नास्ति तदा ह्रस्व एवोपधेति सत्यपि ह्रस्वविकल्पे नैवानिष्टप्रसङ्गः, अग्रामि अग्रामीत्यादि च सिद्धं, नैवं शक्यं, यदा ग्रमिप्रभृतिभ्यो णिजन्तेभ्यो द्वितीयो णिच् क्रियते तदा न स्यात्, यस्य समुत्परो णिच् द्वितीयो न तस्मिन् प्रथमेन णिचा व्यवहितत्वात्, यस्मिंश्च मितकृं प्रथमे णिचि नासौ णिसमु-

ग्रामंग्राममित्याद्यपि यङ्लुगन्तात्णमुलि सिद्धम् । न च चिण्णमुलो-रित्यत्र दीर्घविधानसामर्थ्याद्वैपादिकेऽपि निषेध इति वाच्यं हेडधातोराहेडि आहोडि इति साधनेन चारितार्थ्यात् । ह्रस्वविधाने ह्वहेडीतिस्यादिति बोध्यम् । केचित्तु तद्भाष्यप्रामाण्यात् तत्रत्य वार्तिके वरे यङ्लोपस्वरवर्जमित्यत्र दीर्घोऽप्युपलक्षणीय: ॥

## एतदिदानीं दीर्घग्रहणस्य प्रयोजनमिति । (भा)

अत्रत्य भाष्यस्वारस्याद् हेडधातोर्घटादिषु प्रामाणिकपाठः । जकारसूत्रस्थं भाष्यप्रामाण्याच । न पदान्तेति सूत्रस्थभाष्यप्रामा-

---

पक्षे तु णिजन्तास्सिचि स्थानिवद्भावात् सिद्धम् । प्रंग्रामं प्रंग्राममिति तु यङ्लुगन्तात्णमुलिति नपदान्तसूत्र एवावोचाम । अस्मिन्निष्कृष्टपक्षेऽपि चिण्णमुलोरितिसूत्रे दीर्घग्रहणं कर्तव्यमेव । तथाहि । हेडृ अनादरे घटादिः । एच इक् । हिडयति । अत्र चिण्णमुलोः कृतयोः ह्रस्वे विकल्प्यमाने अहिडि अहेडीति स्यात् । दीर्घे तु अहीडि अहोडि इति भवति । एवञ्च कर्मेऽपि चिण्णमुलोः दीर्घविकल्पे प्राप्ते तद्बाधकस्या

---

मुलपरो द्वितीयेन व्यवहितत्वात्, णिलोपेऽपि कृते स्थानिवद्भावाद्व्यवधान-मेव, दीर्घोऽन्यतरस्यामित्युच्यमाने पुनः आपि भवतिर्दीर्घविधिं प्रति स्थानि-वद्भावनिषेधात्, तथा शमिप्रभृतिभ्यो यङन्तेभ्यो णिच्लोपयलोपयोर-लोपस्य स्थानिवद्भावादसत्यां वृद्धौ चिण्णमुलोः कृतयोः प्रंग्रामि अप्रंग्रामि प्रंग्रामं प्रंग्राममिति न स्यात्, दीर्घः पुनर्विकल्प्यमानोऽपि भवति तद्विधौ स्थानिवद्भावप्रतिषेधात्, तथा हेडृ अनादरे घटादिः, 'एच इग्घ्रस्वादेशे' हिडयति तत्र चिण्णमुलोः कृतयोर्ह्रस्वे विकल्प्यमाने अहिडि अहेडीति

आहुः । णिचश्चुक्लोरिति सूत्रस्य भाष्यार्थेति यथाश्रुतभाष्यं रमणीयमेवेत्याहुः ॥

तस्मात्प्रतिषेधः प्राप्नोति (भा)

इत्यस्य तन्निषेधो वक्तव्य इति शेषः । अत एवोक्तं वेति वा शब्दः संगच्छते ॥

कृतार्थो मित्त्वनिषेधो वृद्धिं ज्ञापयितुं नालम् । किञ्च आयादय आर्द्धधातुकेवेति णिङभावे णिचि कृते वृद्धौ सत्यां मितांह्रस्वइति ह्रस्वं वारयितुं मित्संज्ञाप्रतिषेधः, सर्वथा ऽपि नायं वृद्धेर्ज्ञापकः । तस्मात् ञ्णितिचेति निषेधं वारयितुं कश्चिदुपायो वक्तव्य इति चेत् । सत्यम् । उक्त एवासौ तद्धितकाम्योरिक्प्रकरणादिति ॥

स्यात् दीर्घे तु पुनरश्विडि अचीकमीति भवति, तस्माद्दीर्घ एव विकल्पनीयः ततश्च मित्संज्ञाप्रतिषेधोपि तन्निवृत्तये वक्तव्यः, तथा 'आयादय आर्द्धधातुके वे'ति णिङभावे णिचि सति वृद्धौ कृतायां 'मितां ह्रस्व' इति ह्रस्वो मा भूदित्येवमर्थोपि मित्संज्ञाप्रतिषेधो वक्तव्य एवेत्यज्ञापकमेतत् । एवं तर्ह्युत्थानेयं यत्नः क्रियते नैवात्र प्रतिषेधः प्राप्नोति, किं कारणमिग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, न चैषा इग्लक्षणा वृद्धिरित्यत्रमति कार्य्यप्रक्रियातत्त्वानुसरणेन ।

# आयादय आर्द्धधातुके वा । ३ । १ । ३१ ॥

आयादयविषयसप्तम्यां विचारानारभमाणादाह

परेति । (कै)

आयादिभ्य आर्द्धधातुके सिद्धेऽस्य विध्यभावात् निवृत्तिर्विधेया तदर्थैतदुपादानं कार्य्यमित्याह

निवृत्तौति ॥ (कै)

उत्पत्तिशब्दो वेति । (कै)

अस्य प्रयोजनं चिन्त्यम् । सर्वत्र विधिवाक्ये तदभावेऽप्युत्पत्त्यव-गतेः । एकतरपक्षे ऽधिककर्त्तव्यतायामेव भाष्यतात्पर्य्यार्थाच्च । क्वचिदनुत्पत्तिशब्दो वेति पाठः । आपाद्य आवृत्त्यैव सिद्धे आयादय

आयादय आर्द्धधातुके वा ॥ आर्द्धधातुकविवक्षायामायादयो वा स्युः । जुगोप । गोपायाञ्चकार । आनर्त । ऋतीयाञ्चक्रे । कामयाञ्चक्रे । चकमे । इहार्द्धधातुक इति यदि परसप्तमी स्यात् तदा प्रवृत्ता आया-

"आयादय आर्द्धधातुके वा" ॥ आर्द्धधातुक इति परसप्तम्यामाया-दिविधिभिरेकवाक्यता स्यात्, भिन्नवाक्यतायामसमर्थो भवति, गुपादिभ्य आर्द्धधातुके परतो वा ऽऽयप्रत्ययो भवति, एवमुत्तरत्रापि, ततश्चार्द्धधातुके एव विकल्पेनायादयः स्युः सार्वधातुके नैव स्युः, नैष दोषः : एवमारम्भा-द्यदि आर्द्धधातुक एवायादीनामुत्पत्तिः स्यात्ततो गुणादिभिः संयत्स्यैव

इति पञ्चम्याविपरिणम्यते। आयादिभ्यो यदार्धधातुकं तत्र परे गुपादिभ्य आयाद्यनुत्पत्तिरित्यर्थः। परं त्विदं गुर्विति दिक्॥

पक्षे निवृत्तिरिति। (कै)

निवृत्तिपदं विनापि सामर्थ्यादिति भावः॥

क्वचिदिति। (कै)

अदिप्रभृतिभ्य इत्यादौ॥

क्वचिदिति। (कै)

यथा दीर्घविषये॥

यदा त्वत्रयस्येति। (कै)

आयादय इति पदोपादानसामर्थ्यादित्यर्थः। अन्यथाऽव्यवहितत्वात्कर्मणिङित्यस्यैव शेषः स्यात्॥

पृथक्पाठादिति। (कै)

तत्सामर्थ्याद्भिन्नवाक्यतया एकवाक्यतया च वाक्यार्थ इति भावः॥

दय आर्द्धधातुके परे पक्षे निवर्तन्त इत्यर्थः स्यात्। तत्र बहवो दोषाः। तथाहि। आयप्रत्ययान्तात् स्त्रीभावविवक्षायामप्रत्ययादित्यकारप्रत्यये कृते आयनिवृत्तिपक्षे गोपेत्यनिष्टं स्यात्। गुप्तिरिति चेष्टं न सिध्येत्।

निर्दिशेत्, गुपादिभ्य आर्द्धधातुके वत्येवं हि आयादय इति न वक्तव्यं भवति, पृथक् तं निर्दिशति तेन मन्यामहे व्यापारभेदेनैकवाक्यतेति। ततश्चायमर्थो भवति गुपादिभ्यो नित्यमायादयो भवन्त्यार्द्धधातुके वेति, एवमपि गुपादेर्यदार्द्धधातुकं प्राप्तं तत्र ततो विहिते विकल्पविकल्पे नायादयः स्युस्ततश्च स्त्रीभावविवक्षायां गुपेरप्रत्ययान्तत्वाभावात् क्तिनि

**एकं वाक्यमिति** (भा)

भाष्यस्य एकं वाक्यमपीत्यर्थः ॥

**अकारेण ।** (कै)

अप्रत्ययादिति विहितेन ॥

**क्तिनो बाधनादिति ।** (कै)

स्त्र्यधिकारादूर्ध्वं वासरूपविधेरभावादिति भावः ॥

**आमि परत इति ।** (कै)

यद्यपि क्ङित्यार्धधातुके आयादिनिवृत्तिस्तथापि प्रत्ययलक्षणेन प्रत्ययान्तत्वादाम् प्राप्नोति पुनः पदत्वादामि कृत एवैतत्प्रवृत्तिरिति बोध्यम् ॥

**तद्भाविनेति ।** (कै)

अत एव लुकि लोपसंज्ञासिद्धिः ॥ भाष्ये

---

तथा ऋतीयप्रत्ययादाम्लिटि प्रत्ययान्तत्वेनामि ईयप्रत्ययस्य निवृत्तौ ऋताञ्चकारेति स्यात्, आनर्तेति च न स्यात् । तथा आर्तताहि । आर्तिष्यति । ऋत्यात् । आर्तीदित्यादौ परस्मैपदं न स्यात् । तथा तास्यादेरार्द्धधातुकस्य ईयङ्निवृत्तिं प्रति निमित्तत्वेन न धातुलोप

---

कृते यदायप्रत्ययो न भवति तदा गुपिरिति काममिष्टं सिध्यति, यदा तु भवति तदाऽल्लोपयलोपयोर्गोपापितिरित्यनिष्टं प्राप्नोति, गोपायेति चेष्टं न सिध्यति, भिन्नवाक्यतायामायाद्यन्ताद्यदार्द्धधातुकं प्राप्तं तत्र ततो विहिते आयादयो वा भवन्तीत्यर्थः स्यात्तत्र चायाद्यन्ताद्यदार्द्धधातुकमिति वदता तेषामुत्पत्तिस्तावदङ्गीकृता, न चोत्पन्नानामुत्पत्तिविकल्पः शक्यते कर्तुमिति

गुप्तिज्गोपेति चेष्टं सिद्धमिति । (भा)

आयस्य वैकल्पिकत्वात् तदभावे सिद्धतीत्यर्थः ॥

इदं तर्हि इष्टमिति । (कै)

इदमुपलक्षणम् । क्तिनि कृते आयप्रत्यये गोपायतीत्यनिष्ट-मपि प्राप्नोतीत्यपि बोध्यम् । अल्लोपस्तु न । आर्द्धधातुकोपदेशे तदभावात् ॥

सार्वधातुके नित्यमिति । (भा)

अत्र नित्यग्रहणमार्थिकार्थकथनम् । सामान्यसूत्रेण वेत्येवास्य नित्यत्वसिद्धेः "स्यादिभिरिति" आदेशप्रवृत्त्युत्तरस्यतासौ इति पक्षे इदम् ॥

तुल्यं हि निमित्तम् (भा)

इत्यनेनान्तरङ्गत्वं निरस्यति ॥

---

इति निषेधात् तन्निमित्तो गुणो न स्यात् । अथोच्येत नानेन निवृत्तिर्वि-धीयते किन्तु प्रवृत्तिरेवेति । तथापि आयादिविधिभिः सहास्ये-कवाक्यता भिन्नवाक्यता वा । आद्ये गुपादिभ्य आर्द्धधातुके परे आयो वेत्यर्थः स्यात् । एवमुत्तरत्रापि । ततश्च आर्द्धधातुक एव विकल्पे-

लोपन्यायेन निवृत्तिविकल्पो भवति, ततश्चायप्रत्ययान्तात् स्त्रीभावविव-क्षायामप्रत्ययादित्यकारे कृते निवृत्त्यभावपक्षे गोपायेति काममिष्टं सिद्ध्यति, निवृत्तिपक्षे तु गोपेत्यनिष्टं प्राप्नोति, गुप्तिरिति चेष्टं न सिद्ध्यति, लिटि च निवृत्त्यभावपक्षे गोपायाञ्चकारेति काममिष्टं सिद्ध्यति, निवृत्तिपक्षे तु यदि लिटि परतो निवृत्तिस्तथापि प्रत्ययलक्षणेन आम-

**परत्वात्स्यादय इति ।** (भा)

तथा च महद्भूतिन्यायेनायो नस्यादेवेति भावः ॥ न च "सार्वधातुके नित्यमि"त्यस्य परत्वाद्बाधेऽपि सामान्यसूत्रेण वैकल्पिक आयो भविष्यति न हि तेनापि विप्रतिषेधः । तस्या-नैमित्तिकत्वेनान्तरङ्गत्वादिति वाच्यम् । अपवादविषये उत्सर्गा-प्रवृत्त्या सार्वधातुकविषये तदप्रवृत्तेः ॥ नत्वचाप्नोति विशेषकत्वात्तं तदभावे न प्रवर्त्तत इति मन्यते ॥

**स नास्त्यवकाश इति ।** (भा)

पर्जन्यवल्लक्षणप्रवृत्तेरिति भावः ॥ विशेषोऽप्यस्तीत्याह

**कामयत इति ॥** (कै)

गोपायन्तीत्यत्रापि विशेषं भाष्ये दर्शयति

---

नायादयः सार्वधातुके तु नैव स्युः । अथोच्येत गुपादिसूत्र एव आर्द्धधातुके वेति वक्तव्ये आयादय इति न कर्तव्यमिति लाघवं स्पष्टे सति गौरवं सोढा । आयादय आर्द्धधातुकेवेति पृथक्सूत्रकरणसामर्थ्यात् आपाद-भेदेनैकवाक्यता । ततश्चायमर्थः । गुपादिभ्य आयादयो नित्यं भवन्ती-

प्रत्ययादिविवक्षायां भवितव्यमप्यायामि इति निवृत्तिस्तथापि तस्यैव अवयवं प्राप्नोतीति, सर्वथा गोपां चकारेत्यनिष्टं प्राप्नोति जुगोपेति चेष्टं न सिद्ध्यति, तस्मादिष्ट एवायं परसप्तमीपक्ष इति मत्वाह । 'आर्द्धधातुके विषय इति' । कोऽर्थं इत्याह । 'आर्द्धधातुकविवक्षायामिति' । आर्द्ध-धातुकमिह्योत्पादयिष्यामीति बुद्धौ सत्यामित्यर्थः । विषयसप्तमीपक्षेऽपि भिन्नवाक्यतायामार्द्धधातुके विधित्सिते आयादयो भवन्तीत्युक्ते कुतो

अवश्यं खल्वपीति ॥ (भा)

यदि तर्हीति । (भा)

एवञ्चानवकाशत्वेनैव स्यादिबाधने गोपायिष्यतीत्याद्यसिद्धिरिति भावः। यथा पुनर्वार्त्तिककृता सूत्रभेदेन परिहार उक्तस्तथा सूत्रभेदमङ्गीकृत्य "पुनः अपि नित्यमित्युच्यते" तदा सर्वदोषपरिहार इति भाष्याक्षरार्थः। क्वचिद्भाष्य एव अपीतीति पाठः॥

विषयसप्तमीति। (कै)

आर्धधातुक इति सूत्रभाष्योक्तरीत्या जातिनिर्देश इति भावः। सूत्रे आयादय इत्युक्तिरनन्तरस्यैव सम्बन्ध इति भ्रमवारणार्थेति तत्त्वम्॥

---

त्युत्सर्गः। आर्द्धधातुके परे तु वा भवन्तीति। एवञ्च विकरणवत् प्रत्यये परे आयादयः प्रवर्तेरन्। ततश्च गुपेः क्तिनि आयपक्षे अल्लोपयलोपयोः गोपातिरित्यनिष्टं स्यात्। गोपायेति चेष्टं न सिध्येत् तस्मादद्य एवात्र परसप्तमीपक्षः॥

विधित्सत इत्यपेक्षायामायाद्यन्तस्यापि धातुत्वाच्छत इति गम्यते, ततश्च निवृत्तिपक्ष एवाश्रित इति स एव दोषो ऽयं पूर्वमवोचाम, तस्मादेकवाक्यतयोत्पत्तिविकल्प इत्याह। 'नित्यं प्रत्ययप्रसङ्गे तदुत्पत्तिरार्द्धधातुकविषये निर्विकल्प्यत इति'। किमेतं सति सिद्धं भवतीत्याह 'तत्रेति'॥

# सनाद्यन्ता धातवः । ३ । १ । ३२ ॥

गणपाठनिबन्धना संज्ञा कथमेषामत आह

भुवो वादय इति । (कै)

वदन्तीति वादयः । अर्थवाचकाः क्रियावाचिन इति यावत् । यथा भूवादीनां क्रियावाचकत्वं तथोक्तम् ॥

तेनेति । (कै)

पाठेनाणवयव्यादयः ॥ अर्थेन वा इत्येवमादय इत्यर्थः । "पाठेनेत्यादिर्नचैमे तत्र पठ्यन्त" इत्यन्तेवाच भाष्यकारोक्तिः ॥

धातुसंज्ञासिद्धिमिति । (कै)

सनाद्यन्तेऽपीति शेषः ॥

सनाद्यन्ता धातवः ॥ सनादयो णिङन्ताः प्रत्यया अन्तास्वरमावयवा येषान्ते संघाता धातुसंज्ञाः स्युः । जुगुप्सते । कामयते । सुपिङन्तमित्यत्र अन्तग्रहणेन संज्ञाविधौ प्रत्ययग्रहणे प्रत्ययग्रहणपरिभाषा न प्रवर्तत-इति तत्प्रतिप्रसवार्थमिहान्तग्रहणं न त्वयमपूर्वविधिः । गौरवात् । देव-दत्तास्मिकीर्षतीत्यादौ देवदत्तादेः समुदायस्य संज्ञाप्रसङ्गाच्च । प्रतिप्रसवे तु लाघव उक्तदोषाभावश्चेति स्पष्टमेव । भूवादय इत्यस्यानन्तरमेव

"सनाद्यन्ता धातवः" । 'सनादयो ऽन्ते येषामिति' अन्तशब्दः समीपवचनः वैयधिकरण्येऽपि गमकत्वाद्बहुव्रीहिः । अथ वा वृत्त्यावर्ण-मात्रं दर्शितं सूत्रे त्ववयववाचिनो ऽन्तशब्दस्य समानाधिकरण्यस्यैव बहु-व्रीहिः । सनादयोऽन्तावयवा येषा समुदायानामित्यनेन तद्गुणसंविज्ञानो बहुव्रीहिरिति दर्शयति 'धातुसंज्ञा इति' धातुशब्दोऽत्र स्वरूप-पदार्थो न भूवादिपदार्थकस्तावतीनां संज्ञानां विधाने प्रयोजनाभावात् ।

**पृच्छति । (कै)**

इत्यस्यैकदेशीति शेषः ॥

**शब्दान्तरत्वादिति । (कै)**

स्थानषष्ठीनिर्देशादपूर्वोपदेशाच्च तस्यैवात्र ग्रहणे तदीयप्रयोगनियम एव स्यादिति भवतीत्याद्यसिद्धिरिति भावः ॥ पठितशब्दत्वेन भवतीत्यादिस्थानामिनेषामपि तेनैव धातुत्वेऽप्याह

**जगध्यादीनामिति । (कै)**

भाष्यमुपलक्षणमिति भावः । अनेनास्यैकदेशयुक्तित्वं ध्वानितम् ॥

**रूढीति । (कै)**

तस्यायोगाद्रूढत्वादिति भावः ॥

**न चैमे इति । (भा)**

भाष्ये इमे सनादय इत्यर्थः ॥

सनाद्यन्ताश्चेति सूत्रितं सनादीनामियत्तानवगमात् । लिङो ङकारेण प्रत्याहारमाश्रित्य सङन्ताश्चेति कुतो न सूत्रितमिति चेत्सङादिष्वपि ङकारसत्वेन सन्देहापत्तेः । इहैव सनाद्यन्ता इत्यस्यानन्तरं भूवादयश्चेति सूत्रयितुमुचितं तथा न कृतमित्येव । एतत्सूत्रं भाष्ये प्रत्याख्यातम् । तथाहि । अवत्स्वार्थायां वृत्तौ चिकीर्षतिजिह्रीर्षत्यादिसङ्घाता एवार्थवन्तः तदवयवा अनर्थकाः । सर्वे सर्वपदादेशा इत्यत्र च अर्थवत्येव स्थान्यादेश-

सुप्तिङन्तमित्यत्रान्तग्रहणज्ञापिता संज्ञाविधौ प्रत्ययग्रहणे प्रत्ययग्रहणपरिभाषा न प्रवर्तत इति, ततश्चात्रान्तग्रहणे तदन्तविधिर्न स्यादित्यन्तग्रहणं कृतम्, एवं स्थिते यद्यपूर्व एवानेन तदन्तविधिः क्रियते ततो देवदत्तश्चिकीर्षतीत्यत्र देवदत्तादेः समुदायस्य संज्ञा प्रसज्येतेति मत्वाह । 'प्रत्ययग्रहणपरिभाषेवेत्यादि'। अपूर्वविधौ गौरवं प्रतिप्रसवे तु लाघव

**तथेति ।** (भा)

स्थानिवदित्यनेनेत्यर्थः ॥

**स्थानिनिवृत्त्येति ।** (कै)

स्थानषष्ठीनिर्देशादिति भावः ॥

**क्रियानिमित्तकस्येति ।** (कै)

आदेशग्रहणसामर्थ्यादानुमानिकस्यैव यौगिकस्यापि ग्रहण- मित्याशयः ॥

**तदन्तविध्यभावादिति ।** (कै)

स्थानिवत्सूत्रे विशेष्यासन्निधानात्तदभावे आदेशान्तस्याति- देशेन धातुत्वाभाव इति भावः । यद्वा तिबादिविधौ तदभावा- दित्यर्थः ॥

---

भावविश्रान्तेः । एधरित्यादौ तेस्तुरिति पर्यवस्यतीत्युक्तम् । एवञ्चेहापि करणविशिष्टेच्छार्थस्येषः प्रसङ्गे चिकीर्षशब्दः तथा हरणाविशिष्टेच्छार्थ- हृसेः प्रसङ्गे जिहीर्षशब्दः गुपेः प्रसङ्गे गोपायशब्दः पुत्रविशिष्टेच्छा- हृत्तेरिषेः प्रसङ्गे पुत्रीयशब्द इत्यादि पर्यवसाने स्थानिवद्भावेन सिद्धं धातुत्वम् । अगृध्यादिवत् । पचावित्यत्र धातोस्तिङ्त्ववच्च । स्यादेतत् । स्थानिवत्सूत्रे आदेशशब्देन चिकीर्षादयो ग्रहीतुं न शक्यन्ते आदेश- शब्दस्य षष्ठीनिर्दिष्टस्थानिनिवर्तकत्वेन रूढत्वादिति चेन्न । स्थानि-

लाघवं भवतीति भावः । भूवादय इत्यस्यानन्तरं सनाद्यन्ताश्चेत्युच्यमाने सनादीनामियत्तापरिच्छेदो न स्यात् । एवं तर्हि सङन्ताश्चेत्युच्यतां, सङिति प्रत्याहारः सनः सशब्दादारभ्य यङो ङकारात् । एवमपि सन्देहस्स्यात् यङादिष्वपि ङकारस्य भावा, देवं तर्हि सनाद्यन्ता इत्यस्यानन्तरं भूवादय- श्चेति वक्तव्यं, स्यादेतदेवमुच्यमाने सनाद्यन्तशब्दवद् भूवादिशब्दोऽपि प्रक्ष-

अथोच्यत इति । (कै)

धातोःकर्मण इत्यादेः समानकर्तृकर्मभूतधात्वर्थविशिष्टेच्छायां प्रतिपाद्यायां तत्स्थाने अर्थाभिधानयोग्यो यद्धात्वर्थकर्मकत्वमिच्छायां प्रतिपिपादयिषितं तद्धात्वादिसनन्त आदेश इत्यादिक्रमेणार्थ इति भावः । तत्तद्गणप्रयुक्ता विकरणास्तु न अदादीत्यादेरनतिदेशात् । करणाङ्के इत्यर्थे कर्तुमित्येतत्समभिव्याहारेण वर्तमानस्येषेः प्रसङ्गे सर्वे सर्वपदादेशा इति न्यायात् सनन्त आदिश्यत इत्यन्वयः ॥

भगवतो भाष्यकारस्येति । (कै)

एकदेशिन इति शेषः । अनेन इमे तर्हि यदपीत्यादिभाष्यग्रन्थ एकदेशिन उक्तिप्रत्युक्तिपरतया प्रौढिवाद एवेति ध्वनितम् ॥

---

वादित्वस्यैव आदेशस्य लाभे पुनस्तद्गृहणसामर्थ्येन अनुमीयमानस्य तेस्तुरित्यादेरिव आदिश्यतइतियौगिकार्थपुरस्कारेण चिकीर्षादेरपि सुग्रहत्वात् । न च पुत्रीयादिरादेशः सुबन्तस्यैव न तिबेरिति वाच्यम् । अवयवेऽपि विशेष इति न्यायेन प्रधानसमर्पकस्य इषेरेव तदभ्युपगमात् । वाच्यम इत्यादिकित्त्वेऽपि धातुत्वस्यावश्यकत्वे स्थिते तन्निर्वाहाय इच्छायामाचारे भुवीत्यादिक्रियासमर्पकाणामेव स्यादित्यनिर्णयाच्चेति दिक् ॥

---

तापेक्षः स्यात्तस्यानुक्रान्तानां गुपादीनामेव स्यादित्येवमपि भूवादिग्रहणसमर्थकं गुपादयश्चेति वक्तव्यं, सामर्थ्यकं, भुवो वादयो भूवादय इत्येवमर्थमेव स्याद्, भूवादि पाठ इदानीं किमर्थः स्यादन्तर्गणकार्यार्थो ऽनुबन्धासञ्जनार्थश्च, येषां तर्हि तदुभयं न संभवति भूरशिप्रभृतीनां तेषां पाठः किमर्थः । अलमतिनिर्बन्धेन ।

# स्यतासी ऌलुटोः । ३ । १ । ३३ ॥

---

## उत्सर्गापवाद धर्मौति । (कै)

न चापवादविषये ऽवश्यं प्राप्तिरूप उत्सर्गस्य धर्मः । तद्प्राप्ति-योग्यविषयाभावेन निरवकाशत्वरूपोऽपवादस्य ॥ भावकर्मप्रत्ययानु-वृत्तौ उत्सर्गत्वासम्भवादाह

स्यतासी ऌलुटोः ॥ ऌ इति ऌट्लृटोः सामान्यग्रहणम् । धातोः ऌ इत्यस्मिन् लुटि च परे यथासङ्ख्यं स्यतासी प्रत्ययौ स्तः । अक-रिष्यत् । करिष्यति । श्वः कर्त्ता । तासेरिकार इत्संज्ञक इति जया-दित्यः । तथाहि मन्ता हन्तेत्यत्र मन् तास् आ हन् तास् आ इति स्थिते टिलोपे कृते डाप्रत्ययमिति तान्तमङ्गन्तस्य उपधानकारः । तस्यानिदिता-मिति लोपः प्राप्तः तं वारयितुं तासेरिदित्वमेषितव्यमान् चाभीयत्वेन टिलोपस्यासिद्धत्वात् नकार उपधा नेति वाच्यम् । आभात्सूत्रस्य भाष्ये

---

"स्यतासी ऌलुटोः" ॥ इह यद्यपि ऌ इत्यनुकरणमुच्चारितमेकमेव तथापि तस्य प्रतिपाद्यभूतमनुकार्यं भिद्यते ऌट् लुङ् इति यत्र च प्रति-पाद्यानां संख्यासाम्यं तत्र संख्यानानुदेशो न तूच्चारितरूपसाम्ये, अन्यथा परस्मैपदानामित्येकं णलादयस्तु नवेति वैषम्यान्न स्यात्, तथा डारौरसः प्रथमस्येत्यत्रापि न स्यात्, तदेवम् ऌ इत्यस्य द्वे प्रतिपाद्ये लुडिति चापर-मिति त्रीणि निमित्तानि निमित्तिनौ तु द्वाविति वैषम्यात्संख्यातानुदेशो न प्राप्नोतीत्यत आह । 'ऌरूपमुत्सृष्टानुबन्धं सामान्यमेकमेवेति' । नात्र प्रति-

**भावेति॥** (कै)

भाष्ये

**स्यादीनामवकाशः पश्यते इति।** (भा)

कर्मादौ शपोऽप्राप्तेरिति भावः॥

**यत्रेति।** (कै)

"अनेकलक्षणप्रसङ्ग" इति बहुव्रीहिः। अपवादशब्दस्य तद्विषयपरः। अनवकाशोऽपवाद इति भावः॥

---

प्रत्याख्यानात्। सूत्रमेतदपि आभीयस्य असिद्धत्वस्य अनित्यत्वाच्च। तत्र च श्नसोरल्लोप इति तपरकरणं लिङ्गम् तद्धि आस्तामासन्नित्यादौ मा भूदित्येवमर्थम्। तत्राटोसिद्धत्वादेव लोपाप्रसक्तौ तपरत्वं व्यर्थं सत् असिद्धत्वस्यानित्यतां ज्ञापयति। तेन देभतुर्देभुरित्यत्र श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वान्नलोपे तस्यासिद्धत्वाभावात् एत्वाभ्यासलोपौ स्तः। एवञ्चेहापि टिलोपस्यासिद्धताविरहे प्राप्तो नलोप इदित्त्वेन वार्यते। न चैवं नुम्विधौ धातुग्रहणस्य तासित्यावृत्त्या कृतार्थत्वेन धातुपदेशा-

पाद्यं भिद्यते यत्तदुभयानुगतमुत्सृष्टानुबन्धं ऌट इति सामान्यरूपं तदनु-क्रियते, एतच्च ऌलुटोरिति द्विवचननिर्देशादवसीयते, तत्र यथानुकरणे न भेदस्तथानुकार्यपीत्यर्थः। 'करिष्यतीति'। 'ऋद्धनोः स्य' इतीट्। 'श्वः कर्तेति'। श्व इत्यस्योपन्यासस्तृजन्तशङ्कानिवृत्त्यर्थः। 'इदित्करणमिति'। इत्संज्ञकस्येकारस्य करणमित्यर्थः। 'अनुनासिकलोपप्रतिषेधार्थमिति'। अन्यथा मन्तास् आ इति स्थिते टिलोपे कृते नकार उपधेन्यात्मनेपदे ङिति, परतो ऽनिदितामिति नलोपः प्राप्नोति तस्यानिदितामितीदित्त्व-

**यग्विधौ त्विति ।** (कै)

अन्यथास्ति च सम्भवो यदुभयं स्यादिति वार्त्तिकमते पचतीत्यादौ अपि कृते तमेव निमित्तीकृत्य यक् स्यादिति भावः ॥ भाष्ये

**अथवानुवृत्तिरिति ।** (भा)

एवं च तत्तद्विधौ विधानसामर्थ्यान्नास्त्यपवादत्वमिति भावः ॥

वस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति वाच्यम् । नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थमिति वचनस्यैव प्रत्याख्यानात् धिन्विकृण्व्योरिति सनुम्कनिर्देशात् ज्ञापकाद्वा । वामनस्तु तासेरिकार उच्चारणार्थ इत्याशयेन इदितो नुम् धातोरिति धातुग्रहणं धातूपदेशावस्थायामेव नुम् यथा स्यादित्येवमर्थं मन्यते । तन्मते मन्ता हन्तेत्यत्र टिलोपस्यासिद्धत्वान्नलोपो नेति बोध्यम् । इदमिदानीं विचार्यते, लकारं निमित्तत्वेनाश्रित्य विधीयमानाः स्यादयो विकरणाः किं लावस्थायामेव स्युः, उत लादेशेष्वपि कृतेष्विति । आद्ये पक्षे लावस्थायामासौ कृते तस्य प्रत्ययग्रहणात्तत्र कृते

- - - -

निबन्धनः प्रतिषेधो यथा स्यादित्यर्थः । 'मन्ता सङ्क्रन्तेति' कोऽर्थः मन्तेत्येतत्पदं सङ्क्रन्तमविष्यतीत्यर्थः, न तु सङ्क्रन्तेत्येतदुदाहरणमनोपधत्वात् अनुस्वारपरसवर्णयोः कृतयोरपि तयोरसिद्धत्वादनोपध एव, अन्ये त्वाङ्कर्यद्यसिद्धत्वात्सङ्क्रन्तेत्येतदनुदाहरणं मन्तेत्येतदपि उदाहरणं न भवति, अत्रापि टिलोपस्याभीयस्यासिद्धत्वाद् मन्ताम् आह इति स्थिते नकार उपधा न भवतीति, यदि सतसा भाष्यकारीयमसिद्धत्वमनित्यं, 'श्नसोरल्लोप' इति तपरकरणात्, तद्धास्तामासन्नित्यादौ मा भूदित्येवमर्थं तत्राटोऽसिद्धत्वादेव लोपो न भविष्यति किं तत्प्रकरणार्थेन तपरत्वेन, तज्ज्ञापयत्यसिद्धत्वमनित्यमिति, तेन देभतुर्देभुरित्यत्र अभ्यासलोपश्च दम्भिश्नोनामिति

लावस्थायामिति (भा)

भाव्यस्यादेशोत्पत्तेः प्रागेव स्यादय इत्यर्थः॥ प्रतिवादि तच

ग्रहते

ननु चेति॥ (कै)

अनित्यत्वमिति। (कै)

व्यवधानेन धातोः परत्वाभावादप्राप्तेरिति भावः॥

---

आदेशाः स्युः ततश्च तेषां स्वरः सतिशिष्टः। ततश्च तासेः परस्य लसार्वधातुकस्यानुदात्तवचनमप्राप्तविधिरेव स्यात्। एवञ्च सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इत्यस्यार्थस्य ज्ञापकमेतदिति बाढः सिद्धान्तो भज्येत। ततश्च या दम्पती समनसा सुनुत इत्यत्र सतिशिष्टस्य विकरणस्वरस्य बलीयस्त्वापत्तौ मध्योदात्तं तिङन्तं स्यादिष्यते त्वन्तोदात्तम्। एवं प्रीणीताश्वान्, छिन्दन्ति सूरमित्यादिष्वपि स्पष्टो दोषः। द्वितीये तु पक्षे तासिस्वरः सतिशिष्ट इति शेषनिघातेनैव लसार्वधातुकानुदात्तत्वे सिद्धे तासिग्रहणं ज्ञापकमिति सिध्यति। किन्तु

---

टिः किन्वान्नलोपे तस्यासिद्धत्वाभावादेत्वाभ्यासलोपौ भवतः, तदत्र टिलोपस्यासिद्धत्वाभावान्मन्तव्या इति स्थिते उपधैव नकार इत्युदाहरणमिति, यद्येवं पूर्वत्रासिद्धीयमसिद्धत्वमप्यनित्यं 'न मुने' इत्यत्र नेति योगविभागात्, तथा चैकादेशस्वारोन्तरङ्गः सिद्धो भवति, सिज्लोप एकादेशे सिद्धो भवति, निष्ठादेशः षत्वादिषु सिद्धो भवति, द्विर्वचनविषये च पूर्वत्रासिद्धोऽयं न भवति, ततश्चानुस्वारपरसवर्णयोः सिद्धत्वाल्लुक्नन्तेत्येतदप्युदाहरणमेवेति। अन्ये तु संहन्तेति पठन्ति, हन्ते 'र्भावकर्मणो' रित्यात्मनेपदं तत्र सम्पूर्वस्य पाठे प्रयोजनं मृग्यम्, एवं तावज्जयादित्येनासिद्धत्वमाश्रित्य

अन्यथेति । (कै)

इदं च ज्ञापकम् अनुदात्तं पदमेकवर्जमित्यत्र भाष्ये (६।१।१५८) स्पष्टम् । आदेशोत्तरं स्यादिप्रवृत्तौ तु मतिशिष्टस्यादिस्वरनिमित्तकवर्ज्यमानस्वरेण लसार्वधातुकानुदात्तत्वे सिद्धे पुनर्विधीयमानं तद् ज्ञापकं सम्पद्यत इति भावः ॥

ये त्विति । (कै)

एतन्मतेऽन्यत्र विकरणेभ्य इत्यंशो वाचनिक इति बोध्यम् ॥

---

गमिष्यति । पठिष्यतीत्यादि न सिद्ध्यति । तथाहि । सार्वधातुके यगुत्सर्गः तस्यापवादाः शबादयः स्यादयश्च । तत्र शबादीनामवकाशः गच्छति पठति । स्यादीनान्तु गंस्यते पठिष्यत इति । गमिष्यति पठिष्यतीत्यत्रोभयप्रसङ्गे परत्वाच्छप् प्राप्नोति । अथोच्येत । यकः शबादीनाञ्च नोत्सर्गापवादभावः । विविक्तविषयत्वात् । यग्विधौ हि भावकर्मग्रहणमनुवर्त्तते तच्चावश्यमनुवर्त्यम् । पचति पठतीत्यादौ शपि परे यङ् मा भूदिति । एवमपि गमिष्यति पठिष्यतीत्यादि सिध्यतु नाम । यक्शपोरुत्सर्गयोः

---

तासेरिदित्करणमनुनासिकलोपप्रतिषेधार्थमित्युक्तम् । वामनस्तु टिलोपस्य सिद्धत्वादेव नलोपो न भविष्यतीति मन्यमान इदितो नुम्धातोरित्यत्र वक्ष्यति तासिसिचोरिदित्करणं नास्तीत्युच्चारणार्थो निरनुनासिक इकारः पठ्यत इति यदि तु तासेरिकारोनुबन्धः स्यात्ततो नुम्विधौ धातोस्तासेर्मा भूदित्येवमर्थं स्यात्तच्च धातूपदेशावस्थायामेव नुम् भवतीत्ययमर्थो न साधितः स्यादिति तस्याभिप्रायः । जयादित्यस्तु नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थमिति वचनमेव शरणमाश्रयत् । इह विकरणाः के चन लकारोपादानेन विधीयन्ते यथा स्यादयः, ते किं लावस्थायामेव भवन्त्य-

## प्रतिपदविधानाच्चेति । (कै)

चिण्वं निरवकाशत्वाभावाद् इति कश्चित् ॥ परेतु अनुदात्तमिति (६।१।१५८) सूत्रे भाष्ये सतिशिष्टस्वरबलीयस्त्वे सुनुत इत्यादौ सार्वधातुकस्वरबाधः स्यादिति शङ्कायां वार्त्तिककारेणोक्तं स्यादिस्वराप्रसङ्गस्तासेः परस्यानुदात्तवचनादिति । परत्वाच्छादेशा इत्येव च तन्मतम् । अत्राप्यपवादविप्रतिषेधा

स्यादिभिरपवादैर्बाधसम्भवात् । किन्तु देविष्यति सेविष्यतीत्यादि न सिध्येदेव । तथाहि । विकरणानां यक्शपावुत्सर्गौ तदपवादाः श्यनादयः स्यादयश्च । श्यनादीनामवकाशः दीव्यति सीव्यति । स्यादीनान्तु पक्ष्यते । देविष्यति सेविष्यतीत्यत्रोभयप्रसङ्गे परत्वात् श्यनादयः स्युरिति । अत्र बहुधा समाहितं भाष्ये । तथाहि । शबादेशाः श्यनादयः करिष्यन्ते । दिवादिभ्य इति पञ्चम्या अनुवृत्तायाः कर्त्तरि शबिति प्रथमायाः षष्ठीप्रकल्पनात् । एवञ्च दिवादिभ्यः स्यादिविषये शबेव नास्ति स्यादिभिरपवादैर्बाधात् । तदादेशाः श्यनादयस्तु दूरापास्ता एव । अथ

---

तासौ आदेशेषु कृतेषु, यदि लावस्थायामेव ततस्तास्यनुदात्तेदित्यत्र पठ्यते तासेः परस्य लसार्वधातुकस्यानुदात्तवचनं ज्ञापकं सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इत्यस्यार्थस्येति तन्नोपपद्यते लावस्थायामेव तासौ कृते तस्य च प्रत्ययाद्युदात्तत्वे पश्चाल्लादेशेषु क्रियमाणेषु तेषामेव स्वरः सतिशिष्टो भवति ततश्चानुदात्तवचनमप्राप्तविधिरेव स्यात्, तत्र को दोषः चिनुतश्चिन्वन्ति क्रीणीतः क्रीणन्ति सतिशिष्टो विकरणस्वर एव प्राप्नोति, द्वितीये तु पक्षे पूर्वं तिबादयः पश्चात्तासिरिति तस्यैव स्वरः सतिशिष्टः, ततश्च निघातस्वरेणैव सार्वधातुकानुदात्तत्वे सिद्धे

अनादिभिः स्यादिबाधनमिति वार्त्तिकोक्तपूर्वपक्षस्य तन्मतानुसारेण समाधानद्वयमुक्त्वा अथवेति तृतीयं समाधानं भगवतोक्तं तस्यायं भावः। आर्द्धधातुक इत्यनुवृत्त्यार्द्धधातुकत्वावस्थायां स्यादय इत्यन्तानाम् इति॥ विकरणस्वरस्य दुर्बलत्वं त्वेतत्पक्षे वाचनिकमेव। कैयटोक्तमर्थापेक्षं सार्वधातुकादिसंज्ञापेक्षं च बहिरङ्गत्वं न युक्तं तस्यात्र शास्त्रेऽनाश्रयणादित्युक्तम्। अत एवात्र

---

वा दिवादिभ्यः श्यन्नित्यादिषु स्यादयोनुवर्तिष्यन्ते। दिवादिभ्यः श्यन् भवति ऌलुटोस्तु स्यतासी भवतः। दिवादिभ्य इत्येव। एवमन्येपि। एतेन चावस्थायामेव प्राप्नुवन्तः स्यादयः सार्वधातुकोत्पत्तिं किमर्थं प्रतीक्षन्ताम्। ततश्च कथं तासेर्लसार्वधातुकानुदात्तवचनस्य उक्तार्थज्ञापकत्वं सङ्गच्छतामिति दूषणं प्रत्युक्तम्। सार्वधातुके यगित्यादौ अनुवृत्तिबलादेव सार्वधातुकोत्पत्तेः प्रतीक्षणीयत्वात्। अथवा श्यनादयः शबादेशा मा भूवन् मा चानुवर्तन्तामुत्तरत्र स्यादयः। किन्तु देविष्यतीत्यादौ स्यादीन् बाधित्वा परत्वाच्छबादेशाः। न चानित्यात्ते,

---

तासिप्रत्ययं क्रियमाणमुक्तार्थस्य ज्ञापकं सम्पद्यते, अस्तु तर्हि तथा, यद्येवं धातुमात्रात्सार्वधातुकमात्रे भावकर्मणोर्यक् कर्त्तरि तु शब्विधीयत इति यक् शपावुत्सर्गौ तेष्वेवार्थेषु धातुमात्रात्सार्वधातुकविशेषे स्यादय इति तेऽपवादाः, तथा दिवादेर्धातुविशेषात्कर्तरि श्यन्नादयः शपोपवादास्तत्र देविष्यति तनिष्यतीत्यादावुभयप्रसङ्गेऽपवादविप्रतिषेधात् श्यनादयः स्युः पक्षान्तरे त्वन्तरङ्गाः स्यादय एव सिद्ध्यन्ति। नैष दोषः। 'दिवादिभ्यः श्यन्नि'त्यादिषु स्यादयोऽनुवर्तिष्यन्ते दिवादिभ्यः श्यन् भवति ऌलुटोऽस्तु स्यतासी भवतो दिवादिभ्य इति, एवं सर्वत्र. एतेनैतदपि निरस्तं यत्

विप्रतिषेधो वार्त्तिककृतोक्तमसङ्गच्छते । न्याय्यमन्तरङ्गत्वम् ऋषिभ्यां न ज्ञातमित्युक्तिरत्यन्याय्या कान्तरङ्गता लावस्थायां स्यादय इति भाष्योक्तेर्गर्भस्रावाच्च । अल्पापेक्षत्वाच्चिवादिभ्यः पूर्वं स्यादय इत्येवं वक्तुमौचित्याच्चेत्याहुः ॥

---

आतृतीयाध्यायसमाप्तेर्धात्वधिकारात् स्यादिभिर्व्यवधाने धातोः परस्य लस्याभावेन् आदेशाप्राप्तेरिति वाच्यम् । धातोर्विहितस्य लस्येति विहितविशेषणाश्रयणेन लादेशानां नित्यत्वात् । एवञ्च कृतेषु लादेशेषु उभये प्रसक्ताः स्यादयः शबादयश्च तत्रान्तरङ्गत्वात्स्यादय एव भविष्यन्ति न तु शबादयः । सार्वधातुकत्वं कर्त्तरीत्यर्थविशेषञ्च अपेक्षमाणानान्तेषां बहिरङ्गत्वात् ॥

---

खल्विदमाशङ्क्यते परैर्लावस्थायां विधीयमानाः स्यादयः किमिति सार्वधातुकोत्पत्तिं प्रतीक्षन्त इति कथम्, उत्तरत्रानुवृत्तेरेव, सार्वधातुके यम्भवति भावकर्मणोर्ऌलुटोश्च स्यतासी भवतः सार्वधातुके, एवं सिजादिष्वपि द्रष्टव्यम् । तदेवमादेशेषु कृतेषु स्यादय इति स्थितम् ।

# सिब्बहुलं लेटि । ३ । १ । ३४ ॥

उत्सर्गपदार्थमाह

**परनिमित्तमनुपादायेति ।** (कै)

एवं हि सामान्यविधित्वाद् उत्सर्गत्वं भवति ॥

**सनाद्यन्ताधिकार इति ।** (भा)

सनाद्यन्तेति येषामधिकारो बुद्धिस्थता तेषु कर्त्तव्य इत्यर्थः ॥

**सिध्यन्तीति ।** (कै)

लोकेऽपि सिप् सिद्धिरित्यर्थः ॥ नेषत्विति प्रयोगे सिप्शपोः समावेशः सिध्यति । विकरणत्वे तु तत्र स्यादिति भावः । लोट्त्वाच्छन्दसि लेटोऽडाटावित्यस्याप्राप्तिरिति बोध्यम् ॥ अथोत्सर्गः कर्त्तव्यः स च सनाद्यन्ते कर्त्तव्य इति पूर्वपक्षद्वयं तत्राद्यः स्थित एव । उत्सर्गतत्वावश्यकीत्याह

**अवयेति ।** (कै)

लिङि सिप्विध्यर्थमुत्सर्गः कर्त्तव्य इत्यर्थः ॥ भाष्ये

---

सिब्बहुलं लेटि ॥ धातोः सिप्प्रत्ययो बहुलं स्यात् लेटि परे । जोषिषत् । जुषी प्रीतिसेवनयोः । अनुदात्तेत् । अत्ययेन परस्मैपदम् सिप इट लेटोऽडाटाविति तिपोट् । इतश्च लोप इतीकारलोपः । बहुल-

"सिब्बहुलं लेटि" ॥ 'जोषिषत्मन्दिषदिति' । जुषी प्रीतिसेवनयोः मदि स्तुतिमोदमदस्वप्नगतिषु अनुदात्तौ, अत्ययेन परस्मैपदं, सिप इट्,

## इति हौति । (भा)

नेषत्वित्यर्थं सनादिवर्गे करणे नेष्टादित्यस्यासिद्धिः । अत्र करणे-नेषत्वित्यसिद्धिः । प्रकृत्यन्तरत्वे तु नेष्टादिति नयतेः सिपि सिद्धम् । अनेनैव लेडिति पदरहितसूत्रकरणादित्याशयः । यद्वा नेष्टा-दित्यत्र विकरणव्यत्ययेन शपां तुक् । नेषतु नेषतादिति दृश्यत इति भाष्ये पाठः । लोके यातिशेषः ॥

## नेष्टादिति दृश्यते (भा)

इति लेखकप्रमादः ॥ अन्यथा प्रकृत्यन्तरावश्यकत्वं न दर्शितं स्यात् ॥ भाष्ये

## आगमानुदात्तत्वादिति । (भा)

तारिषदित्यादौ धातुस्वरप्रयुक्तशेषनिघातेनेति भावः ॥

## सनादिमध्ये इति । (कै)

लेटादिपदरहितमिति भावः । एवं च सपः साध्कत्वेन पित्त्वं चरितार्थमिति बोध्यम् ॥ ननु स्थानपरिवर्तनेन सनादिवर्गे करणे फलाभावस्य भाष्ये उक्तेराह

---

यक्षगान्नेष । पताति दिद्युत् । सिब्बहुलश्छन्दसि णिदक्तव्यः ॥ प्रणआयुं-षितारिषत् । अयामर्वांसवितारसाविषत् । णित्त्वाद्वृद्धिः । देवस्यहेळो-ववासिसीष्ठाः । इह यातेरवपूर्वास्लिङ् । बहुलवचनात् । सिप् चास् सीयुट्मुट् इह । एकाचउपदेशेऽनुदात्तादिति निषेधस्तु न भवति । सिपा

---

'लेटोऽडाटौ' विति तिपो ऽट्, इतश्च लोपः परस्मैपदेष्विं' तीकारलोपः, तत्र च वेति वर्तते । 'तारिषदिति' । तॄ प्लवनतरणयोः, सिब्बहुलं छन्दसि-

**अत्रैव वेति ।** (कै)

अत्रापि करणेन इष्टसिद्धिरिति तात्पर्यम् ॥ भाष्ये

**किं प्रयोजनम्** (भा)

इत्यकारविषयः प्रश्नः ॥

**यद्वयासिसीष्टा इति ।** (कै)

नन्वत्र सिप्यपि तेन व्यवधानान्निषेधाप्रवृत्ताविट् सिध्यत्ये-वेत्यत आह

**सवन्तस्याङ्गस्येति ।** (कै)

एकाच इत्यङ्गस्यैव विशेषणम् ॥

**उपदेश इति ।** (कै)

चा उदात्तेनैव संबध्यते । उपदेशे यो ऽनुदात्तस्तद्घटितादेकाचो-ऽङ्गादिति च्यार्थः । स च नैमित्तिकत्वात्पूर्वमेव । ततश्च लादेशा इति भावः ॥

**उच्चारणार्थ इति ।** (कै)

इत्संज्ञायां फलान्तराभावादिति भावः । उच्चारणे सहायसंपा-दनेन चरितार्थस्येत्संज्ञया लोपेन निवृत्तिरिति बोध्यम् ॥

व्यवधानात् । सीयटः सस्य सत्वाभावश्छान्दसः । तिङ्ङतिङ इति निघातः । यच्छब्दयोगे तु यासिसीष्ठा इति पदमाद्युदात्तमेवेष्यते । यद्यपि प्रत्ययस्वरेण यास उदात्तत्वादन्तोदात्तं पदमाप्तं तथापि कृत्र-

सिद्धस्य इति वचनाद्वृद्धिः, अमीषां भविता भाविषदिति यथा छान्दसो वा दीर्घः । 'पतातीति' । पृत ऌत पतृत्न गतौ, 'चेटोऽडाटौ'

सिबन्तस्य धातोरिति । (कै)

अकृत्स्नेति वक्तुमुचितम् । यौयुटः यस्य यलाभावः छान्दसः ॥

ननु येति । (कै)

तद्घटितादित्यर्थं न मानमित्यभिमानः ॥

नासावुपदेशे इति । (कै)

सिबन्तस्योपदेशाभावादिति भावः ॥ एवं वर्णितरीत्यैव सिद्धे अकारोच्चारणं व्यर्थमिति पूर्वपक्षाशयः ॥ मनादिवर्गपाठाभिप्रायेणेदं पक्षमुक्तमिति समाधत्ते

एवं तर्हीति । (भा)

अकारोच्चारणसामर्थ्याद् उपदेशेऽनुदात्तघटितैकाचोऽङ्गादित्यर्थ इति न दोष इति तत्त्वम् ॥

अनुदात्तादेकाच इति । (कै)

यपि तु परत्वादिडादिषु कृतेषु अतोलोप इति भावः ॥

अथवेति । (कै)

अथ पाठे हि तदन्तस्याधातुत्वात्तदप्रवृत्तिरिति भावः । इदमेव युक्तम् ॥ मन्यच योऽनुदात्तादुकारस्तत्र परतो तल्लोपः । आर्धधातुके हि स न च तदनुदात्तमत आह

---

अङ्गेन सिपमधकत्वा सवयं कर्तव्य इति भाष्योक्तेः । यपि कृते अदुपदेशाद् परत्वेन इन्ध्यसुभयथेति सार्वधातुकत्वेन न लसार्वधातुकानुदात्तत्वादिसिद्धिः । यपः पित्त्वाभावे उदात्तनिवृत्तिस्वरेण इट उदात्तत्वं स्यात् ।

---

सिज्ञाटश्चपासहैकादेशः, । 'चवयातीति' । चुङ् प्रुङ् प्लुङ् गतौ इत्यन्तः, इष्टा वयाविर्वोळा इति मातेरवपूर्वाच्छिडि बहुलवचनात्सिप्, धात्

सार्वधातुकानुदात्तत्वे सतीति ॥ (कै)

अत्र पाठे

प्रत्ययस्वरेणेति । (कै)

सनादिपठितधातुस्वरेणेति प्रत्ययस्वरेणेत्येव युक्तं सनादिपाठस्य स्थानत्यागे फलाभावेन भाष्ये दूषितत्वात् ॥

पित्करणसामर्थ्याद् (कै)

इत्यपि चिन्त्यम् । एतत्प्रदेशे इत्याद्येव युक्तम् ॥

याशब्दस्यैवेति । (कै)

एवं च यासिसीष्ठा इत्याद्युदात्तमिति भावः स्यादत आह

तिङतिङ इति । (कै)

अत्रेदं तत्त्वम् । अत्रैव पाठो लेटीति पदरहितः कार्यः । अकारस्तु सार्वधातुकानुदात्तत्वायोकारौत्येट् प्रतिषेधाभावाय च उदात्तनिवृत्तिस्वरवारणाय च यकारः । अन्तरङ्गत्वात् पूर्वं सिपि ततो विकरणव्यवधानेऽप्यादेशा अत आर्द्धधातुकोपदेशेऽकारान्तत्वाल्लोपसिद्धिरिति ॥

---

तस्मादिह सपः पित्त्वादन्तत्वे स्वरार्थं इति स्थितम् । यथाश्रुतसूत्ररीत्या तु पित्त्वं व्यर्थमेव । तथा च वार्त्तिकं, पित्करणानर्थक्यं चानेकाल्त्वात् । इटोनुदात्तार्थमिति चेत् । आगमानुदात्तत्वात्सिद्धमिति ॥

---

सीयुट्, इट्, 'एकाज्उपदेशेनुदात्तादि'ति तु प्रतिषेधो न भवति सिपा व्यवधानात् ॥

# कास्प्रत्ययादाममन्त्रे लिटि । ३ । १ । ३५ ॥

नन्वत्र प्रत्ययग्रहणं व्यर्थम् आममन्त्रे लिटि इति योगविभागेन सामान्यत आममभिधाय कास्ग्रहणं नियमार्थं व्याख्येयम् । औपदेशिकधातोश्चेत्काम एवेति । प्रत्ययान्ते सिद्धेरिति चेत् न । अनेकाच्प्रत्ययान्तग्रहणार्थत्वात् । तेन कादिभ्य आधारक्षिबन्तेभ्य

कास्प्रत्ययादाममन्त्रे लिटि ॥ कास्धातोः प्रत्ययान्तेभ्यश्च आम् स्याल्लिटि न तु मन्त्रे । कासृ शब्दकुत्सायाम् । कासाञ्चक्रे । लोलूयाञ्चक्रे । अमन्त्रे किम् कृष्णो नोनाव अच्छन्दसीति तु नोक्तं ब्राह्मणे इष्टत्वात् । पुत्रमामन्त्रयामास । अथैष शुनःशेप ईक्षाञ्चक्रे इत्यादि । कास्यनेकाच इति वक्तव्यम्, चुलुम्पाद्यर्थम् । चुलुम्पाञ्चकार । चुलुम्पतिर्वार्त्तिककारवचनबलात्साधुः । इष्टाव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीय तत्स्थाने अनेकाज्ग्रहणं कर्तव्यमिति प्रागेव व्याख्यातम् । चकासाञ्चकार । दरिद्राञ्चकार । आत औ णल इत्यत्र ओकारे विधातव्ये औकारविधानं दरिद्रा-

"कास्प्रत्ययादाममन्त्रे लिटि" ॥ 'आम् प्रत्ययो भवतीति' । हलन्तपक्ष एतदुक्तम्, अदन्तपक्षे त्वामप्रत्ययो भवतीति वक्तव्यम् । 'अमन्त्रविषय इति' । मन्त्रविषयस्तत्प्रयोगो न भवतीत्यर्थः । ऋग्यजुःसामलक्षणो मन्त्रम् तत्रैवाभियुक्तैर्मन्त्रशब्दस्य प्रयोगात्, आथर्वणा अपि मन्त्रा ऋग्यजुष एवान्तर्भवन्ति, तान्निकेषु मन्त्रशब्दप्रयोगो मन्त्रवदुपचारात् । छन्दसीति नोक्तं, ब्राह्मणेऽपि यथा स्यात्, अथ ह शुनःशेप ईक्षांचक्रे ते ह तदन्तर्वेद्यासांचक्रिरे अविज्ञातानि च दर्शयांचकार । 'कासां चक्र इति' । आमन्तस्य पदत्वमाम इत्यत्रोपपादितम् । 'नोनावेति' । नौतेर्यङ्लुगन्ता-

अत्र ध्वनितं चेदं हरदत्तग्रन्थे। न चैकाच्प्रत्ययान्तपरमेवास्तु किम्ग्रहणेनैव सिद्धे प्रत्ययग्रहणवैयर्थ्यापत्तेः। गोपायाञ्चकारेत्यादिभाष्यप्रयोगविरोधापत्तेश्च॥

## कास्यनेकाच इति। (भा)

कास्विति पदमनेकाच् धातुमात्रस्य यथा भवति तथा व्याख्येयमित्यर्थः। तथा हि। एकाचो धातोश्चेत्कास एव इति नियमपरतया तद्व्याख्येयमिति। एवं च

तेरार्धधातुके लोप इत्याकारस्य लोपेऽपि औकारस्य श्रवणार्थम्। तेन दरिद्रावित्यपि भवतीत्याहुः। ऊर्णोतिस्तु न भवति। नुवद्भावातिदेशात्। न चैवमपोर्णोतेरित्युत्तरसूत्रेणानेकाच्त्वनिरपेक्ष आम् स्यादेवेति वाच्यम्। आमश्च प्रतिषेधार्थमिति नुवद्भावपक्षेऽपि पाठसामर्थ्यात्तस्या अप्यप्रवृत्तेः। भाष्यकारेण संहितया सूत्रपाठमाश्रित्यान्यच्छेदयायाम इत्यत्र अम्च्छ उ इत्युकारप्रश्लेषेण उकारान्तस्याम्निषेधाच्च। नन्वेवमुषशब्दादाचारक्विपि इजादेरित्याम् पूर्वोदाहृते माधवादिसम्मतव्याख्यानेन भाष्येण विरुध्येतेति चेन्न। प्रथमपक्षेण तत्सम्भवात् द्वितीयपक्षे तु

प्रत्ययलक्षणेन प्राप्त आम् न भवति। 'कास्यनेकाच इति वक्तव्यमिति। यथान्यासे हि कशब्दादशब्दादागादिभ्यश्चाचारक्विबन्तेभ्य एकाज्भ्योऽपि प्रत्ययान्तत्वादाम् प्रसङ्गः, चुलुम्पादिभ्यश्चाप्रत्ययान्तत्वादप्रसङ्गोऽतोऽव्याप्त्यतिव्याप्तिपरिहाराय प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यमित्यर्थः। तत्र कशब्दस्य णलि 'अचो ञ्णिती'ति वृद्धौ 'आत औ णलः,' चकौ, अन्यत्रातो लोपः चकतुः चकुः, अशब्दस्य णलि रूपमौविति, अन्यत्र 'ऽत आदे'रिति दीर्घत्वे 'आतो लोप इटि च' अतुः, उः। 'चकासांचकारेति'। चकासृ दीप्तौ। दरिद्रांचकारेति' 'आत औ णल' इत्यत्र औकारे विधातव्ये औकारविधानं दरिद्रातेरार्धधातुके लोप इत्याकारलोपेऽप्यौका-

## कास उपसंख्यानमिति । (भा)

वार्त्तिकं सूत्रस्थं प्रत्ययग्रहणं च न कार्यमिति भाष्यतात्पर्यम् । यथाश्रुतवार्त्तिकेऽपि प्रत्ययग्रहणस्थानेऽनेकाच् ग्रहणं कर्त्तव्यमित्येव तात्पर्यमिति हरदत्ताद्यनुसारिणः ॥ अन्ये तु कासीति सप्तमी कास्घटितसूत्रे इत्यर्थः । अन्यथा समाहारद्वन्द्वे टजापत्तिः । इत-

मा भूदाम् । यथालक्षणमप्रयुक्त इत्यभ्युपगमात् । यद्वा । उश्चासौ उश्चेति प्रश्लिष्टनिर्देशेन उदन्तस्यैव गुरुमतः पर्युदासः । स च इजादे-रिति सूत्रस्यैव शेषः । तेन वल्गुफल्गुप्रभृतिभ्यः क्विबन्तेभ्यो ऽनेकाचत्व-प्रयुक्त आम् भवत्येवेति सर्वं सुस्थम् । अत्र काशिका । आमो मित्त्वम-दन्तत्वादगुणत्वं विदेस्तथा । आस्कासोराम्विधानाच्च पररूपं कृतन्तवत् ॥ अस्यार्थः । मित्त्वाभावो ऽमित्त्वम् । आमो मकारस्य हलन्त्यमितीत्संज्ञा न भवति । कुतः । अत् अन्ते समीपे यस्य तथात्वात् । सूत्रे विधान-वेलायां समीपे अकारवत्त्वादिति यावत् । प्रसङ्गादाह । विदेरामि गुणाभावोपि तथा । अदन्तत्वादेवेत्यर्थः । उषविदजागृभ्य इति सूत्रे चि-

---

रस्य श्रवणार्थं, तेन दरिद्रांचकारेत्यपि भवतीत्याहुः । 'चुलुम्पाञ्चकारेति' । चुलुम्पतिर्वार्तिकाकारवचनात्साधुः । आमो मकारस्य 'हलन्त्य' मितीत्संज्ञा कस्मान्न भवतीत्याह । 'आमोमित्त्वमिति' । कारयांचकारेत्यादौ प्रयोगे य आम्शब्दस्तस्यामित्त्वं मकार इत्संज्ञको यस्य नास्ति सोमित् तस्य भाव अमित्त्वं, कुत इत्याह । 'अदन्तत्वादिति' । अत् अन्ते समीपे यस्य सोदन्तःसूत्रे विधानवेलायां समीपे ऽकारवत्त्वादित्यर्थः । तेनैतन्न चोद-नीयमाम् चेत्कथमदन्तः, अथादन्तः, कथमामिति, सूत्रे विधीयमानस्यैव वा प्रत्ययस्योपलक्षणमाम इति । 'अगुणत्वं विदेस्तथेति' । विदांचकारे-त्यत्र विदेरामि गुणाभावोऽपि तथा, अदन्तत्वादेवेत्यर्थः । अदन्तत्वादि-त्येतत्प्रसङ्गेन चेदमिहोक्तम्, 'उषविदजागृभ्योन्यतरस्या'मित्यत्र तु वक्ष्यते,

रेतरयोगे तु द्विवचनापत्तिः। प्रत्ययग्रहणापनये च न मानं सूत्रे प्रत्ययग्रहणं तु योगविभागनियमकल्पनारूपे गौरवपरिहारेण स्पष्टार्थमेव। एवं चकासृशब्दादिभ्य आचारक्विपि कामाचेत्यादिरूपाण्येव सत्यभिधाने इत्याहुः॥

---

आम्प्रत्ययसन्नियोगेन विदेरदन्तत्वं निपात्यते। तत्राल्लोपस्य स्थानिवत्त्वान्न गुणो न भवति। यदि तु विद ज्ञान इति धातुपाठ एव अकारो विवक्ष्यते तदा वेत्तीत्यादि न सिध्येत्। अकारश्रवणप्रसङ्गात्। इदानीमाम्प्रत्ययस्य मान्तत्वमङ्गीकृत्यापि मित्त्वाभावे ज्ञापकमाह। आस्कासोराम्विधानाच्चेति। आमः अमित्त्वमित्यनुषङ्गः। दयायासश्च कास्प्रत्ययादिति सूत्राभ्यामास्कासोराम्विधानादमित्त्वमामोऽनुमीयते। सति हि मित्त्वे आस्कासोराम् भवन् अचामन्त्यादाकारात्परः स्यात्। तथा च सवर्णदीर्घत्वे सति अकिञ्चित्करः स्यादिति भावः। नन्वदन्तत्वपक्षे आमामन्त इति निर्देश्यं स्यादत आह। पररूपमिति। यथा सर्वत्रलोहितादिकतन्तेभ्य इति सूत्रे पररूपं निपातनात् शकन्ध्वादित्वाद्वा एवमिहापीति भावः॥

---

तत्र हि विदेरकारान्तत्वमामप्रत्ययसन्नियोगेन निपात्यते, तत्रातो लोपस्य स्थानिवत्त्वाद्गुणो न भवति, न पुनर्विद ज्ञान इत्यकारो विवक्षित इत्युच्यते वेत्तीत्यादौ श्रवणप्रसङ्गात्, अभ्युपेत्यापि मकारान्तत्वमित्संज्ञाभावमाह। 'आस्कासोराम्विधानाच्चेति'। आमोऽमित्त्वमित्यनुषङ्गः, सति हि मित्त्वे आस्कासोराम् भवन्नप्यचामन्त्यात्परः स्यात्तथा च सवर्णदीर्घत्वे सत्यकिञ्चित्करः स्यात्, अतो 'दयायासश्च' कास्प्रत्ययादिति आस्कासोराम्विधानादप्यामोऽमित्त्वमवसीयत इत्यर्थः। आस्चकास्योर्विधानाच्चेत्यन्ये पठन्ति, तदयुक्तं, नहि सूत्रे चकास आम्विधानमस्ति, यदपि कास्यनेकाज्ग्रहणं तदपि चुलुम्पादौ सावकाशं, नन्वदन्तत्वपक्षे आमामन्त इति निर्देश्यं स्यात्तत्राह। 'पररूपं कतन्तवदिति'। यथा 'सर्वत्रलोहितादिकतन्तेभ्य' इत्यत्र पररूपमेवमत्रापि निपातनात्पररूपमित्युक्तं भवति॥

# इजादेश्च गुरुमतोऽनृच्छः। ३। १। ३६॥

भाष्ये

लिण्निमित्ताद्गुरुमत इति। (भा)

'गुरुमति लिण्निमित्तत्वं गुरुद्वारा बोध्यम्॥

द्विवचनबहुवचनयोरिति। (कै)

तयोः कित्त्वादिति भावः। तत्र द्विवचनापेक्षया नित्यत्वादेकाच्कत्वक आम्। णलि तु परत्वाद्गुणे नित्य आम्प्राप्नोतीति विशेषः। एतेनाचापि सवर्णदीर्घे गुरुमत्त्वमस्तीति कथमवकाश इत्यपास्तम्॥

विप्रतिषेधे इति। (कै)

यद्यसंभवे विप्रतिषेधोऽस्ति यत्रोभयोः संभवबुद्धिरित्युच्यते तदापि विकल्पसिध्योवोषेत्यस्य सिद्धिरिति भावः॥

---

इजादेश्च गुरुमतोऽनृच्छः॥ इजादिर्यो धातुर्गुरुमान् ऋच्छतिभिन्नस्तस्मादाम् स्याल्लिटि नतु मन्त्रे। ईहाञ्चक्रे। ऊहाञ्चक्रे। इजादेरिति किम्। ततक्ष। गुरुमतः किम्। इयेषिथ। नन्विह गुणे कृते गुरुमत्ता-

---

"इजादेश्च गुरुमतो ऽनृच्छः"। 'ऋच्छतिवर्जित इति'। ऋच्छतिना यस्तः तद्भपरहित इत्यर्थः। ऋच्छतेरन्य इति यावत्। 'इयज उवयेति'। यजिवप्योस्तमे यलि 'णलुत्तमो वे'ति णित्त्वाभावपक्षे वृद्ध्यभावादूरूपोत्तमत्वाभावः, अथ यलि प्रत्युदाहरणम्। इयजिथ इयष्ठ, उवपिथ, उवप्थेति। नन्वत्र सन्निपातपरिभाषयैव न भविष्यति, लिट्व-

## प्रतिपदेति। (कै)

अनवकाशत्वाभावेऽपि पूर्वप्रवृत्ताविदन्त्वप्रनियामकमिति भावः॥ उवोखेति कवर्गद्वितीयां इत्यन्ये॥ ननु द्विवचनादौ किति गुणाभावे आमभावाय गुरुमद्वचनं चरितार्थमत ईषतुरिति॥

## उपदेशेति। (कै)

एवं च मितादिति प्रतिषेधोऽनर्थक इति भावः॥ इयष्टेति संयोगपरत्वेन गुरुमत्त्वेऽपि उपजीव्यविरोधाभावामिति गुरुमद्ग्रहणस्येदं फलमिति भावः॥ इयजिर्थत्येव वा प्रत्युदाहरणम्॥ ननु यजादीनां कथमिजादित्वं तत्राह

## लिट्यभ्यासस्येति॥ (कै)

## तस्मान्नित्ययोग इति। (कै)

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने" इत्युक्तेः। प्रकृते लक्ष्यानुसारात्तथैव मतुबिति भावः॥ ननु वचनशब्दस्य व्याख्यानपरत्वेऽप्युपदेशग्रहणमित्यसङ्गतमत आह

---

प्यस्येवेति चेत्सत्यम्। गुरुमद्ग्रहणे सति सन्निपातपरिभाषया इत्वाम्। निबन्धनत्वेऽहेतुकत्वाद् गुरुमत्तायाः। यद्वा। लिटीति विहितविशेषणम्

---

सन्निपातजं हि अभ्यासस्य संप्रसारणं तद्विघातकस्यामो निमित्तं न भवति, आमि हि सति लेशुंका भवितव्यमिति लिटसन्निपातमसौ विहन्यात्, इदन्तर्हि प्रत्युदाहरणम् इयेषेति, नह्यत्र लिट्सन्निपातजमित्वम्, अत्र क्रियमाणेऽपि गुरुमद्ग्रहणे कस्मादेवाम् न भवति यावता गुरोः सति

उपदेशग्रहणेति ॥ (कै)

तुकग्रहणमिति । (कै)

सामान्यापेक्षं ज्ञापकमित्यर्थः ॥ अल्लावामोऽभावादाह

प्रतिषेधेति । (कै)

तुग्निमित्ते ह्रस्वाद्यर्थे ज्ञापिते ततोऽपि प्राप्तस्य प्रतिषेधार्थं इति भावः ॥

तस्मादाम एवेति । (कै)

यद्यप्यन्तरङ्गभूतपरिभाषाबाध एवोचितः । तथापि तस्य वाक्यार्थबोधात् प्रागुपस्थितिकतया वैयर्थ्यस्य च लक्ष्यसंस्कारवेलायामुपस्थितत्वेनासंजातविरोधन्यायेनाम् बाध एवेति भावः । एवं च तुग्निमित्तेऽन्यार्थे ज्ञापितेऽप्यस्य सार्थक्यं दुरुपपादम् । अल्लेराम-भावस्य प्रकारान्तरेण सिद्धेरिति नैतज्ज्ञापकमिति तात्पर्यम् ॥ ननु स्थानिकार्यस्यादेशे जायमानत्वेऽपि आदेशकार्यस्य कथं सामर्थ्या-दपि स्थानिनि प्रवृत्तिस्तत्र स्थानिवद्भावस्येवाचोपायाभावादत आह

---

इणादेर्गुणवतो विहितो यो लिट् तस्मिन्निति । तेन लिण्निमित्ता या गुणवत्ता तस्मान्न भविष्यति । अनन्तः किम् । आनर्च्छ । आनर्च्छतुः ।

---

गुणमानेव भवति, एवमीक्षतुरित्यादावपि सवर्णदीर्घत्वे कृते गुणमानेव भवति, सत्यं, सति गुणवद्ग्रहणे सन्निपातपरिभाषयैवाबाध्याम् न भवति लिडानन्तर्यहेतुत्वाद्गुणवत्तायाः, अथवा गुणवत इति नित्ययोगे मतुप् नित्यं यस्य गुणस्याभिसम्बन्धः, यद्येवम् ऊर्णोति विवासे अध्याहार

ऋच्छतीति ॥ (कै)

शितीति । (कै)

ऋच्छत्यस्य सामान्यधानात्तिप् परत्वाभावो बोध्यः ॥ ननु परत्वा-द्यपि द्विर्वचने ऽचीत्यनेन द्वित्वे स्थानिवद्भावात् द्वित्वे कृते पुन-रादेशरूपेणैवोच्चारणादृस्यावस्थानादभ्यासस्योरति हलादिः शेषे ऽत आदेरिति दीर्घे आरतुरित्यादिसिद्धिरत आह

यणादेशादिति ॥ (कै)

ननु यण्नित्य इति कथं विप्रतिषेधोऽत आह

सतीति ॥ (कै)

द्विर्वचनात् । (कै)

यस्मिन्निति शेषः ॥ द्विर्वचने ऽचीति सूत्रे स्थानिवद्भावपूर्वप्रति-षेधयोः किं न्याय्य इति । भाष्योक्ते पूर्वविप्रतिषेधारम्भे तदभावस्य लाभादयं पूर्वविप्रतिषेधो नित्यानामपि बाधक इति वक्तुम् इत एव वाक्येराह

---

आनर्छुः । अनृच्छ इति ग्रहणमकर्तुम् । ऋच्छत्यृतामिति लिटि परे गुणविधानाल्लिङ्गादेव आमो ऽप्रवृत्तेः । न च तत्र ऋच्छतीत्यनेन वर्तेत

---

उच्छ उच्छे उच्छांचकार आगमनिमित्ता अस्य गुरुमत्ता तस्मादाम् न प्राप्नोति ज्ञापकात्सिद्धं, यदयमनृच्छ इत्याह तज्ज्ञापयति भवत्येवं जातीयके आमिति, स तर्हि ज्ञापकार्थमनृच्छतिप्रतिषेधो वक्तव्यो भवति । ननु व्याख्यातव्य एवासौ कर्तव्यो नार्थ आख्यातत्वेन, ज्ञापकात्सिद्धं,

**अथ वेति॥** (कै)

**सति वा यणीति।** (कै)

द्वित्वे रूपातिदेशेन द्वित्वे जाते पश्चाद्यथायथं योगशास्त्रप्राप्तिरिति दीर्घ एवेति भावः॥

**अन्तादिवदिति।** (कै)

उत्तरखण्डस्यैव क्रियावाचकत्वेन धातुत्वमिति भावः। समुदायस्य धातुत्वे त्वेतदसङ्गतिः स्पष्टैवेति बोध्यम्॥ स्थानिवदतिदेशस्यापि सम्भवादाह

**स्थानिवद्भावादेति** (कै)

स्थान्यत्वाश्रयत्वाभावः। स्थानिवत्त्वप्राप्त्युपपादकमुभयादेशस्येत्यादिः॥ भाष्ये

**गुणे पुनः सतीति।** (भा)

ननु परत्वात्कृतेऽपि गुणे द्विर्वचनेऽचीति रूपनिर्देशादृशब्दस्यैव द्वित्वमिति को विशेष इति चेन्न। यणादेशे कृते एकारादिव्याघातप्रयुक्ताद्वित्वाप्राप्तिस्तत्रैवातिदेशप्रवृत्तिरित्याशयात्॥

---

श्लिपा निर्देश इति वाच्यम्। ऋच्छत्यृतामिति सवर्णदीर्घेण स्वरूपेणो-वार्त्तः प्रश्लेषात्। प्रश्लेषे च बहुवचनं। प्रमाणम्। अत्र श्लोकवार्त्तिकं,

---

यच्च 'ऋच्छत्यृता'मिति लिटि परतो गुणं शास्ति तज्ज्ञापयति नाभ्यासस्य भवतीति, न च तत्र कृतीत्यत्रानुवृत्तिपाणिनिर्देशः, ऋच्छति ऋ ऋतामित्यत्रैरपि स्वरूपेणैव प्रश्लेषात्, प्रश्लेषे बहुवचनमत्र प्रमाणम्, अर्थैश्च

इह दूरदत्वमिति। (कै)

आगमनमपाप्त्यङ्गाधिकारादिति भावः॥ इदं प्रौढ्या कैयट आहेत्यनुपदमेव स्फुटं भविष्यति।

वव्रश्चेति। (कै)

अत्राभ्यासरेफस्य संप्रसारणे उरदत्वे तस्य अङ्गाश्रिपरनिमित्त- त्वेन संप्रसारण इति तस्य तन्निषेधे स्थानिवत्त्वं सिद्ध्यतीत्यर्थः॥ अकारनिर्देशलिङ्गं प्रत्याह

बहुवचनेति॥ (कै)

धातोरेवेति। (कै)

गत्यर्थस्य न तु तदन्तविधिरित्यर्थः॥ भाष्ये।

तदन्तरेणार्तेरिति। (भा)

वार्णपरिभाषयैवेति भावः। समानाश्रयविषयैवेति तु न मानाभावादिति भावः॥ ननु पूर्वमुरदत्वेऽपि हलादिः शेषे ऽत

---

वाचमूर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्। आमश्च प्रतिषेधार्थमेका- चश्चेडुपग्रहात्॥ अत्र यदि भावनिर्देशः यामिटोऽन्त्यभावनिर्देशः। नो

---

क्ङिति गुणविधाने प्रयोजनं तत्रैव वक्ष्यामः, तस्मादृच्छत्यॄतां गुणविधानं ज्ञापक- मेव तस्मादाम भवतीति स एषोऽन्त्य इति प्रतिषेधो ज्ञापकार्थ एव कर्तव्यः स्यात्, एवं तर्हि क्ङितीति निमित्तविशेषणम् इग्लक्षणयोर्गुणवृद्ध्योर्यो क्ङिद्विहितलक्षणेति, तेन क्ङिन्निमित्ता यस्य गुणसत्ता तस्याश्च न भविष्यति आगमनिमित्ता यस्य गुणसत्ता तस्याश्च भवत्यति, अन्त्य इति

आदेरिति दीर्घं परत्वाद्धे यणादेशं बाधित्वाद्गुण इति प्राप्नोतीत्यपिद्विरत आह

अन्तरेण च च्छिग्रहणमिति । (भा)

अकारनिर्देशेनेति भावः ॥ अथमपि चरितार्थाभावात्कथं ज्ञापकत्वमत आह

अनुच्छ इतीति । (कै)

तत्वहुगागमवद् धातुलक्षणायैव तदुपादानमिति भावः । वाक्यभेदश्च बोध्यः । अनन्यार्थं इत्यनेन भाष्ये ध्वनितमेतत् ॥

अथवेति । (कै)

इदं प्रौढ्या ॥

लेर्लुकेति । (कै)

अव्यवधानविधानस्य बोध्यः । एवं चानृच्छ इति चिपिनमित्तादिति च प्रत्याख्यातम् ॥ ननूपदेश इति व्याख्याने ईत् कृत-

---

तौ तयोरभावात् । चङ्पग्रह इट्प्रतिषेधः ॥ विभाषागुण इति पञ्चमी । फलस्य चात्र हेतुत्वम्, अध्ययनेन वसतीतिवत् । एकाच इति वर्तमाने

---

प्रतिषेधस्तु क्रियतां मा वा कारि, कं चित्तु गुणमत इति किम् इयेष उवोषेति पठ्यते, तत्र उवोषेत्युदाहरणमयुक्तम् उषविदजागृभ्य इति विकल्पविधानात्तु नित्यस्य विधेः प्रसङ्गाभावात्, अन्यथा विकल्पविधानमनवकाशं स्यात् । 'प्रोर्णुनावेति' । 'अजादेर्द्वितीयस्य' 'नन्द्राः संयोगादय' इति णुशब्दस्य द्विर्वचनं कार्यान्तरसिद्ध्यर्थमवश्यमूर्णोतिर्यङ्गावो

शब्देभ्य आचार क्विपि आम्प्राप्नोति तत्प्रत्याख्याने तु प्राप्नोति इति चेन्न प्रत्ययान्तत्वेनैव तत्रामसिद्धेरित्याशयात् । हलन्तेभ्य आचारक्विपोऽभावाच्च ॥ भाष्ये

**वाच्य ऊर्णोरिति ।** (भा)

तत्र यङि भावातिदेश आमिटोरभावादतिदेश इति बोध्यम् । तेनेजादेरिति अनेकाच इति चानुवर्तत इति बोध्यम् । उकारप्रश्लेषेऽपि तत्सामर्थ्यात् वाध्यसामान्यचिन्तायां सर्वस्याप्याम: प्रतिषेध इति बोध्यम् ॥

**तेनोकारान्तस्येति ।** (कै)

ऋच्छिसाहचर्यादौपदेशिकस्येत्यर्थः । तदाह

**ऊर्णोतेरिति ॥** (भा)

---

इत्युक्तः क्ङितीति य इट्प्रतिषेधः ततोपि हेतोर्णुवद्भावो वाच्य इत्यर्थः । प्रोर्णोनूयते । प्रोर्णुनाव । प्रोर्णुतः प्रोर्णुतवान् ॥

---

वाच्यः, तेनैवामोपि प्रतिषेधः सिद्ध इत्याह । 'अथ वा वाच्य इति' । तत्र यङि भावातिदेशः, आमिटोस्त्वभावातिदेशो नैतत्तयोरभावात् । इडुपग्रह इटप्रतिषेधः, विभाषा गुणाइति पञ्चमी, पञ्चम्या चात्र हेतुत्वं यथाध्ययनेन वसतीति, एकाच इति वर्त्तमाने 'श्र्युकः क्ङिती'ति य इट्प्रतिषेधः ततोपि हेतोर्णुवद्भावो वाच्य इत्यर्थः । उदाहरणानि प्रोर्णो-नूयते, प्रोर्णुनाव, प्रोर्णुतः प्रोर्णुतवानिति ॥

# उषविदजागृभ्योऽन्यतरस्याम् । ३ । १ । ३८ ॥

उषविदजागृभ्यश्चर्यात्परस्मैपदिन आदादिकस्यैव विदेर्ग्रहणम् अकारलोपाभावाच्चेति ॥ गुणासिद्धिर्दोषोपलक्षणमिति भावः ॥ ननु क्विटोऽप्युपस्थित्या तत्सन्नियोगेनापि विधानं स्यादत आह

आम् इति निपातनाद्वेति (भा)

भाष्ये ॥

सूत्र । (कै)

अदन्तत्वनिपातनादित्यर्थः ॥

---

उषविदजागृभ्योन्यतरस्याम् ॥ एभ्य आम् वा स्याल्लिटि । उष दाहे । विद ज्ञाने । सत्ताविचारणार्थयोस्तु आत्मनेपदिनोर्लाभार्थस्य चोभयपदिनो नेह ग्रहणम् । परस्मैपदिभ्यामुषविदजागृभ्यां साहचर्यात् । ओषाञ्चकार । उवोष । विदेरिह आममन्नियोगेनादन्तत्वनिपातनाद् गुणो न । विदाञ्चकार । विवेद । जागराञ्चकार । जजागार ॥

---

"उषविदजागृभ्यो ऽन्यतरस्याम्" । 'विद ज्ञान इति' । सत्ताविचारणार्थयोस्त्वात्मनेपदिनोर्लाभार्थस्य चोभयपदिनोर्ग्रहणं न भवति परस्मैपदिभ्यामुषिजागृभ्यां जागर्तिनाऽदादिकेन साहचर्यादिति भावः । विवेदेति' । आम्प्रत्ययसन्नियोगेनादन्तत्वप्रतिज्ञानादत्र गुणो भवत्येव, अत एवाह, 'विदेरदन्तत्वप्रतिज्ञानादामि गुणो न भवतीति' ॥

# भीह्रीभृहुवां श्लुवच्च । ३ । १ । ३९ ॥

**न लुमतेति ।** (कै)

लुमच्छब्दे कार्ये सति अङ्गस्य कार्यं नेत्यर्थ इति मन्यते ॥

**प्रत्ययेति ।** (कै)

लुमता शब्देन लुप्ते प्रत्ययलक्षणेनाङ्गकार्यं नेति तदर्थ इति भावः ॥

---

भीह्रीभृहुवां श्लुवच्च ॥ एभ्यो लिङ्याम्वा एषां श्लाविव कार्यं च । किं पुनस्तत् । द्वित्वमित्वञ्च । बिभयाञ्चकार । बिभाय । जिह्रयाञ्चकार । जिह्राय । बिभराञ्चकार । बभार । जुहवाञ्चकार । जुहाव । इह द्वित्वं सर्वेषाम् । इत्वन्तु बिभर्तेः । भृञामिदिति श्लौ विधानात् ।

---

"भीह्रीभृहुवां श्लुवच्च" ॥ श्लुवत्कार्यापेक्षया सूत्रे षष्ठी, सन्नियोगशिष्टत्वाच्चाम् प्रत्ययोऽपि तेभ्य एव विधीयते । 'द्वित्वेत्व इति' । श्लाविति द्विर्वचनं 'भृञामित्' तीत्वं, तत्र श्लाविति वर्तते, 'न लुमताङ्गस्ये'ति गुणप्रतिषेधस्तु न भवति, किं कारणं, 'प्रत्ययलोपे प्रत्ययलक्षण'मित्यस्याप्राप्तेरयं प्रतिषेधः अयमाश्रत्वादामः ।

# कृञ्चानुप्रयुज्यते लिटि । ३ । १ । ४० ॥

अनुप्रयोगाय अन्यधात्वनुप्रयोगस्य वारणाय च सूत्रमावश्यक-मित्यत आह

अन्तरेणापीति । (कै)

लिट्परस्य कृञ इत्यस्यानुप्रयोगः सिद्ध इत्यनेनान्वयः । आम-न्ताद्धि क्रियाविशेष एवेति पाठः । कालविशेष इति पाठे कालेन विशेष्यते यः स क्रियारूप इत्यर्थः ॥

---

कृञ्चानुप्रयुज्यते लिटि ॥ आमः पश्चात् लिट्परः कृञ् प्रयुज्यते । कृञिति प्रत्याहारः कृभ्वस्तीत्यतः कृञोद्वितीयेति ञकारेण । तेन कृभ्वस्तयो ग्राह्याः । अत्र च प्रमाणम् आम्प्रत्ययवत्कृञोनुप्रयोग-स्येति सूत्रे कृञ्ग्रहणम् । अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न । अन्यथा हि कृभ्वनुप्रयुज्यत इत्येव ब्रूयात् । याचयांचकार याचयांबभूव । याच-

---

"कृञ्चानुप्रयुज्यते लिटि" । अनुप्रयुज्यतइत्यनुशब्दः पश्चादर्थे, तत्र कस्य पश्चादित्यपेक्षायामामः प्रकृतत्वात्तस्यैवेति विज्ञायतइत्याह । 'आम्प्रत्ययस्येति' । यो ऽयमाम्प्रत्ययो विहितः, कर्मधारयो ऽयं न तु बहुव्रीहिः, आम्प्रत्ययो यस्मात्सो ऽयमाम्प्रत्ययस्तस्येति । तथा हि सत्या-म्प्रत्ययवदितिवदामः प्रत्ययस्य प्रकृत्युपलक्षणत्वाद्धातोरामश्च मध्ये कृञः प्रयोग उक्तः स्यात् । 'पश्चात्कृञनुप्रयुज्यत इति' । पश्चाच्छब्दसन्निधानमु-शब्दो ऽयमनुवादः । 'लिटि परत इति' । लिटि परतः स्थितो यः कृञ् सो ऽनुप्रयुज्यतइत्यर्थः । सूत्रेपि लिटीति नानुप्रयोगस्य निमित्तनिर्देशः, किं तर्हि 'परोक्षे लिट्' इत्यनेन विहिते लिटि परभूते यः कृञ् सो ऽनुप्रयुज्यत इति वचनव्यक्तिः । चकारेत्यादिपदमनुप्रयुज्यतइति यावत् ।

सामान्येति । (कै)

सामान्यस्यापि विशेषे पर्यवसानात्तद्व्यक्तिवादिनापि विशेषसम्बन्धिसाधनाद्यवगतिरित्यर्थः ॥

भ्वस्त्योरिति । (भा)

तयोरपि सामान्यवाचकत्वादिति भावः ॥ भाष्ये दूषयति

उच्यमानेऽपीति ॥ (भा)

परस्मैपदेनापीति । (कै)

सूत्रन्यासेन तदृक्तातिशयालाभादिति भावः ॥

---

यामास । इच्छानुप्रयुक्तस्यास्तेर्भावकर्मणोर्लिट् । तत्र एधि इटि च रूपे विप्रतिपद्यन्ते । तथाहि । उभयत्रापि हन्तीति वादेशे कृते ईहामाहे इति केचित् । तासिसाहचर्यादिस्यैव हत्वमित्यन्ये । तस्माहचर्यादेव सार्वधातुक एव एति हत्वम् । तेनोभयत्रापि ईहामासे इति रूपमित्यपरे । स्यादेतत् । आमन्तमेतदनभिव्यक्तपदार्थकं तस्मात् कारकविशेषः सङ्ख्या-

---

'कृञिति प्रत्याहारेणेति' । कृभ्वस्तियोगइति कृशब्दादारभ्य कृञो द्वितीयेत्या कृञो अकारात्प्रत्याहारः । अत्र च प्रमाणमाम्प्रत्यय इत्यत्र कृञ् ग्रहणं, यदि ह्यत्र स्वरूपग्रहणं स्यात्तदान्यस्यानुप्रयोगस्याभावादनर्थकं तत्र कृञ्ग्रहणं स्यादत एव विपर्ययोपि न भवति तत्र प्रत्याहारग्रहणमिह स्वरूपग्रहणमिति, नह्यत्र स्वरूपमात्रग्रहणे तत्र कृभ्वस्तीनामनुप्रयोगत्वानुवाद उपपद्यते । 'तत्सामर्थ्यादिति' । प्रत्याहारग्रहणसामर्थ्यादर्थः । 'अस्तेर्भूभावो न भवतीति' । अन्यथा ऽसन्देहार्थं कृञ्चानुप्रयुज्यते लिटीत्येव ब्रूयादिति भावः । तत्र एधि इटि च रूपे विप्रतिपन्ना उभयत्र 'ह एति' ईहामाह इति केचित् । अन्ये तु तासिसाहचर्यादिस्यैव हत्वमिति, अपरे तु साहचर्यादेव सार्वधातुके एवेति हत्वमित्युभयत्र ईहामास

सम्पदश्चेति । (कै)

चेन संरक्षितपद्धातोरपौत्यर्थः । एतेन सम्पदो धातुत्वाभावात् कपाचाद्यमाजात्येन प्रत्याहारेण सन्निवेश इत्यपास्तं मध्यवर्तिनः सजातीया एव ग्राह्या इत्यर्थे मानाभावाच्च ॥

विद्यतीति । (कै)

विद् सत्तायामिति स्मरणादिति भावः ॥ भाष्ये

अर्थाभावाच्चेति । (भा)

एधामित्यादिना पचादेरन्वयायोग्यत्वात् । एधामित्याद्यपे क्षस्यानुप्रयोगोऽसम्भवीतमः प्राप्तेः ॥ पचादिभ्यस्तु आम्प्राप्त्यभावादेव न तद्विषये तदनुप्रयोगस्तदाह भाष्ये

---

विशेषो वावगम्यते । तत्र विशेषसमर्पणाय न्यायत एवानुप्रयोगलाभात्किमनेन सूत्रेणेति चेत् । अत्रोच्यते । क्रियामात्रविवक्षायां कारकत्वसङ्ख्यायोश्चाविवक्षायां पाकप्रेरणा जातेत्यादिप्रयोगास्तावत्सर्वसम्मताः । तत्र तथैव पाचयामित्येतावन्मात्रप्रयोगे प्रसक्ते तं वारयितुमिदम् । किञ्चास्तिभवत्योरिव विद्यतेरपि प्रयोगे न्यायतः प्रसक्ते तमपि वारयितुमेतत् ।

---

इतिरूपमिति स्थिताः । इहामन्तमेतदनभिव्यक्तपदार्थकं नास्माद्भावकर्मकर्तृविशेषः पुरुषविशेषः संख्याविशेषो वा गम्यते केवलं पूर्वापरीभूतानद्यतनकालं परोक्षे साधनादिविशेषाकाङ्क्षं क्रियारूपमर्थमाह, तत्रावश्यं तदाकाङ्क्षानिवृत्तये विशेषवाचिपदमनुप्रयोक्तव्यं, तस्मादनुप्रयुज्यत इत्ययं योगो न विधातव्यः, इदं तर्हि प्रयोजनं कृभ्वस्तीनामेव यथा स्याद्धात्वन्तरस्य मा भूत्, कस्य पुनः प्राप्नोति सामान्यवचनस्यानुप्रयुज्येत कारयांपपाचेति, विशेषवचनस्य वा तत्रापि सोऽनुप्रयुज्येत उषामुवोष विदांविवेद जागराञ्जजागारेति, तत्समानार्थो वा उषान्ददाहेतीत्याद्यर्थान्तरवचनो वा

**न च सामान्येत्यादि ॥** (भा)

**न द्वयोरेकार्थयोरिति ।** (कै)

आभिषयोरित्यर्थः । द्वितीयप्रयोगे ऽप्यामः प्राप्तेरिति भावः । न च याचयामित्युत्तरं पचेरन्तर्भावितण्यर्थस्य समानार्थतया प्रयोगः स्यादिति वाच्यम् । उत्तरेणैव सिद्धे पूर्वस्य वैयर्थ्यापत्तेरिति भावः ॥ न तु निवृत्तप्रेषणकृञो णिचि कारयामित्यतः पचेरनुप्रयोगः स्यादिति सामान्यविशेषवाचिनोरित्यपि वक्तुं युक्तमत आह

किञ्च निवृत्तप्रेषणाद्धातोः प्रकृत्यर्थे णिच्चि सामान्यवाचकानुप्रयोगार्थं सूत्रमेतत् । अपि च, पश्चादेव प्रयोगो यथा स्यात् न तु पूर्वमिति । तेन चक्रे ईहामित्यादि न भवति । अपि च, अव्यवहित एव पश्चाद्भावो मुख्यः । तथा च व्यवहितनिवृत्त्यर्थमपीदम् तेन ईहां राजा चक्रे इत्यादि न भवति । कथन्तर्हि बहुचब्राह्मणे तान् ह राजा मदयामेव चाकरेति ।

उषाम्बपाचेति । प्रथमे पक्षे यावदपेक्षमेव नानुप्रयुक्तं स्यादधिकोऽप्यर्थो गम्येत पाकादिविशेषो नाम, द्वितीयतृतीययोस्त्वनुप्रयोगमात्र सकलार्थावगतेरासप्रयोगो व्यर्थः स्याच्चतुर्थे तथा ... एव विशेषो गम्येत न त्वामवगतस्तद्गतविशेषाभिधानाय त्वामनुप्रयोगश्चमनमत एव प्रत्याहारान्तर्भूतस्यापि सम्पद्यतेऽनुप्रयोगो न भवति अन्यथा तस्यापि स्यात्, 'सनाद्यन्ता धातव' इत्यतो धात्वधिकाराद्वा धातूपसर्गसमुदायस्य न भविष्यति एवमपि यो न धातुस्तस्य प्राप्नोति तस्मात्सामान्यवचनस्य विशेषवचनस्य वा सामान्यवचनं वानुप्रयोज्यम् एवं हि सामान्यस्य सन्निहिते एव विशेषे पर्यवसानात्तद्गतसाधनादिविशेषाभिधानसामर्थ्यगतविशेषाभिधानमेव संवर्त्तते, तथा चास्योरनुप्रयुज्यमानयोरामन्तवशेन सकर्मकत्वं भवति, तस्मात्पचं बिभराम्बभूव, अहं किम व्यपेक्षामास इति, तदुपपद्यते, तेन द्वयोः सहप्रयोगः, यदि तु सामान्यवचन एव प्रयुज्यते

सामान्यवाचिनश्चेति ॥ (कै)

वर्त्तमानविहितस्य लटः कथं भूते प्रयोग इत्यत आह

भूतपूर्वामिति ॥ (कै)

न च साम्प्रतिकेति । (कै)

वर्त्तमानसामीप्ये लट्यपि न विवक्षितमुख्यभूतत्वप्रतीतिः स्यादिति भावः ॥

---

छान्दसत्वादित्यन्ये हि । कथन्तर्हि भट्टिकाव्ये, उत्क्षाम्बचकर्त्तगस्य मार्गान्। बिभयाम्बभूवारावाविति । कथञ्च रघुकाव्ये । तं पातयां प्रथममास पपात पश्चात् । प्रभ्रंशयां यो नहुषं चकारेति । प्रमाद एवायम् । विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चेति वार्तिकविरोधादित्याहुः । इहाम्प्रकृतेः कृभ्वस्तीनाञ्च सामान्यविशेषवचनतया तदर्थयोरभेक्रियाविशेषो न गम्येत । आमन्तस्यैवानभिव्यक्तिस्तस्मात्कृञ्चेत्ययमप्यंशो न विधेयः, इदं तर्हि प्रयोजनं लिट्परस्यैव यथा स्यात्प्रत्ययान्तरपरस्य मा भूदिति परस्य पुनः प्राप्नोति कृत्यरस्य, न कृत्परस्यानुप्रयोक्ष्यमाणपुरुषविशेषाभिव्यक्तिः लिटि तु विवक्षकालतैव लृलुटोरपि, लिङादिष्वपि विध्याद्यर्थान्तरप्रतीतिप्रसङ्गः, लुङि भूतमात्रं गम्येत नानद्यतनविशेषः, लटि न परोक्षं गम्येत । ननु च यथानुप्रयोगे प्रकृतिवाच्यस्य सामान्यस्यामन्तवाच्ये विशेषे पर्यवसानमेव प्रत्ययवाच्यस्याप्यामन्तवाच्ये ऽनद्यतने परोक्षे च विशेषे पर्यवसानद्युज्यतएव लुङो ऽनुप्रयोगः, तथा 'इतश्चतोऽर्लड् चे'ति लिङर्थएव लङ् विधीयते लङन्तस्यानुप्रयोगः प्राप्नोति । नैष दोषः । एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्यास्तृतीयस्याश्च भविष्यति । कोऽर्थः । यया प्रकृत्या प्रयोगः प्रारभ्यते तयैव समापनीयः । यथा खादिरे बध्नाति पालाशे बध्नातीति यूपस्य विकल्पे खादिरेण प्रयोगे प्रारब्धे दैवान्मानुषाद्वा कस्माच्चिदपराधात्खादिरापचारे मुख्ये पलाशे

खादिरे । (कै)

खदिरविकारयूपे ॥

साद्दश्यादिति । (कै)

एवं च बकखदिरावयवसामान्ययोगो बुर्बुरस्येति तत्र खदिर-बुध्युत्पादनेन खदिरारम्भैव क्रियानिर्वाहिता भवति पालाशे तूपादीयमाने तत्र खदिरबुद्ध्यनुत्पादात् खादिरेणोपक्रान्ता क्रिया न निर्वाहिता स्याद् इति न तदुपादानमिति भावः ॥

---

दान्वयो बोध्यः । अत एव प्रत्याहारे ऽन्तर्भूतस्यापि सम्पदो ऽनुप्रयोगो न भवति । अनन्वितार्थकत्वात् । यत्तु सनाद्यन्ता इत्यतो धात्वधिकारात् धातूपसर्गसमुदायस्य नानुप्रयोग इति । तन्न । एवमपि योग्य धातुः पदिः तस्मात्तस्य उक्तरीत्यैव वारणीयत्वात् । एवञ्च सामान्यस्य सन्निहिते विशेषे पर्यवसानात् तद्भूतसाधनादिविशेषाभिधानम् आमन्तगतविशेषा-

लभ्यमानेपि तत्परित्यागेनालभ्यमानस्यापि खादिरस्य प्रतिनिधिना बादरा-दिना प्रयोगः परिसमाप्यते, एवं हि प्रारब्धः प्रयोगः परिसमापितो भवति द्रव्यान्तरोपादाने तु प्रयोगान्तरं स्याद् द्रव्यभेदे क्रियाभेदात्, प्रतिनिधिस्तु मुख्यबुद्ध्यैवोपादीयते तदवयवानां तत्र भूयसां सम्भवात् तथैवाप्यामन्तेन लिट्प्रयोगः प्रागन्योपरिसमाप्तः साकाङ्क्षः, तस्याकाङ्क्षा-पूरणेन स एव प्रयोगो ऽनुप्रयोगेण परिसमाप्यमानो युक्तं यल्लिट्परस्यैवानु-प्रयोगेण परिसमाप्यते तस्मान्नास्ति प्रत्ययान्तरपरस्यानुप्रयोगप्रसङ्गः तस्माल्लिटीत्ययमर्थ्यो न विधातव्यः, इदं तर्हि प्रयोजनम् अनुप्रयोग, पश्चात्प्रयोगो यथा स्यादीक्षांचक्रे चक्रेईक्षामिति मा भूत् व्यवहितनिवृत्त्यर्थं च ईक्षां देवदत्तश्चक्रे, कथं व्यवहितनिवृत्तिः, आमपेक्षया पश्चाद्भावस्य । तत्रैव मुख्यत्वात् तदेवं पूर्वनिवृत्तिर्व्यवहितनिवृत्तिश्च प्रयोजनमिति

**अन्वेषु चेति।** (भा)

एवं च तथा प्रयोगेऽसाधुतेति वदन्ति। वार्त्तिके (वा) शब्दो विकल्पार्थकोऽपि पूर्वप्रयोजनानां खण्डितत्वात्। तदर्थं भाष्यकृता व्याख्यायते विपर्यासनिवृत्त्यर्थं

**तर्हीति॥** (भा)

भाष्ये

**अन्वेवेति।** (भा)

पश्चादव्यवधानेनेत्यर्थः॥

**इति नागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य प्रथमे पादे तृतीय-माह्निकम्॥**

इति वङ्गदेशीयकाश्यपगोत्रोत्पन्न-भट्टोपाध्यायवंशसमुद्भव-बङ्गवल्लभ-शर्मविरचिते महाभाष्यप्रदीपोद्द्योतविषमपदव्याख्याने तृतीयाध्यायस्य प्रथमे पादे तृतीयमाह्निकम्॥

---

भिधानमेवेति सम्पद्यते। अत एव अनुप्रयुज्यमानयोर्भूस्त्योरामन्तवशेन सकर्मकत्वात् ताभ्यां कर्मणि लिट। तथाच माघः। तस्यातपत्रं बिभरां-बभूवे इति। श्रीहर्षश्च। तपर्तुपूर्तावपि नेदमाभ्रा विभावरीभिर्बिभरा-म्बभूविरे इति॥

---

क्षिप्तम्। इह तु तान् राजा मदयामेव चकारेति बहुतन्त्राभ्यां अत हितप्रयोगश्छान्दसः। कथं भट्टिकाव्ये उक्षां प्रचक्रे नगरस्य मार्गान्, बिभयां प्रचकाराससाविति, कथं वा तं पातयां प्रथममास, प्रभ्रंशयां यो नहुषं चकारेति, वार्त्तिककारः एतच्छ्रुतां यः पठति विपर्यासनिवृत्त्यर्थं वाक्यव्यवहितनिवृत्त्यर्थं चेति॥

## महाभाष्यप्रदीपोद्द्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।



कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# च्लि लुङि । ३ । १ । ४३ ॥



नन्वश्रवणेऽपि क्विबादिवत् कार्यार्थं स्यादत आह

**नापीति ॥** (कै)

उत्सर्गपदस्यापवादप्रतियोगिन्येव प्रसिद्धेराह

च्लि लुङि । धातोश्च्लिप्रत्ययः स्यात् लुङि परे ॥ इकारो नेदिति सामान्यग्रहणार्थः । चकारः स्वरार्थ इत्युत्तरसूत्रे स्फुटीभविष्यति । अस्यादेशाः सिजादयो वक्ष्यन्ते । नन्वेवं किं च्लिप्रत्ययेन सिजेवोत्सर्गः प्रत्ययोऽस्तु तदपवादाश्च क्सादयः सन्तु न च सन्धिधर्मेतिसूत्रे सर्वधातुषु,

“च्लि लुङि”। ‘इकार उच्चारणार्थ इति’। चकारलकारसंयोगस्य केवलस्योच्चारयितुमशक्यत्वात्, न त्वयमनुबन्धः, प्रयोजनाभावात् ‘चकारः स्वरार्थ इति’ एतदुत्तरसूत्रे वक्ष्यामः। ‘अस्य सिजादी-नादेशान्वक्ष्यतीति’। यद्येवं किमर्थोऽयमुपदिश्यते, यावता श्रवणार्थो

स्थानीत्यर्थ इति ॥ (कै)

ननु "च्लुत्सर्ग" इत्यनुपपन्नं च्लेरन्यस्योत्सर्गस्याभावात्कर्मधारये तु उत्सर्ग शब्दस्य पूर्वनिपातापत्तिरत आह

च्लेरिति । (भा)

"च्लिरुत्सर्गत इति" भाष्यं तु फलितार्थपरम् । क्वचित्तु भाष्ये च्लेरित्येव पाठः ॥ मन्त्रे (२। ४। ८०) इति सूत्रे चयाणामपि चङ्क्सिचां च्लिग्रहणेन लुग्यथा स्यादिति प्रयोजनं च्लिकरणस्य । अन्यथा सिच इत्याऽवर्त्तेतेति चङ्क्सोर्दोषः । सिच्त्वं तु तेषां स्थानिवद्भावेन । अन्तरङ्गानपीति न्यायस्त्वत्र नास्ति । अनित्यत्वात् तेन मन्त्रेऽधान अधुरित्युभयसिद्धिः ॥ तद्ध्वनयन्नाह

---

च्लेरित्येकेनैव निर्वाहे लाघवार्थं च्लिः कर्त्तव्यः । अन्यथा हि घसनह्वग-मर्थमङो ग्रहणम् । आकारान्तेषु धेटोन्तर्भावात्तदर्थं चङो ग्रहणम् । तस्य हि विभाषाधेट्श्व्योरिति चङस्ति । धात्वन्तरार्थं सिचो ग्रहणम् । यदि तु जनेः दीपजनेति विहितस्य चिणो लुक् छन्दसि दृश्यते ततस्तस्यापीति त्रीणि चत्वारि वा ग्रहणानि कर्त्तव्यानि स्युरिति वाच्यम् । च्लिपक्षेपि च्लिलुङि च्लेःसिच् मन्त्रे घसेति सूत्रेषु मिलित्वा च्लेश्च्लेरिति

---

वा भवत्युपदेशः कार्यार्थो वा, न चायं च्लिः क्व चिच्छ्रूयते नापि क्विबादीनामिवाप्रियमाणस्यैवास्य किं चित्कार्यं दृश्यते, तस्मात् सिचमेवोत्सृज्य तस्यापवादाः क्सादयो विधीयेरन्, नैवं शक्यम् । एवं हि मन्त्रे घसादिसूत्रे बहूनां ग्रहणं कर्तव्यं स्यात्, गम्यर्थमङो ग्रहणम्, आकारान्तेषु धेटोन्तर्भावात्तदर्थं च चङो ग्रहणं तस्य हि 'विभाषा धेट्श्व्यो'रिति चङ्, धात्वन्तरार्थं सिचो ग्रहणं, यदि जनेर्दीपजनेति विहितस्य चिणो

त्रयाणामिति । (भा)

च्लेश्चेति कर्त्तव्यं येन सिचोऽनुकर्ष इति पदत्रयं कार्यमिति भावः । एतेन च्लङ् ग्रहणं व्यर्थं धयतावेव हि तदुपयोगः । तत्र सिचोऽनुकैव सिद्धमित्यपास्तम् । अधात् इत्यसिद्ध्यापत्तेः । आकारान्तत्वादिति मन्त्रे घसेति सूत्रप्राप्तिनिमित्तकथनम् ॥ भाष्ये

च्लिसंप्रत्ययार्थ इति । (भा)

अनिटं प्रति च्लेर्विशेष्यत्वेन यः संप्रत्ययस्तदर्थमित्यर्थः ॥

तस्माद्धन्त्यचेति । (कै)

अस्य तर्हीत्यादि यस्माद्धातोर्लुङ् भिन्ने प्रत्यये इत्यर्थः ॥ लुङि यो णिङित्याश्रयितुमशक्यमित्याह

---

त्रयाणां ग्रहणस्य तुल्यत्वात् । न चोक्तरीत्या साम्येपि च्लिपक्षे लाघवान्तरमस्ति । णातिस्थेति सूत्रे सिच इत्यपनीय तत्स्थाने लेरित्यभिधाय मन्त्रघसादिसूत्रे तस्यैवानुवर्तनादिति वाच्यम् । एवं हि वदन् अकृतेष्वेव सिजाद्यादेशेषु तदपवादो लेरेव लुगित्यभिप्रैषि, किं वा आदेशेषु कृतेषु स्थानिवद्भावो नेति । नाद्यः । अगुः अस्थुरित्यादौ सिचः परत्वाभावेन सिजभ्यस्तेति जुसो ऽप्रवृत्तिप्रसङ्गात् । न च आत इति जुस् । तत्रापि

लुक् छन्दसि दृश्यते ततस्तस्यापि, तान्येतानि त्रीणि चत्वारि वा ग्रहणानि भवन्ति च्ल्युत्सर्गे पुनः सर्वेषां स्थानिभूतस्य तस्यैवैकस्य ग्रहणम् । ननु च क्रियमाणेप्युत्सर्गे तान्येव त्रीणि ग्रहणानि भवन्ति 'च्लि लुङि' 'च्लेः सिच्' मन्त्रे घसादिसूत्रे च यदेतल्लेरिति, एवं तर्हि यदेतद्गातिस्थाघुपाभूभ्यः सिचः इति च्लेरिति वक्ष्यामि तदेव च मन्त्रे घसादिसूत्रेप्यनुवर्तिष्यते तल्लाघवं भवति, यदि लेरित्युच्यते किं व्यवस्थायामेव

लुङादेशानामिति ॥ (कै)

ततश्चेति । (कै)

विषयान्तरगतानिट्त्वाश्रयणाच्चेत्यर्थः ॥

अथापीति । (कै)

इष्टो भावोऽनिट् तस्मान्मृजः सौत्रत्वाल्लुगिति भावः ॥

यदात्विडिति । (कै)

तदा निर्दिश्यमानपरिभाषया इड् हि तस्य चिन्निमित्यर्थः ॥ धातोरित्यस्य विहितविशेषणत्वाश्रयणान्निर्दिश्यमानस्य व्यवहितत्वमिति प्रश्नम्

अगृहीदिति । (कै)

ह्म्यन्तेति (७।२।५) वृद्धिनिषेधः। गुणे ऊदुपधाया (६।४। ८९) इत्युत्वम् ॥ आर्धधातुके विवक्षिते घस्लादेशविधानादाह

---

सिच इत्यस्यानुवृत्तेः। अथोच्येत आत इति सूत्रे सिज्ग्रहणं नानुवर्तते तथाच आगुरित्यादौ विध्यर्थं तत् न तु नियमार्थम्। व्यावर्त्याभावात्। न चाभूवन्निति व्यावर्त्यम्। तत्र जुसः प्राप्तेरेवाभावात्। न च सिजभ्यस्तेति प्राप्तिः। तावस्थायामेव लुगिति पक्षस्य इदानीं परिगृहीतत्वात्। न चैवमदान् इत्यत्रापि आत इति नियो जुस् स्यादिति वाच्यम्।

---

लुकं करिष्यति उताहो आदेशेषु कृतेषु स्थानिवद्भावेन, यदि व्यवस्थायामेव लुक् अगुः अस्य 'सिजभ्यस्तविदिभ्यश्चे'ति जुस् न प्राप्नोति, मा भूत्सिजित्येव 'मात' इत्येवं भविष्यति, तत्रापि सिज्ग्रहणमनुवर्तते, सिज्ग्रहणं निवर्तिष्यते, यदि निवर्तते अभूवन्नित्यत्रापि प्राप्नोति, केन, सिजभ्यस्तेति, नेत्याह, इदानीमेव ह्युक्तं व्यवस्थायामेव लुगिति तदेव

## लुङीति । (कै)

परसप्तमीत्यभिमानेनेदमिति भावः ॥ ननु श्लिर्न कार्यः । चङ्चिणादयश्च सिच एवादेशाः कार्याः । श्लेरित्यस्य स्थाने सिच इति कार्यं मन्त्रे इति सूत्रे श्लेरिति न कार्यं सिच इत्यनुवृत्त्यैवेष्टसिद्धेरिति नैते दोषा इति चेत् न । अपुषन्नित्यादौ गुणापत्तेः ॥ दोषान्तरमप्याह

## तथा मन्त्रे इति ॥ (कै)

ननु लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमिति प्रत्ययलक्षणप्रतिषेधात् कथं स्वरप्राप्तिरत आह

---

लङः शाकटायनस्यैवेति नियमाद्विकल्पोपपत्तेरिति । एवमपि मा हि गातां मा हि स्थातामित्यादिषु आदिः सिचोऽन्यतरस्यामित्येष स्वरो न सिध्येत् । तस्मात्तदवस्थायां लोप इति प्रथमः पक्षो दुष्ट एवेति स्थितम् । न द्वितीयः । एवं हि सति विभाषाघ्राधेङिति सूत्रेणापि च्ल्यादेशानामेव लुगिति धेटश्चङोऽपि न स्यात् । तत्र यदा विभाषा धेट्श्व्योरिति चङो विकल्पितत्वेन पक्षे सिचि कृते तस्य लुगलुकौ तदा अधात अधाताम् अधुः । अधासीत् अधासिष्टाम् अधासिषुरिति सिद्धमिष्टम् । चङोऽपि

'मात' इत्यत्र ङित इत्येवानुवर्त्तते न सिच इति लङ्यपि तथैव स्यात्, धेटश्च विभाषा धेट् 'लङः शाकटायनस्यैवे'ति नियमाद्विकल्पो भविष्यति, एवमपि मा हि गातां मा हि स्थाताम्, 'आदिः सिचोऽन्यतरस्या' मित्येव स्वरो न प्राप्नोति ; अथादेशेषु कृतेषु ततो विभाषा घ्राधेडित्यत्रापि तथैव स्यात् धेटश्च 'विभाषा धेट्श्व्यो' रिति चङपि विकल्पितः, तत्र यदा सिचो लुगलुकौ तदा ऽधात् अधाताम् अधुः अधासीत् अधासिष्टां

लुमतेति । (कै)

तस्य सर्वांमन्त्रितसिज् लुक् स्वरवर्जमिति निषेधादिति भावः॥

अस्य आदिति च इत्यस्य सर्वामन्त्रितसिज् लुक् स्वरवर्जमिति तत्रोक्तत्वादिति भावः ॥

तदनुबन्धकेति । (कै)

चकाराभावेनैकानुबन्धकत्वादितिभावः ॥

तत्रेति । (कै)

आम इति सूत्रे ऽनुवर्त्तमानेन लेरिति पदेन लिटोऽपि ग्रहणं सिद्धतीत्यर्थः ॥

---

लुगभावपक्षे अदधत् अदधताम् अदधन् इति सिद्धम् । लुक्पक्षे तु नलुमतेत्यङ्गाधिकारनिर्द्दिष्ट इति मते प्रत्ययलक्षणेन द्विर्वचने अदधादित्यपि चतुर्थं रूपं स्यात् । नलुमतेति नाङ्गाधिकारनिर्द्दिष्टः किं त्वाङ्गमनाङ्गं वा लुमता लुप्ते प्रत्यये परे पूर्वस्य प्राप्तं सर्वं निषिध्यतइति मुख्यपक्षे तु चङो लुकि द्वित्वाप्रवृत्तौ सिज्लुका तुल्यमेव रूपमिति अधादित्यादौ यद्यपि न दोषः, तथापि बहुवचने अधानित्यनिष्टमपि चतुर्थं रूपं स्यादेव, इष्यते तु त्रैशब्द्यम् अधुः अधासिषुः अदधन्निति न

---

आधासिषुरिति सिद्धमिष्टं चङोपि लुगभावपक्षे अदधत् अदधताम्, अदधन्निति सिद्धं लुक्पक्षे तु प्रत्ययलक्षणेन द्विर्वचने ऽदधादित्यपि चतुर्थं रूपं प्राप्नोति, न चङो लुकि द्विर्वचनं, 'न लुमताङ्गस्ये'ति प्रतिषेधात्, बहुवचने तर्हि चङो लुकि अधानित्यनिष्टं रूपं प्राप्नोति, त्रैशब्द्यमेव चेष्यते अधुः, आधासिषुः, अदधन्निति । ननु चङोपि लुक्यात इति जुस् भविष्यति यथा सिचः, नैतदस्ति । सिज्ग्रहणं तत्रानुवर्त्तते, निवर्तिष्यते सिज्ग्रहणं, यदि निवर्तते 'आत' इत्येतद्धेटश्चङो लुकि

तद्देव मन्त्रे इति। (कै)

गातिस्थेति सूत्रे सिग्रहणे यदि अन्तरङ्गानपीति न्यायेन पुम्बवस्थायां लुक् तर्हि अगुरित्यादौ सिजभ्यस्तेति जुस्स्यात्। मा हि गातामित्यादौ "आदिः सिचोऽन्यतरस्यामिति" (६।१।१८१) स्वरश्च न स्यात् तस्मादन्तरङ्गानपीति न्यायानाश्रयणेनादेशे कृते स्थानिवद्भावेन सिलात्रुंगपिततव्यः। तत्राह भाष्ये

धेटश्चातुः शन्यमिति॥ (भा)

तद्भनयन्नाह

लेरादेशेष्विति॥ (कै)

आकारलोपे इति। (कै)

तिपो हल्ङ्यादिलोपे भष्भावे चेत्यपि बोध्यम्॥ अधदिति भाष्यमिति पाठः। अदधुदितिभाष्यमित्यपपाठः॥

---

च मडो लुकि आत इति जुस् भविष्यतीति वाच्यम्। तत्र सिच इत्यस्यानुवृत्तेः। अन्यथा तस्य नियमार्थतानुपपत्तौ अभूवन्नित्यत्र प्रत्ययलक्षणेन सिजभ्यस्तेति जुसप्रसङ्गात्। ननु चल्यभ्यस्तविदिभ्यश्चेति वक्ष्यामि। एवञ्च चङ्लुक्यपि च्लेः परत्वाज्जुस् भविष्यति आत इति सूत्रेऽपि सिग्रहणानुवृत्त्यैव नियमात् अभूवन्नित्यत्र जुस न भविष्यति। माहि-

विध्यर्थत्वसम्भवान्नियमार्थं न स्यात्, ततश्चाभूवन्नित्यत्र प्रत्ययलक्षणेन सिच इति जुस् प्राप्नोति, इदानीमेव चूक्तं कृतेष्वादेशेषु लुगिति, एवं तर्हि यदेतत्सिजभ्यस्तेति एतत् चल्यभ्यस्तेति वक्ष्यामि किं कृतं भवति लुङ्लुक्यपि चल्यभ्यस्तेति जुस सिद्धो भवति, आत इत्यत्रापि सिज्ग्रहणानुवृत्तेर्नियमादभूवन्नित्यत्र जुसभावश्च सिद्धो भवति कृतेष्वादेशेषु

नैष दोष इति। (कै)

अङ्गकार्यत्वादत्र नलुमतेति निषेधो न तु द्वित्वे इत्यभिमानः॥

विध्यर्थमिति। (कै)

चङो लुकीति शेषः॥ भाष्ये

अभूवन् इति। (भा)

चङि लुकि विध्यर्थत्वे स भवति नियमार्थत्वं न स्यादिति सिजभ्यस्तेति जुस्स्यादित्यर्थः॥

प्राप्तेष्वादेशेष्विति। (कै)

स्वादेशेष्वित्यर्थः। अकृतेष्वादेशेष्विति पाठान्तरम्॥ चिरम-गुरित्यत्र जुस्स्यादत आह

आत इत्येतदिति। (कै)

नियमस्यासम्भवादित्यर्थः। न च चल्यभ्यस्तेति कार्यम्। तेन चङि लुक्यपि जुस्। द्विपदानुवृत्त्या आत इत्यस्य नियमत्वाद-

गातामित्यादौ आदिःसिच इति स्वरोपि सिद्धः। एवञ्च कृतेष्वादेशेषु लुगिति पक्षो निर्बाध एवेति चेन्न। यदि च्ल्यभ्यस्तेति ब्रूषे तर्हि कस्माडुचङ्लु दोषापत्तेः। अधुक्षन् अवोचन् अदधन् अत्रापि हि जुस् प्राप्नोति। तस्मात्सिजभ्यस्तेत्येव कर्तव्यम्। आत इत्यत्र च सिजग्रहण-

लुगिति सिजन्तत्वात् स्वरः सिद्धो भवति, यदि च्ल्यभ्यस्तेत्युच्यते च्ल्य-ङचङ्लु दोषः, अधुक्षन्, अवोचन् अपीपचन्नत्रापि जुस् प्राप्नोति तस्मात्सिजभ्यस्तेत्येव वक्तव्यम्, आत इत्यत्रापि सिजग्रहणमेवानुवर्तनीयं नियमो यथा स्याद्विधिर्मा भूदिति, ततश्च तदेव स्थितं बहुवचने

भूवन्नित्यपि सिद्धमिति वाच्यम् अधुक्षन् अवोचन्नित्यादौ च्ल्यादिभ्योऽपि परस्य तु मापत्तेः । तस्मान् मन्त्रे इति सूत्रार्थं च्लिर्नकार्य इति सिद्धम् । आम इत्यत्रापि लेरित्यस्य नोपयोगः प्रत्ययमात्रस्य तेन लुग्विधानात् । न च धातुरपि न विद्यते इडस्मादिति प्रत्ययानिट्पदवाच्योऽत आह

## मत्वर्थ इति । (कै)

अवयवावयविभावादिरूपे षष्ठ्यर्थ इत्यर्थः ॥ भाष्ये

## अनिमित्तं वा इट इति । (भा)

न विद्यते इट् कार्यं यस्येत्यर्थः ॥ पञ्चम्यन्तार्थे ऽन्यपदार्थे बहुव्रीहिरिति पक्षान्तरमाह

---

मनुवर्त्तनीयम् । एवञ्च चङ्लुकि बहुवचने अधानिति प्राप्नोतीति दोषः स्थित एव । तस्मात् गातिस्थेत्यत्र सिच इत्येव वक्तव्यम् । ततश्च च्लिपक्षेपि च्लिलुक्सिचलेरिति त्रयाणां ग्रहणं तुल्यमेवेति स्थितम् । प्रत्युत चलेरकरणे महल्लाघवम् । मन्त्रेघसेत्यादिसूत्रे हि अङ एव ग्रहणं कर्तव्यम् । सिच् तु गातिस्थेतिसूत्रादनुवर्त्य धेटो मनेश्च चङ्विधौ वैकल्पिकौ तत्र यानि लुगुदाहरणानि तानि सिच एव लुका सिद्धानि । न चैवम् आदिः सिचोन्यतरस्यामिति स्वरः स्यादिति वाच्यम् ।

---

ऽधानिति प्राप्नोतीति, यदा च धेटश्चङो लुक् क्रियते तदा न केवलं बहुवचने सर्वेष्वेव वचनेषु सिज्लक्षणस्वराभावात्स्वरे चातुःश्रुत्यप्रसङ्गः, तस्माद् गातिस्थाघुपेत्यत्र सिच इत्येव वक्तव्यं ततश्च तदेवस्थितं तान्येव त्रीणि ग्रहणानीति प्रत्युताक्रियमाणे उत्सर्गे मन्त्रे घसादिसूत्रे द्वयोरेव ग्रहणं, कथं, धेटो मनेश्च चङ्विधौ विकल्पितौ तत्र यानि लुक

**न वा तस्मादिति ॥** (भा)

तद्व्याचष्टे

**वचनसामर्थ्यादिति ॥** (भा)

सत्यर्थ इति कर्मकर्तृवचनेनाप्रथमाया इति च वार्त्तिकोक्ते- रिति भावः ॥

**अस्मिन् विषये ।** (कै)

लुङ् रूपे विषये । तत्रानिट्त्वस्याव्यभिचारात् ॥

**विषयान्तरम् ।** (कै)

प्रत्ययान्तररूपम् ॥

चङ्चिणोर्ग्रहणेऽपि पाक्षिकस्य तस्य दुर्वारत्वात् । तस्मात् च्लिलुङीतिसूत्रं व्यर्थमेवेति चेत् अत्राहुः । असति च्लौ मन्त्रे घसेत्यत्र येभ्यः सिचो लुक् तेषामादिः सिच इतिस्वरः स्यात् । सति त्वस्मिन् लेरिति लावस्थायामेव लुकि सिजभावाद्यथायथं स्वरः । किञ्च आकारान्तेभ्यः सिचो लुकि जुस् प्राप्नोति लेस्तु लुकि स्वन्तिभाव एव भवति । अपि च शल इगुपधादितिसूत्रे अनिट इत्यनेन च्लिं विशेषयितुमपि च्लिरेष्टव्यः । असति हि च्लौ अनिट इति धातोरेव विशेषणं स्यात् । ततश्चाधुक्षदिति

उदाहरणानि सिच एव तानि भविष्यन्ति । कोऽन्यत्र विशेषः, अयमस्ति विशेषः सिचो लुक्यादिः सिचोऽन्यतरस्यामित्यनेन स्वरेण भवितव्य चङ्चिणोस्तु नेति तस्माद् द्वयोरपि पक्षयोस्तौल्ये ग्रहणानि नार्थस्तो- त्सर्गेण तदुच्यते असति च्लेरुत्सर्गे मन्त्रे घसेत्यत्र येभ्यः सिचो लुक् क्रियते तथा ऽऽदिः सिचोऽन्यतरस्यामित्येष स्वरः प्राप्नोति सति त्वस्मिल्लेरिति तदवस्थायामेव लुग्विधानात् सिजभावात् यथायथं स्वरः सिद्धो भवति, तथा ऽऽकारान्ते सिचो लुकि क्रियमाणे सिजभ्यस्त

**उदिद्भ्यो नेति ।** (कै)

आर्धधातुकलाभादिविषये पक्ष सिद्धादिति भावः ॥

**नित्यं क्स इति ।** (कै)

यस्य विभाषेति निषेधेनानिट्त्वाद् इति भावः ॥

**इष्यते इति ।** (कै)

अनेनैषोऽपि तत्र पक्षे दोष इति सूचितम् ॥ निष्ठाग्रहणपक्षे भूयिष्ठेभ्य इति सूचितं दोषमाह

**इषिति ॥** (कै)

भाष्ये

**वलादावार्धधातुक इति ।** (भा)

अयं भावः। अनिटो धातोरित्युक्ते केति विषयविशेषाकाङ्क्षायां लुङ् परवलाद्यार्धधातुके यदा योऽनिडिति कालविशेषावच्छिन्नो विषयविशेषो ग्रहीष्यते लक्ष्यानुरोधादिति ॥ तदाह

न सिद्ध्येत् । ननूदित्वादिड्विकल्पे पाक्षिकानिड्भावेन अनिडेवायमिति चेत्, तर्हि नित्यं क्सः स्यात् । ततश्चाग्रहीदिति न सिद्ध्येत् । अनिट इतिचलेर्विशेषणं तु यदा चिल्परो निट तदा क्सः यदा सेट तदा सिजिति सिद्धमिष्टम् । तस्मात् यथायथं स्वर्गान्तिस्थाग्रहीदिति च्लेः फलमिति स्थितम् । भाष्ये तु च्लिः प्रत्याख्यातः । यत्तूक्तम् आदि मिच इति

आत इति जुम प्राप्नोति लेक्त त्वकाल्किभाव एव भवति तस्मादुत्सर्गः कर्त्तव्यः, तथा 'शल इगुपधादनिटः क्स' इत्यत्रानिट इति लेर्विशेषणं यथा स्याद् असति पुनस्तूत्सर्गे तस्यैव तद्विशेषणं भवति धातोः, न विद्यते यस्मात्परस्येडिति तत्र च लुङादेशाना सार्वधातुकत्वासम्पत्ति-

गुहादय इति ॥ (कै)

सामान्यमिति । (कै)

आर्धधातुक इति विषयसप्तमीति भावः ॥

यत्र त्विति । (कै)

माङि दातामित्यादौ सिच एव ॥

चिण्वेनेति । (कै)

एतच्चोत्तरसूत्रे स्फुटः ॥

---

स्यादिति । तन्न । तस्य वैकल्पिकतया इहस्वरस्य निर्बाधत्वात् । सर्वविकल्पानां छन्दसि व्यवस्थितत्वेन अनिष्टस्यानापाद्यत्वात् । यदपि आकारान्तेभ्यो छस् स्यादिति । तदपि न । मन्त्रे तादृशस्योदाहरणस्याभावात् । अत्र च भाष्यकारीयप्रत्याख्यानमेव प्रमाणम् । यदपि अगुहीदिति न सिद्ध्येदिति, तदपि न । गुहादयो विकल्पितेट इटोभावाभ्यां भिद्यन्ते, तत्र सेटः तेभ्यः सिच् अनिड्भ्यस्तु क्स इति भगवद्भाष्यकाराशयस्य कैयटेन वर्णितत्वात् ॥

यत्ममनिट्त्वमव्यभिचारादविशेषणमिति प्रत्ययान्तरगतं तदाश्रयणीयं, न विद्यते प्रत्ययान्तरस्य यस्मात्परस्येडिति ततो गुहेर्न स्यात् अघुक्षदिति, विद्यते ह्यस्मात्परस्य गहितेत्यादाविट्, स्वरत्यादिसूत्रेण विकल्पितोऽपि पाक्षिकेणेडभावेनानिडिति व्यपदिश्येत नित्यं क्सः प्राप्नोति व्युत्सर्गे पुनरनिट् इति तस्यैव विशेषणं भवति स च कदा चिदनिट् कदा चित्सेट, यदानिट् तदा क्सः, यदा सेट् तदा सिजिति सिद्धमिष्टम् । 'अघुक्षत् अगूहीदिति' । 'तस्माच्च व्युत्सर्गः कर्तव्य इति' । अनिट्त्वेन विधानं कर्तव्यमित्यर्थः ॥

# च्लेः सिच् । ३ । १ । ४४ ॥

## साधारण इति । (कै)

तन्त्रेणेति भावः ॥ पक्षान्तरमाह

## आगन्तुनावेति । (कै)

तथा च मकारमात्रे तात्पर्यमिति भावः ॥

## पृथगिति । (कै)

अन्यथा न परस्मैपदयोरित्येव वदेत् ॥ सेति वर्त्तमानम् । न च परस्मैपदसाहचर्यादङ्गाधिकाराच्च प्रत्यय एव ग्रहीष्यते ॥

## धातोरुदात्तार्थ इति । (कै)

आदेशनिमित्तभिन्नेति ज्ञाने पुनरुदात्तार्थ इत्यर्थः ॥ भाष्ये

च्लेः सिच् ॥ च्लेः सिजादेशः स्यात् । इकार उच्चारणार्थ इत्संज्ञको वेति पक्षद्वयमपि इट:सिजित्यत्र प्रतिपादितम् । चकारः स्वरार्थः । मा हि लावीत् । अत्र हि आगमा अनुदात्ता इति इटोनुदात्तत्वं प्राप्तं स्थानिन्यादेशे च हित्वाल्लकारणाद्बाध्यते । यत्तु कै

"च्लेः सिच्" ॥ 'इकार उच्चारणार्थ इति' । न त्वनुबन्धः, यद्येवम-मंस्तेत्यत्र सिजन्तस्याङ्गस्यात्मनेपदं ङित्तमपेक्ष्यानिदितामिति नलोपः प्राप्नोति, ज्ञापकात्सिद्धं, यदयं 'इनः सिजि'ति इन्तेः परस्य सिचः कित्त्वं शास्ति तज् ज्ञापयति न सिजन्तस्योपधालोपो भवतीति, यथा

**तत्र प्रत्ययाद्युदात्तत्वेनेति । (कै)**

सिज्विधावुपस्थिताद्युदात्त इति शास्त्रस्यानच्कत्वाच्च वैयर्थ्यं न तु उत्तरकालमिटि स्वरविधायकमित्यर्थः ॥ अनच्कविषये बाधेन लाघवात्तदसम्बन्धः । स्वेति धातोरित्याद्येकवाक्यतायां शेषनिघातो भविष्यतीत्युत्तरयति

**आमा इति । (कै)**

एवं च तद्बाधेनोदात्तत्वाय चित्त्वं सार्थकमिति भावः ॥

**स्थानिवद्भावप्राप्तमिति । (कै)**

स्थानिनिर्दिष्टस्यैवातिदेश इत्यत्र न मानं किं तु तत्र सम्भावितस्यापीति भावः । कार्याऽतिदेशेनैव कार्यविधानात्परत्वेन धातो-

---

चित् प्रत्ययस्वरस्य द्वावपवादौ आगमानुदात्तत्वं चित्स्वरश्च तत्र आद्यं यासुड्विधौ ज्ञापितं तद्देशम् । चित्स्वरस्तु साङ्गः । तत्रापवादविप्रतिषेधे परत्वाच्चित्स्वर एव सिद्ध्यति । तत्किं सिचश्चित्त्वेनेति । तन्न । आगमानुदात्तत्वं हि आनुगादिषु प्रसक्तागमेष्वपीष्यते, कुण्ठिनजादीनाञ्च चित्स्वरः, तत्कथमिमौ प्रत्ययस्वरस्यापवादौ स्याताम् । किञ्च इह चित्स्वरस्य परत्वमपि नास्ति । स्थानिवदित्यस्य कार्यातिदेशत्वात् ।

---

चैतज्ज्ञापकं तथा तत्रैवोक्तमिति तत्रैवावधार्यम् । 'चकारः स्वरार्थ इति' । अन्तोदात्तार्थः । ननु सिचो ऽनच्कत्वात् कथं चकारः स्वरार्थः, इटि कृते साच्को भवति, एवमपि प्रत्ययस्वरेण सिद्धं, न सिद्ध्यति नाप्राप्ते स्वरान्तरे विधीयमानमागमानुदात्तत्वं प्रत्ययस्वरं बाधेत, एवं तर्हि च्लेश्चित्त्वात्स्थानिवद्भावाच्चित्स्वरो भविष्यति तत्राह । 'आगमानु-

रित्येकवाक्यतापन्नप्रेषनिघातवलल्लभ्येतागमानुदात्तत्वेन बाध्येतेति तात्पर्यम्। न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाधः। मन्त्रे इति सूत्रे च्लेरिति सामान्यग्रहणार्थत्वात्। अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्। न च्लिटः। ततश्चाम इति सूत्रेऽस्यासंबन्धः स्यात्। ततश्च परत्वान्तरङ्गत्वाभ्यां तिबादिषु सत्सु लुकि प्रत्ययलक्षणेन तिङन्तत्वाद्द्विवद्दत्तकारपाचकारे चपामन्तस्य निघातः। ततः परस्य वा निघातः स्यादिति चाम इत्यत्र च्लेरित्यनुवर्त्तनीयमित्यभिमानः। यदि तु अन्तरङ्गानपीति न्यायेन तिबादिभ्यः पूर्वमेव लुक् तदा च्लौ चास्य प्रयोजनमिति तत्सामर्थ्यादेवान्तोदात्तत्वं सिद्धं तस्मात् पूर्वनियमानुसारेण सिचि च्लौ वा चकारोच्चारणमिति सूत्राशयः॥

## अपवादविप्रतिषेधादिति। (कै)

स्थानिवद्भावेन हि चित् मात्रमतिदिश्यते स्वरस्तु स्वशास्त्रेणैवेति भावः॥ न हि

---

तस्मादागमानुदात्तत्वेन अविशेषात्सर्वः स्वरो बाध्यत इति तद्बाधनाय सिचश्चित्त्वम्। न च च्लेश्चित्त्वसामर्थ्यादेव तद्बाधः। मन्त्रेघसादिसूत्रे च्लेरिति सामान्यग्रहणेन तस्य चरितार्थत्वात्। अन्यथा हि निरनुबन्धकत्वादस्यैव ग्रहणं स्यात् न च्लिटः. ततश्च आम इति सूत्रे निरनु-

---

दात्तत्वं स्यादिति'। चित्स्वरमपि बाधेतेति'। स्थानिवद्भावकृतम्। ननु च यदि मा हि कार्षीदित्यत्रागमानुदात्तत्वं स्यात् च्लेश्चित्करणमनर्थकं स्यात्, एवं मन्यते, च्लेश्चकारो मन्त्रेघसादिसूत्रे सामान्यग्रहणे चरितार्थः, अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यात् न च्लिटः, ततश्चाम इत्यत्र निरनुबन्ध-

## प्रत्ययस्वरस्यैव ताविति । (कै)

एवं च "नाप्राप्ते प्रत्ययस्वर इत्यारभ्य स्थानिवद्भावादपि या प्राप्तिस्तामपि बाधेत" इत्यन्तग्रन्थो भाष्यपुस्तकेषु प्रायेण दृश्यमानोऽप्यग्रन्थ इति भावः ॥

## आगमानुदात्तत्वेनेति । (कै)

बाध्यसामान्यचिन्तयेति भावः । वस्तुतस्तु लवितव्यमित्यादौ प्रत्ययसन्नियोगेनाद्युदात्तत्वे कृते पश्चादिट् जायमानोऽस्वरकः स्यादिति सामान्यतः स्वराप्राप्तिविषये तस्य चारितार्थ्याद् बाधकत्वोक्तिश्चिन्त्या । सुतरां सर्वस्वरस्य यदि शेषनिघातेन तत्रानुदात्तत्वसिद्धिरित्युच्यते तदा तद्वचनमेव व्यर्थं नास्ति चेत्याद्युदात्तस्येति भाष्ये ध्वनितम् । चित्त्वं तु धातुस्वरेण प्रत्ययस्वरेण चैकवाक्यताजन्यशेषनिघातेन प्राप्तानुदात्तत्वबाधनार्थं कार्य्यमेव ॥ ननु सिचि जायमानोऽपि परस्मिन् निमित्त एव जायतेऽत आह

---

बन्धकस्य लेरसम्भवात् लेरिति नानुवर्त्तेत । ततश्च परत्वादन्तरङ्गत्वाच्च तिबादिषु पश्चाल्लुकि कारयामित्यस्य प्रत्ययलक्षणेन तिङन्तत्वात् देवदत्तः कारयाञ्चकारेत्यत्र आमन्तस्य निघातः ततः परस्य चानिघातः स्यात् । तस्मादाम इत्यत्र लेरित्यनुवर्त्यमेव । तदर्थञ्च पूर्वत्र सामान्य-

---

कस्य लेरसम्भवाल्लेरिति नानुवर्तेत ततश्च परत्वादन्तरङ्गत्वाच्च तिबादिषु कृतेषु पश्चाल्लुकि कारयामित्यस्य प्रत्ययलक्षणेन तिङन्तत्वाद् देवदत्तः कारयांचकारेति तस्य च निघातस्तस्माच्चानिघातः स्यात्तस्मादाम इत्यत्र लेरित्यनुवर्त्तनीयं, तस्य च तत्रानुवृत्तिः पूर्वत्र सामान्यग्रहणे सत्युप-

सिचः परमिति ॥ (कै)

भाष्ये

न लोपस्यासिद्धत्वादिति। (भा)

असिद्धवदत्राभात् (६।४।२२) इत्यनेनेत्यर्थः ॥

बहिरङ्गत्वादिति। (कै)

ननु तत्सम्बद्धनिमित्तलोपे तस्य बहिरङ्गतयाऽसिद्धत्वादाहतेत्यादौ ह्रस्वादङ्गादिति न स्यात् सिज्निमित्तत्वे तु असिद्धत्वाभावात् सेत्स्यतीति चेन्न। त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽप्रवृत्तेः॥ भाष्ये

अथाप्यनेनेति। (भा)

एकदेश्युक्तिः॥ एकदेश्येवाह

कथं च्लेरिति॥ (भा)

ततश्चेति। (कै)

स्वरस्य सिचश्चित्त्वेनैव सिद्धिरिति भावः॥ भाष्ये

---

एतस्यां वाच्यं तदविघाताय च्लेश्चकारश्चरितार्थः। च्लेः प्रत्याख्यानपक्षे तु सिच एव चित्त्वेनान्त्यार्थेन आगमानुदात्तत्वं बाध्यते स्पृशमृशकृष-तृपदृपः सिज्वेति वक्तव्यम्॥ स्पृश स्पर्शने, मृश आमर्शने कृष विलेखने। एभ्यः कसे प्राप्ते तृप प्रीणने, दृप हर्षविमोचनयोः, आभ्या

पद्यते, तस्माच्च च्लेश्चकारस्य चरितार्थत्वात्स्थानिवद्भावात्प्राप्तं चित्स्वर-मपि बाधेतेति सम्भावने लिङ्, सम्भाव्येत बाधनमित्यर्थः। अनुबन्धा-न्तरेणापि सामान्यग्रहणासिद्धे चकारानुरोधेन चित्स्वर एव भवि-ष्यतीति शक्यते वक्तुमिति भावः। 'स्पृशमृशति'। स्पृश स्पर्शने,

## च्लित्करणं प्रत्याख्यायते (भा)

इत्यस्य इत्संज्ञाप्रत्याख्यायते इत्येव तात्पर्यम्॥

## चङादय इति। (कै)

णिश्रिद्रुस्रुभ्य (३।१।४८) इत्यादि पञ्चमी निर्देशेन विधानादित्यर्थः॥ णिश्रिद्रुस्रु इति विहितविशेषणमिति भाष्याशय इत्यन्ये। भाष्ये च अङिति च्लिणो न्यायेनाचापि षष्ठ्यन्तत्वाभावेनैकाल्त्वात्सिद्धमित्यत्र प्रश्ने फलं चिन्त्यम् उपायान्तरपरमेतदभ्युपेत्यापीत्संज्ञालोपयोः पूर्वप्रवृत्तिमिति बोध्यम्॥ ननु "अन्त्यस्यायं स्थाने भवन्तीति" भाष्यम् उपपन्नम्। आदेः परस्येत्यस्य प्राप्तेः प्रत्ययादित्वेनेत्वसिद्धेरत आह

## च्लिणाभावेति॥ (कै)

## विहितेति। (कै)

यदादिभ्यो विहितस्य च्लेरित्यर्थे परशब्देन विधानाभावादादेः परस्येत्यस्याप्रवृत्तिरिति भावः॥ भाष्ये

---

पुषादित्वादङि प्राप्ते सिजपि पक्षे अभ्यनुज्ञायते। अस्प्राक्षीत्। अस्पार्क्षीत्। अस्पृक्षत्। अम्राक्षीत् अमार्क्षीत् अमृक्षत। अक्राक्षीत्। अकार्क्षीत् अकृक्षत्। अत्राप्सीत्। अतार्प्सीत्। अतृपत्। अद्राप्सीत्। अदार्प्सीत्। अदृपत्। प्रक्रियाकौमुद्यान्तु प्रकृतवार्त्तिके

---

मृश आमर्शने, कृष विलेखने, इत्येतेभ्यः क्से प्राप्ते तृप प्रीणने दृप हर्षविमोचनयो, आभ्यां पुषादित्वादङि प्राप्ते सिजपि पक्षेऽभ्यनुज्ञायते। 'अस्पृक्षदिति'। व्रश्चादिषत्वे 'षढोः कः सी'ति कत्वम्। 'अस्प्राक्षीदिति'। अनुदात्तस्य चर्दुपधस्य चेति पक्षे अमागमः, अक्रा-

**प्रत्ययः स्यादिति ।** (भा)

प्रत्ययाधिकारे पाठेऽपि अनर्थसंज्ञालभ्यार्थाभावात् । न हि प्रत्ययावयवस्तदर्थवानिति भावः ॥ ननु धात्वन्तःपातिनोऽपि अमोऽर्थवत्त्वमिवान्यावयवस्याप्यर्थवत्त्वमस्तु । समुचिता चावयवसमुदाया द्योतकता तद्वदेव चार्थाधिकारात्प्रत्ययत्वेऽपि न बाधकमिति चेन्न । एकदेशयुक्तित्वेनादोषात् ॥ तद्ध्वनयन्नाह

**एष चेति ॥** (भा)

एतेन नानुबंधकृतमनेकाल्त्वमिति सर्वादेशत्वं दुर्लभमित्यपास्तम् ॥

**वार्त्तिककारस्येति ।** (भा)

उक्ता स्वोक्तरीत्या चकारस्य स्वरैव वा प्रत्याख्यानमिति सूचितम् । स्वावेव यत्नादिलक्षणेऽपि अमाचीदित्यस्यासिद्धिरूपं दूषणान्तरमाह

**अपि चेति ॥** (कै)

रूपद्वयोर्फलं दर्शयति भाष्ये

**यस्य स्वल्वपीति ॥** (भा)

---

रूपमपि प्रक्षिप्य अबाभीत् असाभीत् इत्यपि रूपद्वयमुदाहृतम् । तत्तु अप्रामाणिकत्वादुपेक्ष्यम् ॥

---

रस्य यथा, वदव्रजेत्यादिनाकारस्य वृद्धिः, असमावपक्षे अकारस्येव वृद्धि एवमुत्तरत्रापि ॥

# शल इगुपधादनिटः क्सः । ३ । १ । ४५ ॥

इगुपधलक्षणदोषमिति । (कै)

असम्भवरूपमित्यर्थः ॥

भूतपूर्वेति । (कै)

विशेषणसामर्थ्याद्धि तदाश्रयणम् ॥

लक्ष्यासिद्धिरिति । (कै)

सर्वत्र गुणश्रवणापत्तिरित्यर्थः ॥ ननु क्सस्य कित्त्वसामर्थ्यात् पूर्वमपि पुरणेन भविष्यतीत्यत आह

शल इगुपधादनिटः क्सः ॥ शलन्त इगुपधो यो धातुः तस्मात्परस्य अनिटः च्लेः क्सः स्यात् । दुह्, अधुक्षत् । लिह्, अलिक्षत् । शलः किम् । अभैत्सीत् । इगुपधात्किम् । अधाक्षीत अनिटः किम् । अकोषीत् च्लेः । प्रत्याख्यानपक्षे तु अनिट इति धातोरेव विशेषण-

"शल इगुपधादनिटः क्सः" । 'शलन्तो यो धातुरिगुपध इति' । ननु च्लेर्गुणनिमित्तत्वादकृतएव क्से लावस्थायामेव गुणः प्राप्नोति ततस्सेगुपधाति विशेषणं न प्रकल्पते. नैष दोषः । विशेषण-सामर्थ्यात्प्रागेव गुणात् क्सो भविष्यति । ननु च कृतेपि गुणे भूतपूर्व-गत्या विहितविशेषणाश्रयणेन वा क्सो भविष्यति, कित्करणमिदानीं किमर्थं स्यात् 'क्सस्याचो'ति विशेषणार्थं, तस्मिन्नोच्यमाने पुनर्वदिह-

**कित्करणं त्विति ॥** (कै)

**वत्सेति ।** (कै)

वदेः स औणादिकः ॥ क्सस्य गुणापवादत्वे हेतुमाह

**भूतेति ॥** (कै)

ननु वत्सावित्यादावपि लोपापत्तिरत आह

**प्रत्ययत्वादिति ॥** (कै)

वत्सा इत्यादौ दोषवारणायाह

**उणादीनामिति ।** (कै)

तणसावित्यादौ दोषस्तु लुग्वादुहेत्यचेतः स यदानुवृत्तेरर्था-धिकारानुरोधेन दुहादिषु यस्य सम्भवस्तस्यैव पूर्वसूत्रेऽपि ग्रहणा-

---

मिति प्रागेवोक्तम् । यद्यपि अकृत एव क्से तावस्थायां गुणः प्राप्नोति । तथापि इग्रुपधादिति विशेषणसामर्थ्यान्न भवति । न च कृतेपि गुणे भूतपूर्वगत्या विहितविशेषणाश्रयणेन वा क्सोऽस्तिति वाच्यम् । कित्करणवैयर्थ्यापत्तेः । न च कसस्याचीत्यत्र विशेषणार्थं तत् ।

---

निकमिकषिभ्यः से वत्सौ वत्साः, अत्रापि प्राप्नोति उणादयो-ऽव्युत्पन्नानि प्रातिपदिकानीत्यनर्थकत्वान्न भविष्यति, एवमपि दुहादिषु तृणादिभ्यः से प्रसङ्गः, तृणान्यस्मिन्देशे सन्ति तृणसौ तृणसा इति, नतदेवं 'घोर्लोपो लेटि वे'ति प्रकरणे धातुप्रत्ययानां ग्रहणं किं च लुग्वादुहदिहेत्यत्रापि 'कसस्याची'त्यतः कसस्येति वर्तते, तेन दुहादिषु यस्य सम्भवः पूर्वसूत्रेपि तस्यैव ग्रहणं भविष्यति तदेवं कित्करणसामर्थ्याद्गुणो न भवतीति स्थितम् । 'श्लेरनिट इति'।

वारणीयः। अत एव दृशेः क्सेतादृक्षावित्यादौ न दोष इति क्वित्त्वसामर्थ्याद्गुणे नेति बोध्यम्। दधुक्षतीत्यादौ सनः सानुबन्धकत्वान्न दोषः। एतल्लोपविषये तादृक्षादेरनभिधानमिति कश्चित् ॥

**सिचानित्यमिति। (कै)**

आदेशान्तराभावे तस्यावश्यंभावादित्यर्थः ॥

**सिजेव भवतीति। (कै)**

निर्दिश्यमानपरिभाषया लेरेव सः। धातोरिति च विहित-विशेषणमिति निर्दिश्यमानस्य न व्यवहितत्वमिति भावः ॥

---

सस्याचीत्येव सिद्धेः। न चैवं श्लिषादिभ्यः शिक्लिकमिकमिभ्यः से वत्से वत्सा इत्यत्र प्रसङ्गः स्यादिति वाच्यम्। लुग्वादुहेत्यत्रापि हि सस्याचीत्यतः सस्येत्यनुवर्तते। एवञ्च दुहादिषु यस्य सम्भवः तस्यैव पूर्वसूत्रेऽपि ग्रहणमिति सुवचत्वात् तस्मात्कित्करणसामर्थ्याद् गुणो नेति स्थितम् ॥

---

यद्यपि च्लेः सिजादिभिरादिदेशैर्भवितव्यमिति क्व चिदप्यश्रवणान्न सेट्त्वमनिट्त्वं वा तथापि दुहल् इति स्थिते क्सस्यायं विषय इति सिचा न भाव्यं, क्सोपि तावन्न भवति यावदस्यानिट्त्वं न ज्ञातं तच्च शकारस्येवेटः प्राप्तौ तन्निषेधात्सेट्त्वमनिट्त्वं च निरूप्यत इति विशेषणोपपत्तिः। 'अधुक्षदित्यादि'। 'दादेर्धातोर्घः,' एकाचो बशो भष्। 'अलिक्षदिति'। लिह आस्वादने 'हो ढः,' भिदिर् विदारणे, छिदिर् द्वैधीकरणे, कुष निष्कर्षे, मुष स्तेये ॥

# श्लिष आलिङ्गने । ३ । १ । ४६ ॥

विधित्वसंभवे नियमार्थत्वं कथमित्यत आह

इतर इति । (कै)

प्रत्यासत्तिसम्बन्धमात्रं प्राधिकर्तृकतद्विशेषस्यानिगमनमिति बोध्यम् ॥

श्लिषेर्नाप्राप्ते इति । (कै)

परस्मैपदविषये विधित्वं स्यादित्यर्थः ॥ भाष्ये

---

श्लिष आलिङ्गने ॥ अत्र योगो विभज्यते । श्लिषः ॥ श्लिषः परस्य अनिटः च्लेः क्सः स्यात् । पूर्वेणैव प्राप्तस्य क्सस्य पुषादयङा बाधे प्राप्ते इदमारभ्यते । पुषादिपाठसामर्थ्यात्पक्षे अङ् । एवञ्च अङ्क्सयोः सर्वत्र विकल्पे प्राप्ते आलिङ्गनानालिङ्गनयोर्विशेषेण क्से च प्राप्ते नियमार्थं द्वितीयो योगः । आलिङ्गने । श्लिषः परस्यानिटः च्लेर्योयं क्सादेशः स आलिङ्गन एव न त्वर्थान्तरे, एवं चार्थान्तरे सावकाशोऽङ्

"श्लिष आलिङ्गने" ॥ 'श्लिषेर्नातोऽिति'। श्लिष आलिङ्गन इत्यस्य न तु श्लिष् श्लिष् प्रुष् प्लुष् दाह इत्यस्यालिङ्गने इत्यभावाद् अनिट इति चाधिकारात्सानुबन्धकत्वाच्च, तत्र नियमार्थमेतदिति, ननु श्लिषिरयं पुषादिः, तथा च प्रत्युदाहरणे अङ् भवति ततश्च पुषादिपाठासामर्थ्यं बाधित्वा ऽऽलिङ्गने क्सो यथा स्यादित्येवं विधिसम्भवान्नियमो नोपपद्यते, अस्तु विधिः, एवमप्यालिङ्गने क्सो ऽन्यत्राङिति

**आलिङ्गने ऽनालिङ्गने चेति । (भा)**

कर्मणि कर्मव्यतीहारे चातां प्रवृत्तिरित्यर्थः । तत्रालिङ्गने इष्टमेवान्यत्रापत्तिरेव दोषः ॥

**दोषान्तरोद्भावेति । (कै)**

बाध्यसामान्यचिन्तया पदद्वयविषयको विधिः स्यादिति भावः ॥

**नियमार्थमिति । (कै)**

अचिण्विषये श्लिष आलिङ्गन एवेत्यर्थः । अचिण्विषयशब्देन भावकर्मार्थकतशब्दभिन्नमात्मने पदमुच्यते । अन्यथा विध्यर्थमिति । अचिण्विषय इत्यनेन तद्भिन्नणिजामेव ग्रहणं स्यादित्यर्थः । तस्य चिण्विषये विधिव्यावृत्त्यर्थं स्यादिति भावः ॥

---

आलिङ्गने क्सेन बाध्यते । आश्लिक्षत् कन्यां देवदत्तः । आलिङ्गन-एवेति किम् । समाश्लिषज्जतु काष्ठम् । इह अङेव, प्रत्यासत्तौ ह्यत्र श्लिषिर्वर्तते न तूपगूहनपरिष्वङ्गापरपर्याये आलिङ्गने । उपाश्लिक्षातां जतुना काष्ठे । नन्विह शलइगुपधादिति क्सो दुर्वारः । आलिङ्गने एवेति नियमेन हि अनन्तरस्येति न्यायेन श्लिष या इति प्राप्तिः अङ्बाधनार्था सैव नियम्यते न तु ततः प्राचीनमपीति चेन्न ।

सिद्धमिष्टं, सत्यं, सिद्धं परस्मैपदे आत्मनेपदे त्वङभावादालिङ्गने-ऽनालिङ्गने च पूर्वेण क्सः प्राप्नोति इष्यते च तत्राप्यालिङ्गने क्सोऽन्यत्र सिच्, तत्र नियमे सत्युपपद्यते स च नियमो नोपपद्यते विधेयभावात्, योगविभागात्सिद्धं, श्लिष इत्येको योगः श्लिषश्च क्सो भवति, किमर्थमिदं पुषाद्यङो बाधनार्थं, यथैव तर्ह्यङं बाधते तथा सिचमपि बाधेत समाश्लेषि कन्या देवदत्तेनेति, पुरस्तादपवादा

दाहार्थस्येति। (कै)

अन्यथा तत्र चारितार्थ्यादङो बाधा न स्यादिति भावः॥

सानुबन्धकत्वाद्वेति। (कै)

श्लिषु दाह इति पाठात्॥

अठमित इति।

न च णेचरितार्थः। तत्रादिपदस्यैतत्सामर्थ्येनेतरपुषादिमात्रपरत्वमित्यभिमानः। पुषादिपाठोऽपि ह्यनर्थः। न चान्यत्रैव पाठः। अशोकवनिकान्यायात्। वस्तुतः पुषादिपाठसामर्थ्यादादिपदेन तत्र ग्रहणसामर्थ्याच्चाङ्क्सयोः परस्मैपद आलिङ्गनानालिङ्गनविषये सर्वत्र

---

योगविभागसामर्थ्येन सर्वस्याः क्सप्राप्ते नियमनात्। आत्मनेपदे च अङो ऽप्राप्तेः सिद्धेत्र पर्यवस्यति। नन्वेवमपि आलिङ्गन एवेति आदेशनियमोऽयमिति कुतः, अर्थनियम एवायं किं न स्यात् आलिङ्गने क्स एवेति। ततश्चालिङ्गने अङ् मा नाम भूत्। आत्मनेपदे तु अनालिङ्गनेऽपि पूर्वेण क्सो दुर्वार एवेति चेत्। सत्यम्। उभयथेह नियमसम्भवेऽपि प्रत्ययनियम एवाश्रीयते लक्ष्यानुरोधात्। विधेय-

---

अनन्तरान्विधीन्बाधन्ते नोत्तरानिति तत्रालिङ्गनेऽनालिङ्गने च श्लिषः क्सो भवति, इदमिदानीं किमर्थं नियमार्थम्, आलिङ्गन एव नान्यत्र, योगविभागसामर्थ्याद्या च यावती च क्सस्य प्राप्तिः सा सर्वा नियम्यते न त्वनन्तरस्य विधिर्वा भवतीति श्लिष इति या प्राप्तिरङ्बाधनार्था सैव, एवमपि नियमो नोपपद्यते, कथं, श्लिष इत्येतदङ्बाधनार्थं, न च तदत्यन्तायाङं बाधितुं प्रभवति पुषादिपाठ-

विकल्पे प्राप्ते आत्मनेपदे चालिङ्गनानालिङ्गनयोरविशेषेण क्से प्राप्ते द्वितीयेन नियमः ॥

**आलिङ्गन एवेति ।** (कै)

एवं चार्थान्तरे सावकाशोऽङ् आलिङ्गने क्से न बाध्यते । तस्यैव बाधस्यानुवादो भाष्ये

**तद्बाधनार्थमिति ।** (भा)

न चालिङ्गने क्स एवेति विपरीतनियमापत्तिः । लक्ष्यानुरोधात् प्रत्ययनियमस्यैवाङ्गीकारादित्यूह्यम् । योगविभागसामर्थ्याच्च नियमेन सर्वाङ् प्राप्तिबाधः ॥

---

विभक्तिनिर्देशेन प्रधानत्वाद्वा भाष्यकारोक्तव्याख्यानाद्वेति न कश्चिद्दोषः । श्लिष इति योगे अनिटः किम् । श्लिष आलिङ्गन इत्यस्यैव ग्रहणं यथा स्यात् । श्लिषु प्लुष दाहे इत्यस्य सेटो ग्रहणं मा भूत् । सानुबन्धकत्वादेव तदग्रहणे तु अनिट इति नावश्यकमिति दिक् । श्लिष इति योगविभागसिद्धश्च क्सः पुरस्तादपवादन्यायेन अङमेव बाधते न तु चिणन्तेन समाश्लेषि कन्या देवदत्तेनेति चिणेव भवति ॥

---

सामर्थ्यात्, ततश्चाङ्क्सयोः सर्वत्र विकल्पे प्राप्ते द्वितीयो योग आलिङ्गने क्स एव नित्यं यथा स्यान्मा कदा चिदङ् भूदित्येवमर्थः स्यात्किं तदुच्यते नियमो नोपपद्यत इति, ननु तत्र भवतापि मुखान्तरेण नियम एवोक्तः एतावांस्तु विशेषो मया प्रत्ययनियम उक्त आलिङ्गन एव क्स इति त्वया पुनरर्थनियम आलिङ्गने क्स एवेति सर्वथा नियमान्न मुच्यामहे तत्र लक्ष्यानुरोधाद्विधेयविभक्तिनिर्देशेन प्रधानत्वाद्वा प्रत्ययनियम एव भविष्यति ॥

# णिश्रिद्रुस्रुभ्यः कर्तरि चङ्।
# ३। १। ४८॥

ननु णिङभावपक्षेऽपि सन्वत्त्वं दुर्वारः। तत्र णावित्यनुक्तेरत आह

**सन्वल्लघुनीति॥ (कै)**

**अन्येत्वाहुरिति। (कै)**

अत्रारुचिस्तु भाष्याननुगुणत्वं वार्त्तिकोत्तरं पाठेन तत् सूत्रार्थत्वस्य स्वरसतः प्रतीतेः। पूर्वव्याख्यायां विशेषलक्षणस्मरणप्रयुक्ताधिकसुखप्राप्तिः॥

णिश्रिद्रुस्रुभ्यः कर्तरि चङ्॥ एभ्यश्च्लेश्चङ् स्यात् कर्तृवाचिनि लुङि परे। णीति णिङ्णिचोः सामान्यग्रहणम्। अचीकमत। अचीकरत्। अशिश्रियत्। अदुद्रुवत्। असुस्रुवत्। कर्तरि किम्। अकारयिषातां घटौ देवदत्तेन। चङो ङकारो गुणनिषेधार्थः। चकारश्चङीति विशेषणार्थः। अङीत्युच्यमाने अस्यतिवक्तीत्यङि षिद्भिदादिभ्य इति चाङि अतिप्रसङ्गः। यदि तु णिश्रीत्यादौ ङ एव क्रियेत तदा शक्यं चित्त्वमकर्तुम्। कमेरुपसंख्यानम्॥ आयादय आर्द्धधातुके वेति यदा णिङ् नास्ति तदर्थमिदम् अचकमत। अत्र भाष्यम्। नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः। अथ पत्काषिणो यान्ति येऽचीकमत भाषिणः॥

"णिश्रिद्रुस्रुभ्यः कर्तरि चङ्"। 'चकारो विशेषणार्थ इति'। 'चङी' अत्र अङीत्युच्यमाने 'अस्यतिवक्तिख्यातिभ्योऽङ्' 'षिद्भिदादिभ्योऽङ्' अत्रापि प्राप्नोति, यदि पुनरयं ङो विधीयते चकारः शक्यो कर्तुं चिन्त्यं प्रयोजनमस्य। 'अशिश्रियदित्यादि'। अत्र चङि धातुरङ्गं चङन्तं तु तिपि तत्र चङाश्रयस्य गुणस्य क्ङितीति प्रतिषेधः, चङन्तस्य तु तिपमपेक्ष्य लघूपधगुणः प्राप्नोति, न च तस्यापि चङमेव ङितमपेक्ष्य प्रतिषेधः, किं कारणं क्ङितीति निमित्तसप्तमी, नैष

## कमेर्लुङि कीदृशं रूपमिति (कै)

प्रश्ने स्वरसतःक्रमुप्रकृतिके लुङीत्यर्थके तस्य साधुत्वे ऽप्यसमंजसोत्तरत्वात् पुनः सुखप्राप्तिरेवं च सामान्यशास्त्रानुगतलक्ष्यप्रयोगापेक्षया विशेषलक्षणानुगतशब्दप्रयोगधर्माधिकमित्यस्य भाष्यस्य तात्पर्यम् ॥

## कर्मकर्तरीति । (भा)

कर्मवद्भावाच्चिणावाधः स्यादित्यभिमानः ॥ भाष्ये

## कर्मणि विधीयते य इति । (भा)

कर्मवद्भावप्राप्त इति भावः ॥ "उत्पुच्छयते गामि"ति कर्तुरीप्सिततममिति कर्मत्वं[1] बोध्यम् ॥

१ नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवा रथैः ।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥

अस्यार्थः । अचकमताचीकमतेति शब्दयोः साधुत्वे तुल्येऽपि अचकमतेत्यस्य विशेषलक्षणमापेक्षतया तत्प्रयोगे क्लेशाधिक्यात्फलाधिक्यम् । तेन कमेर्लुङि किं रूपमिति पृष्टे अचकमतेति ये ब्रुवन्ते सुयुक्तैः रथैः स्वर्गं यान्ति यैस्त्वचीकमतेत्युक्तं ते पादौ कषन्तीति पत्काषिणो यान्ति । हिमकाषिहतिषु चेति पादस्य पदादेशः । अन्ये तु व्याचक्षते । अकमिष्टेति यैरुक्तं तएवोपचारादकमिष्टशब्देनोच्यते । तेऽमी सुयुक्तैर्वडवारथैर्गच्छन्तोऽपि सुखं न प्राप्नुवन्ति अपशब्दोच्चारणात् । अचीकमतभाषिणस्तु पत्काषिणोऽपि सुखं यान्ति ।

दोष । अन्तरङ्गाविवयङुवङौ अन्तर्भूतचङपेक्षत्वात्, बहिरङ्गो गुणो बहिर्भूततिङपेक्षत्वात् । 'अकारयिषातामिति' । ण्यन्तात्कर्मणि लुङ् द्विवचनमाताम् । 'कमेरुपसङ्ख्यानमिति' । ननु कमेर्णिङ् विहितः, न च प्रकृत्यन्तरं कमिः सम्भवति णिङन्तात् सूत्रेणैव सिद्धं तत्राह । 'आयादय आर्द्धधातुके वेति' । 'यदा णिङ् नास्तीति' । 'णिङ्पक्षे सन्वद्भाव इति' । सन्वत्सूत्रे चङ्परो णिरित्याश्रयणात् तत्र हि सन्वल्लघुनि चङीति बहुव्रीहिपरग्रहणं बहुव्रीह्यर्थं तत्र णिरन्यपदार्थो ऽन्यस्यासम्भवात् ॥

# अस्यतिवक्तिख्यातिभ्योऽङ् । ३ । १ । ५२ ॥

ननु परस्मैपदेऽप्यङ् दर्शनादात्मनेपदार्थमित्ययुक्तमत आह

**पुषादय आगणान्तादिति ॥** (कै)

**आतिदेशिकस्येति ।** (कै)

यकश्चिणा बाधात् द्विर्वचनेऽचिणोऽप्राप्तेरात्मनेपदमपि उपसर्गादस्यत्यूह्योरिति वार्त्तिकेन सिद्धमित्यर्थः ॥

---

अस्यतिवक्तिख्यातिभ्योऽङ् ॥ असु क्षेपणे । वच परिभाषणे, ब्रूञो वचिश्च, ख्या प्रकथने, चक्षिङादेशस्येति पाठः । वस्तुतस्तु सार्वधातुकमात्रविषयः ख्यातिः । इह त्वादेशस्यैव ग्रहणम् । एभ्यश्च्लेरङ् स्यात् कर्तृवाचिनि लुङि परे । अस्यतेः पुषादिपाठादेव अङि सिद्धे पुनर्ग्रहणमात्मनेपदार्थम् । पर्यास्थत । पर्यास्थेताम् । पर्यास्थन्त । उपसर्गादस्यत्यूह्योर्वावचनमित्यात्मनेपदम् । अङ् । अस्यतेस्थुक् । कर्मकर्तरि तु प्रत्यये परत्वाच्चिण् अन्यत्र अङ् । पर्यासि । पर्यास्थेताम् । पर्यास्थन्त । अवोचत् । अवोचताम् । अवोचन् । वच उम् । अख्यत् । अख्यताम् । अख्यन् । आतो लोपः । कर्तरीति किम् । कर्मणि मा भूत् । चिण्सिचावेव यथा स्याताम् । निरासि । निरासिषाताम् ॥

“अस्यतिवक्तिख्यातिभ्योऽङ्” ॥ ‘ब्रूञादेशो वेति’ । वाशब्दः समुच्चये, एवमुत्तरत्रापि । ‘पुषादित्वादेव सिद्ध इति’ । परस्मैपदेषु ‘पर्यास्थतेति’ । उपसर्गादस्यत्यूह्योर्वावचनमित्यात्मनेपदेऽङि अस्यतेस्थुक् । ‘अवोचदिति’ । ‘वच उम्’ । ‘आख्यदिति’ । ‘आतो लोप इटि च’ ॥

# जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च। ३।१।५८॥

स्तेयकरणार्थत्वात् कथं सिद्धिरत आह

अनेकार्थत्वादिति॥ (कै)

जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च॥ च्लेरङ् वा। अजरत्। अजारीत्। स्तम्भुः सौत्रो धातुः। अस्तभत्। अस्तम्भीत्। म्रुचु म्लुचु गतौ। अम्रुचत्। अम्रोचीत्। अम्लुचत्। अम्लोचीत्। ग्रुचु ग्लुचु स्तेयकरणे। अग्रुचत्। अग्रोचीत्। ग्लुञ्चु षस्ज गतौ। अग्लुचत्। अग्लुञ्चीत्। अश्वत्। अश्वयीत्। अशिश्वियत्। विभाषाधेट्श्व्योरित्यत्र व्युत्पादितमेतत्। ग्लुचुग्लुञ्च्वोरेकतरोपादानेनापि रूपत्रयं यद्यपि सिद्ध्यति। तथापि ग्लुञ्चावुपात्तेऽग्लुचत् अग्लुञ्चीदिति द्वयम्। ग्लुचेस्तु सिचि अग्लोचीत्। तथा ग्लुचावुपात्ते तस्याग्लुचत् अग्लोचीत् ग्लुञ्चेस्त्वग्लुञ्चीदिति। तथापि अर्थभेदात्सूत्रकृता उभावुपात्तौ। भाष्यकृता तु धातूनामनेकार्थत्वेनेष्टसिद्धिमाश्रित्य अन्यतरो न कर्तव्य इत्युक्तम्। एतेन द्वयोरुपादानसामर्थ्यात् ग्लुञ्चेरनुनासिकलोपो न भवतीति जयादित्योपन्यस्तं केषांचिन्मतं परास्तम्। भाष्यविरुद्धत्वात्॥

"जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च"॥ अस्तम्भदिति'। अनिदितामित्युपधालोपः। 'अन्यतरोपादानेऽपि रूपत्रयं सिद्ध्यतीति'। कथं, यदि तावद् ग्लुचिरुपादीयते तस्मादङ्सिचोरग्लुचत् अग्लोचीदित्येतद् रूपद्वयं सिद्ध्यति ग्लुञ्चेस्तु सिचि तृतीयमग्लुञ्चीदिति, अथ ग्लुञ्चिरुपादीयते तस्याग्लुचत् अग्लुञ्चीदिति रूपद्वयं सिद्ध्यति ग्लुचेस्तु सिचि तृतीयमग्लोचीदिति, किमर्थं तर्ह्युभयोरुपादानमित्यत आह। 'अर्थभेदात्त्विति'। 'केचिदित्यादि'। इदं भाष्यविरुद्धं भाष्यकारो हि अनेकार्थत्वाद्धातूनामर्थभेदो न प्रयोजक उभयोपादानस्येत्यन्यतरोपादानं प्रत्याख्यातवान्॥

# सार्वधातुके यक् । ३ । १ । ६७ ॥

वृत्रः कर्मणि नियताकाङ्क्षत्वाद्दर्शयति

वक्ष्यमाणस्येति । (कै)

वाक्यार्थः क्रिया । साचेह केनैतदेवं भवतीत्येतद्रूपासरणं धावनम् । अध्याहृतधावनादिपदोपस्थाप्यस्य कर्मत्वमित्यन्यत्रोक्तम् ॥ ननु भावस्य क्रियारूपस्य संख्याया अयोगात् न द्विवचनादिकं भविष्यति । कर्मणि तु शक्तिशक्तिमतोरभेदोपचाराच्छक्तिमतश्च संख्यायोगाद् द्विवचनादिकं सेत्स्यतीत्यत आह

इहेति श्रुतेरिति ॥ (कै)

साधनादिभेदाद्भिन्नत्वेऽपि श्रुतेराख्यातशब्दात् प्रविभागकल्पना-भेदावगमरूपाऽशक्येत्यर्थः ॥ कथं तर्हि द्विवचनवाक्यादिकं तदाह

तथेति ॥ (कै)

साधनभेदादिति । (कै)

साधनभेदकृतभेदारोपादित्यर्थः ॥

सार्वधातुके यक् ॥ भावकर्मवाचिनि सार्वधातुके परे धातोर्यक् स्यात् । आस्यते शय्यते त्वया । अयमु चिक्रितीति शौचोयादेशः ।

"सार्वधातुके यक्" । इत्यादिष्वपि लिडि लिटि चान्तरेणापि विकरणं सर्वेष्वेव धातुषु तिङामेव सद्भावे भावकर्मकर्त्तारस्त्रयोपि प्रतीयन्ते,

अथैकेति । (कै)

शब्दशक्तिस्वभावादिति भावः । तद्वा पाकाविति क्रियारूपस्य स्वतः संख्यासम्बन्धाभावादिति तात्पर्यम् ॥ ननु कर्मपदस्य शक्त्यभिधायित्वाच्छक्तेश्च विभक्तिवाच्याया असत्त्वभूतत्वात्संख्यायोगाभावेनानेकमित्यनुपपन्नमत आह

कर्मशक्तीति ॥ (कै)

शब्देनेति । (कै)

न हि घटस्य शुक्ल इतिवत् घटस्य कर्मेति प्रयोगेऽस्ति इति भावः ॥ तदेवासामानाधिकरण्यमिति कर्मादिपदैः शक्तिमद्रूपमापन्नैव शक्तिरुच्यते ॥

अत एव कर्मत्वमिति । (कै)

भावप्रत्ययेन शक्तिरुच्यते प्रवृत्तिनिमित्तेन व्यक्त्यादात्म्यसम्बन्धस्याङ्गीकारादिति तत्त्वम् ॥ एवं च कर्मणि विधीयमानाख्यातेनापि तथैव शक्तिरुच्यते इति सामानाधिकरण्योपपत्तिरिति भावः ॥ ननु भावस्यैकत्वयोगे द्वित्वादियोगोऽपि स्यादत आह

---

क्रियते कटः। इह कर्मणि यक् भवतीत्यस्यावकाशः शुद्धं कर्म, पच्यते ओदनः। कर्तरि शपोऽवकाशः। शुद्धः कर्ता। कर्मकर्तर्युभय-

भविषीष्ट त्वया, क्लृषीष्ट घटः, भूयात् क्रियात् बभूवे चक्रे घटः बभूव चकारेति। अग्निजुहोत्यादौ कर्ता॥

भेदाभावेति । (कै)

परे त्वस्त्येवैकत्वसंख्याक्रियायामसत्त्वं त्वनारोपितद्व्यादिसम्बन्धाभावमात्रेण तदेव "एक एव" इत्येवकारेण भाष्यध्वनितमित्याहुः ॥ आधारद्रव्याणां भेदेऽपि कुतः पाकादेर्भेदोऽत आह

गुडतिलेति । (कै)

आश्रितः पाकोऽपीत्यन्वयः । आश्रयभेदात्तस्यापि भेदाध्यवसाय इति भावः ॥ नन्वेवं तिङ्यपि द्विवचनादि स्यात् न स्याद्वा सत्यपीत्यत आह

यजादिभिरिति । (कै)

तिङ् वाच्यस्तु न सत्त्वभूत इति भावः ॥ उक्तार्थाख्यानवतस्तोष्य-मित्याह

आख्यातेति । (कै)

वस्तुतः पूर्वभाष्येण सत्यपि तदनुपस्थाप्य साधनगताया अपि संख्याया आरोपेण द्विवचनादीत्युक्तं तत्र प्रकृतासम्बद्धैव चर्चा दुर्लभत्वादिति योगोऽस्त्येत्यादिवक्ष्यमाणभाष्यविरोधादित्यपि बोध्यम् ॥

---

प्रसङ्गे, । यग्विधाने कर्मकर्तर्युपसंख्यानं तर्हि कर्तव्यम् । न कर्तव्यम् । कार्यातिदेशात्सिद्धम् । कर्मवत्कर्तेत्यनेन हि यगात्मनेपदादीनि

क चित्तिङामभावेऽपि प्रतीयन्ते त्रयोऽप्यमी ।
यथाऽऽह्यकारि गच्छेति चित्रः सन्निधिमात्रतः ।

**एतेनाथवेत्यपि ।** (कै)

न समञ्जसम् एवं चाश्रयप्रकारादिकृतभेदानां पाकशब्दादवगतिसंभवेन युक्तं बहुवचनं न तु तिङन्ते तत्कृतभेदा न च गमके इति भावः ॥ यत्र त्वस्ति तत्कृतभेदावगमस्तत्र भवत्येव बहुवचनमित्याह भाष्ये

**तिङभिहिते चाप्नोति ॥** (भा)

ननूष्ट्रासिका इत्यादावाख्यातवाच्ये भावे कथं भेदावगमोऽत आह

**अचाश्रयाणामिति ॥** (कै)

**तत्साम्याच्चेति ।** (कै)

न ह्येकात्वे तावत्साम्यसंभवस्तत्प्रतिपादने फलं चेत्यर्थः ॥

**तत्सामानाधिकरण्याच्चेति** (कै)

पाठेऽपि अयमेवार्थ उपमानोपमेययोः सामानाधिकरण्यादित्यर्थः ॥ ननु साम्यवाचके वाधाभावात्कथं तत्प्रतीतिरत आह

**इवेति ।** (कै)

परश्च परशब्दः प्रयुक्त इति न्यायादिति भावः ॥

---

विधीयन्ते इति यगेव परः । शास्त्रातिदेशपक्षेऽपि नदुहस्नुनमां यक्चिणाविति ज्ञापकात् कर्मकर्तरि यगेव भविष्यति । अत्रेदमवधेयम् ।

अधोगच्छभरित्यादौ धातुमात्रेऽपि कर्तृधीः ।
तथा पतिसहत्यादौ धात्वभावेऽपि कर्तृधीः ॥

प्रयोजनाभावादिति । (कै)

प्रकृते तु साम्यप्रतीत्युपपादनमेव प्रयोजनमिति भावः ॥

यथेति । (कै)

पलाशकृपाश्रयानेकत्वेऽपि राग इत्येकवचनमेवेति भावः ॥ वस्तुतस्त्वेकजातीयरागप्रतिपादनार्थैकवचनमिति बोध्यम् ॥ किं चाश्रयभेदादाश्रितभेदप्रतीतेरसार्वत्रिकत्वादपि न सा भावाख्य-द्विवचनादिनियामिकेत्याह

न चेति । (कै)

एवं चामिकादिक्रियाविशेषणं प्रथमान्तल्लिङ्गनधिकारस्थः स्त्रीत्वस्य सत्त्वं न सामान्ये नपुंसकमित्यस्याप्रवृत्त्या क्लीवत्वम् उप-मानोपासनभिन्नान्यासनानीति बोधः । बहुत्वावधारणाच्च नैक-वचनमिति बोध्यम् ॥

कर्मणीति । (कै)

अत्र पक्षे आख्यातावयवासादेः परिच्छेदकत्वनिरूपके आसनादौ वृत्तिः परिच्छेदकत्वरूपफलाश्रयत्वात्कर्मत्वम् । दृष्टान्ते व्याघ्रा-श्रयत्वादि च परिच्छेदकत्वं च सादृश्येन नायं भाष्यार्थ इत्याह

---

भावकर्मकर्तारो लकारार्थाः । लः कर्मणि चभावे चाकर्मकेभ्य इति सूत्रात् । तत्र हि चकारेण कर्तरीत्यनुकृष्यते । तच्च वाच्यार्थसमर्पक-

एवं स्थिते भूयो विषयाभ्यामन्वयव्यतिरेकाभ्यां शब्दार्थावसायो व्यभिचारभूमिषु तु तस्मिंस्तस्मिन्विषये तस्यतस्य शब्दस्य सम शक्तिरिति

एवं त्विति । (कै)

विवक्षान्तरे आसेः परिच्छेदकत्वार्थरूपविवक्षाविशेषे भावेऽपि त्वविधानेनोपपादितं बहुवचनं भाष्यकारेण तच्चोपपादितं स्यादिति शेषः । एवं च यथा पाकप्रकारानभिसमीक्ष्यपाका वित्यादिदिवच-नादि । एवमासनप्रकारानभिसमीक्ष्यासन्त इत्यादि भावे बहु-वचनमिति भाष्यार्थः । आख्यातवाच्येः सत्त्वं लिङ्गकारकान्वयि-त्वमेव बोध्यम् ॥

भिन्नकालत्वादिति । (कै)

भिन्नकालार्थवाचकत्वादित्यर्थः ॥ नन्वेकशेषमात्रेणाविद्यमानाने-कार्थाभिधानशक्तिः कथमत आह

अन्तरेण चेति ॥ (कै)

"तिङभिहिते चापी"त्यादि भाष्ये । तिङन्तार्थे भावे तथात्वे-ऽपि कालभेदेऽपि असाहूप्यादेकशेषाभावेन न बहुवचनादीत्यर्थः ॥ तदेवोपपादयति

न त्वेकमिति । (कै)

इतः परं भिन्नपदवाच्यसाधनादिकृतभेदेन भेदावगमः कृदन्ते-ऽस्ति न तिङन्ते इत्यत्र बीजभूतं तयोर्वैषम्यमाह भाष्ये

---

मिति पूर्वसूत्रे स्थितम् । उत्तरत्रापि तयोरेवकृत्येत्यत्र तथैवेति सन्दंशान्नायपाठाच्च मध्येऽपि वाच्यसमर्पकत्वंवोचिता प्रधानभूतधात्वर्था-

---

कल्पयितुमुचितं न पुनः क्व चिद्व्यभिचारदर्शनेन सर्वत्रानाश्वासः, तादृशौ चान्वयव्यतिरेकौ तिङामेवेति तेषामेव भावकर्मकर्त्तारो वाच्याः, सूत्रका-

**अस्ति खल्वपीति ॥** (भा)

ननु लिङ्गसंख्याद्यन्वयित्वमेव द्रव्यत्वमिति वतिरनुपपन्नोऽत आह

**तन्नेति ॥** (कै)

भाष्ये

**क्रियया समवायमिति ।** (भा)

क्रियानिरूपितकर्मादिसंज्ञासमानाधिकरणं शक्तिभिः संबद्धुं गच्छति इत्यर्थः । द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमित्यस्य कारकशक्तिमत्त्वमित्यर्थः ॥

**करणादिरूपेणेति ।** (कै)

तदन्ते यकि नत्वे सङ्कृतमित्यादौ तथान्वयादिति भावः ॥ ननु

**साध्यत्वादिति ।** (कै)

असिद्धस्य जनकत्वासम्भवादिति भावः ॥

**सिद्धा त्विति ।** (कै)

यदि ह्यपितं सिद्धत्वं तमेव प्रति पुनः साध्यत्वं नेत्याशयः । एवं चान्यनिरूपितसिद्धत्वेऽप्यन्यनिरूपितं साध्यत्वं सम्भवत्येवेति भावः ॥

---

अयः कर्ता फलाश्रयश्च कर्म । फलव्यापारयोश्च धातुनैवोपात्तत्वात् । आश्रयमात्रं लकारार्थः । अनन्यलभ्यस्यैव शब्दार्थत्वात् । ततश्च तिङा-

---

रोप्याह 'लः कर्मणि च भावे चाकर्मकेभ्य' इति, लादेशाश्च तिङः, ततोऽपि तेषामेव तेऽर्था इति मन्यमान आह । 'भावकर्मवाचिनि सार्वधातुके परत इति' । उत्तरसूत्रे च कर्तृवाचिनि सार्वधातुके परत इति । 'श्रूयतइति' ।

## तथा विषयेति । (कै)

तथा मति विषयभेदनेत्यर्थः ॥

## क्रियाफलत्वादिति । (कै)

अर्थ आद्यचा तदत्वादित्यर्थः ॥ "अतस्तस्य" । आख्यातवाच्य-भावस्य ॥ अन्वयस्त्वीदृश विषयेऽन्यतराकाङ्क्षयैव ज्योतिष्टोमेन यतते इत्यादौ करणत्वेनान्वयसत्त्वेऽपि स्वघटितपदवाच्यक्रियायान्तत्त्वाभाव एवेति बोध्यम् ॥

## गुणभावमिति । (कै)

इदं चिन्त्यं कर्मणःक्रियाफलाश्रयत्वादिव कर्तुः क्रियाश्रयत्वा-दिव च प्राधान्यवत् करणस्यापि स्वव्यापाराव्यवधानेन फलोत्पादक-तयान्यसत्त्वेव न हि कर्तृकर्मणोः प्राधान्यमेवाश्रयणीयन्तेनेतरस्ये-दृशमित्यत्रमानमिति तस्मात्स्वभावत एव तदन्वयाभाव इति बोध्यम् ॥ एवं च करणत्वोद्देश्यत्वावधित्वैरन्वयित्वेन कृदभिहितो भावो द्रव्यधर्मैव । तिङभिहितस्तु तद्विरुद्ध एवेति बोध्यम् ॥ अस्यैवार्थस्य साधकं वैषम्यान्तरं दर्शयति

मपि स एवार्थः। तेषां लादेशत्वात् स्थान्यर्थाभिधानसमर्थस्यैव चादेशत्वात्। विकरणास्तु द्योतकाः। तत्रापि प्रवादयो धात्वर्थे

अयद् यि कृदिति' अथ यदा द्वौ कर्तारौ बहवो वा तदा कथमास्यते भवद्भ्याम्। आस्यते भवद्भिः द्विवचन बहुवचने कस्मान्न भवतः भावे भेदा-भावाद धात्वर्थो हि भावः ॥

## कालपुरुष इत्यादि । (भा)

असत्त्वभूताया एवैतत्सम्भव इति भावः । प्रत्यक्समुत्कमे पराक्त्वं मध्यमे प्रत्यक्त्वं स्वगतत्वं पराक्त्वमेवाश्यगतत्वं युष्मदस्मच्छ्रुतिरेकेणाऽपि मध्यमोत्तमाभ्यां तद्बोधः । स्वार्थत्वपरार्थत्वादिकमपि बोधविषय इति भावः ॥ भाष्ये

## कर्त्रा संप्रयुज्यत इति । (भा)

तिङन्तवाच्यो भावो नियमेन कर्त्राकाङ्क्षः कृदाच्यस्तु न तथा । न हि पाको राग इत्युक्ते कस्येति नियमेन कर्त्राकाङ्क्षा दृश्यते । नापि तस्य नियमेन प्रयोगो दृश्यते इदमेव ध्वनयितुं संप्रत्युपसर्गद्वयोपादानमित्यर्थो मम भाति । यतस्य क्रियात्वं सामान्यमुभयत्रापि साध्यत्वमिद्धत्वकृतस्तु प्रवोक्तो विशेषो दृश्यते तथायमपि यः तिङर्थस्य भावस्य लिङ्गवाच्यसाधनकृतसंख्याद्ययोग्यताद् कृदर्थस्य तु तद्योग्यतेति भाष्यार्थः ॥

## ब्राह्मणानामिति । (कै)

कर्तरि षष्ठी ॥

व्यापारे आश्रयस्य विशेषणता द्योतयन्ति । यकृचिह्नो तु पक्षे । ननु विपरीतमेवास्तु कर्तरि प्रविश्यादेरप्यनुप्रासनस्य स्वरमेन प्रत्यय एव वाचकाः । लकारास्तु द्योतका इतीति चेन्न । आशीर्लिङि लिटि च अदादिजुहोत्यादिषु च प्रत्ययाभावेऽपि तत्प्रतीतेः, यद्यपि,

> कर्मभेदेऽपि सादृश्यं धात्वर्थो भिद्यते यतः ।
> एकामेव क्रियाव्यक्तिं बहुधत्वादयत्स्वपि ॥

एकपदेति । (कै)

इयं व्याख्याभाष्याननुगुणा: पाचक इति कदन्ते तथापि सत्त्वात् । न च तत्र न कृदभिहितो भावः पचतीत्यत्रापि न तिङभिहितो भाव इति तुल्यम् ॥

उपलक्षणभावेनेति । (कै)

विशेषणत्वेनेत्यर्थः । अत्रापि पक्षे भाष्यस्य इमं चिन्त्य एव । पाकादिशब्दोपक्रमेणैव भाष्यस्य प्रवृत्तेः । भाष्ये सार्वधातुकपदं तिङ्परत्वकम् ॥ नानापचोत्थितौ बीजमाह

दृष्टेति । (कै)

शास्त्रीयार्थवत्ता यदावयवानामायोद्धारिकौ । अन्वयव्यतिरेका-श्रयेऽस्यान्वयः ॥

आवापः । (कै)

प्रक्षेपः । अपनय उद्धारस्तत्कृता । अत एव भाष्यकारः शास्त्रमेव पत्वद्वयसाधकत्वेनोपन्यसिष्यति ॥

सार्वधातुक इति । (भा)

इदं च तिङ् परम् । अत एवाग्रे गच्छतेत्युदाहरणं संगच्छते ॥

क्वचित्तिङामभावेपि प्रतीयन्ते त्रयोप्यमी । अग्राम्यकाशि गच्छेति चिरा-शयसन्निधिमात्रतः ॥ अधोगविभक्त्यादौ धातुमात्रेपि कर्तृधीः । तथाप्यासत इत्यादौ धात्वभावेपि कर्तृधीः ॥ तथापि तत्र परमते लसत्वतं बोधकम् । अस्माकन्तु यः शिष्यते स लुप्यमानार्थाभिधायी-

दृष्टमेते पचन्तीति कर्मभेदोपि तादृशः

पश्यैकस्यां क्रियायन्तौ पचन्ते तण्डुला इति ।

**एकद्वीति।** (कै)

द्व्येकयोरित्यादिसूत्रेष्वित्यर्थः॥ नन्वतदर्थत्वादित्यस्य तदर्थत्वाभावादित्यर्थो न युक्तः। एकत्वाद्यर्थत्वस्य सत्त्वाद् इत्यत आह

**सामर्थ्यादिति॥** (कै)

**न तत्प्रवेति।** (कै)

न तान्यवार्थो यस्येति विग्रह इत्यर्थः॥ तत्पदार्थमाह

**एकत्वादीनीति** (कै)

तन्मात्रार्थत्वाभावादित्यर्थ इति तात्पर्यम्॥ ननु विकरणानां तदर्थत्वे कुदभिहित इत्युपपन्नमत आह

**क्वचिद्देवेति।** (कै)

एवं च सर्वत्र विकरणाभावात् कृतान्तेषु प्रक्रियाक्लप्तमानत्यकीति भावः॥ विकरणार्थपक्षे शङ्कते भाष्ये

**किमुच्यते। कृतेत्यादि॥** (भा)

अन्यतर आह

यत्नाभ्युपगमात सर्वं सुस्थम्। तत्र कर्तृकर्मणी वदन् तिङ् तन्निष्ठां सङ्ख्यामपि प्रतिपादयतीति कर्तृकर्मणोर्द्वित्वे बहुत्वे च द्विवचनबहुवचने भवतः भावे लस्तु असत्त्वावस्थापन्नां धात्वर्थभूतां क्रियामेव अभिधत्ते द्योतयति वेति तत्र प्रथमपुरुषैकवचनमेव भवति न मध्यमोत्तमौ।

न कालभेदे प्रत्ययसामान्यामिष्यतव्यास्यते
पाकौ पाका इति तत्र प्रत्ययादिकर्मता॥

न शक्यमिति । (भा)

तत्र तत्र दूषणं कृतेत्ययुक्तम् ॥ अभिहिते इत्येव युक्तमित्याह

पक्षान्तरमिति ॥ (कै)

यदि चेति । (भा)

यदि लेनाभिधानं स्यात् । नेदं पक्षान्तरं स्यादित्यर्थः ॥

कथमिति । (भा)

पक्षान्तरत्वासम्भवेऽपि लेनाभिधानम् । अपि तु कथमशक्य- मित्यर्थः ॥ तदाश्रयस्य शक्यत्वमुपपादयति

यदा भवानेवेति ॥ (भा)

तद्व्याचष्टे

ततोऽस् तु इति । (कै)

अत एव लिङादिषु कर्त्राद्यर्थानवगतिरिति बोध्यम् ॥ इतरः शब्दत्वमुपपादयति

एवं वक्ष्यामीत्यादि ॥ (कै)

नालः कर्मण इति न्यासे गौरवं सूत्रभेदश्चेत्र स्यादत आह

युष्मदस्मत्सामानाधिकरण्याभावात् । नापि द्विवचनबहुवचने । द्वित्व- बहुत्वयोरप्रतीतेः । एकवचनन्तु उत्सर्गः करिष्यतइति भाष्यानुवर्ति । अत्र बहुवचनं नेत्यप्युत्सर्गः । उष्ट्रासिका आस्यन्ते । हतशा यिकाः शय्यन्ते इत्यत्र भाष्ये तदभ्युपगमात् । उष्ट्राणां हि आसिकाः स्वरूपत

अतश्च ।

निष्पन्नभेदा सर्वैव क्रिया ऽऽख्यातेभिधीयते ।

अतेरशक्या भेदानां प्रविभागप्रकल्पना ।

**यास्यामीति ॥ (कै)**

उक्तेऽर्थे भाष्यं योजयति

**तच्च कर्मेति ॥ (कै)**

**कृते लकारे इति । (कै)**

वर्त्तमाने लडित्यादिभिः परत्वादिति भावः। यथा न्यासेऽपि वर्त्तमाने लडित्यादिभिः सिद्धलकारानुवादेन कर्त्राद्यर्थसंबन्धेन साधुत्वविधायकमेवेदं लस्य साधुत्वं चादेशाद्वा एव बोध्यम् ॥ ननु लुकि तदभावात्को ऽभिदध्यादत आह

**लोपद्वारेणेति ॥ (कै)**

कर्मभीति पाठः। कर्त्राद्यभीति पाठे आदिशब्दार्थश्चिन्त्यः ॥

**लादेशस्येति । (कै)**

लस्य क्वापि प्रयोगाभावादेवमुक्तम् ॥

**विधानेति । (कै)**

लिङ् लिटोर्विधानसामर्थ्यादित्यर्थः ॥ भाष्ये

एव विलक्षणाः कृताश्च नानाप्रकारं शेरते उत्ताना अवतानाः विकीर्णकेशाः विमुक्तवस्त्राः इत्यादि। तत्राख्यातवाच्यस्यापि भावस्य स्वरूपगतभेदाभावाद्बहुवचनं भवत्येव। द्रव्यशब्दप्रयोगमन्तरेणापि द्रव्यार्थावगतिर्भवति परश्च परशब्दः प्रयुक्त इति न्यायात्। तदयमर्थः।

तदेवमाख्यातेन भावस्वरूपगतो भेदः प्रतीयत इति द्विवचनबहुवचनाभावः, यत्र तु स्वरूपगत एव भेदस्तत्र भवत्येव यथा उष्ट्रासिका आस्यन्ते

**तस्मान्नैवमिति ।** (भा)

अतः कर्मण इत्येतदित्यर्थः ॥

**तस्मान्नैतदिति ।** (कै)

पाठान्तरं तत् किं तत्राह

**शक्यतेति ।** (कै)

यदुक्तं न तेनाप्यभिधानं भवतीति तदुक्तं शक्यमित्यर्थः ॥

**भवति चेदिति ।** (भा)

तेनाभिधानं भवति चेद्विकरणार्थत्वपक्षेऽभिहिते विकरणानामनापत्तौ तच्छास्त्रवैयर्थ्यं स्यादित्यर्थः ॥ तदाह भाष्ये

**ततश्चेति ।** (भा)

"एवं तर्ही"त्यादिनोक्तं विकरणार्थत्वं दूषयति

**इदमस्येति ।** (भा)

इदं प्रकृतीत्यादिः । अस्य । आचार्यस्य ॥

यादृशानि कृतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्तइति । एवञ्चेह आसिका शायिका इति द्वितीयाबहुवचनान्तं क्रियाविशेषणत्वेन कर्मत्वात् । न चैवं क्लीबत्वमेकवचनं च स्यादिति वाच्यम् । स्त्रियां क्तिन्नित्याधिकारात् स्त्रीत्वावधारणेन सामान्ये नपुं-

कृतशायिकाः शय्यन्तेइति, उष्ट्राणां आसिकाः स्वत एव विलक्षणा कृताश्च नानाप्रकारं शेरते उत्ताना अवनताः विकीर्णकेशा विस्रस्तवस्त्रा इति सत्ता-म्यादस्थात्वावस्थापि भावस्य स्वरूपगतभेदाभावात् बहुवचनम्. इवश-

## स्वाभाविकम् । (भा)

लोकव्युत्पत्तिसिद्धम् ॥

## वाचनिकम् । (भा)

व्याकरणान्तर इव प्रत्ययार्थम् ॥

## सहेति । (भा)

प्रतीयमानार्थं सह ब्रूतः । एकोपस्थितिविषयौ कुरुतः । लोके तथैव व्युत्पत्तेरिति भावः ॥

## नानार्थयोः । (भा)

भिन्नार्थयोः ॥

## साहायीभावः । (भा)

साहायत्वम् । अयं भावः । पचतीत्यादौ प्रत्ययार्थः प्रधानमित्युत्सर्गरीत्या द्वयोरपि प्रत्ययार्थः प्राधान्ये एकत्र विशेषणतयान्वितप्रकृतेरपरत्वतया सम्बन्धो व्युत्पत्तिविरुद्धः । तदर्थानालिङ्गितप्रत्ययार्थभानमप्युक्तव्युत्पत्तिविरुद्धमित्ययं पक्षो ऽसङ्गत इति भावः । विशिष्टार्थप्रतिपादने साहायकीभावादिति प्रकृतेरिति शेषः ॥

सकर्मकमित्यस्य प्रवृत्ते बहुत्वावधारणेन च एकवचनाप्रवृत्तेश्चेति दिक् । केचित् कर्मण्ययं लकार इति मत्वाना आसिकाशायिकाशब्दौ प्रथमान्ताविति आहुः । तथाहि । आसिकाशायिकयोर्भावतया कालभावाध्वगन्तव्या इति कर्मत्वे गोदोहः सुप्यत इतिवत् कर्मणि लः ।

अन्यप्रयोगमन्तरेणापि चैवार्थावगतिर्भवति, तदयमर्थः, यादृशानि भूतानामनेकप्रकाराणि शयनानि तादृशानि देवदत्तादिभिः क्रियन्त इति केचित्तत्र कर्मणि लकारमिच्छन्ति उष्ट्रासिकाहतशायिकाशब्दयोरस्य भावस्य

**परस्परेति ।** (कै)

प्रकृतिप्रत्यययोरित्यर्थः

**पचतीति ।** (कै)

आख्याते कारकविशिष्टक्रियाप्राधान्यादिदं चिन्त्यम् । भाष्यन्तु पचन् पच्यमान इत्याद्यभिप्रायकत्वम् । कैयटे पचतीत्याद्यपि पचमित्यादेरुपलक्षणं वा "महायोभाव" इत्यन्यचोक्तिस्तु उभयत्र तस्यामहायत्वादुपपन्नः। केचित्तु । क्रियाविशिष्ट इत्यस्य क्रियासहित इत्यर्थः। कर्तृविशेषणिका कर्मविशेषणिका चेति यावत् । एकेन चोभयविशेषणिका क्रिया न प्रतिपादयितुं शक्येति भाष्यार्थमाहुस्तच्चिन्त्यम् ॥

**नत्वेकेनेति ।** (कै)

धातुनेत्यर्थः। अत्र केचित् सुपामिव तिङामपि कर्त्रादिद्योतकत्वमेव भाष्यमत्रापि सुयोजमेवेत्याहुः। निरूपितं चैतद्विस्तरेण मंजूषायामाख्यातवादे ॥ भाष्य

उष्ट्रासिकाहतशायिकयोश्च आख्यातप्रकृत्युपस्थिते आसनशयने प्रति परिच्छेदकत्वेनान्वयः। गोदोहस्येव स्वापे, परिच्छेदकत्वं च आसिकाशायिकयोः सादृश्यद्वारकं गोदोहस्य तु कालोपाधित्वेनेत्यन्यदेतत् । एतच्च विवक्षान्तरे भवत्येवेति कैयटादयः भाष्यकारैस्तु भावेपि

कालभावाध्वगन्तव्या इति कर्मत्वात्, यथा गोदोहः सुप्यत इति । 'ककारो गुणवृद्धिप्रतिषेधार्थ इति । मन्यत इत्यत्र वृद्धिप्रतिषेधः। 'यग्विधान इति'। ननु च कर्मवत्कर्मणा तुल्यक्रिय इत्यतिदेशा देवयक् सिद्धः किमुपसङ्ख्यानेन

*प्रसिद्धो नियमस्तत्रेति । (भा)

तत्र अर्थविषये । यतः सुपां तिङां च अर्थद्वयं दृश्यते ततः प्रत्ययनियमासंभवादिति भावः ॥

नियम इत्यर्थ इति । (कै)

प्रत्ययनियम इत्यर्थः ॥ न तु कर्मकर्तृवद्भावादेव यक् सिद्धोऽत आह

कर्मवदिति ॥ (कै)

स्वाश्रयस्य कार्यस्येति । (कै)

पटुत्वेन बलवत इत्यर्थः । अतिदेशस्यात्मनेपदादिविधानेन चरितार्थ इति भावः ॥

बलीयस्त्वमिति । (भा)

कर्मवदिति (३।१।८७) सूत्रस्य परत्वादिति शेषः । वस्तुतः कार्यातिदेशेऽप्यादिश्यमानकार्याणामुत्पत्तिदेश एवोद्देश इति प्रत्ययलक्षणसूत्रोक्तरीत्याभाष्यमसङ्गमेव ॥ भाष्ये

* सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥

लविधाने बहुलं स्यादुक्तमित्युक्तम् । न चैवमाख्यातवाच्यस्य भावस्य असत्वावस्थापन्नतेति सिद्धान्तो भज्येतेति वाच्यम् । लिङ्गयोगस्य कारका-दिकारकयोगस्य चेह असत्वावस्थात्वेन विवक्षितत्वात् । अत एव पचति भवति, पच्यते भवति, पश्य मृगो धावतीत्यादौ वाक्यार्थभूतायाः

तत्राह 'विप्रतिषेधाद्धीति' । यदा कर्मवत्कर्मणेत्ययं शास्त्रातिदेशस्तदा तत्तत्शास्त्रेण कर्मकार्याणि भवन्ति तत्र कर्मणि यगभवतीत्यस्यात्-

**एवमप्युपसंख्यानं कर्त्तव्यमिति ।** (भा)

कर्मकर्त्तर्युपसंख्यानमित्यर्थः ॥

**परत्वात् श्यनिति ।** (भा)

श्यन्यकोः स्वरे विशेषः ॥

**सर्वाप्राप्तिरिति ॥** (कै)

बाध्यसामान्यचिन्तयेति भावः ॥ भाष्ये

**अप्रतिषिद्धेति ।** (भा)

अबाधितेत्यर्थः ॥

**नोत्सहते प्रतिषिद्धेति ।** (भा)

अनन्तरस्येति न्यायेन तद्विषयाद्वीनाक्रान्तामतीनां बाधितुं नोत्सहत इत्यर्थः ॥ तद्व्युत्पादयति

**याप्येति ।** (कै)

परविप्रतिषेधे इत्यर्थः । पूर्वविप्रतिषेधकल्पने न मानमिति भावः ॥ ननु कर्तर्यपि यक् प्राप्तः कथं सिद्धमत आह

क्रियायाः क्रियान्तरं प्रति कर्तृत्वकर्मत्वाभ्यामन्वयेपि न काचित् क्षतिः । न चैतावता घञादिसाम्यं, घञादिवाच्यो हि भावः सलिङ्गः यथायथं सकलकारकान्वितस्चेति वैषम्यस्य स्पष्टत्वात् । अत्र वैषम्ये अनुभवबलकल्प्यः शब्दशक्तिस्वभाव एव नियामकः । तदेतदुक्तम् । कृदभिहितो भावो द्रव्य-

काशः शुद्धं कर्म पच्यते ओदन इति, कर्त्तरि प्रविविक्षस्यावकाशः शुद्धकर्त्ता भवति पचतीति, कर्मकर्त्तर्युभयप्रसङ्गे परत्वाच्छ्यन्नेव स्यादित्यर्थः, तत्तस्मादुप-

**सर्वधात्विति ॥** (कै)

**कर्मकर्त्तर्यपीति ।** (भा)

पच्यते स्वयमेवेत्यादौ शबादीन् बाधित्वेति भावः ॥ भाष्ये

**पूर्वविप्रतिषेधं मावोचमिति ।** (भा)

अनेन पूर्वविप्रतिषेधोऽपूर्ववचनमात्र इति सूचयति भाष्ये

**कर्मवद्भाववचनसामर्थ्यादिति ।** (भा)

तत्सामर्थ्यादनन्तरस्येति न्यायो नाश्रीयते किं तु बाध्यसामान्य-चिन्तैवेति भावः ॥

---

वक्ष्यमाणत इति । कृतेऽपि तु सुनादौ न सत्याशंकात्वम् । एतच्च अव्यय-कृतो भाव इति वार्त्तिके स्फुटं भविष्यति अनव्ययकृतेऽपि । प्रथितत्वं भवद्भिरित्यादौ एकत्वसंख्याया एवान्वयः न तु द्वित्वादेरित्यादि यथानुभवं यथाकरणं विवेक्तव्यम् ॥

सङ्ख्यानं कर्त्तव्यं न कर्त्तव्यं 'न दुहस्नुनमां यक्चिणौ' इति यक्प्रतिषेधो ज्ञापयति भवति कर्मकर्त्तरि यगिति, कार्यातिदेशे तु तस्मिंस्तेनैव सूत्रेण भवत्येव परो भवति ॥

# यसो ऽनुपसर्गात् । ३ । १ । ७१ ॥

इदं विकल्पेन श्यन् विधायकम् ।

संपूर्वाद्वेव यस इति । (भा)

सोपसर्गविषयो नियम इति भावः । एतेनैवं नियमे केवलान्न-

स्यादित्यपास्तम् ॥ तदाह

नान्यपूर्वादिति ॥ (भा)

---

यसोनुपसर्गात् ॥ अनुपसर्गाद्यसेः श्यन् वा स्यात् यस्यति । यसति । अनुपसर्गात्किम् । आयस्यति । प्रयस्यति । इह नित्यं श्यन् । य सुप्रयत्न इत्यस्य दैवादिकत्वात् ॥

---

"यसोनुपसर्गात्" ॥ 'दैवादिक इति' । दिवादिपाठोस्य सोपसर्गार्थः । 'अनुपसर्गादिति किमिति' । सम्यसश्चेत्येतत्सम एवोपसर्गान्नान्यस्मादिति नियमार्थं भविष्यतीति भावः । 'आयस्यति प्रयस्यतीति' । तुल्यजातीयानां हलन्तानामेव व्यावृत्तिः स्यादिति मन्यते ॥

# रुधादिभ्यः श्नम् । ३ । १ । ७८ ॥

भाष्ये

आर्धधातुकस्याङ्गस्येति । (भा)

अङ्गसंज्ञानिमित्तस्यार्धधातुकस्येत्यर्थः ॥ पृषोःकादित्वात्तयोः श्नम दर्शभो ऽत आह

रुधादिभ्यः श्नम् ॥ एभ्यः श्नम् प्रत्ययः स्यात् मित्त्वादन्त्यादचः परः । तत्र कौण्डिन्यन्यायेनायं शपं बाधते । शकारः श्नसोरल्लोप इति विशेषणार्थः । नाल्लोप इत्युच्यमाने यजानां यतानामित्यत्रापि स्यात् । न च नामीति दीर्घत्वे कृते नादिति व्यपदेशाभावान्न भविष्यतीति वाच्यम् । एकदेशविकृतस्यानन्यत्वेन सत्यपि दीर्घे नादिति व्यपदेशसम्भवात् । किञ्च परत्वाल्लोपेनैव भाव्यम् । न च ततोऽपि परत्वात्सुपि चेति दीर्घोऽस्त्विति वाच्यम् । सन्निपातपरिभाषया तस्य नाप्रवृत्तेः । न चैवं रामाणामित्यादौ नामीति दीर्घोऽपि न स्यादेवेति वाच्यम् । आरम्भसामर्थ्यान्नामीति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेः । सुपि चेति दीर्घस्तु रामाभ्या-

"रुधादिभ्यः श्नम्" ॥ 'श्नम्प्रत्ययो भवतीति' यद्यपि प्रत्ययसंज्ञायां प्रकृत्युपपदोपाधिविकारागमान्वर्जयित्वेत्युक्तं तथापि विधीयमानत्वेन प्राधान्यात् शबादिवदर्थवत्त्वाच्छ्नमः प्रत्ययसंज्ञा भवतीति भावः, तेन शकारस्य प्रत्ययादित्वादित्संज्ञा । शपोपवाद इति इति' । देशभेदादिनोभयोः सत्यपि सम्भवे नाप्राप्ते तस्मिन्नारभ्यमाणत्वादेकार्थत्वाच्चापवादत्वं विकरणा हि सार्वधातुकस्य धातोः स्वार्थाभिधाने सहायतां प्रतिपद्यन्ते ।

व्यत्ययेनेति ॥ (कै)

इति क्र्यादिरिति । (कै)

क्रैयादिक इति वा पाठः ॥ ननु श्नसल्लोपे उपधात्वं सुलभमत आह

असिद्धत्वादिति ॥ (कै)

भाष्ये

मित्यादौ चरितार्थः सन्निपातपरिभाषां बाधितुं नेष्टे । यत्तु हरदत्तेनोक्तं कण्डायेति निर्देशात्सामान्यापेक्षज्ञापकाद्दीर्घो भविष्यति । एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वात्तच्छब्द एकारमिति नलोपः स्यादेवेति । तच्चिन्त्यम् । सामान्यापेक्षेण हि ज्ञापकेन परिभाषायाः क्वचित्की अप्रवृत्तिरिति लक्ष्यानुरोधात्सिध्यतु नाम, औत्सर्गिकी तत्प्रवृत्तिः किमर्थमिह त्याज्या । यत्नानामित्यादिलक्ष्य सिद्ध्यर्थमेवेति चेन्न सत्यपि दीर्घे लक्ष्यं न सिध्यतीति समनन्तरमेवोक्तत्वात् स्वयमपि लक्ष्यासिद्धेर्वक्ष्यमाणत्वाच्च । किञ्च पूर्वस्माद्विधाविति अतिस्थवीयः । तस्य हि पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थः स्थितः । यच्चेह नादिष्टादचः पूर्वं नकारव्यञ्जनमात्रं न तन्निमित्तत्वेनाश्रितम्,

'प्रकारः श्नान्नलोप इति विशेषणार्थ इति' । अथार्द्धधातुकसंज्ञा माभूदित्येवमर्थः कस्मान्न भवति, सत्यां हि तस्यामनक्ति भनक्ति 'अतो लोपः' स्यात रुणद्धि भिनत्ति गुणः स्यात्, छिनत्ति तृणेढि इडागमः स्यात्, 'नेड्वशि कृती'त्येतदपि नास्ति अकृत्त्वात्, सर्वमेतत् श्नमः पूर्वभागस्यानङ्गत्वान्न भविष्यति, कथमङ्गत्वं, यस्मात्प्रत्ययविधिरिति, कोऽर्थः प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रातिपदिकादिति तदादि तस्मिन्प्रत्यये परतोऽङ्गमिति यच्चात्र पञ्चम्या निर्दिष्टं रुधादिभ्यो धातुभ्य इति न

**पिच्चवक्तव्यमिति ।** (भा)

एवं च तेनानुदात्तत्वं सिद्धमित्यर्थः ॥

**अनित्यत्वाश्रयणेनेति ।** (कै)

ननु तत्सूत्रविषये तत्परिभाषायाः कष्टायेत्यादिनिर्देशैरनित्यत्वावश्यकत्वेन नामविषयेऽपि तत्त्वमाश्रित्य श्नः प्रत्याख्येय इति

यच्च निमित्तं नकाराकारसङ्घातः नामावनादिष्टादचः पूर्वं इति यत्किञ्चिदेतत् । तस्मात्प्रागुक्तविधया एकदेशविकृतस्यानन्यत्वात्प्राप्तिः । दीर्घात्प्रागेव वेति विशेषणार्थः शकारः । न चैवमपि विश्नानां प्रश्नानामित्यत्रातिप्रसङ्गः । अनर्थकत्वात् । न च विकरणेष्वेवमेवेति वाच्यम् । एकदेशिमते तस्य वाचकत्वात् । मुख्यमतेऽपि द्योतनार्थेनार्थवत्त्वात् । अत एव प्रत्ययसंज्ञाया अन्वर्थत्वेऽपि श्नमि तत्प्रवृत्तौ लघूक्तिः प्रत्ययसंज्ञा सिध्यति । किञ्च लक्षणप्रतिपदोक्तपरिभाषयापि विश्नानामित्यादौ नातिप्रसङ्गः । तस्मात् श्नान्नलोप इति विशेषणार्थः श्नमः शकार इति स्थितम् । न चार्धधातुकसंज्ञानिवृत्त्यर्थोऽपि सोऽस्तु सत्या हि तस्या भनक्ति भनक्ति, अतो लोपः

तस्मात्प्रत्ययः, यस्माच्च प्रत्ययः पूर्वभागास्तु न तस्मिन्विधीयमाने पञ्चम्या निर्दिष्टस्तस्माच्छादिति विशेषणार्थ एव शकारः, श्नान्नलोप इत्युच्यमाने यज्ञयाचयतविच्छप्रच्छरक्षो नङ्' यज्ञानां यत्नानामत्रापि प्राप्नोति, नामीति दीर्घत्वे कृते नादितिव्यपदेशाभावान्न भविष्यति, परत्वाल्लोप एव प्राप्नोति, यत्तु 'अतो दीर्घो यञि' 'सुपि चे'ति दीर्घत्वं न च तदत्र प्रवर्तते किं कारणं सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति, इहापि तर्हि न स्याद्विच्छायेति, 'कष्टाय क्रमणे' इतिनिर्देशाद्भविष्यति, इहापि तर्हि यत्नानामिति तस्मादेव निर्देशात्सामान्यापेक्षया ज्ञापनाद्दीर्घो भविष्यति,

चेन्न तन्नलोपविधायकेऽङ्गावयवश्नमः परस्य नस्य लोप इत्यर्थे अनैमित्तिकतयान्तरङ्गत्वेन सुपि चेत्यस्य परनिमित्तकतया बहिरङ्गत्वेन तस्यासिद्धतया नलोपप्राप्तिरित्याशयात् । भाष्ये परत्वादित्यन्तरङ्गत्वस्याप्युपलक्षणं किं च सुपि चेत्यतो नाप्नोति नित्यं विशेषाभावेऽपि शास्त्रप्राप्तेः सत्त्वात् ध्वनितश्चेदम् "आयादय" इति सूत्रे "इको झलि"त्यत्र च भाष्ये इति वदन्ति ॥

---

स्यात् । रुणद्धि भिनत्ति, गुणः स्यात् । छिनत्ति टगादि, इडागमः स्यात् । नेश्नीति तु नेह प्रवर्तते अकृत्त्वादिति चेन्न । सत्यप्यार्द्धधातुकत्वे कृत्त्वाभावात् न च लोपो गुण इड् वेति त्रितयं स्यादित्युक्तमिति चेन्न । त्रितयस्याप्यागमत्वात् श्नमः पूर्वभागस्य चानङ्गत्वात् तथाहि । यस्मात्प्रत्ययविधिरित्यस्यायमर्थः । प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं धातोः प्रतिपादिकादित्यादि तदादि तस्मिन्प्रत्ययेऽङ्गमिति । इह तु यत्पञ्चम्या निर्दिष्टं रुधादिभ्यो धातुभ्य इति न तस्मात् प्रत्ययः परः यस्माच्च पूर्वभागात्प्रत्ययः परः नासौ तस्मिन्विधीयमाने पञ्चम्या निर्दिष्ट इति दिक् । रुणद्धि । भिनत्ति ।

एवमपि तस्य पूर्वस्माद्विधौ स्थानिवत्त्वान्न प्रत्यय एवायमिति नलोपः स्यादेव तस्माद्विशेषणार्थः शकारः कर्त्तव्यः । अथ क्रियमाणेऽपि शकारे इह कस्मान्न भवति विश्नाना प्रश्नानामिति लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य ग्रहणम् ।

# तनादिकृञ्भ्य उः । ३ । १ । ७९ ॥

भाष्ये

**अनेन माभूदिति ।** (भा)

अन्यथा तस्यासिद्धत्वादनेनैव स्यादिति भावः ॥ ननु

**येन नेति ।** (कै)

न च ह्रस्वादङ्गादित्यस्यासिद्धत्वात्कथं तेन येन नाप्राप्ति-न्यायः । तनादि पाठस्तु विकरणार्थः स्यात् । विकल्पोऽपि तनादौ चरितार्थ इति वाच्यम् । असिद्धत्वेऽपि यदीदं न स्यात्तदा स्यादेव

तनादिकृञ्भ्य उः ॥ तनादिभ्यः कृञश्च उप्रत्ययः स्यात् । तनोति । करोति कृञ्ग्रहणं भाष्ये प्रत्याख्यातम् । तनादित्वादेव सिद्धेः । ननु तनादिकार्यापेक्षनियमार्थं तदस्तु । तेन तनादिभ्यस्तथासोरिति वैकल्पि-कस्य सिच् लुको ऽप्रवृत्तौ अकृत अकृथा इत्यत्र द्वैरूप्यं न भवतीति चेत् । मैवम् । सत्यपि लुग्विकल्पे तदभावे ह्रस्वादङ्गादिति लोपेनेष्टसिद्धेः । न च विकल्पेन नियमस्य बाधः । विकल्पं प्रति नियमस्यासिद्धत्वात् न च तनादि-

"तनादिकृञ्भ्य उः" ॥ 'तनोतीत्यादिः' । तनु विस्तारे, षणु दाने, क्षणु हिंसायाम् । 'अन्यत्तनादि कार्यमिति' । तनादिकार्यापेक्षो नियम इत्यर्थः । व्यावर्त्यं दर्शयति । 'तनादिभ्यस्तथासो' रिति विभाषा सिचो लुङ् न भवतीति' नस्वस्तु लुग्विकल्पः, तदभावे 'ह्रस्वादङ्गा-दि' ति लोपो भविष्यति, न च विकल्पेन बाधः विकल्पं प्रति नियमस्या-सिद्धत्वात्, न च तनादिपाठसामर्थ्यादपवादो वचनप्रामाण्यादिति

ष्टस्मादङ्गादित्यस्य प्राप्तिरित्याशयात्। यदुत्सर्गप्रवृत्तौ विकल्प-वैयर्थ्यं स उत्सर्गापवादाभावपक्षेऽपि न प्रवर्त्तते तेभ्यस्तु प्रवर्त्तते चेत्युत्तराशयः। भाष्ये

*सोऽपि प्रोक्त इति। (भा)

सकृ विषयद्भावस्येत्यर्थः। एवं च सूत्रे कृञ् ग्रहणं प्रत्याख्यातम्। एतेन कृञ्ग्रहणकृणकार्यानित्यत्वज्ञापनार्थं तेन न विश्वसेदित्यादि सिद्धिरित्यपास्तम्। न विश्वसेदित्याद्यसाध्वेव॥

---

* तनादित्वात्कृञः सिद्धं सिज्लोपे च न दुष्यति।
षिद्वद्भावेऽत्र दोषः स्यात् सोऽपि प्रोक्तो विभाषया॥

---

पाठ सामर्थ्यादपवादो वचनप्रामाण्यादिति न्यायेनासिद्धत्वबाधनादिकल्पेन नित्यस्य बाधः। तनादि पाठस्य विकरणविधौ चरितार्थत्वात्। विकल्पोप्य-तथा इत्यादौ चरितार्थः। प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञः पाठस्य अन्यार्थत्वात्। येन नाप्राप्तिन्यायेन विकल्पो नित्यविधिं बाधेत। कृञ्ग्रहणात्तु विकरणविधौ तनादिषु पाठश्चरितार्थो मा भूदित्येवमर्थं स्यात्। तस्मात्कृञ्ग्रहणपरित्याग एवोचितः॥

---

न्यायेनासिद्धत्वबाधादिकल्पेन नित्यस्य बाधः, तनादिपाठस्य विकरण-विधौ चरितार्थत्वात्, विकल्पोप्यतत, अतथा इत्यादौ चरितार्थः प्रत्युत क्रियमाणे कृञ्ग्रहणे तनादिषु कृञःपाठस्यानन्यार्थत्वाद्येन नाप्राप्तिन्या-येन विकल्पो नित्यविधिं बाधेत,इदं हि कृञ्ग्रहणविधौ तनादिषु पाठ-श्चरितार्थो मा विद्यामीत्येवमर्थमेव स्यादिति कृञ्ग्रहणप्रत्याख्यानमेव न्याय्यं मन्यामहे॥

# धिन्विकृण्व्योर च । ३ । १ । ८० ॥

भाष्ये

**ननु च लोपेऽपि सति न धात्विति ।** (भा)

समुच्चयविषये एकसमभिव्याहृतस्यापरसमभिव्याहृतार्थाधीनेह-प्रतीतेरनुभवसिद्धतया "द्विर्वचनेऽचौ"तिवत्तद्भावभाविताभावेषा-र्धधातुकनिमित्तो लोपस्तद्भावभाविता च समकालोत्पत्तावपि अन्वयव्यतिरेकगम्यसन्नियोगशिष्टानां सहप्रवृत्तेर्निवृत्तश्चेति भावः ॥

**सन्नियोगेति ।** (कै)

ननु तादृशविषये परनिमित्तत्वाभावेऽपि केवलनिमित्तत्वाभावे मानाभावः ॥ औरदामोदाहरणत्वमिति वदतो वाक्यकारस्य

---

धिन्विकृण्व्योर च ॥ धिवि प्रीणने । कृवि हिंसाकरणयोः, अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च । शपोपवादः । अतोलोपः । तस्य स्थानिवद्भावाल्लघूपधगुणो न । धिनोति । कृणोति । नुमनुषक्तयोर्ग्रहणं नुम्विधिरपदेशावस्थायामेव प्रवर्त्तत इति ज्ञापनार्थम् । तेन नुम्विधाव-

"धिन्विकृण्व्योर च" 'अतो लोपस्य स्थानिवद्भावाद्गुणो न भवतीति' । तेन प्रक्रियालाघवाय धिन्विकृण्व्योर्लोप एव नोक्त इति भावः, लोपे हि गुणस्यात् । न च न धातुलोपआर्द्धधातुक' इति निषेधः प्रत्ययसन्नियोगशिष्टत्वेन लोपस्याऽऽर्द्धधातुकनिमित्तत्वात् । ननु नुमनुषक्तयोर्ग्रहणं किमर्थं नुमि कृते ऽत्वं यथा स्याद्,धिविकृव्योरित्युच्य-माने ऽत्वे कृते ऽत एव परो नुम् प्रसज्येत, अत्व ह्यन्तरङ्गं प्रत्ययसन्नियो-

तद्भावभावितामात्रेणैव निमित्तत्वनिवेशस्येष्टत्वाच्चेति चेन्न । पूर्वकालवर्त्तिबुध्याविषयीकृतस्यैव निमित्तत्वमित्याशयः ॥ भाष्ये

अपि च प्रत्याख्यायत इति । (भा)

अनेन सूत्रमतापेक्षया प्रत्याख्यानवादिमतं प्रबलमिति ध्वनितम् । एतन् मूलकमेव पठ्यते यथोत्तरं मुनीनां प्रामाण्यमिति ॥

---

पदेशिवद्वचनं प्रत्ययासिद्ध्यर्थमिति वचनं न कर्तव्यं भवति । सिचस्तासेस्त्वेकार उच्चारणार्थ इति पक्षे नुम्विधौ धातुग्रहणमपि न कर्तव्यं भवति । तज्ज्ञाप्यस्यानेनैव ज्ञापनात् ॥

---

गेन विधानात् नुमागमस्तु बहिरङ्ग, उत्पन्ने प्रत्ययेऽङ्गस्य सतो विधानात्, ननु चान्तरङ्गस्य नुम् लावस्थायामेव भविष्यति तिबादीनामन्तरङ्गत्वात्, तिबादिष्वेव तर्हि भविष्यति, न, नित्येनात्वेन बाधनात्, नुमागमस्तु शब्दान्तरप्राप्तेरनित्यः, अन्तरङ्गस्तर्हि नुमागमस्तद्विधौ धातुग्रहणात् तद्धि धातुसंज्ञाप्रवृत्तिकाल एव नुम् यथा स्यादित्येवमर्थम्, अन्यस्योदितोऽसम्भवात्, कथमसम्भवो यदिदाणीमेवोक्तं तासेरिदुच्चारणमनुनासिकलोपप्रतिषेधार्थमिति, नन्वत्रापि पक्षे नुम्विधावुपदेशिवद्वचनं प्रत्ययसिद्ध्यर्थमिति वचनादुपदेश एव नुम् भविष्यति, एवन्तर्ह्यन्तरङ्गत्वादेव प्राप्तस्य नुमोऽयं निर्देशः ॥

# हलः श्नः शानज्झौ । ३ । १ । ८३ ॥

भाष्ये

ज्ञापकार्थ इति । (भा)

ज्ञापकरूपोऽर्थः प्रयोजनमित्यर्थः ॥

ङेः पित्त्वं नेति । (भा)

अपिद् ग्रहणं न कार्यमित्यर्थः ॥ शङ्कते

पितोऽयमिति ॥ (भा)

उत्तरयति

सार्वधातुकादेश इति । (भा)

तनादिषु च ङित्त्वं न प्रतिषेध्यमिति । भाष्ये ङित्त्वप्रतिषेधाय पित्त्वं न कार्यमिति भावः । तनादिष्विति निर्धारणे सप्तमी न च

हलः श्नः शानज्झौ ॥ हलः परस्य श्नाप्रत्ययस्य शानच् स्याद्धौ परे । पुषाण । मुषाण । लोट् । सिप् तस्य हिः । क्र्यादिभ्यः श्ना । तस्य शानच् । चित्त्वादन्तोदात्तः सन्निपातपरिभाषाया अनित्यत्वाद्धेर्लुक् । हलः किम् । क्रीणीहि । हौ किम् । पुष्णाति । श्न इति स्थानिनिर्देश आदेशत्वलाभाय । इतरथा हि प्रत्ययान्तरमेवेदं स्यात् । ननु तथैवास्तु

"हलः श्नः शानज्झौ" ॥ 'पुषाण मुषाणेति'। लोट् सिप् तस्य हिः, क्र्यादिभ्यः श्ना' तस्य शानच, शकारः स्वरार्थः, अत्र सन्निपात-परिभाषया अनित्यत्वाद 'तो हेः' रिति हेर्लुक, ननु च श्नाप्रत्ययस्य प्रकृत-त्वात्तस्यैव शानजादेशो भविष्यति नार्थः श्न इति स्थानिनिर्देशेनात आह 'श्न इति'। 'स्थानीत्यादि' आदेश इत्येव संप्रत्ययोपगमो

स्थानिवत्त्वप्रयुक्तङित्त्ववारणेऽपि स्थानिवद्भावेन सार्वधातुकत्वात्सार्वधातुकमपिद्ङित्त्वप्रतिषेधाय पित्त्वमावश्यकमिति वाच्यम् । एतदाशयेनैव क्रियन्ते न्यास एवेति वक्ष्यत इत्यदोषात् । हेरपित्त्वमनुदात्तसेः स्थाने आन्तरतम्यात् प्राप्तस्यानुदात्तादेर्वारणार्थमावश्यकमिति तातङोऽपि ङित्त्वं स्वादेशार्थमावश्यकमिति च तद्भावः ॥

**अवश्यमनेति । (भा)**

उकार इत्संज्ञकत्वेऽपि सामान्यग्रहणार्थो वा तदनुबन्धकपरिभाषाप्रवृत्त्यर्थो वेति सन्देहः स्यात्तदर्थं ऽनेनेति । न च वक्ष्यमाणेति ङीबापत्तिर्ल्लङादेशत्वेन टित्त्वादिति वाच्यम् । सत्यभिधानेन अजादिपाठाट्टाप् सिद्धेः । एतेनेदं शित्त्वं क्वचित् स्थानिवत्त्वेनानुबन्धकार्याभावस्य ज्ञापकमित्यपास्तम् ॥ भाष्ये "एवमपी"त्यस्य "केन तमस्यादि"त्यनेनान्वयः ॥

को दोष इति चेन्न । पच पठेत्यादावपि शपं बाधित्वा शानचप्रसङ्गात् । न च श्र्वादिभ्य इति अनुवर्त्तत इति वाच्यम् । स्तभान स्तुभानेत्यादिचतुर्णामसिद्ध्यापत्तेः ; न च स्तम्भादयोऽप्यनुवर्तयितुं शक्याः ; विशेषविहितेन शानचा इव श्न इव श्नोरपि बाधे स्तभ्नोत्यादेरसिद्धिप्रसङ्गात् ; न च श्नेत्यप्यनुवर्त्त्यम् ; श्र्वादेरपि श्नुप्रसङ्गात् । न च

यथा स्यादित्येवमर्थः ; असति तु तस्मिन् किं स्यादित्याह प्रत्ययान्तरमिति' ; अस्तु प्रत्ययान्तरं श्र्वादिभ्य इत्यनुवृत्तेस्तेभ्य अत्र हलन्तेभ्यो भविष्यतीति न कश्चिद्दोष इत्यत आह 'सर्वविषयमिति' ; अश्र्वादिविदिविषयमपीत्यर्थः, श्र्वाद्यनुवृत्तिर्दुर्ज्ञानेति मन्यते, शानचः शित्करण

पिति ङित्त्वृत्तमिति । (भा)

अचेदित्यादौ लङ्स्तिपःपित्त्वादनुदात्तत्वमस्तु स्थानिवद्भावेन ङित्त्वाद्गुणनिषेधश्च प्राप्नोतीत्यर्थः । आदेशविधौ विशिष्टस्याननुवादात् ङित्त्वाद्यतिदेशोऽनल्विधाविति निषेधाप्रवृत्तेः ॥ "ङिति पिद्वृत्तमि"त्यस्योदाहरणमाह

ब्रूतादिति । (कै)

अत्रानुदात्तत्वं "ब्रुव ईडि"तीडागमश्चापाद्यौ ॥

---

स्तम्भ्वादिभ्य एव श्नुः श्नानच् न तेभ्यः क्र्यादिभ्यश्चेत्यत्र प्रमाणमस्ति । तस्माद्यथान्यासमेवास्तु । श्नानचः शित्करणे प्रयोजनं चिन्त्यम् । स्थानिवद्भावेनैव सिद्धेरिति हरदत्तः । अत्रेयं चिन्ता । अनुबन्धकार्येति क्वचिदनल्विधाविति निषेधः प्रवर्त्तत इति ज्ञापनार्थमिदम् । तत्र वार्त्तिकमते ब्रूतादित्यत्र ईडागम, भाष्यमते तु भविषीष्टेत्यत्र ङित्त्वं नित्यं न भवति । एतच्च कृत्येतिचेति सूत्रे स्फुटीकृतमस्माभिः ॥

शित्त्वप्रयोजनं, स्थानिवद्भावेनैव सिद्धेः । इह श्निमिदा स्नेहने दिवादिः, व्यत्ययेन छन्दसि श्ना. तस्य श्नानजादेशः, मिदान, मिदेर्गुण इति प्रतिषेधविषये विधीयमानो गुणो न भवति पुनः शित्करणेन 'सार्वधातुकमपिद्' इत्यस्यापि पुनः प्रवृत्तेरिति केचित्, नेति वयं, यथैव व्यत्ययेन श्ना भवति एवं गुणविषये इकारो भविष्यति ॥

# छन्दसि शायजपि । ३ । १ । ८४ ॥

आडागम इति । (कै)

लुङ् लङ् लृङ्क्ष्विति ॥

---

छन्दसि शायजपि ॥ अपिशब्दाच्छानच् हौ अहौ च । गृभाय जिह्वया मधु । बधान देवसवितः । तद्गृग्रहोर्भश्छन्दसीति गृह्णातेर्हकारस्य भकारः । अनिदितामिति बध्नातेर्नलोपः । योऽस्कभायदुत्तरम् । अस्कभ्नादित्यर्थः ॥

---

"छन्दसि शायजपि" । 'गृभायेति' । ग्रहिज्यादिसूत्रेण संप्रसारणं, 'हृग्रहोर्भश्छन्दसी' ति हकारस्य भकारः । 'बधानेति' । बन्ध बन्धने, अनिदितामिति नलोपः ॥

# व्यत्ययो बहुलम् । ३ । १ । ८५ ॥

भाष्ये

व्यत्ययो बहुलम् ॥ विकरणाः प्रक्रान्ताः तेषां छन्दसि बहुलं व्यत्ययः स्यात् । व्यतिगमनं व्यत्ययः । व्यतिपूर्वादिणो भावे एरच् । क्वचिदन्योन्यविषयावगाहनम् । क्वचित् द्वौ विकरणौ । क्वचित् त्रयः । आण्डा शुष्णस्य भेदति । शुष्णस्याण्डानि भेदति । भिनत्तीति प्राप्ते । न ह्यस्या अपरञ्च न जरसामरते पतिः । म्रियतइति प्राप्ते । जीव वा मर वा माधो व्याध मा जीव मा मर इत्यपि प्रमादो छान्दस-दर्शना त्समाधेयम् । इन्द्रो वस्तेन नेषतु । नयतेर्लोटि तिपि शप्सिपौ द्वौ विकरणौ । इन्द्रेण युजा तरुषेम वृत्रम् । तरेमेत्यर्थः । तरतेर्विध्यादौ लिङ् मस् उः सिप् शप् इति त्रयो विकरणाः । धातोर्गुणः । तरुष् मस् इति स्थिते नित्यङ्डित इति सलोपः । यासुट् अतोयेयः

"व्यत्ययो बहुलम्" ॥ 'यथायथमिति' ; स्वस्मिन्स्वस्मिन्विषयइत्यर्थः । 'व्यतिगमनं व्यत्ययइति' । व्यतिपूर्वादिणो भावे 'एरच्' । अन्योन्यविषया-वगाहनमित्यर्थः । क्वचिदित्यादिना व्यत्ययस्य प्रकारान्दर्शयति ; 'न मरतीति' । परस्मैपदमप्यत्र व्यत्ययेन 'नेषत्विति' नयतेर्लोटि शप्सिपौ । 'तरुषेमेति' तरतेर्विध्यादौ लिङ्, तथा च तरेमेति प्राप्तइति वृत्तिः, इतरथा तीर्याम्मेति प्राप्तइति वक्तव्यं स्यात्, ततश्शप् सिप् उप्रत्यय इति त्रयो विकरणाः, धातोर्गुणः । तरुषमस्, ततो यासुट 'लिङः सलोपोनन्त्यस्य' 'नित्यङ्डितः' 'अतो येयः' यलोपः, 'आद्गुणः' तरुषेम ; बहुलग्रहणमनर्थकं पूर्वसूत्रादपिशब्दस्यानु-वृत्तौ छन्दसि व्यत्ययोपि भविष्यति अपिशब्दाद्यथाप्राप्तञ्चेति सर्वमिष्टं

स्यादीनामिति। (भा)

स्यतामि प्रभृतीनामित्यर्थः॥

यलोपः। आदगुणः। बहुलग्रहणं सर्वविधिव्यभिचारार्थम्। तथा च भाष्यम्। सुप्तिङुपग्रहलिङ्गनराणां कालहलचस्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन॥ सुपां व्यत्ययः, युक्तामातासीद्धुरि दक्षिणायाः। दक्षिणस्यामितिप्राप्ते। तिङां, चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। लादेशव्यंग्यः क्रियासाधनविशेषरूपः स्वार्थपरार्थत्वादिरूपोपग्रहशब्दस्य वाच्यः। यथोक्तम्। य आत्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते। अन्यतश्चापि लादेशान् मन्यन्ते तमुपग्रहमिति॥ आत्मनेपदादिति लादेशादिति च हेतौ पञ्चमी। इह तु तत्प्रतीतिनिमित्ते परस्मैपदे आत्मनेपदे च उपग्रहशब्दो लक्षणया वर्तते। ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते। प्रतीपमन्यऊर्मिर्युध्यति। युध्यतइति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। भाषायान्तु यद्यप्यर्द्धर्चादित्वादुभयलिङ्गो मधुशब्दोऽस्ति तथापि अर्थविशेषएव तथा। मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात्

सिद्धति अत आह। 'बहुलग्रहणमिति'। सर्वस्य प्रकृतस्याप्रकृतस्य च विधेर्व्यभिचारो व्यत्ययलक्षणो यथा स्यादित्येवमर्थमित्यर्थः। एवमर्थे बहुलग्रहणे सति यदिदं सिध्यति तच्छ्लोकेन दर्शयति। 'सुप्तिङुपग्रहेत्यादि'। तत्र सुपां व्यत्ययः धुरि दक्षिणायाः। दक्षिणस्यामिति प्राप्ते। तिङाम्। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। लादेशव्यङ्ग्यः क्रियासाधनविशेषः स्वार्थपरार्थत्वव्यक्तत्वाव्यक्तादिको यस्मि मुख्य उपग्रहः, यथोक्तम्॥

य आत्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते।
अन्यतश्चापि लादेशान्मन्यन्ते तमुपग्रहम्॥

*मधुन इति प्राप्ते इति। (भा)

अमृतचौरान्यतरवाचिनि स्त्रीनपुंसकमिथाय इन्द उपपन्नता।

* सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन॥

पुन्नपुंसकयोर्मधुरिति शाश्वतकोशात्॥ अमृते तु नपुंसक एव। अत एव व्यत्ययोदाहरणं दत्तम्। माघस्तु, मरसमकरन्दनिर्भरासु प्रसवविभूतिषु वीरुधां विरक्तः। इत्येवममृतपनामवाच्ययासामधरमधुं मधुपस्तवाभिधीते इत्यत्रामृतवाचकमधुशब्दं पुल्लिङ्गं प्रयुक्तवानित्यन्यः। शाश्वतकोशात्। नरः पुरुषः। आधासवीरेदंशभिर्वियपाः। वियपादिति प्राप्ते। य मिश्रने विपूर्वः, आशिषि लिङ्। कालवाची प्रत्ययः कालः। श्वोऽग्नीनाधास्यमानेन। लुटो विषये लट्। हल्। चिकृभौजः सुपितमुग्रवीरम्। शुभ शुम्भ शोभार्थे, सकारस्य पकारः आश्वलायनसूत्रे। तैत्तिरीये भकार एव पठ्यतइति हरदत्तः। वस्तुतस्तु आश्वलायनसूत्रेपि भकार एव पठ्यते। एकव्यत्ययायोदाहरणन्तु सुपितमिति प्राप्तइति भाष्या-

---

इति, आत्मनेपदाद्धेतोरित्यर्थः। एवमन्यत्रापि लादेशादिति, इह तु तद्धिकिनिमित्तत्वात्परस्मैपदात्मनेपदयोरुपग्रहशब्दो वर्तते। स ब्रह्म-चारिणमिच्छते। इच्छतीति प्राप्ते। ऊर्मिर्यथ्यति, युध्यतइति प्राप्ते। लिङ्, मधोस्तृप्ता इवासते, मधुनइति प्राप्ते। भाषायामपि मधुशब्दं पुल्लिङ्गं प्रयुञ्जते मधूंश्च बिभ्रति रम्यसुरविटपिन इति। तच्चिन्त्यम्। नरः पुरुषः। अधासवीरेदंशभिर्वियपाः, वियपादिति प्राप्ते, य मिश्रणे विपूर्वः, आशिषि लिङ्। कालवाची प्रत्ययः कालः, श्वोऽग्नीनाधास्यमानेन, लुटो विषये लट्। हल्, चिकृभौजः सुपितमुग्रवीरं, शुभशोभार्थेभकारस्य पकारः आश्वलायनसूत्रेतैत्तिरीये च भकार एव पठ्यते अच्। उपगा-यन्ति मापत्नयो गर्भिणयः, दीर्घस्य ह्रस्वः। स्वरव्यत्ययः पञ्चादिष्वन्तेषि

देशशब्दव्यङ्गम् उपस्थार्थत्वादि। इह तत्प्रतीतिनिमित्ते परस्मैपदात्मनेपदे उपग्रहशब्देन लक्षणयोच्येते॥

---

गुरोर्धेन स्वरम्। आच। उपगायन्तु मा पत्नयागर्भिन्यः। दीर्घस्य ह्रस्वः। स्वरव्यत्ययः परादिश्छन्दसिबहुलमित्यत्र वक्ष्यते। कर्तृशब्दः कारकमात्रस्योपलक्षणं तद्वाचिनीनां विभक्तीनां व्यत्यय इति हरदत्तः। एवन्तु सुप्तिङ् इत्येव गतार्थता स्यात्, तस्मात्कारकवाचिनां कृत्तद्धितादीनामपि व्यत्यय उदाहार्यः। तथा च कर्मण्यणसूत्रे भाष्यम्। आत्रादायेति च कृतांव्यत्ययश्छन्दसीति। तच्च तत्रैव स्फुटीकरिष्यामः। यङीति प्रत्याहारः यको यशब्दादारभ्य लिङयाशिष्यङिति ङकारेण तेषां व्यत्ययः प्रागेवोदाहृतः। एवं सुप्तिङ्प्रभृतीनां व्यत्ययं शास्त्रकृत्पाणिनिरिच्छति। स च बाहुलकेन सिध्यति। बहूनर्थान् लात्यादत्त इति बहुलं तस्य भावो बाहुलकम्। मनोज्ञादित्वाद्वुञ्॥

बहुलमित्यत्र वक्ष्यते। कर्तृशब्दः कारकमात्रस्योपलक्षणार्थः, तद्वाचिनां शब्दानां व्यत्यय इत्यर्थः। विभक्तीनां व्यत्यय इति यावत्, यङां, यङिति प्रत्याहारः यङो यशब्दादारभ्यलिङ्याशिष्यङितिङकारेण, तेषां व्यत्यय आद्धा शुश्रस्य भेदतीत्यादिना वृत्तावेव दर्शितः। एषां सुप्प्रभृतीनां व्यत्ययमिच्छति शास्त्रकृत्पाणिनिराचार्यः सोपि तथाविधो व्यत्ययो बाहुलकेन सिद्ध्यति, बहुलस्य भावो बाहुलकं मनोज्ञादित्वाद्वुञ्, तत्पुनर्बहुलशब्दस्य प्रवृत्तिनिमित्तं यद्बह्वर्थादानमशब्दो हतो यस्मादेवमुक्तप्रकारो व्यत्ययो बहुलग्रहणेनैव सिद्ध्यति तस्माद्बहुलग्रहणं कृतमित्यर्थः॥

# लिङ्याशिष्यङ् । ३ । १ । ८६ ॥

गास्थोरङभावे "अतो येय (७।२।८०) इति न स्यात् ।

**अङि गुण इति ।** (कै)

"ऋदृशोऽङि" (७।४।१६) त्यनेनेति भावः ॥ भाष्ये

**आङपीति ।** (भा)

सत्येति शेषः ॥

**आकारलोप इति ।** (कै)

अङमाश्रित्यातो लोप इति चेत्याल्लोपः ॥ भाष्ये

लिङ्याशिष्यङ् ॥ छन्दसि धातोरङ् प्रत्ययः स्यात् आशिषि लिङि परे । स्थागागमिवचिविदिशकिरुहिभ्य एवायमङ् प्रायेण दृश्यते । उपस्थेयं वृषभन्तुग्रियाणाम् । उपपूर्वात्तिष्ठतेराशिषि लिङ् मिपोम् । यासुट् । छन्दस्युभयथेति सार्वधातुकसंज्ञाया अपि सत्वात् लिङःसलोपोऽनन्त्यस्येति सलोपः । अङि आतो लोपः । अतो येयः । सत्यमुपगेयम् । गमेम जानतो गृहान् । मन्त्रं वोचेमाग्नये । वचउम् । विदेयमेनां मनसि प्रविष्टाम् । व्रतं चरिष्यामि तच्छकेयम् आमावन्तीमारुहेमास्वस्तये । दृशेरग्वक्तव्यः ॥

"लिङ्याशिष्यङ्" ॥ 'अपवाद इति' लिङाशिषीत्यार्धधातुकत्वात्च्लेरभावादत्र च्लेः प्राप्तिरित्यत आह 'छन्दस्युभयथेति' । शपग्रहणं चोपलक्षणं श्नादेरपवादः स्यादित्येवायमङ् प्रायेण दृश्यत इत्याह । 'स्थागागमीत्यादि' । 'उपस्थेयमिति' उपपूर्वात्तिष्ठतेराशिषि लिङि मिपोऽमावः

आर्धधातुकत्वादेत्वमिति। (भा)

"वान्यस्य संयोगादेरि" (६।४।६८) त्यनेन अङ्भावोऽपि छान्दसत्वादिति बोध्यम्॥

उभयसिद्धत्वादिति। (भा)

"छन्दस्युभयथे"(३। ४। ११७)त्यनेनोभयसंज्ञकत्वादित्यर्थः॥

इति नागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

इति वङ्गदेशीयकाश्यपगोत्रोत्पन्न-चट्टोपाध्यायवंशसमुद्भव-वङ्गवल्लभ-शर्मविरचिते महाभाष्यप्रदीपोद्योतविषमपदव्याख्याने तृतीयाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्॥

---

पितरञ्च दृशेयं मातरञ्च। अङि तु सति ऋदृशोऽङीति गुणः स्यात्। अथ कथं उपस्थेयाम शरणं इहन्तेति स्थेमेति हि प्राप्नोति। अत्र भाष्यं, सार्वधातुकत्वाल्लिङः सलोप आर्द्धधातुकत्वादेत्वमिति, एर्लिङीतिसूत्रेणेति भावः। अङ् चात्र न कार्यः। बाहुलकात्॥

यासुटस्सार्वधातुकत्वा 'लिङस्स लोपोऽनन्त्यस्य' अपि 'आतो लोप इटि च' 'अतो येयः' 'आद्गुणः' एवमुपस्थेयमिति। 'गमेमेति'। मस्। 'वोचेमेति'। अङ्, 'वच उम्,' यासुट्, इत्यादेशः, वलि लोपः। 'दृशेयमत्र इति'। अङि हि सति ऋदृशोऽङीति गुणस्स्यात्॥

महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
ऽलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

# कर्मवत् कर्मणा तुल्यक्रियः । ३ । १ । ८७ ॥

तेन तुल्यमिति (५।१।११५) वतिः । उपमेये प्रथमादर्शनात् । कर्मणेति पारिभाषिकस्य कर्मणो ग्रहणं कृत्रिमत्वात् सामर्थ्याच्च । तुल्यक्रिय इत्येतावतैव क्रियया तुल्यत्वस्य लाभात् न ह्यक्रियया क्रिया तुल्या भवति ॥ ननु वत्यर्थलाभे स्वाश्रयमपि भविष्यतीत्यत आह

कर्मवत्कर्मणा तुल्यक्रियः ॥ कर्मशब्देन स्वनिष्ठा क्रिया लक्ष्यते । कर्मस्थया क्रियया तुल्यक्रियो लकारवाच्यः कर्ता कर्मवत् स्यात् । अन्ययो

---

कर्मवत् कर्मणा तुल्यक्रियः" ॥ कर्मणा तुल्यं वर्तत इति कर्मवत् तेन तुल्यमित्यादिना वतिः न तु तत्र तस्येवेति, तुल्यक्रिय इति प्रतियोगिनि

**असतीति। (कै)**

तदभावे तल्लाभ एव न भवतीति भावः॥

**संज्ञेति। (कै)**

अधिशीङिति (१।४।४६) वदिति भावः॥

**अकर्मकव्यपदेशाभावादिति। (कै)**

एतच्छास्त्रीयकर्मसंज्ञकाश्रयित्वमेव अकर्मकत्वमिति भावः॥
ननु भावे ले कर्त्तरि वा ले को विशेषोऽत आह

**लादेशेनेति॥ (कै)**

**तृतीया भवतीति। (कै)**

कर्त्तरि लादेशे तु सा दुर्लभेति भावः॥

**न चासत्यपीति। (कै)**

लान्तवाच्यः कर्त्ता कर्मेत्यर्थमत्वा शङ्का। ततश्च यावत्कर्त्तरि लस्तावत्कर्मसंज्ञाऽभावादकर्मकत्वेन भावे लेऽपि सिध्यतीत्यर्थः॥
लान्तस्य कार्ये कर्त्तव्ये कर्त्ता कर्मेत्यर्थमत्वोत्तरयति

---

वक्ष्यति लिङ्याशिष्यङिति द्विलकारको निर्देशः। लुप्तनिर्दिष्टो वा लकारः लोपस्तु संयोगान्तस्येति हलोयमामिति वा। तत्र लग्रहणमिहानुवृत्तं पश्चा विपरिणाम्यते। लुप्तषष्ठीकं वा षष्ठ्यर्थश्च वाच्यत्वम् कर्त्तरि

प्रथमानिर्देशात्, अन्यथा तुल्यक्रिये तुल्यक्रियस्येति वा निर्देश्यं स्यात्, तथा हि वाक्ये तावद्यतो वतिर्भवति यश्च प्रतियोगी उभाभ्यामपि ताभ्यां षष्ठीसप्तम्यौ भवतः, विप्रस्येवास्य शीलं मथुरायामिव पाटलिपुत्रे प्राकार

यस्मादिति । (कै)

तस्मिंश्च भावेऽपि कर्तव्ये कर्तुः कर्मत्वं स्यात् ततश्चाकर्मकत्वव्द्भावे लो न स्यादिति भावः ॥

लः कर्मणीति । (कै)

विधेयस्त्रिसूत्रीत्या साधुत्वान्वाख्यापकत्वान्न तत्कार्यत्वं बोध्यम् ॥ वस्तुतो लवाच्यस्यैव कर्तुः कर्मवत्त्वेन नेदं वतेः प्रयोजनं नमते दण्ड इत्यादौ यक् सिद्धिस्तु मुख्यं प्रयोजनं वक्ष्यति

धातुवाच्येति । (कै)

प्रत्यासत्त्या धातुवाच्यक्रियापेक्षयैव तुल्यक्रियत्वस्य ग्रहणमिति भावः ॥ प्रत्यासत्तिमाश्रित्य शङ्कते

नन्विति ॥ (कै)

कारकान्तराश्रयत्वमिति । (कै)

कारकान्तरस्याश्रयत्वेनाश्रयणमित्यर्थः ॥ व्याप्तिन्यायाश्रयेणोत्तरयति

नैष दोष इति ॥ (कै)

स्वव्यापारमिति । (कै)

स्वव्यापारावेशं विना क्रियासाधकत्वायोगादिति भावः ॥

---

अविनिसूत्रात्कर्तृग्रहणमनुवर्त्त [illegible] परि [illegible] ते ; तत्राभिमतार्थ-लाभः । यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम् । भिद्यते काष्ठं

इति, उभयोरपि सम्बन्धित्वाद् [illegible] ततश्चोत्पन्नेऽपि वतौ प्रतियोगिनस्ते एव षष्ठीसप्तम्यावनुवर्त्तेते, तुल्यार्थयोगे तु या तृतीया सोपमानादेव भवति नोपमेयात्तुल्यशब्दस्योपमेयनिष्ठत्वात्तद्यथा चन्द्रेण तुल्यं

**तत्रावश्यमिति ।** (कै)

एकावस्थायां भेदनिबन्धन तुल्यत्वासम्भवादिति ॥ भाष्ये

**करणाद्यवस्था अपीति ।** (भा)

व्याप्तिन्यायादिति भावः ॥

**प्रधानव्यापारः ।** (कै)

धात्वर्थव्यापारः ॥

**कर्तृत्वमिति ।** (कै)

आश्रयतामात्रमित्यर्थः । तन्निरूपितकरणत्वाभावप्रतिपादनपरं चैतत् । प्रधानक्रियापेक्षोऽस्य: करणादिव्यपदेशो येन वस्तुना तत्र व्यवस्थिता या क्रिया तत्तुल्यत्वग्रहणं निवारणायेत्यर्थः ॥ यदि तु लक्ष्यानुरोधात्प्रत्यासत्त्या धातुवाच्यक्रिययैव तुल्यक्रियत्वं विवक्ष्यते प्रत्यासत्तिस्तु यस्य धातोर्यत्कार्यं तत्रत्यक्रियया तस्यैव धातोः कर्त्ता यदि तुल्यक्रिय इति वक्ष्यमाणार्थलाभार्थमावश्यकी तदा नेदं प्रयोजनमतो यत्र कर्मणि क्रियाकृतविशेषस्तदर्थमिति प्रयोजनान्तरं वक्ष्यति ॥ ननु कर्मकर्त्रोः साधनयोरत्यन्तभेदात् कथं तुल्यत्वमत आह

---

स्वयमेव । कारिष्यते कटः स्वयमेव आत्मनेपदस्य चौग्ध्यपि इमान्यु दाहरणानि । यत्र्चिणाचिणवद्भावानां तु कर्मणोति विवेकः । सिद्ध-

---

मुखमिति ततश्चोत्पन्नेपि ततात्पमेयात्मयमैवावतिष्ठते, कर्मणोति पारिभाषिककर्म गृह्यते न लौकिकं क्रिया कर्म तस्य हि ग्रहणे क्रियया तुल्या क्रिया

तुल्यक्रियत्वाच्चेति ॥ (कै)

अतिप्रसङ्ग इति प्रश्न इति । (कै)

इति व्युत्पादयितुं प्रश्न इत्यर्थः ॥

साधारणेति । (कै)

यथा एतौ तुल्यधनावित्यत्रेत्यर्थः ॥

कर्तृकर्मसाध्यत्वाच्चेति । (कै)

अन्यत्वेनोभयोः साधारणी क्रियेत्यर्थः ॥ समानशब्दे सदृश-वाचकत्वस्यापि सत्त्वादाह

साधारणेति ॥ (कै)

एतच्चेति । (कै)

किंतर्हीत्यादि चेत्यर्थः । सादृश्यात् च न तुल्यशब्दस्य प्रसिद्ध-तरत्वाच्चेत्यपि बोध्यम् ॥

इत्येवेति । (कै)

सहार्थयुक्ततृतीयया एकक्रियाजनकत्वरूपसाहित्यलाभेन तद्-कार्यलाभादिति भावः ॥ च्विप्रत्यये कर्तृशब्दे रीङ् स्यादत आह

सम्प्रेषणं कर्म स्वक्रियावयवे स्थितम् निवर्तमाने कर्मत्वे स्वे कर्तृत्वेव-तिष्ठते ॥ अस्यामवस्थायामकर्मकत्वात् कर्तरि भावे च लकाराः । तत्र यदा कर्तरि तदा शुद्धे कर्तरीव रूपं प्राप्तम् पूर्वावस्थाया भिदेः कर्मीभूते काष्ठे यादृशी क्रिया द्विधा भवनरूपा करोतेः कर्मणि च कटे उत्पत्तिरूपा ।

यस्येति किमुक्तं स्यात् क्रियाया यया कथा चन क्रियया तुल्यत्वाद् अन-साधनकर्मणोपदृश्यन्तत्र साध्यसाधनयोरनन्तभेदाम्मुख्येन कर्मणा क्रिया-

चेरिति ॥ (कै)

ननु चेरभावे अकर्त्तरि कर्त्तरिभूते इत्येवोचितं प्रकृतिभाव- प्रतीतयेत अत आह

अथवेति । (कै)

भाष्ये यथा कर्मणीति पूर्वान्वयि ॥ ननु विक्लित्तिद्विधाभवन- रूपायाः क्रियाया एकत्वात्कथं भेदनिबन्धनसादृश्योपपत्तिरत आह

कर्त्तृकर्मेति । (कै)

तत्तत्संज्ञालाभरूपावस्थाभेदादाश्रयस्य भेदावसाये तन्मूलकः क्रियाया भेदावसाय इति सादृश्योपपत्तिरिति भावः ॥ लक्षणायां हेतुमाह

साध्येति । (कै)

साध्या क्रिया ॥

साधनम् । (कै)

कारकम् ॥

---

तया तुल्यक्रियोयं भिदिक्रञोः कर्त्ता लकारवाच्यस्तत्यतिदेशाद्यगादिचतुष्टयप्रवृत्तिः । यथा निवृत्तप्रेषणास्याकर्मकत्वं यथा च क्रियायाः क्वचित्कर्मस्थत्वं क्वचिन्न तथा गोत्पादितीति सूत्रे व्युत्पादितम् । कर्मणेति किम् ।

---

याः सादृश्यासम्भवात्कर्मशब्देन तत्स्था क्रिया लक्ष्यते, भवति हि ताच्छब्द्यात्ताच्छब्द्यं यथा मञ्चाः क्रोशन्तीति तदेतदाह । 'कर्मणि क्रिया कर्मेति' ।

विशेषणस्य वैयर्थ्यं न चेदानीं प्रसज्यते
कर्मणः क्रियया तुल्या न सर्वस्य क्रिया यतः ॥

व्यापारयोरिति । (कै)

व्यापारशब्देन धात्वर्थ उच्यते । तद्धात्वर्थत्वरूप सादृश्यं न विवक्षितं किं तु सामर्थ्याद्व्यापारसादृश्यमेव विवक्षितमिति तात्पर्यम् ॥ भाष्ये

कर्त्ता कर्मवदिति । (भा)

कर्त्तरि शबित्यतो न वृत्तस्य कर्त्तरीत्यस्य प्रथमया विपरिणाम इति भावः ॥

पात्राणामपीति । (कै)

एवं च भिदि कर्मस्य पात्रेषु या क्रिया सा तत्कर्त्तरि कुसूलेऽपीति भाव ॥ समानशब्दः साधारणपर्याय एकस्मिन्नित्यर्थं पर्यवस्यतीत्याह

एकस्मिन् इति ॥ (कै)

ननु युगपत्त्वातव्यापारतत्व्ययोर्विरुद्धत्वात्कथं भाष्ये ऽनयोर्वाक्ययोर्युगपत्प्रयोगोऽत आह

काइनाधिकरणाभ्यां तुल्यक्रिये भा कृत् साध्वसिष्किनत्ति । साधु स्थाली पचति । नन्विह कारणाधिकरणावस्थायामसिस्थाल्योर्व्यापारो वस्तुतः सन्नपि धातुना नोपादीयत इति चेत् । किं ततः नह्यस्मिन् सूत्रे सादृश्यप्रतियोगिभूतायाः क्रियाया धातुपात्त्वशब्देनाश्रितं कर्मग्रहणं विनाप्यति-

कर्मणः क्रियया तुल्यक्रियो न साधनान्तरस्येत्येवं प्रतिपत्त्यर्थत्वादित्याह । 'कर्मस्थया क्रियया तुल्यक्रिय इति' . तुल्यशब्दस्य निमित्तसापेक्षत्वात्कर्मस्थया क्रियमेत्यतदपेक्षस्यापि सूत्रस्थद्वुत्रोक्तिर्नानुपपन्नः, तुल्य

**न चास्येति ॥** (कै)

**प्रतिपादनायेति ।** (भा)

तत्प्रयोग या कर्मस्था सात्र प्रयोगे कर्तृस्थेति प्रदर्शनायेत्यर्थः ॥

**लुनाताविति ॥** (कै)

लुनातिकेदारं देवदत्त इति प्रयोग इत्यर्थः ॥

**लावयते केदार इति ।** (कै)

णिश्रंथीति यक् चिणोः प्रतिषेधः कर्मवद्भावफलत्वात्मने-पदमेव । "णिचश्चे"त्यनेन तु न सिद्धिः । क्रियोद्देश्यफलस्य कर्तृ-गामित्वाभावाद् आङ्करिति ॥ अचाक्चिस्तुष्यन्तस्य धात्वन्तरत्वम् ।

**लावयताविति ।** (कै)

निवृत्तप्रेषणपक्षे इति भावः ॥ अन्यत्र भावक्रिययोरभेदेन व्यवहारादाह

**अपरिस्पन्देनेति ।** (कै)

इदं च प्रकृताभिप्रायेण । भावे घञित्यादौ तु सिद्धावस्थापन्नो धात्वर्थो भाव इति बोध्यम् ॥

---

प्रसङ्गो न भवेत् । किञ्च कर्तृस्थक्रिया अप्यस्यैव व्यावर्त्याः : गच्छति ग्रभा-स्वयमेव । आरोहति हस्ती स्वयमेवेति । अधिगच्छति शास्त्रार्थः स्मरति श्रद्-धातिचेत्यादि । नन्वेवं करोत्यर्थस्य यत्नस्यापि ज्ञानेच्छादिवत्कर्तृस्थत्वात्

---

शब्दोयमस्ति साधारणवचनः, एतौ तुल्यप्रभाविति सादृश्यवचनस्तु प्रसिद्ध-एव तत्राद्यस्य ग्रहणे कर्मणेति यदि मुख्यत्वान्तदा कर्तुः कर्मणस्य या सा-

**यत्र चेति।** (कै)

यथा तु भिदादौ कर्मणि क्रियाकृतविशेषदर्शनात्तत्स्थात् यस्यत्यादौ रागादिदर्शनकर्तृपदहर्षादिलक्षणविशेषदर्शनात्तत्स्थौ चेति भावः। न चैवं पच्यादिकर्तर्यपि श्रमादिरूपविशेषस्य दर्शनादिदमयुक्तम्। किञ्च य इयत्यादीनां कर्तृस्थभावकत्वानापत्तिः। कर्तरि क्रियाकृतविशेषाभावादिति वाच्यम्। येन धातुना कर्तृकर्मसाधारणं फलं शब्देन प्रतिपाद्यते स कर्तृस्थभावकः। यथा पश्यति गच्छतीत्यादौ। तत्र विषयतासमवायाभ्यां ज्ञानमुभयनिष्ठं संयोगश्चोभयनिष्ठः। एव श्रामोऽपि यत्र तु कर्तृवृत्तिधर्मरूपं फलं स कर्मस्थभावकादिः। यथा भिदादिरित्यत्र तात्पर्यात् ॥ भाष्ये

**वक्ष्यत्येतत्सकर्मकाणामिति।** (भा)

अयं भावः कालादिभिन्नकर्मासाववत्तामन्यत्राकर्मकग्रहणेन ग्रहणादर्शनादत्रापि तथात्वायत्तौ मासं पच्यतोदनः स्वयमेवेत्यादौ कर्मवदकर्मकस्येति वचने कर्मवत्त्वं प्राप्नोतीति सकर्मकाणां प्रतिषेध इत्यावश्यकमिति। अन्यथा वचनेन वचनप्रत्याख्याने लाघवं न स्यात् ॥

कारिष्यते कटः स्वयमेवेत्यकर्मकादाकृत्वादिति चेन्न करोतेरत्यादमिति कर्तरि प्रागेव वर्णितत्वात्। लकारवाच्य क्रिम्, भावे लकारोत्पत्तौ मा भूत्। भिद्यते कुसूलेन इह सत्यनिर्देशे कुसूलाद् द्वितीया स्यात्। किञ्च लका-

---

धारणी क्रिया तत्र यः कर्ता कर्मणा सह साधारणक्रियः सकर्मकेषु यः कर्तृत्वं भवति तत्र तुल्यक्रिया इत्यनर्थकं कर्मणत्येव वाच्यं स्यात् कर्मणा सह यः कर्ता प्रतिपाद्यत इत्यर्थः। अथ गौणवृत्तिलब्धायमर्थः क्रियया

समर्थेति । (कै)

एवं च दृष्टान्त एकदेशयुक्तिरिति ध्वनितम् ॥ क्रियया कर्तृरूप-मासम्भवाद् आह

कर्तृस्थामिति ॥ (कै)

भाष्ये

न च कर्तृस्थेति । (भा)

तेषां धातूनां वाच्यायाः फलरूपक्रियायाः कर्ममात्रे प्रवृत्ति-र्नास्तीत्यर्थः ॥

करणादितुल्यक्रियेति । (कै)

व्याप्तिवारणाय प्रत्यासत्त्यैव सिद्धा कर्मणेत्युपादानसामर्थ्यात्कर्म-मात्रनिष्ठफलरूपकर्मस्थक्रियालभ्यत इति भावः ॥ यथाश्रुत-प्रागुक्तकैयटरीत्या व्याख्याने तु ज्ञानादिकर्त्तर्यपि क्रियाकृत-विशेषानुपलम्भेन चिन्तयतीत्याद्युपक्रमेणैतदुक्तमसङ्गतिः । एतेन क्रियायाः क्रियाकृतविशेषाणामित्यर्थ इत्यपास्तम् ॥ तदुक्तं हरिणा

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ (हरिः)

इति मतम् इति शेषः । इदमेवमतं युक्तमुक्तयुक्तेः ॥

कुशूलेन । यत्त्विह वार्तिके कृत्यक्तखलर्थेषु प्रतिषेध इत्युक्तम् । तत्र कृद्ग्रहणमविवक्षितम् । अन्यत्र मह पाठात्त्विह पठितम् भवत्येव हि

शपर्यायस्तुल्यशब्द इति तस्येव ग्रहणमिति दर्शयन्नाह 'यस्मिन्कर्म-णीत्यादि' । अत्र तथा शब्दः प्रयुक्तः । सादृश्यवचनस्तुल्यशब्दो न

**दोषान्तरेति ।** (कै)

तदुद्भावनपूर्वकं मुख्यफलप्रदर्शनायेत्यर्थः ॥

**प्रतिषेधेऽपीति ।** (कै)

न दुहेति णिश्रीति च ॥

**शपाविति ।** (कै)

नमति विषयकमिदम् ॥

**कर्त्तैवेति ।** (कै)

"शेषादि"ति सूत्रे "कर्त्तरि कर्मव्यतिहार" इत्यतः कर्त्तरीति पदानुवृत्त्याऽयमर्थो लब्ध इति भावः ॥

**योगविभागेनेति ।** (कै)

इदं च यग्विधायके निरूपितम् ॥

**कार्यातिदेशो वायमिति ।** (कै)

एवं च परत्वादात्मनेपदविधिः शप् वाधश्च सिद्ध इत्यर्थः ॥

नन्वेवं स्वाश्रयनिवृत्तिरेव पर्यवसन्नेत्यत आह

---

एभ्यो ऽकर्मकत्वाद् गत्यर्थाकर्मकेति सूत्रेण कर्त्तरि क्तः । तथा च सिनोतेर्ग्रासकर्मकर्तृकस्येति निष्ठानत्वे सिनो ग्रामः स्वयमेवेति कर्तरि क्त उदाहरिष्यते । अन्ये त्वाहुः क्तग्रहणं विवक्षितमेव । गवा दुग्धं पय

साधारणवचन इत्याचष्टे 'कर्तृभूतइति' कर्त्तरि सम्पन्न इत्यर्थः । इवेर्विकल्पितत्वादत्राभावः, अथ वा कर्तृशब्दः कर्तृत्वे वर्त्तते, भूतइति भू प्राप्तावित्यस्माद्दृषादेति णिजभावे रूपं कर्तृत्वं प्राप्तइत्यर्थः, तत्र पचत्योदनमित्यत्र कर्तृकर्मव्यापारयोरत्यन्तभेदेन सादृश्याभावात्कर्मवद्भावाभावः, एव-

यक्चेति ॥ (कै)

अतिदेशेन । (कै)

तदाश्रयकार्येण ॥ एवं च नमते दण्डोऽचीकरतेत्यादौ यक्चिणोरभावे चङ् शपौ भवतोऽन्यच्च च न भवत इति भावः ॥

भाष्ये

किमर्थं पुनरिदमुच्यते इति । (भा)

कर्मणः कर्तृत्वासम्भवात् सूत्रं व्यर्थमिति प्रश्नः ॥ तत्सम्भवं प्रदर्शयति

कर्मकर्त्तरीति ॥ (वा)

स्वातन्त्र्यम् । (वा)

प्रधानधात्वर्थाश्रयत्वम् । तच्च कर्मव्यापारमात्रस्य धात्वर्थत्वे सम्भवतीत्याह

पच्यत इति ॥ (कै)

कुशूले क्रियाऽदर्शनाद् आह

विशरणेति ॥ (कै)

भाष्ये

इत्युदाहरणासम्भवात् । अत्र हि गोः कर्मकर्तृत्वात् तत्र कर्मवदतिदेशे सति कः स्यात् तन्मात्र सिद्धान्ते गत्यर्थाकर्मकत्वेनत्प्रवर्तते

मपि भिद्यमानः कुसूलः पात्राणि भिनत्तीत्यत्रापि प्राप्नोति यादृशी हि पात्रेषु क्रियाऽवयवविभागात्मिका तादृश्येव कुसूलेऽपि कर्मणि मन्यत इति

विग्रहवतैवेति। (भा)

स्वशरीरेण चेतनेनैवेत्यर्थः॥

निरभिवर्षे इति। (भा)

अनातपेत्यर्थः॥ ननु सुकरता यदि प्रयोजकव्यापारः तर्हि तस्य देवदत्तः कर्त्तेति नान्य इति भाष्यमनुपपन्नं स्यादत आह

द्विधेति। (कै)

सुकरताविषयक्रिया सुकरताशब्देनोच्यत इत्यर्थः॥ कर्मगतसौकरनिरौचैव देवदत्तादेः कर्तृत्वं नान्यथेत्याह

अन्यथेति। (कै)

एवं च सौकर्यातिशयविवक्षया विद्यमानोऽपि कर्तृव्यापारो न विवक्ष्यते किं तु अनेकार्थत्वाद्धातूनां कर्मनिष्ठव्यापारमात्रपरता तदा कर्मणः कर्तृत्वम्। कर्मणा तुल्यक्रिय इत्यत्रावस्थान्तरीयकर्मणा तुल्यक्रियत्वमित्येवार्थः विवक्षित इति दिक्॥

लान्तस्येति। (वा)

षष्ठीवाच्यवाचकसम्बन्धे निमित्तनिमित्तिभावे चेत्याह

पयोरूपेण कर्मणा सकर्मकत्वात्। न चैवं सकर्मकत्वादेव कर्मवदित्यतिदेशो न भविष्यतीति वाच्यम्। दुहिपच्योर्बहुलं सकर्मकयोरिति प्रतिप्रसवात्।

---

नैष दोषः कर्मस्थया क्रियया तुल्या क्रिया यस्य कर्तुरित्युक्ते कर्तृत्वोपयोगिनी या क्रिया यदावेशादसौ कर्ता भवति सैव क्रिया गम्यते इह तु पात्रेषु दृश्यमानं द्विधाभवनं कुसूले ऽपि दैवगत्या दृष्टमित्येतावन्न पयस्तत्समावेशादसौ

लान्तेति ॥ (कै)

लान्तवाच्य इत्यर्थस्य फलमाह

तेनेति ॥ (कै)

षष्ठी तृतीये इति । (कै)

"कृत्यानां कर्त्तरि वेति" वचनादिति भावः ॥ यद्यपि स्वाश्रया-निवृत्तेर्भावे सिद्धं तव्यत्तव्यादयस्तथापि भेतव्यः कुसूलः स्वयमेवेत्यपि स्यादिति दोषः । भाष्यस्यापि भेतव्यं कुसूलेनेति भावे एव कृत्यो यथा स्यादित्यर्थो बोध्यः ॥ लान्तकार्ये एवेत्यस्य फलमाह

भिद्यते कुसूल इति । (कै)

कर्त्तरि लेऽपि कर्मवद्भावेन द्वितीया स्यादिति भावः ॥ ननु शुक्लविकल्पमेतत्कर्मत्वेनानभिहितत्वेन च तत्रातिदेशेन कर्मत्वेऽपि अभिहितत्वात्कथं द्वितीयेति चेन्न कार्यातिदेशोऽनेनैव द्वितीया विधीयते तत्र चानभिहिताधिकाराभावादित्यभिमानात् । वस्तुतः कर्मवदित्युक्तेः कर्मणि यत्कार्यं येनोपाधिना यथा भवति तथा कर्त्तर्यपीत्यर्थादभिहितत्वेन द्वितीयावारणस्य सुकरत्वाल्लान्तस्य कार्य इति चिन्त्यफलम् ॥

---

न च बहुवचनग्रहणादेव प्रवृत्तिः । तस्य भाष्ये प्रत्याख्यातत्वादिति दिक् । वस्तुतस्तु शक्यमकर्तुम् तथाहि । लकारवाच्यस्य कर्तुः कर्मसंज्ञैवास्तु । न च कर्मसंज्ञया कर्तृसंज्ञाया बाधः । एकसंज्ञाधिका-

---

भिनत्ति स्वयमभिद्यमानोपि कुसूल उपरिपतन् पार्ष्णिं भिनत्त्येव एव-मप्यन्योन्यमाश्लिष्यतः अन्योन्यं स्पृशतः अन्योन्यं गृह्णीतः अत्र प्राप्नोति

**अत्र ।** (कै)

भिन्नं कुसूलेनेत्यत्र । अत्र कर्मवत्त्वाभावेऽप्यकर्मकत्वनिबन्धन-कर्तृत्वमादाय भिन्नः कुसूल इत्यस्य दुर्वारत्वेन तत्प्रवृत्तेर्नि-फलमिति भावः । तद्वक्ष्यति 'तथाच' इत्यादिना ॥

**गवा दुग्धमिति ।** (कै)

अत्र गोः कर्मवत्त्वेऽप्रधाने दुहादीनामिति वचनात् तस्मिन्नेव कर्मणि क्तः स्यात् । तदभावे तु कर्मान्तराभावात् पयस्येव कर्मणि क्ते गवा दुग्धं पय इति भवतीत्यर्थः । वस्तुतस्तु कर्मवद्भावेन कर्मणि क्ते परशुभिन्नः कुसूल इत्यादौ तृतीयान्ते पूर्वपदे कर्मवाचकक्तान्त उत्तरपदे प्रकृतिस्वरमित्यर्थकतृतीया कर्मणीत्यनेन पूर्वपदप्रकृति-स्वरः प्राप्नोति कर्तरि तु नेति फले विशेषस्य स्पष्टतया चिन्त्योऽयं कैयटः ॥ कर्मणि प्रत्यये नैव प्रयोगाणां सिद्धेः सूत्रं व्यर्थमित्या-शङ्कते भाष्ये

**सिद्धन्त्विति ॥** (वा)

**आत्मसंयोग इति ।** (वा)

आत्मवाचकपदसमभिव्याहारे इत्यर्थः ।

रादन्यत्र संज्ञानां समावेशात् । न चैवं सकर्मकत्वाभावे लो न स्यादिति वाच्यम् आनुपूर्व्या सिद्धत्वात् कर्मसंज्ञा हि लकारोत्पत्तिः प्रतीयते ।

अत्र हि यत्क्रियाविशिष्टात्कर्त्ता भवति सैव कर्मण्यपि दृश्यते, सत्यं, दृश्यते न सा कर्मत्वोपयोगिनी तस्मात् तदाविशिष्टात्कर्म भवति स्वयमनाश्लिष्यतोऽपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात् तदेतदुक्तं भवति कर्मणः कर्मत्वो-

## कर्मकर्त्तुरिति । (वा)

कर्मभिन्नस्य कर्त्तुरात्मनः सत्त्वेऽपि कर्म दृश्यत इत्यर्थः । तथा भिद्यते कुसूल इत्यादावपि आत्मनः कर्त्तृत्वात्कर्मण्येव लकारेण सिद्धम् अत एवात्मनेत्यर्थकं स्वयमेवेति कर्म कर्त्तुदाहरणेषु प्रयुज्यत इति तात्पर्यम् ॥ समाधत्ते

## विषम इति ॥ (कै)

तत्र कल्प्यं वैषम्यं दर्शयति

## दृष्टान्त इति ॥ (कै)

## भावे ल इति । (कै)

इदमुपलक्षणं तथ्यादीनाम् । एतेन भिद्यते कुसूलेनात्मेति कर्मण्येवायं प्रयोग इत्यपास्तम् । भेत्तव्यमौषधेंदमित्याद्यसिध्यापत्तेः । न च तत्रापि कर्मणि नियमेन नपुंसकप्रयोगानापत्तेः । कल्प्यमुक्तं वैषम्यं विघटयति भाष्ये

## हन्त्यात्मानम् (भा)

इत्यादिना । एवं चात्र शब्देन प्रतिपादनाभावेऽपि यथा कर्मत्वं तथा प्रकृतेऽपि भविष्यतीति भावः ॥ वैषम्यमुपपादयति

लकारवाच्यस्यैव कर्तुस्तद्विधानात ततः प्राक चाकर्मकत्वा"लः कर्मणि भावे चाकर्मकेभ्य" इति भावे कर्तरि च लविधेः प्रवृत्तत्वात् । तच्चेत्थमपि

पयोगिनी या क्रिया तया तुल्या यस्य कर्तृत्वोपयोगिनी क्रिया स कर्मणा तुल्यक्रियः कर्त्तेति, एवञ्च यस्यैव कर्मणः कर्मावस्थायां या क्रिया कर्त्तव-

**इट्लोपश्चेति ॥** (वा)

तद्व्याचष्टे

**गम्यमानेति ।** (कै)

एवं च रूपमित्यध्याहारसम्भवाद् वाक्यैकदेशन्यायेन बोधसम्भवाद्वा तत्रात्मभेदस्य शब्देन प्रतिपादनमिति वैषम्यमस्त्येवेति भावः ॥ ननु कर्मवद्भावविषयेऽपि स्वयमित्यस्य प्रयोग उदाहरणेषु दृश्यत इति तत्राप्यस्त्येव भेदस्य शब्देन प्रतिपादनमत आह

**यद्यपीति ॥** (कै)

**नत्वेतदिति ।** (कै)

आत्मनेत्यर्थकस्वयं पदघटितं विवक्षितात्मकर्तृकमित्यर्थः ॥ नन्वेकस्यैव वस्तुनः कथं शब्दभेदमात्रेण भिन्नधर्मतेति शङ्कते भाष्ये

**कः पुनरिति ।** (भा)

आत्मानं हन्ति य आत्महक इत्यर्थे औपाधिकभेदेन भेदमारोप्य भिन्नधर्मतेत्युत्तराशयः ॥

---

यणात्मनेपदे न स्याता युद्धयोः कर्मकर्त्रोः सावकाशयोर्यकणोः परत्वात् शप्प्रसङ्गात् । भावकर्मणोरित्यात्मनेपदस्य शेषात्कर्तरीति परस्मैपदस्य च विप्रतिषेधेन परत्वात्परस्मैपदप्रसङ्गाच्चेति चेन्न । मावकर्मणोर्विहितेन यका

---

स्यायामपि यदि सैव क्रिया भवति स कर्ता कर्मवदित्युक्तं भवति इदमप्येवोक्तं' यस्मिन् कर्मणि कर्तृभूतेऽपीति' तस्मिन्नेव कर्मणि कर्त्रवस्थायाम इति सूत्रार्थः, एवञ्च कर्तृकर्मावस्थाभेदादेकस्या अपि क्रियाया

## संयोगस्य कर्मणीति । (कै)

अन्योन्यसंयोगकृतहर्षादिलक्षणस्येत्यर्थः ॥ ननु संयोगस्य तत्कृतहर्षादेश्च कर्त्तर्य्यपि सत्त्वेनोक्तरीत्या कथं कर्मस्थत्वमिति चेन्न । हर्षरूपविशेषस्य धात्वर्थकर्मत्वस्थत्वम् । अकृतत्वेन कर्मस्थत्वमेवेत्याशयात् । यद्यपि उक्तरीत्या नेदमुदाहरणं तथाप्ययमत्र भाष्यार्थः । कर्मपदेन तत्स्थक्रिया लक्षते मञ्चाःक्रोशन्तीति वत् । अन्यतरक्रियां प्रतिकर्मण्यन् परस्मिन् या संयोगानुकूलक्रिया तादृश्येवापरस्मिन् कर्त्तरीति स्यादेव प्रसङ्गः । यद्यपि देवदत्तादयः पचन्तीत्यादाविव

अपवादभूतेन आक्रान्तविषयं परिहृत्य सार्वधातुकेशबिति उत्सर्गस्य प्रवृत्तिसम्भवात् । कर्त्तरिशबिति सूत्रे कर्तृग्रहणमतिरिच्यते । तस्यैतत्फलम् कर्त्तैव यः कर्त्ता तत्र शबादयो यथा स्युः कर्मकर्त्तरि मा भूवन्निति । अन्यस्मिन् हरदत्तपक्षे नदुहेत्यादिना यक्चिणोः प्रतिषेधे शप् न स्यात् । तथा च लिङ्लिटोरिव निर्विकरणप्रयोगा पत्तिरिति चेत् । एवं तर्हि कर्त्तरीति

---

भेदाश्रयं सादृश्यमुपपाद्यम् । अतिदेशो रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्यातिदेशभेदेनानेकविधः, तत्रादितस्त्रयाणामसम्भवो व्यपदेशातिदेशस्तु संज्ञा पक्षान्न भिद्यते तत्र वत्करणमनर्थकमतः शास्त्रातिदेशः कार्यातिदेश इति द्वावेवपक्षौ तत्र शास्त्रातिदेशे भावकर्मणोरित्यादिषु शास्त्रेषु तिदिष्टेषु तेन तेन शास्त्रेण तत्तत्कार्यम्प्रवर्त्तते ततश्च भावकर्मणोरित्यस्यावकाशः शुद्धं कर्म पच्यते ओदनः, शेषात्कर्त्तरि परस्मैपदमित्यस्यावकाशः शुद्धः कर्त्ता पचति पठति, कर्मकर्त्त र्युभयप्रसङ्गे परत्वात्परस्मैपदं प्राप्नोति, नैष दोषः, कर्त्तरि कर्मव्यतिहार इत्यतः कर्तृग्रहणमनुवर्त्तते तेन कर्त्तैव यः कर्त्ता तत्र परस्मैपदं कर्मकर्त्तरि न भविष्यति इह तर्हि कर्मणि यग् भवतीत्यस्यावकाशः शुद्धं कर्म पच्यते ओदनः कर्त्तरि शबित्यस्यावकाशः शुद्ध कर्त्ता

धातुनाभेदस्याप्रतीतिः । तथापि आश्रयभेदकृतं वास्तवं भेदमादाय तुल्यत्वाद्यतिः । कर्मत्वोपयोगिकर्मस्थक्रियया कर्तृत्वोपयोगिक्रिया तुल्या यस्य कर्तुरित्यर्थे तु न मानमिति बोध्यम् ॥ एकयोगे नियमद्वयालाभादाह

योगविभागेनेति ॥ (कै)

भाष्ये

किमिदं तप इति । (भा)

सूत्रे तपः कर्मकस्येत्यत्र तपः पदेन किमुच्यत इति प्रश्नः । धात्वर्थः सन्ताप इत्युत्तरम् ॥

---

योगो विभज्यते । भावकर्मणोरित्यत्रापि भावे कर्मणि चेति । ततः कर्मणीत्यनुवर्त्य कर्मणि कर्तरि यक् भवति शपोपवादः । न दुहेत्यादौ अपवादाभावात्पुनरुत्सर्गस्य स्थितिः । एतच्च व्याख्यानं यद्विधात्रेव भाष्ये स्थितम् । एवन्तावद्यक् सिद्धः । न दुहस्नुनमामिति लिङ्गाच्च । तथा कर्तरि कर्मण्यतः कर्तरीत्यनुवर्त्य कर्त्रैव यः कर्ता तत्र परस्मैपदं न तु कर्मकर्तरी-

---

पचति पठति, कर्मकर्तर्युभयप्रसङ्गे परत्वाच्छप् प्राप्नोति नैष दोषः, कर्तरि शबित्यत्र कर्तृग्रहणम् कर्त्रर्थं सार्वधातुके शबिति सामान्यस्य भावकर्मणो-र्यगपवादो भविष्यति एवं सिद्धे यत्कर्तृग्रहणं क्रियते तस्यैतत्प्रयोजनं कर्त्रैव यः कर्ता तत्र शबादयो यथा स्युः कर्मापदिष्टे माभूवन्निति, सत्य-मतिविहितमायुष्मता वृथा पुनरयमायासः, कार्यातिदेशाश्रयेणैव सिद्धेः तत्र यक्नेनैवात्मनेपदमनेनैव यगिति परत्वाद्यगात्मनेपदे सिद्धतः प्रधानं च कार्यं तदर्थत्वादतिदेशान्तरणाभतः कार्यातिदेश एवायं तदाह । 'कर्माश्रयाणि कार्याणि प्रतिपद्यत इति' । ननु च नेह सूत्रे कर्तृग्रहणमस्ति यदपि प्रकृतं कर्तरि शबिति तदपि समस्यन्तं तुल्यक्रिय इति प्रथमान्तेन

## दुःखार्थत्वादिति। (कै)

तापसं तपस्तपतीत्यतस्तं दुःखयतीत्यर्थावगमात् ॥

## अर्जनार्थत्वादिति। (कै)

तापसस्तपस्तप्यत इत्यतोऽर्जयतीत्यर्थावगमादिति भावः ॥

## शरीरेति। (कै)

शरीरसन्तापलक्षणायाः क्रियाया अवस्थाद्वयेऽपि तुल्यत्वात्। यतः शरीरसन्तापलक्षणमर्जनमेव तापस्य व्यापारो नान्य इत्यन्वयः।

---

ति व्याख्यानादात्मनेपदम्। तस्माद्वत्करणे त्यक्तेपि सर्वमिष्टं सिद्ध्यतीति स्थितम्। क्रियमाणे तु वत्करणे अतिदेशोयमिति स्पष्टमेव। स च षोढा। रूपनिमित्ततादात्म्यव्यपदेशशास्त्रकार्यातिदेशभेदादिति स्थानिवत्सूत्रे व्युत्पादितम्। इह तु आदितस्त्रयाणामसम्भवः। व्यपदेशातिदेशस्तु संज्ञापक्षान्न भिद्यते। तत्र वत्करणं व्यर्थम् अतो द्वावेव शिष्येते। तत्रापि शास्त्रातिदेशे

---

सम्बध्नन्नाहेति तत्राह। 'कर्तरि शबित्यत इति'। 'यगात्मनेपदेत्यादि'। कान्तस्य कर्ता कर्मवदिति वक्ष्यमाणत्वाद्यगादीनामेव सम्भव इति भावः। भिद्यतइत्यादीनि त्रीण्यात्मनेपदस्योदाहरणानि यगादीनां क्रमेण, कथं पुनः काष्ठस्य भिदां प्रति कर्तृत्वं यावता भिद्यतेऽसौ देवदत्तेन यो ह्युद्यमननिपातनादि कुठारस्य करोति स भेदने कर्ता उच्यते सर्वेषामेव कारकाणां प्रातिस्विकोवान्तरव्यापारोस्ति अकिंचित्करस्य कारकत्वानुपपत्तेः, एतच्च कारकप्रकरण एवोपपादितं तत्र च स्वव्यापारे स्वतन्त्रत्वं सर्वत्रैवास्ति कारके कर्तृव्यापारेण तिरस्कृतत्वात् न्यग्भूतं स्वातन्त्र्यमिति कर्तृत्वं न भवति करणादिसंज्ञैव भवतीत्येतावत्सकर्मकास्तु के चिद्धातवः कर्मव्यापारमप्यभिधाय तावत्येवापयवस्यन्तस्तदुपसर्जनं कर्तृव्यापारमाचक्षते तद्यथा भिदि-

अयं भावः। तपति तपसन्ताप इत्यस्य सन्तापविशेषस्तापसं तपती-
त्यर्थः। तपतिरत्रान्तर्भावितण्यर्थः। तापसवृत्तिशरीरसन्तापसामा-
न्यानुकूलव्यापारानुकूलव्यापारः सन्तापविशेषवृत्तिरिति बोधः।
तदनुकूलो व्यापारश्च सन्तापविशेषे स्वरूपावस्थानरूप एव। तापसे
शरीरसन्तापसामान्यानुकूलव्यापारस्य सन्तापविशेषस्वीकार एवार्थ-
त्यागे तापसस्य कर्त्तृत्वम्। तापसस्तपः सन्तप्यत इत्यत्र सन्ताप-
विशेषाभिन्नशरीरसन्तापानुकूलव्यापारस्तापसकर्त्तृक इति बोधः।

---

यगात्मनेपदेसिद्ध्यर्थं पूर्वाक्षयत आस्थेय इति क्लिष्टता। प्रधानं च कार्यं,
तदर्थत्वादतिदेशान्तराणाम्। अतः कार्यातिदेश एवायम्। न चास्मिन्पक्षे
द्वितीयाप्यतिदिश्येत। तथा च भिद्यते कुसूलेनेति भावे लकारे कर्तरि
द्वितीया स्यादिति वाच्यम्। लवाच्यस्यैव कर्तुः कर्मवदतिदेश इत्युक्तत्वात्।
न चैवमपि भिद्यते कुसूल इत्यत्र दोषापत्तिः। अभिहितत्त्वेन द्वितीयाया

---

द्विधाभवनोपसर्जनं द्विधाभावनमाह न खल्वयमुद्यमननिपातनमात्रवचनः
एजकेपि प्रसङ्गात् सोपि हि वस्त्रमुद्यच्छति निपातयति च, अथ न
भिनत्तीत्युच्यते द्विधाभवनाभावात्, एतेन छिनत्तिलुनत्ती व्याख्यातौ,
तथा पचिरपि विक्लित्त्युपसर्जनं विक्लेदनमाह तत्र यदा कर्मणः सौक-
र्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्ष्यते तदा निवृत्तप्रेषणं
कर्म स्वक्रियावयवं स्थितं निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते
धातुरपि तद्व्यापारमात्रे वर्त्तते। कथं पुनरुभयवचनो धातुः कर्मव्यापार-
मात्रवचनो भवति को विरोधः, अनेकार्था धातवः समुदायेषु च
वृत्ताः शब्दा अवयवेष्वपि वर्त्तन्ते तदेवं कर्मव्यापारमात्रवाचिषु कर्तृत्व-
मेव काष्ठादीनाम् न तु कर्मत्वगन्धोप्यस्ति धातवश्चैते प्रयोगेऽस्मिन्नकर्मकाः

कैयटे शरीरसन्तापपदेन स व्यापार एव तदेव चार्जनमिति बोध्यम्। तत्र क्रियाविशेषणत्वात्स्तोकमेधत इत्यादाविव तपसः कर्मत्वमिति ॥ भाष्ये

**तपेरयमौणादिकोऽस्कारो भावसाधन इति। (भा)**

इदमुणादीनां व्युत्पन्नत्वमिति मते उक्तम्। अव्युत्पन्नत्वमिति पाणिनि संमते पक्षे तु तपः शब्दस्य सन्तापोऽर्थ इति बोध्यम्। एतदेव परसंमताव्याख्यानेन दर्शितम् ॥ ननु प्रकृतिप्रत्ययोरप्रकृतत्वात्प्रश्नानुपपत्तिरत आह

---

अप्रवृत्तेः। नन्विह अनभिहिताधिकारो नास्तीति चेत्। सत्यम्। तथापि वत्करणसामर्थ्यात् यथानभिहिते कर्मणि प्रत्ययः तथैवानभिहिते कर्तर्यपि स्यात। तेनाभिधानमस्तीत्युक्तमेव। ननु निवृत्तप्रेषणा लुनातिभिनत्त्यादयो ऽकर्मकाः द्विधा भवतीतिवत्कथं तत्कर्तुः कर्मणा तुल्यक्रियत्वम् इति चेन्न। नह्यस्मिन्प्रयोगे यत्कर्म तेन तुल्यक्रियतां ब्रूमः किं तर्हि

---

यथा विक्लियति द्विधा भवतीति, कथं तर्हि कर्मणा तुल्यक्रियः कर्त्ता, न ब्रूमो ऽस्मिन् प्रयोगे यत्कर्म तेन तुल्यक्रिय इति किं तर्हि प्रयोगान्तरे यत्कर्म तेन तुल्यक्रिय इति, नन्वेवं पचत्योदनं देवदत्तो राध्यत्योदनः स्वयमेव अत्रापि प्राप्नोति अत्र परिहारं वक्ष्यति धात्वधिकारादिति, कर्तृकर्मणोर्ह्यतोऽन्यत्रासम्भवादेव सिद्धेस्तदनुवृत्तिरेकत्वविवक्षार्था यस्मिन्नेव धातौ यत्कर्म तेन तुल्यक्रियस्तस्यैव धातोः कर्त्तेति तेन धातुभेदे न भविष्यति, आहाध्यारोपोयमस्तु कोर्थः क्लत्न एव धात्वर्थः कर्मण्यध्यारोप्यते किमत्र देवदत्तेन ओदन एव पाकं करोतीति एवं हि सौकर्यातिशयः सुतरां प्रतिपादितो भवति

## तापसेनेति ॥ (कै)

## प्रकृत्यर्थस्यैवेति । (कै)

मन्त्रापस्येत्यर्थः । तस्यैव तपः पदार्थत्वादिति भावः ॥

## प्रत्ययार्थत्वम् । (कै)

तिङ् प्रत्ययार्थकर्मरूपत्वम् । यद्यपि क्रियाविशेषणरूपे कर्मणि लकारो न कर्तृसाहचर्येण धात्वर्थं भेदेनान्वयि कर्मण एव तत्र ग्रहणात् तथापि भाष्यप्रामाण्यात्सामान्यविशेषभावेनान्वयिनि क्रियाविशेषणे कर्मणि लकारो भवत्येव । अत एव स्तोकमित्यादेः क्रियाविशेषणस्यैकत्वनपुंसकत्वेऽपि एतात्योषानपुषदित्यादौ पुंस्त्व बहुवचने इति बोध्यम् ॥

---

प्रयोगान्तरे यत्कर्म तेन । नन्वेवं पचत्योदनं देवदत्तः राध्यत्योदनः स्वयमेवेत्यादावतिप्रसङ्ग इति चेत् । अत्र वार्तिकम् । कर्मकर्तृस्थेत्समानधाताविति । न्यायसिद्धं चेदं, धातोरिति ह्यनुवर्तते कर्तृकर्मणी च धातोरन्यत्र न सम्भवत इति सामर्थ्यादेव सिद्धे तदनुवृत्तिरेकत्वविवक्षार्था । यस्मिन्नेव धातौ यत्कर्म तेन तुल्यक्रियस्तस्यैव कर्तेति । तेन धातुभेदे

---

करणाधिकरणवत्, यथा साध्वसिश्छिनत्ति साधु स्थाली पचतीति तत्र येषु तावत्कर्तृत्व एव धात्वर्थः कर्मण्यपि सम्भवति आत्मना बुध्यते आत्मना मुच्यते आत्मना हन्यते आत्मना ताड्यत इति तेषु मुख्ये कर्मणि लकारः केन चिद्रूपेण कर्तृत्वं केन चिद्रूपेण कर्मत्वमिति तथा भिद्यते कुसूल इति यत्रापि चेतनो भेत्ता न दृश्यते तत्र वातातपकालाभिवर्षणानामन्यतमस्य कर्तृत्वमध्यारोपो वा पच्यते ओदनः स्वयमेव लूयते केदारः स्वयमेवेत्यादावध्यारोप एव आत्मैवोदनः पच्यते न तु देवदत्ते-

**ध्यानलक्षणं तप इति ।** (कै)

ध्यानजनकोपवासादिरूपमित्यर्थः ॥

**स एव संताप इति ।** (भा)

भाष्यस्य स एव सन्तापविशेष इत्यर्थः । विशेषेऽपि सामान्यसत्त्वात् स एवेत्यस्य नानुपपत्तिः ॥ भाष्ये एतान्येषामित्यस्य विशेषसमर्पकानि गोपोषमित्यादीनि घञन्तानि बोध्यानि ॥

---

न भवति । स्यादेतत् । एकस्यापि रूपभेदेन कर्तृत्वं कर्मत्वं च दृश्यते । आत्मानमात्मना वेत्तीति यथा । एवं च ओदनः पच्यतइत्यादावपि प्राकृते कर्मण्येव लकारोऽस्तु तत्किं निवृत्तप्रेषणत्वाश्रयणेन, किञ्च कर्मवदित्यतिदेशेन । न चैवं भिद्यते कुसूलेनेति भावे लो न स्यादिति वाच्यम् । इष्टापत्तेः । कर्मण्येव हि सोऽस्तु । अत्राहुः । एवं सति नदुहस्तु-

---

नेति एवं नाम पाकेनुकूलो भवतीत्यर्थः, तदेवं शुद्धे कर्मणि लकारोत्पत्तेः' सिद्धे एतेन, यद्येवं भिद्यते कुसूलेनेति भावे लो न स्यात् सकर्मकत्वात्' अथाप्यत्र भिद्यते कुसूलेनात्मेति कर्मणि व्याख्यायेनैवमपि भेत्तव्यं कुसूलेन भिन्नं कुसूलेन ईषद्भेदं कुसूलेनेति भावे कृत्यक्तखलर्था न स्युः, न च तत्रापि कर्मणीति शक्यमाश्रयितुं नपुंसकलिङ्गदर्शनात्, तथा नमते दण्डः स्वयमेव कारयते कटः स्वयमेव अचीकरत् कटः स्वयमेव यक्चिणोः प्रतिषिद्धयोरपि शपचङौ न स्याताम् अकर्तृत्वात् तस्मात्कर्मव्यापारमात्रवाचिभ्यः कर्तरि भावे च लादय इत्येतदेव साधीयः, तथा च शृतं पाक इत्यत्र पचेः कर्मव्यापारे कर्तृव्यापारे च शृतमिति भवति द्वयोरपि पाकशब्दाभिधेयत्वात् एवं हि या विस्तरा शास्त्रं न करिष्यामीति मतिः सापि व्याख्या भवति सूत्रे

**अत्यन्तमप्राप्ते इति । (कै)**

तुल्यक्रियत्वस्याप्यभावाद् इति भावः ॥ सकर्मकाणां प्रतिषेधोऽपरमस्योक्तत्वेन दुहिसाहचर्येण च सकर्मकत्वप्रयुक्ताप्राप्तावेवैतस्य विध्यर्थतोचितेति ध्वनयन्नाह

**अन्ये त्वाहुरिति ॥ (कै)**

**वृक्षस्य पाकमिति । (कै)**

वृक्षनिष्ठपाकानुकूलव्यापारं विनेत्यर्थः । तदा च कालस्य कर्तृत्वं बोध्यम् ॥ एवं च पचेः फलपाकानुकूलव्यापारं विनेत्यर्थः । तदा च

---

नमानित्यादिना यक्चिणोः प्रतिषेधस्य विषयविभागो न लभ्येत । अपि च नमते दण्डः कारयते अचकिरत कट इत्यादौ यक्चिणौ प्रतिषिद्धयोरपि प्रवृत्तौ न स्याताम् । अकर्तृत्वात् । किं च पचत्योदन इत्यपि प्रयोगः प्रसज्येत । तस्मान्निवृत्तप्रेषणतामाश्रित्यातिदेशसूत्रमारम्भणीयमेवेति । कारणेन तुल्यक्रियः कर्ता बहुलं कर्मवदिति वक्तव्यम् । परिहारयति कारकैर्हि

---

'न दुहस्नुनमां यक्चिणौ'विति प्रतिषेधस्य विषयो न प्रदर्शितः स्यात्, किञ्च यद्यपि पच्यते ओदनः स्वयमेवेत्यादिकः प्रयोगः कर्मणि समर्थ्येत कर्तरि तु लकारोत्पत्तौ पचत्योदन इत्यादिकः प्रयोगोपि प्रसज्येत तस्मादारम्भ्यं सूत्रम् । अत्रोदाहरणेषु कर्मान्तरस्योदासार्थं स्वयमिति प्रयुज्यते न त्वेतदुदाहरणाङ्गं, प्रयुक्तएतस्मिन्नात्मनेत्यस्यार्थे वृत्तेः प्राकृतमेवैतत्कर्म स्यात् स्वाश्रयमपि यथा स्यादिति, असति वत्करणे कर्तुः कर्मसंज्ञा जायेत ततश्चानेन कर्मणा सकर्मकत्वाद्भावे चाकर्मकेभ्य इति भावे लो न स्यात् सति तु तस्मिन्नुत्ततः प्राप्तस्याकर्मकव्यपदेशस्यानिवर्त्तनादकर्मकाणाम्भावे लः सिद्धो भवति, अकर्मकाणाम्भावे यो लो

कालस्य कर्त्तृत्वं बोध्यम्। एवं च पचेः फलपाकानुकूलव्यापारानुकूलव्यापारोऽर्थः। तत्र फलपाकानुकूलव्यापाराश्रयत्वात् कर्तुरीप्सिततममिति वृक्षः कर्म तस्य कर्तृत्वविवक्षायां भाष्योदाहरणमाश्रयाद्यकथितं कर्मत्यत्राकथितपदमविवक्षितपरं कर्मत्वेनाविवक्षितमित्यर्थः॥ किं त्वेन तर्हि विवक्षेत्यत आह

**तस्यैव चेति।** (कै)

न तु तत्सूत्रविषयतास्य दुहादिषु भाष्येऽगणनात्। गौर्दुग्धे इत्यपि कर्तुरीप्सिततममिति कर्मत्वे एवोदाहरणं बोध्यम्॥ विभागानुकूलव्यापारार्थकत्वे एव दुहेस्तदुदाहरणमिति तु न युक्तम्। परिवायन्त कण्टकान्त्वम्। अत्रात्मनेपदं सिद्ध्यति। न च णिचश्चेत्यनेन तत्सिद्धिः। क्रियाफलस्य कर्तृगामित्वे सत्येव तत्प्रवृत्तेः। इह तु तदभावेप्यात्मनेपदस्येष्यमाणत्वात् बहुलग्रहणान्नेह माष्वसिष्मिनपि। सकर्मकाणां प्रतिषेधो वक्तव्यः॥ अन्योन्यमाश्लिष्यतः। अन्योन्यं स्पृशतः। एतच्च न्यायसिद्धम्। तथाहि। कर्मस्थया क्रियया या तुल्या क्रिया यस्य

विधीयते स सिद्धो भवतीत्यर्थः, कथं सिद्धो भवति यावता नित्योयमतिदेशः नित्ये चास्मिंस्तत्र लविधिरपि कर्मकार्यमेवेति स्यादेवातिदेशः आतिदेशिकात्वबद्धं स्वाश्रयं वनिना प्राप्यते न तु विरुद्धमपि तच्चायं विकल्पार्थः कदा चित्कर्मवत्कदा चिन्नेति, अथ लान्तस्य कर्तेति वक्ष्यमाणत्वादेतत्सूत्रप्रवृत्तेः प्रागेव लः कर्मणि चेत्येतत्प्रवृत्तिरङ्गीक्रियते तत्र प्रवर्त्तमानमकर्मकत्वाद्भावे कर्तरि च प्रवर्त्तते यदा कर्तरि तदाऽयमतिदेश इति भावे लविधिः समर्थ्यते, यद्येवं माभूदतिः लकारवाच्यस्य कर्त्तुः कर्मसञ्ज्ञैवास्तु यगात्मनेपदयोस्त्वप्रसिद्धिः परत्वात्शबादीनां परस्मैपदस्य च प्रसङ्गः, न च कर्मसञ्ज्ञाया कर्तृसञ्ज्ञायाः

तत्रार्थे कर्मस्थक्रियया तुल्यक्रियत्वानुपपादनादित्याह ॥ यद्यपि कामस्य कर्तृत्वविवक्षायां कर्मणि लकारेऽपीदं सिध्यति तथाप्युदुम्बरस्य कर्तृत्वविवक्षामुदुम्बरः फलं पचतीत्येतद्व्यावृत्तये इदम् ।

## न पुनरोदनमिति । (कै)

कर्मस्थक्रियया तुल्यक्रियत्वाभावादिति भावः ॥

## श्रद्धायुक्ते कर्त्तरीति । (कै)

मुख्ये कर्त्तरीत्यर्थः । श्रद्धा आदरस्तेन युक्तो मुख्य एव तस्यैव क्रियामादरादिति बोध्यम् ॥ तेनात्यन्ताप्राप्तौ विध्यर्थोऽयमंशः ॥ अन्यकोर्विशेषमाह

कर्तुरित्युक्ते सन्निधानादिदं गम्यते । यत्क्रियाविशिष्टादसौ कर्ता सैव चेत्कर्मत्वोपयोगिनीति न चैतदिहास्ति । स्वयमनाश्लिष्यतोऽपि परेणाश्लिष्यमाणस्य कर्मत्वसम्भवात् । परसमवेतसंयोगाख्यफलानुकूलव्यापारयोश्चलनात्मकयोरेकधातूपात्तयोरपि स्वरूपेणाच भेदात् । एतेन भिद्यमानः कुसूल पात्राणि भिनत्तीत्यपि व्याख्यातम् । द्विधाभवनस्य देवगत्या कुसूलनिष्ठ-

---

बाधः, एकसंज्ञाधिकारादन्यत्र सञ्ज्ञानां समावेशात् सत्यमुक्तोऽत्र परिहारः, तदेतद्वत्करणं सर्वसादृश्यार्थं तेनोदाहरणेषु काष्ठादिभ्यो द्वितीया न भवति इतरथा कर्मकार्यत्वात्प्राप्नोति, अभिहितत्वान्न भविष्यति, भवेदयं परिहारः शास्त्रातिदेशे, कार्यातिदेशे त्वनेनैव कर्मकार्याणि प्राप्यन्ते न चात्रानभिहिताधिकारोऽस्तीति स्यादेव द्वितीया वत्करणात्तु सर्वसादृश्यार्थाद्यथा कर्मण्यभिहिते न भवति एवं कर्त्तर्यपीति द्वितीयाभावः, यदा तर्ह्यकर्मकत्वाद्भावे लकारस्तदा प्राप्नोति तत्राह । 'लिङ्याशिष्यङ्डित्यादि' : तत्र लग्रहणमनुवृत्तं यथा

**श्यनि त्विति ॥** (कै)

मुख्यकर्तृत्वं निदर्शयति

**अन्नयेति ।** (कै)

तत्र सृजेः कर्तरि श्यन् सिद्धः । चिणात्मनेपदे एव कर्म-वद्भावप्रयोजने श्यनस्तु कर्मवद्भावलभ्ययका बाधा माभूदिति प्रति प्रसवमात्रं दैवादिकः सृजिरकर्मक एवेतिलभ्रद्वयमेवेति केचित् ॥

त्वेपि पात्रनिष्ठकर्मतायामप्रयोजकत्वात् । स्वयमभिद्यमानोपि हि कुसूल उपरि पतन् पात्राणि भिनत्त्येव । नन्वेवमपि पचिरूधादीनां द्विकर्मकाणा-मेकस्य कर्मणः कर्तृत्वेप्यपरेण सकर्मकतावस्थायां कर्मवद्भावः प्राप्तः तन्नि-षेद्धुं सकर्मकाणां प्रतिषेधवचनं कर्तव्यमेवेति चेत् । योगविभागात्सिद्धम् । तथाहि । तपेः । तपेरेव सकर्मकस्य न त्वन्यस्य । ततः, तपःकर्मकस्यैव ।

---

विपरिणंस्यतइत्यभिप्रायेणाह । 'लान्तस्यकर्त्तेति' । लकारवाच्यः कर्त्र-र्थः । 'कुसूलाद् द्वितीयानभवतीति' । भिद्यते कुसूलेनेत्यनन्तरोदाहृतेषु उदाहरणेषु तु वचनादेव सर्वसादृश्यार्थाद् द्वितीयाया अभाव इति भावः । तदेवं वृत्तिकारस्याभिप्रेतमेतदतिःसर्वसादृश्यार्थ इति । किं च नावश्यं द्वितीयैवलक्ष्यलक्षणयोऽस्मिन्विषये कर्तृत्वनिर्देशेन प्राप्नुवन्ति मेत्तथः कुसूलः स्वयमेव भिन्नः कुसूलः स्वयमेव ईषद्भेदः कुसूलः स्वयमेवे-तिभावएव चेष्यन्ते मेत्तव्यं कुसुलेन कुसूलस्य वा 'कृत्यानाङ्कर्तरि वा,' भिन्नकुसूलेन ईषद्भेदकुसूलेनेति अत्र वार्त्तिके क्तग्रहणमन्यत्र सहपाठा-त्पठितं यथा ककारोगुणवृद्धिप्रतिषेधार्थ इति भवत्येव श्लिष्टो ऽकर्मक-त्वाद् गत्यर्थाकर्मकेति कर्तरि क्तः, तथा च 'सनोतेर्ग्रासकर्मकर्तृकस्येति वक्तमिति निष्ठानत्वे । सितो ग्रासः स्वयमेवेति कर्तरि क्त उदाहरिष्यते तस्मात्क्तग्रहणमर्थवदेवैष दोषो ऽतस्तत्र लान्तस्य कर्त्त त्वाश्रयणादयाति-

**न्याय्ये इति ।** (कै)

न्याय उत्सर्गसूत्रं कर्मवत्कर्मणेति तदनपेते तत्प्राप्तियोग्ये इति यावत् । सकर्मकत्वात्तदप्राप्तौ विधिः स्यन् तु अप्राप्त एव विधीयते यक् बाधनायेति विशेषः । यकोऽभावायेत्यस्य स्यन्निति चादि

**योगो ब्रह्मचारिणमिति ।** (कै)

पूर्वकक्षेयम् । संबध्नातीत्यस्य सम्बन्धानुकूलव्यापारवान् भवतीत्यर्थः ॥

---

तपेरित्यनुवर्त्तते । यद्वा वार्तिके योगविभागः करिष्यते दुहिपच्योर्बहुलं सकर्मकयोः । अत्र दुहिपच्योः सकर्मयोरित्येकं वाक्यं नियमार्थं दुहिपच्योरेव न त्वन्येषामिति । दग्धे गौः पयः । तस्मादुदुम्बरः सलोहितं फलं पच्यते । गौरुदुम्बरश्चात्र कर्मकर्त्ता । सृजियते चेति सूत्रे दुह्यादिपरिगणेन पचिरपि बोध्य इत्युक्तं प्राक् । तत्रेदं वार्तिकमुपलक्षणमित्यवदेयाभावः । 'कर्मणेति किमिति' । धातुवाच्या क्रिया कर्तृकर्मणोरेव समवेता तत्र सादृश्यस्य भेदाधिष्ठानत्वात्कर्त्रस्थया क्रियया तुल्यक्रियः कर्त्ता न सम्भवतीति कर्मस्थैव क्रिया आश्रयिष्यत इति मत्वा प्रश्नः । 'करणाधिकरणाभ्यामिति' । तत्स्थक्रियेत्यर्थः । 'साध्वसिश्छिनत्तीति' । किं पुनरत्र करणाधिकरणव्यापारमात्रे धातुर्वर्तते आहोस्वित्तत्र कर्त्राधात्वर्थाध्यारोपः, न तावदाद्यकल्पः तावति धातोर्वृत्तेरसिना छिनत्तीत्यत्रापि नैव करणव्यापारो धातुनोपादीयते केवलं करणत्वादवान्तरव्यापारोऽस्तीत्येतावत्, द्वितीये तु भिन्नक्रियत्वादेवा प्रसङ्ग, तस्मात्करणाधिकरणव्यापारमात्रेपि धातोर्वृत्तिमङ्गीकृत्य प्रत्युदाहृतं द्रष्टव्यं, क चित्तु करणेनापि तुल्यक्रियस्य कर्मवद्भाव इष्यते यदाह करणेन तुल्यक्रियः कर्त्ता बहुलमिष्यते, परिवारयति कण्टकैर्वृक्षम्परिवारयन्ते कण्टका वृक्षम् आत्मनेपदं भवति वृत्तिकारस्तु णिचस्त्वेत्यात्मनेपदमुपपद्यत इति मन्यमानो नतदुपलक्षणम् । 'धात्वधिकारात्समाने धाताविति' । एकस्यैव धातो-

## तत इति। (कै)

प्रतियोगित्वावच्छिन्नः सम्बन्धो युजेरर्थः। प्रतियोगिताश्रयत्वाच्च योगस्य कर्मत्वम्। यत्तु योगमिति प्रतियोगे द्वितीया। एवं चाकर्मकत्वात्कर्मवद्भावे सिद्धे यक् बाधनाय श्यन्नाद्यविधानार्थमिदमिति। तन्न; "सृजियुज्योरिति" वार्त्तिके "सकर्मकयोरिति" भाष्यविरोधापत्तेः॥ भाष्ये

ध्येयम्। ओदनं पचतीत्यादावतिप्रसङ्गनिवारणाय बहुलमिति द्वितीयं वाक्यम्। तच्च प्रत्याख्यातं भाष्ये; दुहिपच्योरिति हि कर्मकर्तृविषयकम्। कर्मस्थया क्रियया तुल्यक्रियएव विधायकं नियामकं वा। उभयथापि ओदनंपचतीत्यादौ प्रसङ्ग एव नास्तीति। न च कर्मकर्त्तर्येव परस्मैपदार्थं बहुलवचनम्, तस्यानियतत्वादिति दिक्। सृजियुज्योः श्यंस्तु॥ अनयो-

रित्यर्थः। एतच्च प्रागेव व्याख्यातं, 'कर्मस्थभावानामित्यादि'। यद्यपि क्रियाभावशब्दयोरभिन्नएवार्थस्तथाच 'यस्य च भावेन भावलक्षण' मिति क्रियापि गृह्यते लक्षणहेत्वोः क्रियायाः कर्मणा तुल्यक्रिय इति च वाच्योपि, तथाप्यस्मिन् ग्रन्थे भेदेनोपादानादर्थभेदो द्रष्टव्यः। अपरिस्पन्दरूपो धात्वर्थो भावः, परिस्पन्दरूपस्तु क्रिया, क्व पुनरसौ कर्मस्थः क्व वा कर्तृस्थः। केचिदाहुः। येषु कर्मव्यापारोपसर्जनः कर्तृव्यापारोभिधीयते तेषु कर्मस्थः, येषु कर्तृव्यापार एव तेषु कर्तृस्थ इति। नेति वयं, प्रधानक्रिया यत्र समवैति कर्त्तरि कर्मणि वा तत्स्थो धात्वर्थः यदुद्देशेन कारकव्यापारः सा प्रधानक्रिया यथा पचेर्विक्लित्तिः, गमेर्देशान्तरप्राप्तिः, एवञ्च हत्वा न्यग्भवनोपसर्जनन्यग्भाववचनोपि वहिः कर्तृस्थक्रियः। 'आरोहन्ति हस्तिनं हस्तिपका इति'। उपरिदेशप्राप्तेरुद्देश्यायाः कर्त्तरि समवायात्, तत्रेह कर्मस्थेन व्यापारेण कर्तृव्यापारस्योपमानात्, अस्य

**परिवारन्ते कण्टका इति।** (भा)

न च णिचश्चेत्यनेनैवात्मनेपदं सिद्धम्। यक् चिणौ तु "णिश्रिग्रन्थीति" प्रतिषिद्धावेवेति व्यर्थमिदमिति वाच्यम्। कर्तृगामित्वाभावेऽपि आत्मनेपदार्थं चिण्वद्भावार्थं च वार्त्तिकस्यावश्यकत्वात्॥

**स्रवतिकुण्डिका उदकम्** (भा)

इत्यस्य निष्कामयतीत्यर्थः॥

**स्रवतिकुण्डिकाया** (भा)

इत्यस्य निष्कामतीत्यर्थः॥ तदाह

सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति वक्तव्यम्। यगपवादः श्यन्। सृजेः श्रद्धोपपन्ने कर्तर्येवेति वक्तव्यम्। सृज्यते स्रजं भक्तः। श्रद्धया निष्पादयतीत्यर्थः। असर्जि, श्रद्धया निष्पादितवान्। युज्यते ब्रह्मचारी योगम्। श्यनि सति प्रकृतेराद्युदात्तत्वं भवति। यकि तु लसार्वधातुकानुदात्तत्वे यकः एवोदात्तत्वं स्यात्। कौमुद्यां तु श्रद्धावत्कर्तृकात् सृजेर्यक्चिणौ कर्तरीति

चार्थस्य कर्तृस्थव्यापारेऽसम्भवाद्यथाप्राप्त एवार्थो वृत्तिकारेण दर्शितः, तत्र कर्मस्थव्यापारस्य कर्तृस्थस्य चोदाहरणमात्रं श्लोकेन दर्शयति। 'कर्मस्थः पचतेर्भाव इति'। पच्यते घट इत्यत्र तद्देशस्यैव घटस्य पाक इति भावोऽसौ भवति कर्मस्थश्च पच्यते ओदन इत्यत्र परिस्पन्दत एव पाक्यस्य पाकाभिनिर्वृत्तिरिति कर्मस्थैव पचेः क्रिया भवति। कर्मस्था च भिदेः क्रियेति'। भिद्यते कुसूल इत्यत्रावयवविभागात्मिका भिदिक्रिया भेदस्य परिस्पन्दे सति भवतीति कर्मस्था च भिदेः क्रिया भवति। 'मासासिभावः कर्तृस्थ इति'। मासमास्ते इत्यत्र कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति मासमकर्मकोऽयमासिधातुः तत्र मासासिधातौ प्रतीयमानोऽर्थो भावोऽपरिस्पन्दरूपत्वात् स च कर्तृस्थ

**निष्क्रामतीति॥** (भा)

ननु विसर्गोऽपि विभागानुकूलव्यापारो निष्क्रमणादनतिरिक्तोऽत आह

**विसर्गश्च दानमिति।** (कै)

मुख्यदानपदार्थस्यात्रारोप इति भावः॥

**सिद्धत्वादिति।** (कै)

वक्ष्यमाणेन यक्चिणोः प्रतिषेधे सिद्धेऽपि स्यतासि विषये चिण्वद्भावाभावाय ण्यन्तेऽपि एतत्प्रवृत्तिरावश्यकी। अन्यथात्मनेपदादित्यनेन तस्याप्यत्र निषेधात्। "णिश्रन्थी"त्यनेन तु न सिद्धिः। न हि चिणिनिषेधे न चिण्वद्भावनिषेधो लभ्यते इति चिन्त्यमेतत्॥

---

केचिदित्युक्तम्। तत्र यगित्यशुद्धम्। आत्मनेपदानुक्तेश्च न्यूनतेति दिक्। भूषाकर्म किरादिसनां चान्यत्रात्मनेपदात्॥ भूषावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ न भवत इति वक्तव्यमित्यर्थः। अलं कुरुते कन्या स्वयमेव। अलमकृत। भूषाफलस्य शोभाख्यस्य कर्मणि दर्शनात् कर्मस्था भूषा। ण्यन्तानां तु भूषार्थानां वक्ष्यमाणेनापि यक्चिणोः प्रतिषेधेन सिद्धत्वान्नेह

---

इत्यर्थः। 'कर्तृस्था च गमेः क्रियेति', गमेरर्थः क्रिया सा च कर्तृस्थेत्यर्थः। तेनास्यते मासः स्वयमेव गम्यते ग्रामः स्वयमेवेति न भवति। अथेह कथं कर्मवद्भावः, तस्मादुदुम्बरः सलोहितं पच्यते फलमिति, अत्राहुः। पचिरत्र विषये द्विकर्मकः वृक्षस्य पाकमन्तरेण फलस्य पाकासम्भवात्, तत्राप्रधाने दुहादीनामिति वृक्षो ऽकथितं कर्मेति तत्र लकारः कालस्तु कर्त्तेति। इदन्तु वक्तव्यमेव सृजियुज्योः। श्यंस्तु च सृजि विसर्गे युजियोगे अनयोः सकर्मकयोः कर्त्ता कर्मवद्भवति

**कर्तृत्वेन हस्तीति ।** (कै)

अवकिरते व्याप्तो भवतीत्यर्थ इति भावः। आद्यकक्षायां विक्षेपणेन व्याप्तं करोतीत्यर्थः ॥ भाष्ये

**अवाकीर्ष्टेति ।** (भा)

अन्यथात्मनेपदादित्युक्तेश्चिण्वद्भावोऽपि नेति भावः। अत एवेदं वार्त्तिकं न दृष्टेत्यत्र न पठितम्। चिकीर्षैरिच्छात्रावचकत्वात्। कर्मस्थक्रियत्वाभावमाशङ्क्याह

**करोति क्रियापेक्षमिति ॥** (कै)

ननु यतः परत्ववाच्यस्य कर्मवद्भावस्तत्प्रधानार्थस्य न कर्मस्थत्वमित्यत आह

**अर्थाश्चेति ॥** (कै)

---

मुख्योदाहरणता। भूषयते कन्या स्वयमेव। अबुभूषत कन्या स्वयमेव किरादि। अवकिरते हस्ती स्वयमेव। अवाकीर्ष्ट हस्तिनं कश्चित्। पांस्वादिनावकिरति। तत्र सौकर्यात् हस्ती कर्तृत्वेन विवक्ष्यते। गिरते। अगीर्ष्ट। किरादिस्तुदाद्यन्तर्गणः सन्। चिकीर्षते कटः स्वयमेव। अचिकीर्षिष्ट। इष्टेच्छायाः कर्तृस्थत्वेपि करोतिक्रियापेक्षं कर्मस्थक्रियत्वम्।

---

तत्र सूत्रे अङ्गोपपन्ने कर्तरि कर्मवद्भावः, यग्विषये च स्यन् चिण्विषये तु चिण्वेष्यते, सृज्यते मालां देवदत्तः श्रद्धया निष्पादयतीत्यर्थः, स्यनि सति प्रकृतेराद्युदात्तत्वं भवति यकि तु सर्वधातुकानुदात्तत्वे यक एवोदात्तत्वं स्यात् असर्जि मालां श्रद्धया निष्पादयति स्वेत्यर्थः, युजिर् युज्यते ब्रह्मचारी योगेन ॥

# न दुहस्नुनमां यक्चिणौ । ३ । १ । ८९ ॥

अकर्मकाणां कर्मस्थक्रियया तुल्यक्रियकर्तृभावात्कर्मवत्त्वाप्राप्तौ निषेधो व्यर्थोऽत आह

न दुहस्नुनमां यक्चिणौ ॥ एषां यक्चिणौ न स्तः । कर्मवदतिदेशेन प्राप्तयोरयं निषेधः । अनन्तरस्येति न्यायात् । तेन शुद्धे कर्मणि भावे स्त एव । दुहेरनेन यक् निषिध्यते । चिण् तु दुहश्चेति सूत्रेण प्रागेव विभाषितः, दुग्धे गौः स्वयमेव । अदुग्ध, अदोहि गौः स्वयमेव । यकि प्रतिषिद्धे शप । अदादित्वात्तस्य लुक् । दादेरिति घः । झषस्तथोरिति धत्वम् । जश्त्वम् । अप्रधाने दुहदीनामिति यस्मिन्कर्मणि लकारस्तस्य कर्तृत्वविवक्षा । प्रधानं कर्म तु कर्मैव : स्वयं प्रदुग्धेस्य गुणानुपकृता

"न दुहस्नुनमां यक्चिणौ" ॥ दुह प्रपूरणे ष्णु प्रस्रवणे, टुद उपतापे हसे हसने णु स्तवने इत्यतेषां तु ग्रहणं न भवति, नोनिहसयोरकर्मकस्थ-क्रियत्वात्, यदि च तेषां ग्रहणमिष्टं स्यात्सन्देहार्थं न दनुहस्नमामित्येव ब्रूयात्, अवयवप्रसिद्धेश्च समुदायप्रसिद्धिर्बलीयसी । कर्मवद्भावापदिष्टा-विति, । एतेनानन्तरस्य विधिर्वा भवति प्रतिषेधो वेति कर्मवत्कर्मणाति प्राप्तयोर्यक्चिणोरयं प्रतिषेधो न तु 'चिण् भावकर्मणोः' 'सार्वधातुके यगि'ति शुद्धे कर्मणि भावे प्राप्तयोरिति दर्शयति । 'दुग्ध इति' । यकि प्रतिषिद्धे शप, तस्य अदादित्वाल्लुक्, 'दादेर्धातोर्घः,' 'झषस्तथोर्धोऽधः'

आत्मनेपदेति॥ (कै)

सकर्मका भवन्तीति। (कै)

ततो व्यापारनिवृत्तौ यदा कर्मकर्तृत्वमिति शेषः॥

व्यक्षपतेति। (कै)

अथ चिण्वद्भावोऽपि नेति कैयटाशयमाहुः केचित्। तत्र

वस्तूपमानस्य वसूनि मेदिनीतिवत्। चिणभावे क्सः। लुग्वा दुहेति लुक्। प्रस्नुते। प्रास्नोष्ट। चिणि प्रतिषिद्धे सिच्। नमते दण्डः स्वयमेव। अनंस्त। अन्तर्भावितण्यर्थोऽत्र नमिः; तत्र यथा नमयति दण्डं देवदत्तः नमयते दण्डः स्वयमेवेति ण्यन्तस्य कर्मस्थक्रियत्वम्, एवमस्यापि द्रष्टव्यम्। यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्॥ कारयते कटः स्वयमेव। अचीकरत। उच्छ्रयते दण्डः स्वयमेव। उदशिश्रियत। ब्रूते कथा स्वयमेव। अवोचत। वचनं शब्दप्रकाशनफलत्वात्कर्मस्थम्।

अथ त्वं दुहिरयं द्विकर्मकः, तथाप्रधाने दुहादीनामिति यस्मिन्कर्मणि लकारस्तस्य कर्तृत्वविवक्षा प्रधानं तु कर्म कर्मैवेति, यथा स्वयं प्रदुग्धेऽस्य गुणैरुपकृता वस्तूपमानस्य वसूनि मेदिनीति। 'अदुग्धेति'। चिण् भावे क्सः, लुग्वा दुहेत्यादिना तस्य लुक्। नन्विदानीमेवोक्तं दुहेरनेन यक् प्रतिषिध्यते चिण् तु दुहश्चेति पूर्वमेव विकल्पित इति, तस्मान्नेतदत्रोदाहर्तव्यम्। 'प्रस्नुत इति'। यकि प्रतिषिद्धे पूर्ववच्छपो लुक्। 'प्रास्नोष्टेति'। चिणप्रतिषेधे सिच्। 'नमत इति'। अन्तर्भावितण्यर्थोऽत्र नमिस्तथ यथा नमयति दण्डं देवदत्तः' नमयत दण्ड स्वयमेवेति ण्यन्तस्य कर्मस्थक्रियत्वमेवमस्यापि द्रष्टव्यम् 'णिश्रिग्रन्थीत्यादि'। णीति णिङो णिचश्च सामान्येन ग्रहणं, श्रन्थ ग्रन्थ सन्दर्भे चुरादावधीयेते तयोर्णिजभावपक्षे ग्रहणं, तथा क्र्यादिष्वपि पठ्येते तयोरपि ग्रहणं, ब्रूञ् व्यक्तायां वाचि

इत्यनुवर्त्तमाने वेः शब्दकर्मण इत्यत्रायं निर्दिष्टः । परे तु पक्षे चिण्वद्भावे व्यकारिषतेत्यपि बोध्यम् । यदि चिण् प्रतिषेधे चिण्वद्भावप्रतिषेधोऽपीष्टः स्यात्तर्हि भूषाकर्मेति पूर्ववार्त्तिकमप्यत्रैव कुर्य्यात् । एतद्वा तत्रैव कुर्य्यात् । विभेदेन करणाच्च चिण्वद्भावस्य

भारद्वाजीयाः पठन्ति । णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यान-मिति । णीति णिङ्णिचोः सामान्यग्रहणम् । णिजुदाहृतः । णिङः, पुच्छमुदस्यति उत्पुच्छयते गौः । अस्यान्तर्भावितण्यर्थतायाम् उत्पुच्छयते गाम् । पुनः सौकर्यातिशयेन कर्तृत्वविवक्षायाम् उत्पुच्छयते गौः स्वयमेव । उदपुपुच्छत । इह ण्यन्तात् यक्चिणोः प्रतिषिद्धयोः शप्चङौ भवतः । कौमुद्यां तु कर्मकर्त्तरि चङ् नेत्याह । अकारयिष्टेत्युदाहृतं तदशुद्धमेव । श्रन्थग्रन्थ सन्दर्भे । चुरादावाकृषीयौ । तयोर्णिजभावपक्षे ग्रहणम् । ग्रन्थति ग्रन्थं । देवदत्तः श्रन्थति मेखलाम् । ग्रन्थते ग्रन्थः स्वयमेव ।

आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्था सकर्मका भवन्ति तदेमे आत्मनेपदाकर्मकाः । वृत्तौ तु चिदेषामुदाहरणानि पठ्यन्ते तु चित्र, णिचि. कार्यते कटः स्वयमेव, अचीकरत कटः स्वयमेव, यक्चिणोः प्रतिषिद्धयोः शप्चङौ भवतः, णिङ्, पुच्छमुदस्यति उत्पुच्छयते गौः, स यदान्तर्भावितण्यर्थस्तदा उत्पुच्छयते गां, पुनः सौकर्यातिशयेन कर्तृत्वविवक्षायामुत्पुच्छयते गौः स्वयमेव, उदपपुच्छत गौः स्वयमेव, श्रन्थि-ग्रन्थ्योराकृषीययोः ग्रन्थति ग्रन्थं देवदत्तः, श्रन्थति मेखलां, ग्रन्थते ग्रन्थ स्वयमेव अग्रन्थिष्ट ग्रन्थः स्वयमेव, श्रन्थते मेखला स्वयमेव, अश्रन्थिष्ट मेखला स्वयमेव, क्र्यादिकयोस्तु ग्रथ्नीते ग्रन्थः स्वयमेव श्रथ्नीते मेखला स्वयमेव । ब्रूञ्, ब्रवीति कथां देवदत्तः, ब्रूते कथा स्वयमेव, वचनं शब्द-प्रकाशनफलत्वात्कर्मस्थम्, आत्मनेपदाकर्मक, 'वेः शब्दकर्मणः' 'अकर्मकाच्च'

प्रतिषेधोऽनेन नेति ध्वनयति । चिण उदाहरणम् एकवचने बोध्यमित्याह । भारद्वाजीयानां हेतुमत्पदत्यागे बीजमाह

उत्पुच्छयते इति । (कै)

अत्र यगादिकं न ॥

---

अग्रन्थिष्ट । श्रन्थ्यते । अश्रन्थिष्ट । क्र्यादावपि इमौ पठ्यते तयोरपीह ग्रहणम् । श्रथ्नीते ग्रथ्नीते स्वयमेव । आत्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः पुनश्च निवृत्तप्रेषणास्तदेहोदाहरणम् । तद्यथा । वेःशब्दकर्मणः, अकर्मकाच्च । विकुर्वते सैन्धवाः वल्गन्तीत्यर्थः । तान्विकिरोति, वल्गयतीत्यर्थः । पुनः सौकर्यात्कर्तृत्वे विकुर्वते सैन्धवाः स्वयमेव । व्यकुषत । यत्तु वृत्तौ पठ्यते आहन्ति माणवकम् । आहते माणवकः स्वयमेवेति । तदयुक्तम् । आहन्ति माणवकमित्यस्य सकर्मक-

---

विकुर्वते सैन्धवाः वल्गन्तीत्यर्थः, तान्यदाश्वो वल्गयति तदा तेषां कर्मत्वं, पुनः सौकर्यातिशयात्कर्तृत्वविवक्षायां विकुर्वते सैन्धवाः स्वयमेव व्यकुषत सैन्धवाः स्वयमेव, यक्चिणौ न भवतः, क्वचित् वृत्तौ आहन्ति माणवकम्, आहते माणवकः स्वयमेवेति पठ्यते, तदयुक्तम्, आहन्ति माणवकमिति सकर्मकत्वादात्मनेपदाभावाच्च, अन्ये पुनराहुः, आत्मनेपदकर्मकेति धातूपलक्षणं हन्तिश्चाय 'माङो यमहन' इत्यत्र यदा कर्माविवक्षयाऽकर्मकस्तदात्मनेपदस्य निमित्तं स्यात्तस्याद्यसकर्मकत्वेप्यविरुद्धमुदाहरणमिति, भूषाकर्मकिरादिसनां यक्चिणोः प्रतिषेधो वक्तव्यः, कर्मशब्दः क्रियावाची भूषापरं च शोभाख्यं कर्मणा दृश्यत इति कर्मस्था भूषा, अलङ्कुरुते कन्या स्वयमेव अलङ्करिष्यते कन्या स्वयमेव अलमकृत कन्या स्वयमेव, अवकिरते हस्ती स्वयमेव अवाकीर्ष्ट हस्ती स्वयमेव अवकरिष्यते हस्ती स्वयमेव,

## ब्रूते कथेति । (कै)

अद्येति शेषः । प्रकाशनफलकं वचनं ब्रूञोऽर्थः प्रकाशनस्य कर्ममात्रनिष्ठत्वात् । शब्दे प्रकाशनकृतविशेषदर्शनाच्च कर्मस्थत्वं बोध्यम् ॥

त्वादात्मनेपदाद्यभावाच्चेति हरदत्त अध्येत्याङः त्मनेपदाकर्मकेति धातूपलक्षणं, हन्तिस्त्रायम् आङो यमहन इत्यत्र यद कर्मविवक्षया अकर्मकः तदा आत्मनेपदस्य निमित्तम् तस्मान्न सकर्मकत्वेऽपि अविरुद्धमुदाहरणमिति ॥

यक्चिणाचिण्वद्भावा न भवन्ति, सनु, मुमुक्षते वत्सः स्वयमेव अमुमुक्षिष्ट वत्सः स्वयमेव, चिकीर्षते कटः स्वयमेव अचिकीर्षिष्ट कटः स्वयमेव प्रकृत्यर्थापेक्षमत्र कर्मस्थक्रियत्वम्, इच्छा तु कर्तृस्था, आर्थं च प्रकृत्यर्थस्य प्राधान्यं तदर्थत्वादिच्छायाः ।

# कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च । ३ । १ । ९० ॥

यक्श्यनोर्विशेषं दर्शयति "श्नित्यादिरि"त्यादिना ॥ परस्मैपदस्य सार्वधातुके विधानासम्भवादाह

विषयेति ॥ (कै)

लिङ्लिटो प्रतिषेध इति । (वा)

तत्र नित्यात्मनेपदस्यैवेष्टत्वादिति भावः ॥ ननु कुष्णाना इत्यत्र परस्मैपदाप्राप्तेस्तत्सहचरितश्यनपि नेत्यत आह

परस्मैपदं चेति ॥ (कै)

---

कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च ॥ कुष निष्कर्षे । रञ्ज रागे । अनयोर्धात्वोः कर्मकर्तरि यक् न स्यात् किन्तु श्यन् परस्मैपदं च । आत्मनेपदापवादः । कुष्यति पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव । प्राचां-ग्रहणं विकल्पार्थम् । कुष्यते । रज्यते । नदुहेति सूत्रात् यक् नेत्यनुवर्त्य

---

"कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च" । "यगात्मनेपदयोरपवादा-विति" । श्यन्यकोरपवादः परस्मैपदमात्मनेपदस्य, श्यन्यकोस्त्वत्र नुमि स्वरे च विशेषः, कुष्यन्ती गङ्गा, श्यनि 'शप्श्यनोर्नित्य'मिति नित्यं नुमागमः, निघाताद्युदात्तत्वं भवति, यकि 'आच्छीनद्योर्नुमि'ति नुम्विकल्पः, लसार्व-

विशेषविहितत्वादिति । (कै)

च लुट् लुङ् व्यतिरिक्ते श्यनस्तारितार्थ्यादिदं चिन्त्यम । पर-त्वाद्बाध इत्युचितमिति कश्चित् ॥ भाष्ये

पूर्वस्मिन् योग इति । (भा)

कर्मवत्कर्मणेत्यत्र ॥

ले च सार्वधातुके चेति । (भा)

लसार्वधातुकयोर्वाच्यत्वेन स्थितः कर्मवदित्यर्थः ॥

भिन्दाना इति । (भा)

चाम इति ॥

इहापि लेति । (कै)

कुषिरञ्जोरित्यत्रापि ॥

लादेशः । (कै)

सार्वधातुकविषये इत्यर्थ इति भावः ॥

---

धातुकानुदात्तत्वे च यक एवोदात्तत्वं स्यात् । 'रज्यतीति' । अविहितामिति न लोपः । कुष्यते रज्यत इति पक्षे यगात्मनेपदे भवतः । 'लिट्लिटोरिति' । आशिषि लिङश्च गृह्यते यदुक्तं कुषिरञ्जोः श्यन्विधाने सार्वधातुकवचनम-

तस्मिन्नेव काले श्यन् विहितः । तत्सन्नियोगशिष्टं च परस्मैपदम् । तेन आशीर्लिङ्लिटोः स्यादीनां च विषये श्यन्परस्मैपदे भवतः । कोषिषीष्ट पादः स्वयमेव । रंक्षीष्ट वस्त्रं स्वयमेव चुकुषे । ररञ्जे । कोषिष्यते । रंक्ष्यते । अकोषि अरञ्जि इत्यादि । श्यन्यकोः स्वरे नुमि च विशेषः ।

( कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च। ( अ. ३। पा. १। आ. ५ )
३।१।९०।)

## अकृतेष्वेव लादेशेष्विति। (कै)

निरवकाशत्वाभावेऽपि विशेषविहितस्य पूर्वप्रवृत्तिप्रयोजकतेति भावः। परे तु "स्यतासीति" सूत्रे "आयादय" इत्यत आर्द्धधातुके इत्यनुवर्त्य तत्त्वावस्थायामेव स्यतासी। अतोऽकृतेष्वेवादेशेषु तत्प्रवृत्तिः। इदमेवाभिप्रेत्य भाष्ये लावस्थायामित्युक्तमित्याहुः॥

## श्यनो विरोधादिति। (भा)

उभयोः परत्वासम्भवरूपो विरोधः॥

वचने हि लिङ्लिटोः प्रतिषेध इति। 'स्यादिविषये चेति'। आदिशब्देन कृष्यन्तौ ज्ञेयौ। यद्यपि श्यपश्यनोर्नित्यमिति नुमागमः नित्त्वादाद्युदात्तश्च। यक्षि तु आच्छीनद्योरिति नुमो विकल्पः। तथापि धातुकानुदात्तत्वेन यक एवोदात्तत्वं न स्यात्॥

सिजादीनां ग्रहणम्। 'चुकुषे ररञ्ज इति'। लिट् आत्मनेपदं तस्य एशादेशः। 'कोषिषायेति' 'लिटः सौऽयुट्' 'सटतिघो' लघूपधगुणः। 'रञ्जा-श्रेति'। एकाच इतीटप्रतिषेधः, 'चोः कुरिति कुत्वं गकारः', तस्य चर्त्वं ककारः। 'अकारोऽपि अरञ्जीति' चिण्।

| | | |
|---|---|---|
| Nityaca[illegible] | | |
| Nyāyabindu[illegible], Fasc. [illegible] | [illegible] | [illegible] |
| *Nyāya Kusumāñjali Prakaraṇa, Vol. II, Fasc. 1-[illegible] @ /10/ each | [illegible] | 14 |
| Nyayasarah | [illegible] | 6 |
| Padumāwati, Fasc. 1-5 @ [illegible]/- | 10 | 0 |
| Prākrita-Paingalam, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Prākṛta Lakṣaṇam, Fasc. 1 @ /1/8 each | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Parīksamukha Sutram | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each | 3 | 12 |
| Rasarnavam, Fasc. 1-3 | 3 | 12 |
| Saddarśana-Samuccaya, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Samaraicca Kaha, Fasc. 1-3, @ /10/ | 1 | 14 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each | 3 | 12 |
| Sragdharā Stotra (Sanskrit and Tibetan) | 2 | 0 |
| Suçruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhi Kaumudī, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Sundaranandam Kavyam | 1 | 0 |
| Suryya Siddhanta, Fasc. 1 | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| *Taittreya Brahmana, Fasc., 11-25 @ /10/ each | 9 | 6 |
| *Taittirīya Saṁhitā, Fasc. 27-45 @ /10/ each | 11 | 14 |
| *Tāṇḍya Brāhmaṇa, Fasc. 10-19 @ /10/ each | 6 | 4 |
| Tantra Vārtika (English) Fasc. 1-8 @ /1/4 | 10 | 0 |
| Tattva Cintāmaṇi, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-10; Vol. III, Fasc. 1-2; Vol. IV, Fasc. 1; Vol. V, Fasc. 1-5; Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc. 1, @ /10/ each | 0 | 10 |
| Ditto Prakas, Fasc. 1-3, @ /10/ each | 1 | 14 |
| Tattvārthādhigama Sutram, Fasc. 1-3 @ /10/ | 1 | 14 |
| Tirthacintamoni, Fasc. 1, @ /10/ each | 0 | 10 |
| Trikāṇda-Maṇḍanam, Fasc. 1-3 @ /10/ | 1 | 14 |
| Tul'si Satsai, Fasc. 1-5 @ /10/ | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc. 1-2, 5-13 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/- | 6 | 0 |
| Vallāla Carita, Fasc. 1 @ /10/ | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc. 1-6 @ /10/ | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3-6; Vol. II, Fasc. 1-7; @ /10/ each | 6 | 14 |
| Vidhāna Pārijāta, Fasc. 1-8; Vol. II, Fasc. 1 @ /10/ | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4, @ 1/4 | 3 | 12 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Vrhat Svayambhū Purāṇa, Fasc. 1-6 @ /10/ | 3 | 12 |
| Yogaśāstra, Fasc. 1-3 | 3 | 12 |

## *Tibetan Series.*

| | | |
|---|---|---|
| Bauddhastotrasangraha, Vol. I | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-4, @ 1/- each | 4 | 0 |
| Nyāyabindu of Dharmakirti, Fasc. 1 | 1 | 0 |
| Pag-Sam S'hi Tin, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Rtogs brjod dpag hkhri S'iṅ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1-8 Vol. II, Fasc. 1-8 @ 1/- each | 16 | |
| Sher-Phyin, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each | 14 | 0 |

## *Arabic and Persian Series.*

| | | |
|---|---|---|
| Al-Muqaddasi (English) Vol. I, Fasc. 1-4 @ 1/- | 4 | 0 |
| *Āin-i-Akbari, Fasc, 1-22 @ 1/8/ each | 33 | 0 |
| *Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, Index to Vol. II, @ 2/- each | 36 | 0 |
| Akbarnāmah, with Index, Fasc. 1-37 @ 1/8/ each | 55 | 8 |
| Akbarnāmah, English Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-7; Vol. III, Fasc. 1, @ 1/4/ each | 20 | 0 |
| Arabic Bibliography, by Dr. A Sprenger @ /10/ | 0 | 10 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts 1-2 @ 1/- each | 2 | 0 |

* The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

[illegible]
Arabic [illegible]
Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each ... 31
Farhang-i-Rashidi [illegible] ... 1
Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... 21
Fihrist-i-Tusi, or Tusy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... 4
History of Gujarat ... ... ... ... 1
Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... 0
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... 7
Iqbalnamah-i-Jahangiri, Fasc. 1-3 @ /10/ each ... 1
Isabah, with Supplement, 51 Fasc. @ 1/- each ... 51
Ma'asir-i-Rahimi, Part I, Fasc. 1 ... ... ... ... 2
Ma'asir-ul-Umara, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each
Marhamu 'L-Ilali 'L-Mu'dila, Fasc. ... ... ... 35
Muntakhabu-t-Tawarikh, Fasc. 1-15 @ /10/ each ... ... ... 1
Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and Indexes; Vol. III, Fasc. 1 @ 1/- each ... ... 9
Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each ... ... ... 16
Ditto Part 3, Fasc. 1 ... ... ... 11
Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... ... ... 1
Nizami's Khiradnamah-i-Iskandari, Fasc. 1-2 @ /12 each ... 0 10
Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut.-Col. D. C. Phillott ... 1 8
Riyazu-s-Salatin, Fasc. 1-5 @ /10/ each ... ... ... 5
Ditto (English) Fasc. 1-5 @ 1/- ... ... ... 3 2
Tadhkira-i-Khushnavisan ... ... ... ... 5 0
Tabaqat-i-Nasiri (English), Fasc. 1-14 @ 1/- each ... ... 11
Ditto Index ... ... ... ... 1
Tarikh-i-Firuz Shahi of Ziyau-d-din Barni, Fasc. 1-7 @ /10/ each ... 4 6
Tarikh-i-Firuzshahi, of Shams-i-Siraj Aif, Fasc. 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
The Mabani 'L Lughat: A Grammar of the Turki Language in Persian 1 8
The Persian and Turki Divans of Bayran Khan, Khan Khanan ... 1 0
Tuzuk-i-Jahangiri (Eng.) Fasc. 1 @ 1/- ... ... ... 1 0
Wis o Ramin, Fasc. 1-5 @ /10/ each ... ... .. 3 2
Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES. Vols. XIX and XX @ 10/- each ... ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16) @ 1/8 per No. to Members and @ 2/- per No. to Non-Members.

*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N.S., 1905, to date (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25°/o to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910 ... 3 0
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to, @ 6/- each ... ... 18 0
9. Kaçmiraçabdamrta, Parts I and II @ 1/8/ ... ... ... 3 0
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott. ... 10 0

---

Notice of Sanskrit Manuscripts, Fasc. 1-35 @ 1/- each ... ... 35 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer, Asiatic Society," only.

11-9-11.

**Books are supplied by V.P.P.**

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1346.

# महाभाष्यप्रदीपोद्योतः ।

# MAHABHAṢYAPRADIPODDYOTA,

OR

## A COMMENTARY ON PANINI GRAMMAR.




BY

NAGEÇA BHAṬṬA

EDITED BY

PANḌIT BAHUVALLABHA ÇASTRI

VOL. IV. FASCICULUS III.

CALCUTTA
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1912.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 1, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

*The Society's Agents—*

MR. BERNARD QUARITCH, 11, *Grafton Street, New Bond Street, London,* W.,

AND MR. OTTO HARRASSOWITZ, BOOKSELLER, *Leipzig, Germany.*

***Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1–3 @ /10/ each ... | Rs. 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1–8 @ /10/ each ... ... | 14 | 6 |
| Aitareyalocana ... ... .. ... ... | 2 | 0 |
| Amarakosha, Fasc. I ... ... ... ... ... | 2 | 0 |
| *Anu Bhāshya, Fasc. 2-5 @ /10/ each ... ... | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1-2 @ /10/ ... ... ... | 1 | 4 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc 1-6 @ /10/ each ... | 8 | 12 |
| Ātmatattvaviveka, Fasc I ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc. 1–5 @ /10/ each ... ... .. | 3 | 2 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-10. Vol. II, Fasc. 1–10 @ 1/ each ... ... ... | 20 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1–2, Vol. II, Fasc. 1, @ /10/ each ... | 1 | 14 |
| Baudhāyana Srauta Sūtra, Fasc 1-3; Vol. II, Fasc. 1–5 @ /10/ each | 5 | 0 |
| Bhasavritty ... ... ... .. .. | 0 | 10 |
| Bhāṭṭa Dipikā, Vol. I, Fasc. 1-6; Vol II, Fasc. 1, @ /10/ each . | 4 | 6 |
| Bauddhastotrasangraha ... .. ... .. | 2 | 0 |
| Brhaddevatā, Fasc. 1-4 @ /10/ each .. ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Çri Cantinatha Charita, Fasc 1-3 ... ... ... ... | 1 | 14 |
| Çataduṣaṇi, Fasc 1-2 @ /10/ each ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc 1-4 @ 2/ each ... | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7; Vol. II, Fasc. 1-5 Vol. III, Fasc. 1-7; Vol V, Fasc 1–4 @ /10/ each ... | 14 | 6 |
| Ditto Vol VI, Fasc. 1-3 @ 1/4/ each ... ... | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ ... ... | 3 | 2 |
| Ditto Vol IX, Fasc 1–2 ... ... ... | 1 | 4 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1–17 @ /10/ each ... | 10 | 10 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc 1-25; Vol. III, Part I, Fasc. 1-18, Part II, Fasc. 1–10; Vol IV, Fasc. 1–6 @ /10/ each | 36 | 14 |
| Ditto Vol. IV, Fasc 7-8, @ 1/4/ each ... | 2 | 8 |
| Ditto Vol. IV, Fasc 9-10 @ /10/ ... ... | 1 | 4 |
| Çlokavartika, (English), Fasc. 1–7 @ 1/4/ each ... ... | 8 | 12 |
| *Çranta Sūtra of Çānkhāyana, Vol I, Fasc 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc 1–4; Vol. 4, Fasc. 1 @ /10/ each ... | 10 | 0 |
| Çri Bhāshyam, Fasc. 1–3 @ /10/ each ... ... ... | 1 | 14 |
| Dāna Kriyā Kaumudi, Fasc 1–2 @ /10/ each ... ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc 1–7 @ /10/ each ... | 4 | 6 |
| Ditto Ācārasāra, Vol. II, Fasc. 1–4 ... ... . | 3 | 2 |
| Gobhiliya Grhya Sūtra, Vol I, @ /10/ each ... ... .. | 3 | 2 |
| Ditto Vol. II, Fasc 1-2 @ 1/4 /each ... | 2 | 8 |
| Ditto Sūtra, (Appendix) Gobhila Parisista ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... ... | 0 | 10 |
| Haralata ... ... ... ... ... ... | 1 | 14 |
| Karmapradiph, Fasc. 1 ... ... ... ... | 1 | 4 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... .. ... | 4 | 8 |
| Kurma Purana, Fasc. 1—9 @ /10/ each ... ... ... | 5 | 10 |
| Kiranavali, Fasc. 1-2, @ /10/ ... ... ... ... | 1 | 4 |
| Madana Pārijāta, Fasc 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāsya-pradipodyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1-10 @ /10/ each ... ... | 19 | 6 |
| Ditto Vol. IV, Fasc. 1-2 @ 1/4 each ... ... ... | 2 | 8 |
| Manutikā Sangraha. Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |

# धातोः । ३ । १ । ९१ ॥

**तथापीति ।** (कै)

धात्वधिकारनिवृत्त्यर्थं प्रतिज्ञातं यत्स्वरितत्वं तथेति न ज्ञायत इति योजना ॥ "अनुदात्तङित" इत्यादिभिर्लादिगविधानात्तत्र धात्वधिकाराभावाद् भाष्ये उक्तम्

[1] **आद्ये योग इति ।** (भा)

सर्वेषामेतन्नियामकत्वा"त्तिप्तस्झि" इत्यस्याद्यत्वमिति भावः । "आद्ये योगे" धातोरित्यस्य सम्बन्धे व्यवधाने तिङो न स्युरिति सम्बन्धः ॥ पचति पठतीति भाष्योदाहरणामङ्गतिं मत्वाह

१ आद्ये योगे न व्यवाये तिङः स्युः न स्यादेतत् दीर्घता यङ्भवति ।
तत्रः ष्णित्त्वं यत्र लोटो विधत्ते यत्राप्यन्यत्तदृतिङ्गमास्वन स्युः ।

धातोः ॥ आ तृतीयसमाप्तेरधिकारोऽयम् यद्यपि धातोरित्याचोद्वला देरिति सूत्राज्ज्ञातुग्रहणमनुवर्तत एव तथापि आर्द्धधातुकसंज्ञाया आश्रित

"धातोः" ॥ आ तृतीयसमाप्तेरधिकारः, किं प्राक्तनेभ्यः आहोस्विदा-ध्यायपरिसमाप्तेरिति विचारे द्वितीय पक्षमाश्रयति 'आध्यायपरिसमाप्तेरिति' तत्रः ष्णित्करणात्, तद्धि धातोरित्यधिकारे सति 'तस्मा-दित्युत्तरस्य' 'आदेः परस्य' तकारस्य स्थाने णः सति अकारस्य स्थाने देरेत्वे अयादेशे च सत्ययशब्दस्य श्रवणं मा भूदित्येवमर्थं क्रियते प्रत्या-देशात्पुनर्द्वात्वधिकारे ऽनोन्त्यस्य विधयो भवन्तीति तकारस्यैकारवचने

**यदात्विति ॥** (कै)

इदमेवाभिप्रेत्य विकरणानामादेशापेक्षया नित्यत्वं वक्ष्यति भाष्ये

**टित्संज्ञकानामिति ।** (भा)

इत्संज्ञकटकारवतामित्यर्थः ॥

**एकारस्यैकारवचने इति ।** (कै)

यद्यपि विशेषविहितत्वात् "टित" इति बाधित्वा "लिटस्तझयोरि"ति प्राप्नोति तथापि एकारस्य सिद्धावेकारवचने प्रयोजनं नास्तीति व्याख्येयम् ॥

**सर्वादेशो भविष्यतीति ।** (भा)

निर्दिश्यमानपरिभाषयेति भावः ॥

---

शब्दव्यापारत्वलाभाय पुनर्धातुग्रहणम् । अन्यथा लूभ्यां पूभ्यामित्यादौ भ्यामादेरिट् प्रकृतेर्गुणश्च स्यात् । धातोरित्येवमविधानात्तु न भवति ।

प्रयोजनं नास्तीति कृत्वान्तरेणापि शकारमन्त्ये ऽल्यनुसंहारं बाधित्वा सर्वादेशो भविष्यति किं शकारेण, यद्वाध्यायपरिसमाप्तेरयमधिकारः, "आद्ये योगे न व्यवाये तिङः स्युः" आद्ये योगे तिबादि सूत्रे येऽमी लावस्थायां स्यादयो विधीयन्ते तेषु कृतेषु तैर्व्यवधाने तिबादयो न स्युः, करिष्यति हरिष्यति कर्त्ता, शबादिषु तु न दोषः, तेषां सार्वधातुकाश्रयत्वादकृते लादेशे प्राप्त्यभावात् तिबादयश्च तत्र सावकाशाः, "न स्यादेत्वं टेष्टितां यद्विधत्ते" व्यवाय इत्येव पचते यजते, क्व तर्हि स्यात् आस्ते शेते धत्ते वन्धे वेभिदाते इत्यादौ यत्र न विकरणाः सन्ति "एशः शित्त्वं" लिटस्तझयोरेशित्ययमेशिशित्कर्त्तव्यः, एतच्चोपक्रम एव व्याख्यातं, "यच्च लोटो विधत्ते" तच्च विकरणव्यवाये न स्यात् 'लोटो लङ्वत्' 'एरुः' 'सेर्ह्यपिच्चे'त्यादि । पचतु

**यस्यस्येति ।** (कै)

**परस्मैपदानामित्यनेन ॥ भाष्ये**

**सार्वधातुके विकरणा इति ।** (भा)

**विषयसप्तम्यां तु परिभाषाबाधः स्यादिति भावः ॥**

**आप्नोति ।** (भा)

**सिद्धमिति शेषः ॥ कथं तत्राह**

**धातुग्रहणमिति ।** (भा)

**टेरेत्वसिद्धये विषयसप्तमीवादिनोऽपि विहितविशेषणमावश्यकमिति भावः ॥**

---

तथा कृत्संज्ञा उपपदसंज्ञा चास्मिन्नेव धात्वधिकारे यथा स्यादित्येवमर्थमपीदम् । अन्यथा पूर्वत्रापि स्यात् ततश्च करिष्यतीत्यत्र स्यप्रत्ययस्य

पचतमित्यादि, स्तौतु जुहोतु भिनत्तु आस्तामित्यादावेव स्यात्, "यथाप्राप्तं लङ्लिङोस्तश्च न स्यात्, 'नित्यं ङितः'" इतश्च, 'तस्थस्थमिपां तान्तन्तामः' 'लिङः सीयुट्' 'यासुट् परस्मैपदेषूदात्तो ङिच्चे'त्यादि, तथा 'थासः से' पचस इत्यादौ न स्यात् । नैष दोषः । विहितविशेषणं विज्ञास्यते धातोर्विहितस्य लोट इति, यद्येवं 'विदो लटो वे'त्यत्रापि विदेर्धातोर्विहितस्य लटस्तिबादीनां णलादय इति विज्ञायमाने विन्दति विन्दतः विन्दन्तीति लाभूतार्थस्य विकरणेन व्यवायेऽपि णलादयः प्राप्नुवन्ति, न क्वचिद्विहितविशेषणं धातुग्रहणमिति सर्वत्र तथा भवितव्यम् । अथ वात्र धातुना विहितं विशेषयिष्यामो विदिनाऽऽनन्तर्यं, धातोर्विहितस्य लटो विदेरनन्तरस्येति, 'सिजभ्यस्तविदिभ्यश्चे'त्यत्रापि धातुना विहितं विशेष्यते अभ्यस्तेन चानन्तर्यं धातोर्विहितस्याभ्यस्तादनन्तरस्य ङितो झेर्जुसिति त

**अपिबन्निति ।** (भा)

अवेकादेशस्य परादिवत्त्वेन ग्रहणादिति भावः ॥

**लङः शाकटायनस्येति ।** (पा)

जुस् प्राप्तिः । वस्तुतः क्वचिद्विहितविशेषणमिति सर्वत्र तदेवा-श्रयणीयमिति न नियम इति न दोषः ॥ भाष्यकारस्तु यथा-श्रयणेऽपि अभ्युपेत्यवादेन दोषाभावं प्रतिपादयति । भाष्ये

**चक्रकमव्यवस्थेति ।** (भा)

चक्रकरूपाऽव्यवस्थेत्यर्थः ॥

**आयन्नादिष्विति ।** (कै)

आदिना ऽज्झोन्तस्यापि ग्रहादिति भावः ॥

कृत्संज्ञाया कृदन्तस्य प्रातिपदिकत्वे सोरुत्पत्तिः स्यात् । एकवचनस्यौ-त्सर्गिकत्वात् । प्रातिपदिकार्थेति सूत्रे वचनग्रहणाच्च । तथा च्लिलुङी-

चत्विष्यन् अजागरिष्यन्नित्यादौ न भविष्यति, आत इत्यत्र कथं, यदि तावद्धातोर्विहितस्याकारादनन्तरस्येति अलुनन् अपुनन् अत्रापि प्राप्नोति, अथ आकारान्ताद्धातोर्विहितस्येति, अपिबन्नित्यत्र प्राप्नोति, अस्तु धा-तोर्विहितस्याकारादनन्तरस्येति अलुनन् अपुनन् इत्यत्र लुना झि इति स्थिते 'श्नाभ्यस्तयोरातः' इति लोपे कृते आकाराभावान्न भविष्यति नात्र लोपः प्राप्नोति 'ई हल्यघोः' रितीत्वेन बाध्यते एवमप्याकारान्न भविष्यति, नात्वं प्राप्नोति अन्तिभावेन बाध्यते, नाप्यन्तिभावः प्राप्नोति जुसभावेन बाधनात्, तदेवं लोप ईत्वेन ईत्वमन्तिभावेन अन्तिभावो जुसभावेन जुसभावो लोपेन लोप ईत्वेनेति चक्रकमव्यवस्था प्राप्नोति । नैष दोषः । आयन्नादिषूपदेशिवद्वचनादुपदेशकाल एव

## उपदेशकाल एवेति । (कै)

उपदेशोत्तरकाले कार्यान्तरात्पूर्वमेवेत्यर्थः ॥ भाष्ये

## अन्तिभावे कृते लोप इति । (भा)

न चान्तरङ्गत्वात्पूर्वङ्कृतेऽप्यन्तौ लोपात्पूर्वं स्थानिवद्भावेन झित्वाद् जुस्प्राप्नोति । अनाङ्गत्वे नान्तरङ्गत्वादिति वाच्यम् । झेर्जुस्त्यत्रैकारस्योच्चारणार्थत्वेनाल्विधित्वेन स्थानिवत्त्वाभाव इत्याशयात् ॥ वस्तुत आत इत्यत्र सिज् ग्रहणानुवृत्तेस्तत्सूत्रस्थभाष्ये

## च्लि लुङीति (पा)

सूत्रस्य भाष्ये चोक्तत्वेन न क्वापि दोषप्रसङ्ग इति ध्येयम् । प्रकृत सूत्रस्थभाष्यं त्वेकदेश्युक्तिः ॥

तस्य लुङन्त उपपदे च्लिरित्यर्थः स्यात् । तामन्यपविधेश्च पूर्वत्र प्रवृत्तौ क्त्वादिभिः सिचः समावेशः स्यादिति । तस्मात् धातोरिति कर्तव्यमिति

भस्यान्तिभावे कृते लोपो लोपेन व्यवस्था, किं चात इत्यत्र सिज्ग्रहणमनुवर्तते आकारान्तात्सिज्लुगन्तादिति तेन न क्वाप्यनिष्टप्रसङ्गः, तदेवमाध्यायपरिसमाप्तेर्द्धात्वधिकार इति स्थितं. वक्ष्यति 'तव्यत्तव्यानीयरः' इति, किं च स्यात् यदि तव्यादिविधौ धातोरिति नानुवर्तेत डग्राम्यातिपदिकादपि तव्यादयः स्युः, साधने तव्यादयो विधीयन्ते साधनं च क्रियायाः क्रियाया अभावात्साधनाभावः साधनाभावात् डग्राम्यातिपदिकात्तव्यादयो न भविष्यन्ति, कथं तर्हि कर्मादिषु विधीयमाना द्वितीयादयो भवन्ति, नैव प्रातिपदिकार्थस्य साधने द्वितीयादयः किं तर्हि शब्दान्तरवाच्यक्रियापेक्षे तस्यैव कर्मादिभावे, तव्यादयस्तु प्रकृतिवाच्यक्रियापेक्षे साधने चरितार्था न डग्राम्यातिपदिकाद्भविष्यन्ति, इदं तर्हि

द्वितीयादिति। (कै)

नहि यथा शब्दान्तरवाच्यक्रियापेक्ष स्वप्रत्ययार्थस्य कर्मत्वे विधीयन्ते तथा तव्यादयोऽपि स्युरित्यर्थः॥ द्वितीयादिभ्यो वैषम्यमुपपादयति

प्रकृतीति॥ (कै)

येऽपभ्रंशेति। (कै)

स्वपभ्रंशत्वात्क्रियावाचकत्वमेषामस्तीति भावः॥

ततः प्रत्ययोत्पत्तिरिति। (कै)

सुपितीत्येतद्घटकात्सुपेरित्यर्थः॥ भाष्ये

कृत्संज्ञा च प्रयोजनमिति। (भा)

एतद्धात्वधिकारे धातोर्विहितस्य कृत्संज्ञकत्वमन्यथा स्यादीनामपि तत्त्वं स्यादिति भावः॥ एवं क्विलुङीत्यादेर्लुङन्ते उपपद इत्यादिक्रमेणार्थः स्यादिति बोध्यम्॥

---

स्थितम्। एतच्च शक्यं प्रत्याख्यातुम्। तथाहि। शमिधातोरिति यद्धातुग्रहणं तदेव द्वितीयं सार्वधातुकार्द्धधातुसंज्ञयोरनुवर्तिष्यते।

---

प्रयोजनं सत्याशवयेत्यादयो येऽपभ्रंशाः क्रियावचनास्तेभ्यस्तव्यादयो मा भूवन्निति, नहि ते धातवः, भूवादिपाठाश्रयत्वाद्धातुसंज्ञायाः, किं च सोपसर्गात्लुङादयो मा भूवन्निति धात्वधिकारः क्रियते। अन्यथा प्राकरोत्प्रास्थित अध्यैष्टेति धातूपसर्गसमुदायस्य विशिष्टक्रियावचनत्वात्ततः प्रत्ययविधावङ्संज्ञायामडादिप्रसङ्गः, चोदयति। 'धातुग्रहणमनर्थं यङ्विधौ धात्वधिकारादिति'। धातोरेकाच इत्यत्र यङ्विधौ धात्वधिकारादिति

**अधिकारादप्येत इति ।** (भा)

कृदतिङ् तत्रोपपदमित्यनयोरधिकारत्वादित्यर्थः ॥ ननु चुरादिभ्य इत्यनेन स्वार्थे विधानात् प्रयोजकव्यापारे णिजर्थं हेतुमति चेत्यावश्यकमत आह

**यद्यविशेषेणेति ॥** (कै)

**हेतुमत्यपीति ।** (कै)

अपिना स्वार्थरूपकरणसंग्रहः ॥ नन्वेवं चुरादिग्रहणमेव ज्ञापकं किमिति नोक्तमत आह

**चुरादीति ।** (कै)

प्रातिपदिकाद्धात्वर्थे संग्रामयुद्ध इत्यादितद्गणपठितेभ्यो धातुभ्यो णिजर्थमित्यर्थः । परे तु चुरादिग्रहणं स्वार्थरूपकरणे विध्यर्थमन्यथान्यधातुभ्य इव तेभ्योऽपि प्रयोजकव्यापाररूपे करणे एव स्यात् । एवं च प्रातिपदिकाद्धात्वर्थे इत्यस्यानार्षत्वेऽपि न दोष इत्याहुः ॥

---

कृदुपपदसंज्ञे वाक्यरूपविधिस्य अधिकारेणैव व्याख्यास्यते । "प्रत्ययः" "परश्चे"त्यादिवत् । तेन पूर्वत्र न तत्प्रसङ्गः ॥

---

धातोरेकाच इत्यत्र यङ्विधौ यद्धातुग्रहणं तस्येहाधिकारादित्यर्थः । परिहरति । 'कृदुपपदसंज्ञार्थं त्विति' । एतदेवव्याचष्टे । 'अस्मिन्निति' । अस्मिन्नेवेत्यवधारणं इत्थं तद्दर्शयति । पूर्वत्र मा भूतामिति' । असत्यस्मिन्नधिकारे धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदमित्येतावानर्थः स्यात् ततश्च पूर्वत्रापि स्यात् 'च्लि लुङि' लुङन्त उपपदे च्लिरिति, एवं कृत्संज्ञापि धातोर्विहितस्यातिङो भवतीति पूर्वत्रापि स्यात् ततश्च करिष्यतीत्यत्र स्यप्रत्ययस्य कृत्संज्ञायां कृदन्तं प्रातिपदिक-

**धातुमात्राद्यक इति। (कै)**

धातुमात्राद्यको विधायकेन तेषामपि यकः सिद्धत्वादित्यर्थः॥

**विहितविशेषणेति। (कै)**

स्वरितत्वद्वयं प्रतिज्ञाय तत्सामर्थ्याद् धातोरित्येवं विहितेत्यर्थः कार्य इति भावः॥ तदाह

**जुगुप्सत इत्यादि॥ (कै)**

नन्वेकेन धातुग्रहणेन कथमेषोऽर्थो लभ्येतात आह

**शमिधातोरिति॥ (कै)**

वासरूप इत्यप्यधिकार एवेति। एतदभावे क्सादिभिः सिचः समावेशः स्यादिति न शङ्क्यम्॥

---

मिति प्रातिपदिकत्वे सति तिङोऽप्येकत्वे वचनग्रहणादेकवचनस्य चोत्सर्गत्वात्सोरुत्पत्तिः प्रसज्येत तस्मादस्मिन्नात्वधिकारे यथा स्यातां पूर्वत्र मा भूतामिति पुनर्द्धात्वधिकारः क्रियते। ननु चाधिकारेण ते संज्ञे विधास्येते प्रत्ययसंज्ञा [illegible] तत्र ते पूर्वत्र भविष्यत इत्याशङ्क्य प्रयोजनान्तरमाह 'आर्द्धधातुकसंज्ञार्थं चेति'। कः पुनरार्द्धधातुकसंज्ञायां द्वितीयधातुग्रहणस्योपयोग इत्यत आह। 'धातोरित्येवं विहितस्येति'। 'लुभिरिति'. अत्र सत्यपि प्रातिपदिकत्वे धातुत्वमप्यस्ति पूर्वप्रवृत्ताया धातुसंज्ञाया अनिवर्तनात् ततश्च धातोरेवायं विहित इति आर्द्धधातुकसंज्ञा स्यादेव, यदि तु शमि धातोरित्यत्र धातुग्रहणस्य द्वितीयस्यार्द्धधातुकसंज्ञार्थं स्वरितत्वं प्रतिज्ञायेत अयमप्यधिकारः शक्योऽकर्तुं वासरूपविधिरप्यधिकारेण सिद्धस्तेन क्सादिभिः सिचः समावेशो न भविष्यति।

# तत्रोपपदं सप्तमीस्थम् । ३ । १ । ९२ ॥

ननु स्थग्रहणाभावे सप्तम्या एव संज्ञा स्यादत आह

सप्तमी शब्देनेति । (कै)

सूत्रस्थसप्तम्यन्तपदनिर्दिष्टं सप्तमीपदेन लक्ष्यत इत्यर्थः ॥ ननु प्रत्ययग्रहणे तदन्तग्रहणात्कथं सप्तम्या एव संज्ञा इत्यत आह

संज्ञेति ॥ (कै)

नन्वेवमुपपदसमासोऽपि सप्तमीमात्रस्य स्यादत आह

समासस्त्विति । (कै)

सूत्रे सप्तमीपदं विभक्तिपरं स्वरूपपरं वा । आद्ये सप्तम्या एव संज्ञा । अन्ये तु यत्र सप्तमीपदं तत्रैव स्यादित्याह

---

तत्रोपपदं सप्तमीस्थम् ॥ सप्तम्यन्ते पदे कर्मणीत्यादौ प्रतिपाद्यत्वेन स्थितं कुम्भादिकं सप्तमीस्थं तद्वाचकं पदमुपपदसंज्ञं स्यात् । तस्मिन्न सत्येव वक्ष्यमाणः प्रत्ययः स्यात् । महासंज्ञाकरणसामर्थ्यात् । पदमत्र संज्ञि । तेन समर्थपरिभाषा व्याप्रियते । संज्ञाप्रदेशा उपपदमतिङित्यादयः ।

---

"तत्रोपपदं सप्तमीस्थम्" ॥ सप्तमीस्थमित्यस्यार्थमाह । 'सप्तम्या निर्दिष्टमिति' । सप्तम्या विभक्त्योच्चारितमित्यर्थः । सप्तम्यन्तेन पदेन प्रतिपादितमिति वा, अस्मिन्पक्षे सूत्रे सप्तमीशब्देन सप्तम्यन्तमुच्यते सप्तम्यन्ते पदे कर्मणीत्यादौ प्रतिपाद्यत्वेन स्थितं कुम्भादिकमित्यर्थः, प्रथमे तु पक्षे कर्मणीत्यादेर्यः सप्तम्या निर्देशः स एव कुम्भमित्यादेरपि

**यद्देति॥ (कै)**

**तथा सति। (कै)**

तद्देत्यर्थः॥

**इत्यादाविति। (कै)**

आदिना सप्तम्यां चोपपीडेति संग्रहः॥ ननु स्थग्रहणेऽपि कुम्भादीनां सप्तमीस्थत्वाभावात्कथमुपपदत्वं तत्राह

**स्थग्रहणेत्विति। (कै)**

अयं भावः। सप्तमीपदं तदन्तपरं संज्ञाविधौ प्रत्ययांशे तदन्तविधिप्रतिषेधस्तु उद्देश्यप्रत्ययांश एव। तत्स्थत्वं च। तद्वाच्यत्वमिति॥ तदाह

**गौणसप्तम्युपलक्षितस्येति। (कै)**

गौणसप्तम्यन्तपदबोध्यस्येत्यर्थः॥

---

प्रयोगगतस्य सप्तम्या निर्देशः। यथा 'तस्यापत्य' मित्यादौ तस्येति सामान्यं विशेषोपलक्षणार्थमिति तदीयमेव प्राथम्यं विशेषाणामपि भवति तद्वदत्रापि। 'कुम्भकार इति'। अत्रोपपदत्वात्समासः कृदुत्तरपदप्रकृतिस्वरत्वं च भवति। 'स्थग्रहणमित्यादि'। सूत्रेषु यः सप्तम्या विभक्त्या निर्देश। उच्चारणं सप्तम्यन्तेन वा पदेन प्रतिपादनं तदेव संज्ञाङ्गमिति प्रतिपत्त्यर्थमित्यर्थः। ननु सप्तमीशब्देन साहचर्यात्सूत्रादिषु सप्तम्या निर्दिष्टं ग्रहीष्यते नार्थ एतदर्थेन ग्रहणेन तत्राह। 'अन्यथा हीति'। मुख्यार्थसंभवे गौणस्याग्रहणात् सप्तम्या एव संज्ञा स्यात् संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात्, न चासतस्संबन्धिनः संज्ञा युक्ता

**धातोरित्यनुवर्त्तनादिति।** (कै)

धातोरित्यधिकारविहितप्रत्ययविधौ सप्तमीस्थमित्यर्थादिति भावः॥ धातोरित्यनुवृत्त्यापतीवृत्तार्थालाभादाह

**अथवेति॥** (कै)

**यत्रैवेति।** (भा)

न तु "ङ्मिलुकौ"त्यादाविति भावः॥

**उपपदसंज्ञा सिद्धा भवतीति** (भा)

भाष्यस्यापीष्टविषये स्फुटतया सिद्धा भवतीत्यर्थः॥

**विभक्तिमन्तरेणेति।** (कै)

तामन्तरेण कर्मत्वाभावादित्यर्थः। शब्दस्य कर्मत्वादि हि तद्विशिष्टार्थवाचकत्वमेवेति भावः॥

**चतुष्कपक्ष इति।** (कै)

संख्यातिरिक्तं चतुष्कं प्रातिपदिकार्थ इति पक्ष इत्यर्थः॥

---

विधातुमिति यत्र सप्तमी श्रूयते तत्रैव स्यादित्यर्थः। 'स्तम्बेरम इति'। 'स्तम्बकर्णयोरमिजपोरित्यच् 'तत्पुरुषे कृति बहुल' मित्यलुक्। 'यत्रेति'। यत्र सूत्रे सप्तमीश्रुतिः सप्तमीशब्दस्य श्रवणमित्यर्थः। 'अप्रशब्दसंज्ञेति'। स्वरूपग्रहणप्रतिषेधादभ्युपगम्य वादोऽयं सर्वथेष्टं न सिद्ध्यतीत्यत्र तात्पर्यम् 'स्वग्रहणात्त्विति'। स्वग्रहणे सति सौत्रसप्तम्युपलक्षितस्य संज्ञाविधानात्सर्वत्र सिद्ध्यतीत्यर्थः। ननु च लघ्वर्थं संज्ञाकरणं तत्किमर्थं गुर्वी संज्ञा क्रियत इत्यत आह। 'गुरुसंज्ञाकरणमिति'। उपोच्चारितं पदमुपपदमित्येवमर्थानुगता संज्ञा अन्वर्थसंज्ञा। 'समर्थ-

## प्रातिपदिकस्यैवेति । (कै)

चिन्त्यमिदम् । पञ्चकपक्षेऽपि द्योतकसमभिव्याहारं विना प्रातिपदिकमात्रस्य तद्बोधकत्वाभावात् । प्र विना जयतेः प्रकृष्टजयबोधकत्वात् । एवं च तत्पक्षेऽपि पदविधित्वं दुर्वारमेव तस्मादेवमत्र भाष्यार्थः । सुबन्तत्वेन पदत्वेन वा यत्र निमित्तता तत्रैव तत्परिभाषा प्रवृत्तिरिति । प्रकृते तदभावात्परिभाषानुपस्थित्या समर्थमुपपदमिति । सामर्थ्यं च प्रत्यासत्त्या प्रत्ययार्थेनैवेति बोध्यम् । प्रत्ययस्योत्पत्तौ निमित्तं यत्समर्थं सप्तम्यन्तपदवाच्यं तदेवोपपदसंज्ञमिति वक्तव्यमित्यर्थः ॥ ननु महान्तं कुम्भमिति स विशेषणे कथं सामर्थ्यमत आह

## महत्त्वयुक्तस्येति । (कै)

विशिष्टस्यैव कर्मत्वेन विशिष्टेन सामर्थ्यमस्तीति भावः ॥

## तदा न भवितव्यमिति । (भा)

भाष्ये अणेति शेषः । "तदा च प्राप्नोती"त्यत्रापि अण् इत्येव शेषो न तु महाकुम्भकार इति तद्भ्रमयन्नाह

---

परिभाषाव्यापारार्थमिति'। इह यदा स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः प्रातिपदिकार्थस्तदा नान्तरेण विभक्तिं कर्माधिकरणाद्युपपदमुपपद्यत इत्यवश्यमुत्पाद्या विभक्तिरिति पदविधित्वादेव सिद्धः परिभाषाव्यापारः, पञ्चकपक्षे तु प्रातिपदिकस्यैव कर्माद्यभिधायित्वेन पदविधित्वाभावात्परिभाषाव्यापारो न स्यादित्यन्वर्थया संज्ञया बलात्प्रवर्त्यते । नैतदस्ति । पञ्चकपक्षेऽपि विभक्त्युत्पत्त्या पदत्वे सत्येव प्रत्यय इति प्रतिपादनात्, ननु गतिकारकोप-

## महच्छब्देन समासो न स्यादिति । (कै)

कारार्थविशेषणतयोपस्थितस्येतरविशेष्यत्वासम्भवेन महच्छब्देन कुम्भशब्दस्य कर्मधारयो न स्यादिति भावः ॥ बहुत्ववचनेनोत्तरपदे "विशेषणं विशेष्येण" त्यस्य तत्प्रपञ्चभूतानां पूर्वनिपातनियमार्थानां च निवृत्तेः समर्थसूत्रे भाष्ये ध्वनितत्वादिति । निरूपितं समर्थसूत्रे भाष्ये । न च पूर्वं कर्मधारय उपपदसमासस्य परत्वादिति बोध्यम् ॥ ननु समुदायेनैव उपपदसमासो भविष्यतीत्यत आह

## सुबन्तसमुदायस्येति । (कै)

वस्तुतः प्रथमान्तनिवृत्तावपि समुदायेन समासेऽपि कुम्भशब्दस्योत्तरपदत्वाभावादात्वाभावे महत्कुम्भकार इत्यनिष्टस्यापत्तिरिति भाष्याशयः । यदुक्तं कुम्भशब्दस्य कारशब्देन समास इति तदपि चिन्त्यम् । कुम्भशब्दस्य केवलस्य विशेषणत्वेनासामर्थ्यात् समास-

---

पदानां द्वन्द्विश्चाह समासवचनं प्राक् सुबुत्पत्तेरिति वचनात्कथमुपपदस्य सुबन्तत्वं, साधि स्मर्त्ता भवान्, 'उपपदमतिङ्' इत्यत्र हि सुपेति तृतीयान्तमेव निवृत्तं सुबिति प्रथमान्तमनुवर्त्तत इत्यवोचाम कथमपरथा चर्मकारादौ नलोपादि स्यात् 'पश्य कुम्भं करोति कटमिति'। धातोरिति वर्त्तते कर्मादिशब्दाश्च संबन्धिशब्दाः तत एवं विज्ञास्यामो यस्य धातोर्यत्कर्मेति एवमपि महान्तं कुम्भं करोतीत्यत्र प्राप्नोति न वा भवति महाकुम्भकार इति भवति यदैतद्वाक्यं महान् कुम्भो महाकुम्भः महाकुम्भं करोतीति, यदा त्वेतद्वाक्यं महान्तं कुम्भं करोतीति तदा नेष्यते,

विधौ समर्थपरिभाषोपस्थानेन समासाप्राप्तेः। भाष्यं तु सर्वथा समासाभावेऽप्यणापत्तिपरतया योजयितुं शक्यमेवेति दिक्॥

यावता चेदानीमिति (भा)

भाष्यमवतारयति

कुम्भमित्येतत्तु यद्यपीति। (कै)

समाधानाशयमाह

तथापीति। (कै)

भाष्ये गन्धशब्दः सम्बन्धवाची। स च महासंज्ञाबलात्प्रत्ययविधौ पदत्वेन निमित्तत्वंस्पष्ट एव। असामर्थ्यात्प्रत्ययाभावे चोपपदसंज्ञापि फलाभावान्नेति। उपपदसंज्ञायां समर्थवचनमनर्थकमिति भावः। एवं च सुबन्तस्यैवोपपदत्वं स्तम्बकर्णयोरित्यादौ तु तत्प्रकृतिके लक्षणा। इदमेवाभिप्रेत्योपपदमतिङिति सूत्रे प्रथमान्तसुप्पदस्यापि निवृत्तिर्भगवतोक्तेति दिक्॥

---

किं च स्याद् यद्यत्र स्यात् कुम्भशब्दस्य कारशब्देन समासे कृते तदर्थे एकार्थीभावात् मत्वशब्देन समासो न स्याद् अन्वर्थत्वादेव संज्ञायाः सप्तमीनिर्दिष्टत्वेऽपि प्रकृत्यर्थविशेषणात्तद्विशेषणानां च उपोच्चारितपदत्वाभावादुपपदसंज्ञा न भवति, अथ तत्रग्रहणं किमर्थं धात्वधिकारः प्रतिनिर्दिश्यते तत्रैतस्मिंस्तृतीये धात्वधिकार इति, नैतदस्ति प्रयोजनम्, अधिकारादप्येतत्सिद्धम्, इदं तर्हि प्रयोजनं सप्तमीस्थस्य प्रत्ययोत्पत्तिं प्रति निमित्तत्वं यथा स्यादिति, कथं प्रत्यय इति वर्तते सप्तमीस्थमुपपदसंज्ञं भवति तत्र चोपपदे सत्येव प्रत्यय इति, अथ कर्मणीत्या-

**कर्मत्वं मन्यते इति ।** (कै)

घञादिवदिति शेषः ॥ तत्र हेतुमाह

**सत्त्वेति ।** (कै)

घञ्प्रत्ययेऽपि स्वाश्रयसत्त्वभावस्य निवृत्तौ मानाभावादिति भावः ॥

**सत्त्वभूतस्येति** (कै)

पाठेऽपि भावे क्तः ॥

**प्रकृतिविवक्षायामिति ।** (भा)

भाष्यस्य प्रकृतेर्विकृत्यभिन्नत्वेन विवक्षायां विकृतिवाचकात् घञिरित्यर्थः ॥ तत्फलितमाह

**प्रकृतीति ॥** (कै)

**तत्रावश्यमिति ।** (भा)

नन्वेवं नित्यसापेक्षत्वेनासामर्थ्याभावादण् दुर्वारः तदनपेक्षायां घेरभावेन ल्युडन्तस्य नित्यसापेक्षताया उपपादितत्वादिति चेदत्र महद्भिर्यत्नोऽयम् । मम तु प्रतिभाति । न नित्यसापेक्षत्वं वृत्तौ

दिका सप्तमी तत्कृतोऽसत्युपपदे प्रत्ययप्रसङ्गः, न कर्मणीत्यादिका सौत्री सप्तम्यर्थापेक्षा तथा हि सप्तम्याः प्रत्ययस्याभिधेयं कर्म स्यात् यथा 'धः कर्मणि ष्ट्रन्'ति तथा चोपपदत्वं न प्रतीयेत अतो यथेत्संज्ञार्थमनुनासिकत्वं प्रतिज्ञायते तथार्थनिरपेक्षा केवलमुपपदसंज्ञाया लिङ्गं सप्तमी तथा च धातोरण् भवति कर्म चोपपदमित्येतावानर्थः स्यात् कर्मणः

प्रयोजकं किं तु गमकत्वम् । एवं च नित्यसापेक्षत्वेऽप्यगमकत्वान्न वृत्तिः । काण्डकटीकारमित्यत्र तु गमकत्वाद्भवत्येवेति स्पष्टं चेदं समर्थसूत्रे सुप आत्मन इति सूत्रे च भाष्ये सूक्ष्मदृशाम् ॥ भाष्ये

अधिकारादपीति । (भा)

नन्वधिकारादेतस्मिन्धात्वधिकारे इत्यर्थवत् तत एव प्रतिसूत्रमुपपदसंज्ञाविधानेन संनियोगशिष्टन्यायात्तत्र सत्येव प्रत्ययो भविष्यति किं तत्र ग्रहणेनेति चेन्न । तदभावेऽस्यासंनियोगशिष्टत्वमपि सम्भाव्येतेति स्पष्टप्रतिपत्त्यर्थमिति तत्त्वम् ॥

---

प्रत्ययोत्पत्तिं प्रति निमित्तत्वं न प्रतीयेत तस्मात्तदर्थं तत्रग्रहणं, किमिदानीं हेय एवायं ग्रन्थस्तत्रैतस्मिन्धात्वधिकार इति, न ब्रूमो हेय इति सोपस्कारस्तु भवति एतस्मिन्धात्वधिकारे यत्सप्तम्या निर्दिष्टं तदुपपदसंज्ञं भवति तत्र च सति प्रत्यय इति ॥

# कृदतिङ्। ३। १। ९३॥

भाष्ये एकदेश्याह

पचती- (भा)

त्यादि॥ शङ्कितात्

शक्यमकर्तुमिति॥ (भा)

तदुपपादयति स एव।

धातोः परस्येति। (भा)

धातोरिति पदमुच्चार्य धातोः परत्वेन विहितस्येत्यर्थः॥ अत एव वक्ष्यति।

---

कृदतिङ्॥ अस्मिन् धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात्। कर्तव्यम्। करणीयम्। अतिङ् किम्। चीयात्। संज्ञाप्रदेशाः कृत्तद्धितसमासाश्चेत्येवमादयः। अतिङिति शक्यमकर्तुम्। कथं चीयादिति। ज्ञापकात्सिद्धम्। अकृत्सार्वधातुकयोरिति सूत्रे अकृदित्येव सिद्धे पुनः सार्वधातुकग्रहणं ज्ञापयति न तिङां कृत्संज्ञा भवतीति। न च श्यन्निवृत्त्यर्थं सार्वधातुकग्रहणमिति वाच्यम्। दिवादिषु कृत्स्वान्तस्य

---

“कृदतिङ्”॥ ‘तिङ्वर्जित इति’। तिङ्त्वेन व्याप्तिङ्त्वेन रहितः, तिङोऽन्य इति यावत्। ‘अतिङिति किमिति’। इह क्रियमाणोऽप्ययं प्रतिषेधः स्वाश्रयामेव तिङः कृत्संज्ञां बाधितुं प्रभवति न तु लकारस्य कृत्त्वात्स्थानिवद्भावेन प्राप्ताम् अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति

प्राक्च लादेशाद्धात्वधिकार इति । (भा)

एवं च तिङ्षु कृत्संज्ञाया अप्राप्त्या निषेधो व्यर्थ इति भावः ॥ तत्सार्थक्यमेकदेशी प्रकृते ।

एवमपीति ॥ (भा)

सिद्धान्ती शिष्यबुद्धिपरीक्षायै प्रतिबन्दीमाह

अथेति ॥ (भा)

एकदेश्याह

प्रतिषेधेति । (भा)

तृतीयाध्यायान्तं धात्वधिकारे तिङो व्यावृत्त्या तत्सार्थक्यमत आह

अथवेति ॥ (भा)

तिङ्भावीति । (भा)

अत एव "आमेत" विषयलकारस्य कृत्त्वं भवत्येव । तस्य तिङ्भावित्वाभावात् । तिङ्भावित्वस्य फलोपहितस्यैव निवेशात् ॥

---

दीर्घाङ्कस्याभावेन आवर्त्याप्रसिद्धेः । भाष्ये तु तिङां कृत्संज्ञायामिष्टापत्तिः कृता । न चैवं तिङन्तस्य प्रातिपदिकत्वात्स्वाद्युत्पत्तिः स्यादिति वाच्यम् । तिङा एकत्वादेरुक्तत्वात् । न च वचनग्रहणसामर्थ्यादुक्तेऽपि तदापत्तिः ।

वचनादिति मत्वा प्रश्नः, तिङ्भाविनो लकारस्यैव कृत्संज्ञा प्रतिषिध्यते प्रतिषेधसामर्थ्याद्वा स्थानिवद्भावो न भविष्यतीत्युत्तरम् । 'चीयात्स्तूयादिति' । ननु च ज्ञापकादेतत्सिद्धं यदयमकृत्सार्वधातुकयोरिति पृथक्

मूलोच्छेद इति। (कै)

मूलभूते लकार एव कृत्वोच्छेदः क्रियत इत्यर्थः॥ भो भगो इति सूत्रभाष्योक्तरीत्या लुग्विधित्वाच्च स्थानिवत्त्वप्रतिषेध इत्यपि बोध्यम्॥ अथ तृतीयाध्यायान्तं धात्वधिकारेऽपि भाष्ये फला भावाद्विषेधं प्रत्याख्यातुमाह

किं च स्यादिति॥ (भा)

एकत्वादिष्विति। (भा)

ननूक्तेऽपि एकत्वे एकशब्दात्कर्मत्वमात्रप्रतिपत्तये द्वितीयावत् पचति पच्यत्यादौ कर्मत्वोक्तये द्वितीया स्यात्। किं चैकवचन मुत्सर्ग इति तद् दुर्वारमिति चेन्न। कर्मत्वस्यापि वाक्येन प्रतीत्या तदनुत्पत्तेः तिङोक्ता इत्यस्य च तिङ् घटितवाक्योक्ता इत्यर्थः। एकत्वादिष्वित्यादिपदेन कर्मत्वादीनामपि ग्रहणं बोध्यम्॥ उत्सर्गो व्ययविषय एवेत्याशयात्॥

तिङन्तस्येति। (भा)

तदर्थक्रियाया इत्यर्थः॥ भाष्ये

---

एक इत्यादौ चरितार्थत्वात् अतिप्रायमेतमविद्वनो तिप्रह्नेत्यनेन तिङन्तानामसुबन्तत्वज्ञापनात् न चैवमपि पचति पठतीत्यत्र कृत्वस्य- पितिङन्तौति लुक्प्रसङ्गः लुग्विधौ धात्वादेरिति सूत्रात् धातुग्रहणा-

---

सार्वधातुके प्रतिषेधं प्राप्तिं तत् ज्ञापयति यक्रूदिति प्रतिषेधो न तिङ् भवतीति यदि स्यात् चिनुयात्सुनुयादित्यादौ सार्वधातुकेऽपि कृत्प्रतिषेधादेव दीर्घो न भविष्यति किं पृथक् सार्वधातुकपर्युदासेन, इह तर्हि पचति

## अथापि कथञ्चिद्योगः स्यादिति (भा)

योग इत्यस्य विधायकत्वाद् दृषदिपिष्टा इत्याद्यर्थ इव पचत्यादिभ्यः पच्यत्याद्यर्थे प्रत्ययः स्यादिति भावः ॥

## न तिङन्तादिति । (भा)

अयमत्राभिसन्धिः । तिङन्तानां कृदन्तत्वप्रयुक्तप्रातिपदिकत्वाभावो ज्ञाप्यत इति पचति भवतीत्यादौ प्रथमापि नेति बोध्यम् ॥ पचेरनित्यादौ न लोपश्चात एव न । अत एवाह नित्यादौ न दोषः ॥

## परशब्दस्येष्टेति । (कै)

अन्तवद्भावस्य प्रापकत्वेन स्थानिवद्भावस्याभावातिदेशकत्वेन निषेधकतया निषेधाश्च बलीयांस इति न्यायेनाचः परस्मिन्नित्यस्यैव प्रवृत्तिरित्यपि बोध्यम् ॥ यत्किञ्चित् स्थानिभूतादचः पूर्वधर्मावच्छिन्नोद्देश्यकत्वादचः परस्मिन्नित्यस्य प्रवृत्तिः । एतेनान्तवद्भावेन प्रवृत्तस्यैव कार्यमिति पूर्वविधभावात्कथं स्थानिवत्त्व-

---

गुहत्तेः । एवमपि चिकीर्षति जिहीर्षतीत्यादौ स्यादिति चेन्न । अपा व्यवधानात् । एकादेशे कृते नास्ति व्यवधानमिति चेन्न । एकादेशस्य पूर्वविधौ स्थानिवद्भावात् । न च स्थानिवद्भावं बाधित्वा परत्वादन्तवद्भावः ।

---

पठति 'ह्रस्वस्य पिति कृति तुगि'ति तुक् माभूदिति' तुग्विधौ धात्वादेरित्यतो धातुग्रहणमनुवर्त्तिष्यते, एवमपि चिकीर्षति जिहीर्षतीत्यत्र प्राप्नोति, अपा व्यवधानान्न भविष्यति, एकादेशे कृते नास्ति व्यवधानम्,

मिति परास्तम्। स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानम्। तक्रकौण्डिन्यन्यायस्यानवकाशविषयमात्त्वेन विधेयविषयकत्वेन चेदृशे विषयेऽप्राप्तेः। नच सूत्रेऽभावातिदेशस्याप्यङ्गीकारेण स्थानिनि सति भवतेस्तुक एकादेशेऽप्यभावातिदेशो बोध्यः। एतेन स्थानिवद्भावेऽपि शबन्तस्य शपा व्यवधानाभावात्तुक् दुर्वार इत्यपास्तम्। धीर्धियौ धिय इत्यत्र तु न दोषः। "ध्यायतेः सम्प्रसारणं चे"त्यनेन सम्प्रसारणे पूर्वत्वे हल इति दीर्घत्वे च कृते एकादेशस्य निवृत्तेस्तस्य स्थानिवत्त्वाप्रसक्तेर्जुहुवतुरित्यादावपि ह्वेञोऽन्तरङ्गत्वादात्वे वार्णादाङ्गमित्यालोपे सम्प्रसारणे एकादेशस्यैवाभावान्न दोषः। स्पष्टं चेदं सर्वत्र प्रसारणिभ्य इति वार्त्तिकभाष्ये। धियावित्यादावियङ् आकारात्पूर्ववृत्तिधर्मावच्छिन्नोद्देश्यकत्वाभावाच्च॥

तस्य प्रत्याख्यायमानत्वात्। न चैवमपि अतिङिति प्रत्याख्यायमाने पचेरन्नित्यत्र प्रातिपदिकान्तत्वान्नलोपः स्यादिति वाच्यम्। झस्यान्निति नकारोच्चारणसामर्थ्यादेव लोपाप्रवृत्तेः। इह तर्हि चीयादिति कृदकारत्वाद्दीर्घो न स्यादिति चेत्। नैष दोषः। सार्वधातुकप्रतिषेधो ज्ञापयति अकृतीति प्रतिषेधः तिङ्क्षु न प्रवर्तत इति। न चैवमपि तिङ्समासे

---

एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव, नात्र स्थानिवद्भावः प्राप्नोति परत्वादन्तवद्भावेन बाध्यते तस्माच्चिकीर्षतीत्यादौ लुङ् माभूदित्यतिङिति प्रतिषेधः कर्त्तव्यः, किं च तिङन्तस्य कृदन्तं प्रातिपदिकमिति प्रातिपदिकसञ्ज्ञायां पचेरन् नलोपः प्राप्नोति, पपाच ब्राह्मणौ

नकारोच्चारणेति । (कै)

समाध्यन्तरमपि प्रागुक्तम् ॥

पृथक् सार्वधातुकेति । (कै)

न च व्यर्थम् । दीर्घप्रवृत्तियोग्याजन्तेभ्यः श्यनभावात् ॥

## इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य प्रथमे पादे पञ्चमाह्निकम् ॥

इति वङ्गदेशीयकाश्यपगोत्रोत्पन्न-चट्टोपाध्यायवंशसमुद्भव-मञ्जुवल्लभ-शर्मविरचिते महाभाष्यप्रदीपोद्द्योतविषमपदव्याख्याने तृतीयाध्यायस्य प्रथमे पादे पञ्चमाह्निकम् ॥

---

कृदुत्तरपदस्वरः स्यादिति वाच्यम् । इष्टापत्तेः । यो जात एव पर्यभूषदित्यादौ तथैव पाठस्य निर्विवादत्वात् । गतिकारकोपपदात्कृदिति सूत्रे तदुपपदस्य प्रत्याख्यास्यमानत्वाच्चेति दिक् ।

टाप्प्राप्नोति, सर्वत्र च स्वाद्युत्पत्तिः प्रसज्येत तदेतदस्मादन्यार्थादितिष्ठिति प्रतिषेधादेव सिद्धे गौर्यादित्वादौ ज्ञापकमाश्रयितव्यमिति वृत्तिकारो मन्यते स्म ॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## वाऽसरूपोऽस्त्रियाम् । ३ । १ । ९४ ॥

ननु स्वरूपस्य निषेधे तदभाव एव स्यादतस्तत्पक्षे वाक्यार्थं दर्शयति

स्त्रियामित्युच्चार्येति ॥ (कै)

स्वरूपस्य (कै)

इत्यस्य स्वरूपपरस्येत्यर्थः ॥

---

वाऽसरूपोऽस्त्रियाम् ॥ परिभाषेयम् । अस्मिन्धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यत्रासरूपोपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते ।

---

"वा ऽसरूपोऽस्त्रियाम्" । असरूप इतिपदच्छेदः, अन्यथा लाघवे विशेषाभावःसन्देहार्थं सरूपोस्त्रियां वेति ब्रूयात्, अपवादविषयेपि केषां चिदुत्पत्तिर्यथा स्यादित्येवमर्थमिदं वचनं, यथोक्तम् असरूपस्य

निषेधः स्याद् (कै)

इत्यस्य निषेधान्वयान्वयित्वं स्यादित्यर्थः ॥ ननु ये विहितास्तेषां प्रतिषेधे विधिवैयर्थ्यं स्यात् । विहितप्रतिषिद्धत्वाद्विकल्पो वा स्यादत आह

स्त्रियां क्तिनिति । (कै)

तदधिकारे ये विहिता उत्सर्गास्तेषां वाऽसरूपविधिना प्रसक्तानां प्रतिषेधो बाधो "विज्ञास्यते" इति भाष्याक्षरार्थ इति भावः ॥ एवं चोत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशित्वे सति अस्त्रियामिति प्रतिषेध इति लभ्यते । अनेनापि यत्रासमावेश इष्टः सोऽनभिधानात्साध्यः ॥ भाष्ये

तत्रोत्पत्तिर्वा प्रसङ्ग इति । (भा)

उत्पत्तेर्वार्थः । विकल्पप्रसङ्ग इत्यर्थः ॥ ननु बाधकत्वविकल्पेनायं दोष इत्याशङ्क्य तद्विकल्प एव न सिद्ध्यतीत्याह

वा सरूप इति ॥ (कै)

असरूपोपवादो वा भवतीति । (कै)

अपवादपरवचमाणसिद्धान्ताभिप्रायेण ॥

---

एवञ्च ददातिदधात्योर्विभाषेत्यादिवद्वैकल्पिकत्वेनैव अपवादे शास्त्रात्प्र-मिते तद्वदेव पक्षे उत्सर्गः प्रवर्तते । इगुपधज्ञाप्रीकिरः कोपवादः तद्वि-

---

षयत्वमुत्सर्गस्य बाधकविषये निवृत्त्यर्थमिति, परिभाषा चेयम्, अस्मि-न्धात्वधिकारे स्त्र्यधिकारव्यतिरेकेण यान्यसरूपस्यापवादस्य विधायकानि शास्त्राणि तच्छेषभूता, तत्रतत्र वचने क्रियमाणे गौरवं स्यादिति बाधा-

**बहिरङ्गस्येति । (कै)**

शब्दानुपात्तस्येत्यपि बोध्यम् ॥ "इत्येतस्मि"न्नित्यन्तो भाष्ये च्छेदः ॥ भाष्ये

**यद्येतल्लभ्येतेति । (भा)**

अपवादपदाभावादपवादविषय एव विकल्प इत्यत्र मानाभावादपवादोत्सर्गोभयविषयो विकल्पः स्यात् । एवं च तद्धित इवोत्सर्गापवादयोर्विकल्पाद् यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गाप्रवृत्त्या पक्षेऽनुत्पत्तिरेव प्राप्नोतीति भावः ॥

**अपवादशास्त्रेणेति । (कै)**

कैयटोपपत्तिस्तु चिन्त्या ॥

**तद्धितेषु च सर्वमुत्सर्गापवादं विभाषेति (भा)**

दृष्टान्तेन सदृशार्थस्यैव लाभात् ॥

**सिद्धं तु (भा)**

इति भाष्ये बाधकपदे कृतेऽसरूपस्य बाधकस्यैव विकल्पे

---

पक्षे ण्वुल्तृचावपि भवतः । विक्षेपकः विक्षेप्ता विक्षिपः । नचैवमातोऽनुपसर्गेक इति कस्य विषये कर्मण्यणपि पक्षे प्रवर्तेत । सरूपोऽसाविति

---

रणसरूपेण परिभाष्यते, तत्र च असरूप इति अर्थं लभमानस्य विकल्पने सर्वस्यैवासरूपत्वात्किञ्चित्तदपेक्षया, ऽसरूपपद चैतत्सापेक्षं प्रतियोगिनि यतोऽत्र भिन्नरूपत्वमसरूपत्वमिष्यते, केन चिद्धि किञ्चित्सरूपमसरूपं वा भवति तत्र केनासरूप इत्यपेक्षायां सविधानवेलायां यः समि-

उत्सर्गविकल्पाभावात्सिद्धमिति भावः ॥ इदं चापवादशास्त्रेणैक-वाक्यतापन्नम् । न चैवम्

**असरूपो वा बाधको भवतीति** (भा)

भाष्येण बाधकत्वविकल्पप्रतिपादनं व्यर्थमिति वाच्यम् ।

**असरूपस्य बाधकस्य वा वचनादिति** (भा)

वार्त्तिकस्वारस्येनासरूपो बाधको वा भवतीत्येव भाष्येऽप्यथात् । वार्त्तिकाद्धि बाधकानुवादेन विकल्पविधिरित्येव स्वरसतो लभ्यते न तु बाधकत्वानुवादेनेति दिक् ॥ प्रत्यासत्त्या च यन्निरूपितं बाधकत्वं तस्यैव पक्षे ऽभ्यनुज्ञानमिति नातिप्रसङ्गः ॥ कैयटे

**बाधकत्वे विकल्पित** (कै)

इत्यादि । इदं चिन्त्यम् । वार्त्तिकोक्तबाधकपदार्थैकदेशस्य बाधकत्वस्य विकल्पेनान्वयायोगात् । किं च पक्षे बाधकत्वाभावे शस्निपोरिव समुच्चयः स्यादिति सहृदनिष्टं धर्मनिषेधे धर्म्यभावा-

---

चेत् । किं ततः । शास्त्रद्विशास्त्रेष्विकपदस्येव कविधौ वेति पदस्य उप-स्थितिर्हि स्यादेव । अन्यथा ग्वुलादेरपि दुर्लभत्वात् । सत्याञ्च वेत्यस्यो-पस्थितौ कथं सरूपस्यापि पक्षे प्रवृत्तिर्न भवेदिति चेत् । सत्यम् ।

---

न्विषये प्राप्तः स एव बुद्धिस्थः प्रतियोगी गम्यते, ऽपवादविधानसमये चौत्सर्गस्तमपि विषयमवगाढुमुपढौकमान उपारूढो बुद्धौ भवतीति तद-पेक्षया भिन्नरूपोपवाद एवात्रासरूपो विवक्षित इत्याह । 'असरूपोप वादप्रत्यय इति ।' एवं स्थिते यद्ययमुत्पत्तिविकल्पस्स्यादपवादप्रत्ययो वा भवतीति, ततः स्वविषये कामं विकल्पस्तस्य लभ्यते न तूत्सर्गः प्रवर्तेत

प्रतीतेः । अत एव "न वेति" सूत्रे साधुत्वविकल्पे पक्षे तस्यैवा-साधुत्वमापादितम् ॥

क्षिपेरिति । (कै)

धात्वर्थनिर्देशे इक् प्रत्ययः । इक् कृष्यादिभ्य इति इश्वा ॥

तथापीति । (कै)

कर्त्तव्यश्च तस्यापि सत्त्वादिति भावः ।

बाधकत्वं बहिरङ्गमपीति । (कै)

इदं चिन्त्यम् । सामर्थ्यादपवाद एवासरूपशब्देन विवक्षितो न तु उत्सर्गोऽपीति तु भाष्यतात्पर्य्यं बोध्यम् ॥ भाष्ये

अथवा समय इति । (भा)

एवं च समयैतत्सूत्रयोरन्यतरस्याश्रयाभावायासरूपपदेनापवाद एव गृह्यते इति भावः ॥ इहापि प्रमाणं चेत्किमेतावता तथाह

---

असरूपग्रहणसामर्थ्यात् यस्मात्यसरूपता तं प्रत्येवास्य पाक्षिकता । अन्ये तु प्रति बाधकतैवेति न कश्चिद्दोषः । ततः असरूपो ऽपवादप्रत्यय उत्सर्गस्य वा बाधकः स्यादिति फलितोऽर्थः । अस्त्रियां किम् । चिकीर्षा ।

---

तत्रातदित्यस्तो ऋसौ, उत्सर्गापवादशास्त्रयोर्हि प्रमितिव्यापारे पर्यव सिते पश्चादियमत्रैव प्रदेशे स्थिता ऽपवादस्य पक्षे प्रवृत्तिं प्रतिबध्नाति, अपवादशास्त्रेण यः स्वीकृतो विषयस्तद्व्यतिरिक्तविषया सामान्यशास्त्रस्य प्रमितिरित्यपवादस्याप्रवृत्तावपि नैवोत्सर्गस्य तस्मिन्विषये प्रमितिः प्रवृत्ति र्वोपपद्यते तद्धितवत्, तद्यथा दक्षस्यापत्यमत इञ् विकल्पिते पक्षे ऽण् न भवति अपि तु वाक्यमेव भवति तस्मात् हेतोः समर्थानां प्रथमाद्वेति

**समयस्येति** ॥ (कै)

**अर्थः प्रत्याययितुमिति** । (कै)

न च प्रत्ययानुत्पत्तौ प्रयोगे सामर्थ्यमस्ति

**न केवलाः प्रकृतिरिति** (कै)

निषेधात् । नापि प्रयुक्तादय बोध इति भाष्यार्थ इति भावः ।

**असरूपशब्देनेति** । (कै)

भिन्नरूपो वेत्युक्ते भावाभावयोः परस्परभिन्नरूपस्य सताप्रतीतिरिति नानेनोभयोरुत्सर्गापवादयोर्विभाषा बोधनम् । तथा सति पक्षे ऽनुत्पत्तिः स्यात् । सा च न रूपवतीति । अभावपक्षे न भिन्नरूपस्य सत्ता स्यादिति भावः । नन्वस्तु सामर्थ्यादन्यतरस्य विकल्पो न तूभयोरिति बाधकपदाभावे अपवाद एवेति । कुतो लभ्यत इत्याशङ्कते भाष्ये

---

अत्र किन्न भवति । स्त्रीग्रहणं स्वर्यते । स्वरितेनाधिकारगतिर्भवतीति स्त्रियांक्तिन्नित्यधिकारे विकल्पो नेति सिद्धान्तः । यदि तु स्त्रियामभिधेयायां नेत्युच्येत तदा विक्षेपिका विक्षेप्त्रीति कर्त्रिषये ण्वुल्तृचौ न

---

तटस्थेन पक्षे प्रवृत्तिर्निरुध्यते न पुनरेकवाक्यतया प्राप्तिरेव विकल्प्यतेति तथेष्टापत्तीति, अपवादाभावपक्षे प्रकृतिरेव कर्त्राद्यभिधानायानुज्ञाता स्याद्यथाच्छिदित्यादौ क्विबादिलोपे तदाह । 'तत्रोत्पत्तिर्वा प्रसङ्गो यथा तद्धित इति' । तमिममुत्पत्तिविकल्पपक्षे दोषं दृष्ट्वा बाधकत्वं विकल्प्यत इत्याह । 'वा बाधको भवतीति' । उक्तं च सिद्धान्तसरूपबाधकस्य वावचनादित्यसरूपो बाधको भवतीति वक्तव्यमित्यर्थः । ननु

कुत एतदिति ॥ (भा)

इष्टापत्त्या समाधत्ते

न चैवास्तीति ॥ (कै)

तद्व्याचष्टे

उत्सर्गेति । (भा)

असरूप उत्सर्गो वा भवतीत्यनेन प्रत्यासत्त्याऽसरूपोऽपवाद एव पक्षे स्थाप्यते इति । कविषयेनाणिति भावः ॥ वस्तुतोऽसरूपपदेनापवाद एवोपतिष्ठत इत्याह भाष्ये

अपि च सापेक्ष इति । (भा)

अवधिमापेक्ष इत्यर्थः । भिन्नरूपत्वं ह्यसरूपत्वं तत्र कुतो भिन्नरूप इत्यपेक्षायां स्वविधानवेलायां यः स्वविषये प्राप्तः स एव

---

स्याताम् । अथापि स्त्रियामित्येवं ग्रन्थसूत्रार्थे विहिते निषेध इत्युच्येत तर्हि व्यावक्रोशी व्यावकृष्टिरिति कर्मव्यतिहारे । णचो विषये क्तिन्

तत्रतत्रोच्यते यत्राक्तिक्रियापदम् श्रूयते तत्राक्तिर्भवतिपर इति ततस्तासरूपो वेत्युक्ते भवतीत्येवाध्याहारो युक्तो न पुनर्वा बाधक इति । उच्यते । उत्पत्तिविकल्पस्य प्रयोजनं केवलायाः प्रकृतेः प्रयोगः, केवला च प्रकृतिः स्वार्थमात्रमभिधातुमसमर्था किं पुनः कर्त्रादिकमभिधास्यति प्रकृतिप्रत्ययसमुदाये हि प्रयुज्यमानेऽन्वयव्यतिरेकाभ्यामयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति व्यवस्थाप्यते ऽनुत्पन्नप्रत्यया तु प्रकृतिर्न कञ्चिदप्यर्थं गमयति, प्रयोगोऽपि हि तस्या दुर्लभः परश्चेति नियमात्, तद्धिते त्वनुत्पत्तिपक्षेऽप्युत्सर्गप्रवृत्तिव्यतिरेकेण प्रत्ययान्तरमस्ति षष्ठी, इह तु

बुद्धिस्थो गम्यते। अपवादविधिसमये चोत्सर्गस्तमपि विषयमुपढौकमानमुपारूढो बुद्धौ भवतीति। तदपेक्षया भिन्नरूपोऽपवाद एव गृह्यत इत्यर्थः॥

न चोत्सर्गवेलायामिति। (भा)

नन्वपवादवाक्यार्थोत्तरमुत्सर्गस्य लक्ष्यसंस्कारकतेति प्रातिपदिकार्थसूत्रभाष्ये उक्तत्वेनोत्सर्गोऽपि स्ववेलायामपवादमपेक्षते इति॥

कथमेतदिति (भा)

चेत्। लक्ष्य संस्कारवेलायामपेक्षायामपि वाक्यार्थबोधवेलायां तदभावात्। अस्य च तदैवैकवाक्यतेति भावः॥

स वा बाधको भवतीति (भा)

भाष्ये। स बाधको वा भवतीत्यन्वयः॥

स्यात्। द्वयोरपि स्त्रियामित्युच्चार्य विधानात्। अत्र केचित्। उत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशितत्वे सति प्रतिषेधोऽयमित्याहुः। अन्ये तु अपवादमात्रस्यापीति। तत्राद्ये मते आसना आस्या स्त्र्यधि-

---

न तथेति सामर्थ्याद्विधिरूपमपि बाधकत्वमविकल्प्यते। ननु च शास्त्रं शास्त्रेण बाध्यते न पुनः कार्यं कार्येण निदानोच्छेदेनैव हि निदानिन उच्छेदः शक्यते कर्तुं नहि प्रदीपे ऽनुच्छिन्ने तत्प्रकाश उच्छिद्यते तत्किमुच्यते ऽपवादप्रत्यय इति, एवं तु वक्तव्यम् अपवादशास्त्रमिति। उच्यते। सर्वस्यैवापवादशास्त्रस्य स्वगतमसारूप्यमव्यभिचारीति प्रत्ययद्वारकं तदाश्रयणीयमित्यपवादप्रत्यय इत्युक्तम्। एवम्भूतस्य प्रत्ययस्य विधायकं शास्त्रमित्यर्थः। यदा प्रत्ययस्य बाधकत्वविकल्पसामर्थ्याच्छास्त्रमपि पक्षे बाधकं

## सिद्धमनुबन्धस्यानेकान्तत्वादिति । (भा०)

ननु यद्यनुबन्धोऽनवयवस्तदा कथं कप्रत्यये कत्त्वेलम् । प्रत्ययादित्वाभावात् । कथं वाडादीनामनेकाल्त्वेन सर्वादेशत्वम् । न चादेशवृत्तिकालेऽनुबन्धत्वाभावादनेकान्तत्वं तर्हि कोऽपि वाक्यार्थबोधात्पूर्वं प्रत्ययत्वाज्ञानेन तदुत्तरमेवेत्संज्ञाप्रवृत्तौ सर्वत्र नान्त्यत्वाविति सूत्रभाष्योक्तरीत्या उपदेशोत्तरकालमेवेत्संज्ञाप्रवृत्त्या च उपदेशेऽनुबन्धसत्त्वादमाकृत्यकरत्वं स्यादिति चेत् न । चुटू इत्यादावादिशब्दस्य समीपपरत्वान्न दोषः । अनेकाल्शित्यत्र सम्बन्धसामान्यषष्ठ्यर्थे बहुव्रीह्यङ्गीकारान्न दोषः । डादेशेऽपि डा आ इत्याकारप्रश्लेषात्सर्वादेशत्वम् । इत एव वाक्यरभाद् अर्थैकान्तेषु दोष एवेति वक्ष्यति भाष्यकृत् ॥

---

कारविहितेनापि यथापवादेन सह क्तस्त्वोरर्थतः समावेशः सिध्यति घञस्तु क्तिनादिना ऽनभिधानान्न समावेशः । द्वितीयपक्षे तु घञः क्तिनादिभिरसमावेशः सिध्यति । आस्येत्यत्र तु क्तल्युटोबहुलमिति ण्यदिति-

भविष्यति । अथ वा वृत्तौ वस्तुमात्रं दर्शितं यथा त्वयमर्थ उपपद्यते तथा सूत्रं व्याख्येयं तत्रेदं व्याख्यानं परिभाषेयमित्युक्तं तत्रैकपरिभाषावदियमपि पदमुपस्थापयति अस्मिन्धात्वधिकारे यत्रासरूपोपवादप्रत्ययो विधीयते तत्र वेत्युपतिष्ठते स्त्र्यधिकारे तु नेति किं कृतं भवति ददातिदधात्योर्विभाषेत्यादिवत् प्रमितिरेव विकल्पकल्पिता भवति ततस्तद्देवोत्सर्गस्य प्रवृत्तिसिद्धिरिति, अथासरूप उत्सर्गप्रत्ययोपवादविषये वा भवतीति विचार्यमाणे को दोषः, न खलु कश्चिद्दोषः, अपवादविकल्पे प्राप्ते विभाषा उत्सर्गविकल्पे त्वप्राप्तविभाषेति किन्तु प्रति-

**अथवा प्रयोगे इति ।** (भा)

क्विपि रूपाभाववदिव स प्रयोगेऽसरूपः । असरूपपदेन च समानरूपाभाववानुच्यत इति भावः ॥

**न लादेशेषु वासरूप इति ।** (भा)

आदेशगतमसारूप्यं गृहीत्वा लकारविषये वासरूपविधिर्नास्तीति तात्पर्यम् । आदेशप्रवृत्त्युत्तरकालिकवैरूप्यवत्सु लकारेष्वित्यक्षरार्थः ॥ तदाह

**लकाराणामसमावेशमिति ।** (कै)

सर्वेष्टासङ्ग्रहमुपपादयति

---

विवेकः । नन्विह सारूप्यं प्रयोगे उपदेशे वा । नाद्यः । ग्रामणीर्ग्रामण्य इति क्विबादिविषये ऽणादीनामप्रवृत्तिप्रसङ्गात् । न हि क्विबादयः प्रयोगे रूपवन्तः । लोपविधानात् । नान्त्यः । अनुबन्धभिन्नेषु

---

योग्यपेक्षमसरूपपदमप्यपवादमेव गोचरयतीत्युक्तम् । अस्त्रियामित्यत्र पक्षत्रयं सम्भवति अभिधेयसप्तमी वा स्यात् स्त्रियामभिधेयायां वासरूपो न भवतीति, स्त्रियामित्येव वा विहितस्यासरूपस्य निषेधः स्यात् स्त्रियामित्युच्चार्य ये विधीयन्ते ते नेति, स्त्रीग्रहणं वा स्वर्यते स्वरितेनाधिकारावगतिर्भवतीति स्त्रियां क्तिन्नित्यस्मिन्नधिकारे नेति, तत्राद्ये पक्षे विचिपा विक्षेपिका विक्षेपेति कविषये ण्वुल्ल्युटौ न स्याताम्, द्वितीये तु 'कर्मव्यतिहारे णच् स्त्रियां' व्यावक्रोशी व्यावकृष्टिरिति णचो विषये क्तिन् न स्यात्, द्वयोरपि स्त्रियामित्युच्चार्य विधानादिति, मत्वाद्ययोः पक्षयोर्दोषं दृष्ट्वा तृतीयं पक्षमाश्रित्याह ।

**क्तिबादय इति । (कै)**

असरूपपदेन भिन्नरूपस्यैव ग्रहणमित्याशयः ॥ भाष्ये

**नानुबन्धकृतमिति । (भा)**

भाष्यनुबन्धत्वज्ञानविषयवर्णकृतमसारूप्यं नेत्यर्थः । ददाति-दधात्योर्विभाषा शः पक्षे णः । डादौ तु प्रक्षेपान्निर्वाहः । टुटू इत्यादावादिशब्दस्य समीपपरत्वे टुटुप्‌णपोस्त्वादित्वेऽपीत्वापत्तेः ॥

**अथवेति । (भा)**

उभयतः कृतासारूप्ये गृह्यमाणे व्यावर्त्याऽभावात् ॥

---

कथाप्रभृतिष्वतिप्रसङ्गादिति चेन्न । अनुबन्धानामनेकान्तत्वेन द्वितीयपक्षे दोषाभावात् । एकान्तत्वेपि नानुबन्धकृतमसारूप्यम् । ददातिदधात्योर्विभाषेति लिङ्गात् । अन्यथानुबन्धकृतादसारूप्यादेव ददः दध इति णविषये दायो धाय इति णोऽपि भविष्यतीति किं विभाषा-

---

'स्त्र्यधिकारविहितप्रत्ययं वर्जयित्वेति' । केचिदाहुः । अपवादप्रत्ययं वर्जयित्वेति वक्तव्ये प्रत्ययं वर्जयित्वेति वचनं प्रत्ययमात्रपरिग्रहार्थं तेनोत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारनिवेशिनोरयं प्रतिषेधः, किं सिद्धं भवति आसना आस्या स्त्र्यधिकारविहितेनापि युचापवादेन क्तल्युटोर्ण्यतः समावेशः सिद्धो भवति, घञस्तु क्तिनादिभिरनभिधानादसमावेश इति, अन्ये तु अपवादो वा बाधको भवतीति प्रकृतत्वात्स एवात्र प्रत्यय इति व्याचक्षते तेन घञः क्तिबादिभिरसमावेशः 'आस्येत्यत्र कृत्यल्युटो बहुलमिति ण्यदिति' । 'ण्वुल्तृचावुत्सर्गाविति' । धातुमात्रे विधानात् । 'इगुपधज्ञाप्रीकिरः क इत्यपवाद इति' । धातुविशेषे विधानात्, किं पुनः प्रयोगगतमसारूप्यमाहोस्विदुपदेशगतम्, किं चातः प्रयोगे चादेशेन

## असरूप इति । (भा)

अयं स्पष्टत्वायापवाद इत्येव वदत तत्सामर्थ्यादनुबन्धकृतासारूप्यं नाश्रीयते किं तु रूपान्यत्वेनैवेत्यर्थः । तत्सामर्थ्यात्प्रकर्षगतिः । तेन प्रयोगे उपदेशे चासरूप इति द्वितीयः पक्षः । तत्सामर्थ्यात्प्रायोगिकमसारूप्यमिति तृतीयः पक्षः । तत्राद्ययोः क्विबादिष्वङ्गुष्ठः कथमिति चेद् रूपाभावादेव सारूप्याभावस्याक्षतेः । असरूपपदेन च सारूप्याभाववानुच्यत इत्याहुः ॥

## प्रागिति । (भा)

अत्र पक्षे सूत्रे सन्धिः सौत्रः । यदा परिभाषापक्षे प्रथमः पक्षः । अधिकारत्वे द्वितीयः । तदास्त्रियामित्यस्य स्त्रियामिति

ग्रहणेन । अनित्येयं वासरूपपरिभाषा । अत एव क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्न भवतीति सिद्धान्तः । हसितं हसनं छात्रस्य । अत्र क्तल्युड्विषये घञ् न । तुमुन् । इच्छति भोक्तुम् । अत्र इच्छार्थेषु लिङ्लोटाविति लोटन भवति ।

प्रतिषेधो ल्योऽप्यचश्चित्यत्र लुडपि प्राप्नोति प्रयोगे त्वसरूपत्वात् लडयमनक्तलकारः प्रत्ययः लुड्यपाच्चोदितीच्छन्दः, स्यः कर्तव्यत्र लडपि प्राप्नोति, ज्ञापकात्सिद्धं यदयं 'हृग्रहोर्लडुचे'ति लिङ्विषये लङं शास्ति तज्ज्ञापयति न लादेशेषु वासरूपविधिरिति, एवमपि ग्रामणीः ग्रामनाय इति क्विबादिविषयेऽणादयो न स्युः नहि क्विबादयः प्रयोगे रूपवन्तो लोपविधानात्तेषाम्, तस्मादुपदेशागतमसारूप्यम्, यद्येवमनुबन्धभिन्नेषु विभाषा प्रसङ्गः काण्वोरपि ह्युपदेशे भिन्नं रूपं प्रयोगे तु समानं तत्राह । 'नानुबन्धकृतमिति' । अनुबन्धानामनेकान्तत्वात्तत्कृतमसारूप्यं

क्त्वा निवर्त्तत इत्यर्थः। "समानकर्तृकेषु तुमुन्" लिङ्चेति वचनाल्लिङ् इष्टत्वादाह

**लिङ्चेति** (कै)

लोडापादान एव भाष्यतात्पर्यमिति भावः॥

**नियमादिति।** (कै)

नियमो वा कल्प्यः ज्ञापकं वा कल्प्यमिति तु भाष्याशयः। किञ्च लिङ् कर्तृकर्मणोश्चरितार्थः। भावे तुमुन् भावार्थयोस्तयोरपवाद एवेतीष्टं भगवत इति। ज्ञात इति। लिङ् भवत्येवेत्यपि कैयटश्चिन्त्यः॥ ननु लिङ् लोटौ कामप्रवेदने विधीयेते इच्छामि भुञ्जीय। इच्छामि भुञ्जीत भवानिति हि तदुदाहरणम् इदमत्र-

---

लिङ् तु भवत्येव। लिङ्चेति वचनात्। एवं चास्मादेव नियमादिह लोट् सुपरिहरः। अतोत्र तुमुन्ग्रहणमापादनतः। खलर्थे। आतोयुच्। ईषत्पानः। अत्र खल् न भवति। ननु स्त्र्यधिकारादूर्ध्वं वासरूपन्यायो नास्तीत्येवाश्रीयताम्। नैवम् आसित्वा भुङ्क्ते आस्यते भोक्तुमित्याद्य-

---

नाश्रीयते तथा चोदीचां माङ इति श्रूयमाणेऽपि ङकारे तस्यानेकान्तत्वादव्याहतमेजन्तत्वमित्यात्वं प्रयुक्तं ददाति दधात्योर्विभाषेति विभाषाग्रहणं च लिङ्गमस्यार्थस्य, अन्यथाऽनुबन्धकृतादसारूप्यादेव णविषये शो भविष्यतीति किन्तेन, इह क्त्वाल्युट्तुमुन्खलर्थेषु वासरूपविधिः प्राप्नोति, हसितं छात्रस्य शोभनं हसनं छात्रस्य अत्र क्तल्युड्विषये घञपि प्राप्नोति, तुमुन् इच्छति भोक्तुम्, अत्र इच्छार्थेषु लिङ्लोटाविति लोट् प्राप्नोति, तुमुना च बाध इष्यते लिङ् तु लिङ् चेति वचनाद्भवत्येव, यद्येवमस्मादेव नियमाल्लोडपि न भविष्यति, खलर्थे आतो युच

कामप्रवेदनेऽपीति कथमनयोर्बाध्यबाधकभावः । न चेदमपि कामप्रवेदनविषयम् । इच्छति भोक्तुमित्युदाहरणं । सङ्गच्छते । वक्त्रभिप्रायाविष्करणमेव हि कामप्रवेदनशब्देनोच्यत इति चेन्न । तत्र भोजनमिच्छतीति तदर्थनाचापि तत्सत्त्वात् ॥ ननु पौर्वकाल्याप्रतीतेः कथं क्त्वाविषये लकारप्राप्तिरत आह

**भोजनार्थत्वादिति** ॥ (कै)

"स्त्रियाः प्राग्" इत्यत्र पक्षे दूषणान्तरमाह भाष्ये

**कालादिष्विति** ॥ (भा)

"अर्हे कृत्यतृचश्च" इति " च ॥

---

सिद्धिप्रसङ्गात् । इह हि भोजनार्थत्वादासनस्य पूर्वकालता गम्यते । क्त्वाप्रत्ययस्य तुमर्थाधिकाराद्भावे तत्रैव च लकार इति समानविषयत्वाद्बाध्यबाधकभावः स्यात् । प्रैषातिसर्गेति सूत्रे स्त्रियाःक्तिन्नित्यत ऊर्ध्वं वासरूपविधेरभावादिति कौमुदीग्रन्थस्तु व्याकरविरुद्ध इति दिक् ॥

---

ईषत्पानः, अत्र खलपि प्राप्नोति । ननु स्त्र्यधिकारे तावदस्त्रियामिति प्रतिषेधादस्याप्रवृत्तिः परत्वादपि विच्छिन्नत्वादेव न भविष्यति, स्यादेतदेवं, यद्ययमधिकारस्स्यात् परिभाषा त्वेषेत्युक्तम् इष्यते च स्त्र्यधिकारादूर्ध्वमपि वासरूपविधिः, आसित्वा भुङ्क्ते आस्यते भोक्तुमित्यपि यथा स्याद् अन्यथा भोजनार्थत्वादासनस्य पौर्वकाल्यमवगम्यते तुमर्थाधिकाराद्भावे त्क्त्वाप्रत्ययस्तत्रैव च लकार इति समानविषयत्वाद्बाध्यबाधकभावः स्यात्, तथा कालो भोक्तुं कालो भोजनस्य तुमुना ल्युटो बाधस्स्यात्, तस्मात् स्त्र्यधिकारस्य परत्वादपि वासरूपविधिरेषितव्यः, 'अर्हे कृत्यतृचश्च' इत्यत्र कृत्यतृज्ग्रहणं ज्ञापकं स्त्र्यधिकारस्य परत्वादनित्यैषा परिभाषेति, तस्मात् क्तल्युट्तुमुन्खलर्थेषु प्रतिषेधोऽवक्तव्य एव ॥

# तव्यत्तव्यानीयरः । ३ । १ । ९६ ॥

## कैश्चिदिति (कै)

वृत्तिकारैरित्यर्थः ॥

## कर्मणि प्रदर्शित इति । (कै)

वक्तव्या इति विवरणात् । न हि तव्यः कर्मकर्त्तरि । अवाच्यः कर्त्ता कर्मवदिति वचनाद् इति भावः ॥ ननु बोधे विशेषात् कथन्तद्भितेन सिद्धिरत आह

## नित्यानामिति । (कै)

वास्तु भवत्वेनापि वासकर्त्तरेव कृत्या बोधान्नार्थविशेषः । कृत्या सर्वदोषपरिहारादिति भावः ॥

तव्यत्तव्यानीयरः ॥ धातोरेवैते प्रत्ययाः स्युः । तकाररेफौ स्वरार्थौ । कर्त्तव्यम् । करणीयम् । वसेस्तव्यत्कर्तरि णिच्च ॥ वस निवासे इत्यस्य ग्रहणम्, न तु वस आच्छादन इत्यस्य लुग्विकरणस्य । तयोरेवेति वचनात् कर्त्तरि न प्राप्नोतीति वचनम् । वसतीति वास्तव्यः । तद्धितान्तो वा । वास्तुनि भवो वास्तव्यः । दिगादित्वाद्यत् । अवास्तव्य इत्यत्र स्वरभेदोऽपि

तव्यत्तव्यानीयरः" ॥ 'वसेरिति' । वस निवास इत्यस्य ग्रहणं न तु वस आच्छादन इत्यस्य लुग्विकरणस्य तयोरेव कृत्यक्तखलर्था इति वचनात्कर्त्तरि न प्राप्नोतीति वचनं णिद्वद्भावार्थं च । 'वास्तव्य इति' । तद्धितान्तो

## उपादायापि ये हेया इति। (कै)

उपायशब्दव्युत्पत्तिः पृषोदरादित्वात्साधुः। रेखागवयस्थानीयत्वादिति भावः॥

## कृत्योकेष्णुजिति। (कै)

ययतोरिति चान्तोदिति चान्तोदात्तविधायको नञ इति च तत्र वर्त्तते। अनेन वास्तव्यो नवास्तव्य इत्यादिसमासस्तु अनभिधानान्न भवतीति भाष्याशयः॥

---

नास्ति। तव्यत्प्रत्यये हि कृत्योकेष्णुच्चार्वादयश्चेत्यन्तोदात्तत्वम्। यत्प्रत्यये तु ययतोश्चातदर्थे इत्यनेनेति। केलिमर उपसंख्यानम्॥ कृत्या इति बहुवचनेनैतत्सूचितमित्युक्तम्। ककारो गुणवृद्धिनिषेधार्थः। रेफः स्वरार्थः। पचेलिमा माषाः। पक्तव्याः। भिदेलिमाः सरलाः। भेत्तव्याः। शुद्धे कर्मणि प्रत्ययो भाष्ये स्थितः। वृत्तिकारस्तु कर्मकर्तरि चायमिष्यत इत्याह। तद्भाष्यविरुद्धम्॥

---

या पुनरेष भविष्यति वास्तुनि भवो वास्तव्यः, दिगादित्वाद्यत्, अवास्तव्य इत्यत्र स्वरभेदो नास्ति कृत्योकेष्णुजिति यदन्तोदात्तत्वं तदेव 'ययतोश्चातदर्थे' इत्यनेन भविष्यति, केलिमर इति ककारो गुणवृद्धिप्रतिषेधार्थः, रेफस्स्वरार्थः। 'कर्मकर्त्तरि चायमिष्यत इति'। भाष्ये तु पचेलिमा-माषाः पक्तव्याः भिदेलिमास्सरला भेत्तव्या इति शुद्धे कर्मणि प्रदर्शितम्॥

# अचो यत् । ३ । १ । ९७ ॥

भाष्ये

आर्द्धधातुकसामान्य इति । (भा)

विषयसप्तम्यामपि परभूतविषयसत्त्वे एव प्रवृत्त्या परनिमित्तत्वमस्त्येवेति कथयतीत्यादौ स्थानिवत्त्वनिर्वाहः ॥ आर्द्धधातुके इति च नातिनिर्देश इति भावः ॥

अचो यत् ॥ अजन्ताद्धातोर्यत्स्यात् । चेयम् । जेयम् । ननु पूर्वसूत्रे एव यदपि निर्दिश्यताम् । अज्ग्रहणं च मास्तु । हलन्तात्ण्यतं वक्ष्यति । परिशेषादजन्तेभ्य एव यद् भविष्यति इति चेत् । अजन्तभूतपूर्वादपि यथा स्यादित्येवमर्थमिदम् । दित्स्यं धित्स्यम् । इह हि दाञो धाञश्च सन्नन्तस्य दित्स धित्स इति स्थिते आर्द्धधातुके इति विषयसप्तमीमाश्रित्य सनोतोलोपे कृते साम्प्रतिकं हलन्तत्वमस्तीति ण्यत्स्यात् । अज्ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति । तेन यतोनाव इत्याद्युदात्तत्वम् । ण्यति तु कृते तित्स्वरितत्वं स्यात् । चिकीर्ष्यमित्यादौ तु ण्यद्यतोर्विशेषो नास्ति । यतोनाव इत्यत्र ह्यज्ग्रहणानुवृत्तेः । आर्द्धधातुक इत्यस्य परसप्तमीत्वे तु इहाज्ग्रहणं न कर्त्तव्यमेव । तस्मिन्निति निर्दिष्टे पूर्वस्येत्यसिद्धवदत्राभादिति ज्ञापकादेवेत्यतिन्ना-

"अचो यत्" ॥ 'अज्ग्रहणं किमिति' । पूर्वसूत्र एव यद्ग्रहणं कर्त्तव्यमिति प्रश्नः । 'यावतेत्यादि' । द्वये हि धातवो ऽजन्ता हलन्ताश्च तत्र हलन्ताद् ण्यतं वक्ष्यति अतः पारिशेष्यादजन्तादेव यद्भविष्यतीत्यभि-

**यतो नाव इति ।** (कै)

आद्युदात्तस्वरार्थमित्यर्थः ॥

**यत्प्रत्यय इति ।** (कै)

एतेन दण्डादिभ्यो य इति वृत्तिपाठ एतद्भाष्यविरुद्ध इति भावः ॥

---

मुपसंख्यानम् ॥ तके हसने । शसु हिंसायाम् । चते याचने । यती प्रयत्ने । जनी प्रादुर्भावे । तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । अत्र जनेर्यद्विधानं यतोनाव इति स्वरार्थं जनिवध्योश्चेति वृद्धिनिषेधेन ण्यत्यपि रूपे विशेषाभावात् । इह शंसिमपि केचित्पठन्तीति हरदत्तः । तेन तद्वान्नराशंस्यगाथ्यं च । अत्राद्युदात्तः सिध्यति । अपाठपक्षे तु ण्यन्तादचोयति सिध्यतीति बोध्यमिति वदन्ति । तदेतत्सर्वमीडवन्दे-त्यादिसूत्रविस्मरणमूलकत्वादुपेक्ष्यम् । हनो वा वध च ॥ हन्तेर्वा यत्, तत्सन्नियोगेन च वधादेशो वक्तव्य इत्यर्थः । वध्यः । घात्यः । यदभावे ण्यत् । हनस्तोचिण्णलोरिति तत्त्वम् । होहन्तेरिति कुत्वम् । यद्यपि वधमर्हतीति वध्य इति रूपं यदित्यनुवर्तमाने दण्डादिभ्य इति तद्धितेन

---

प्रायः । 'अजन्तभूतपूर्वादपीति' । पूर्वं भूतो भूतपूर्वः सुप्सुपे'ति समासः अजन्तश्चासौ भूतपूर्वश्च अजन्तभूतपूर्वः । 'दित्स्यं धित्स्यमिति' । दाञो धाञश्च सन् द्विर्वचनं सनिमीमाघ्विदादिना इस 'सः स्यार्द्धधातुके' इति तत्वम् 'अत्र लोपोभ्यासस्य' दित्स धित्स इति स्थिते अनुत्पन्न एवार्द्ध-धातुके बुद्धिस्थे एवातो लोपे कृते सम्प्रत्ययं हलन्त इति ण्यत् स्याद् अज्-ग्रहणात्तु भूतपूर्वमजन्तत्वमाश्रित्य यद्भवति तेन यतो नाव इत्याद्युदा-त्तत्वं ण्यति तु तित्स्वरितं स्यात्, चिकीर्ष्यमित्यादौ तु ण्यद्यतोर्विशेषा-

लक्षणाभावादिति । (कै)

"सुप्सुपेति" न सार्वत्रिकमित्यर्थः ॥

कृदुत्तरपदेति । (कै)

वध्यशब्दो हि "यतो नाव" इति द्व्यच्कत्वादाद्युदात्तः ॥ भाष्ये

यतापि सिध्यति तथाप्यसिवध्यो मुसलवध्य इत्यत्र समासो न सिध्येत् । कृति पुनः कर्तृकरणे कृतेति सिध्यति । न च असिवधमर्हतीति विग्रहे कृतसमासादेव तद्धितोत्पत्तिरिति वाच्यम् । दण्डादिषु केवलस्य वधशब्दस्य पाठात् । तदन्तविधेश्च प्रतिषेधात् । स्वरे भेदाच्च । असिवधशब्दाद्यति हि तित्स्वरितमिति स्वरितः प्रसज्येत । कृदन्तेन समासे तु कृदुत्तरपद-प्रकृतिस्वरेण वध्यशब्द आद्युदात्तः । अत एव वध्यशब्देन तद्धितान्तेन सह सुप्सुपेति समास इत्यपि न वाच्यम् । अन्तोदात्तप्रसङ्गात् । वध्यशब्दे कृत्तद्धितान्ते प्रकारकृतविशेषस्य सत्त्वाच्च । एतेन गिरौ डच्छन्दसीति वार्तिकप्रत्याख्यानपरं भाष्यमप्यपास्तम् । अत एव कृतलब्धक्रीतकुशला इत्यादीनां चारितार्थ्यमिति दिक् । अन्त्यभाष्यादिपर्यालोचनया असम-स्तवध्यशब्दे विशेषाभाव इति लभ्यते । तथा च दण्डादिभ्य इत्येव सूत्रं, यच्चानुवर्तते । दण्डादिभ्यो य इति निरनुबन्धपाठस्तु प्रामादिक इति माधवो हन्तिधातौ स्फुटीचकार । हरदत्तग्रन्थपर्यालोचने तु इदं च वचनं

---

भावः, यतो नाव, इत्यत्र हि द्व्यच इति वर्तते यदा त्वार्धधातुके परतो लोपः, तदैतदज्ग्रहणं न कर्तव्यमेव । 'तकिशसीत्यादि' । तकि हसने शसु हिंसायां चते चदे याचने यती प्रयत्ने जनी प्रादुर्भावे 'यतो नाव' इति स्वरार्थं जनेर्यद्विधानं जन्यमिति रूपं न तु ण्यतापि सिद्धं 'जनिवध्यो-श्चे'ति वृद्धिप्रतिषेधात्, शंसिमपि केचित्पठन्ति, तदा नराशंस्यं राज्ञां

यदि पुनरिति । (भा)

असिवधाय समस्ता अपि गणे पाठ्या । आकृतिगणो वा स इति भावः । एतेन न चासिवधेत्याद्यपास्तम् । एवं च तद्धितेन असिद्धिरिति वार्त्तिकं कार्यमेवेति भावः ॥

---

यद्विधौ भाष्यादौ पठितमपि क्वचिन्नौ म्नेर्विभाषेत्यस्याग्रे एव पाठ्यमित्येव भाष्यतात्पर्यं युक्तम् । विकल्पाकरणेन लघुत्वादिति लभ्यते । तस्मिन्नपि पक्षे वध्यशब्दो धातुस्वरेणाद्युदात्तः क्यप्पित्त्वादनुदात्तः । न च नञ्समासे ययतोश्चातदर्थ इत्यस्य प्रवृत्त्यभावेन स्वरे दोष इति वाच्यम् । कृत्योकेष्णुच्चार्वादयश्चेत्यस्य प्रवृत्त्येष्टसिद्धेः । असमस्त एव विशेषाभावस्य प्रतिपाद्यत्वाच्च ॥

च । 'हनो वा वध चेति' । हन्तेर्वा यत्प्रत्ययो भवति तत्सन्नियोगेन च वधादेशः । 'वध्यमिति' । तद्धितान्तो वा पुनरेष भविष्यति वधमर्हतीति वध्यः, दण्डादिभ्य इति यत्, यदि तद्धितः समासो न प्राप्नोति असिवध्यो मुसलवध्य इति, कृति पुनः सति 'कर्तृकरणे कृता बहुलमिति' समासः सिद्धो भवति । 'घात्यमिति' । 'हनस्तोचिण्णलो'रिति तत्त्वं ह्रो हन्तेर्ञ्णिन्नेष्विति कुत्वम् ॥

# अजर्यं सङ्गतम् । ३ । १ । १०५ ॥

कर्त्तरि च सङ्गत इष्यत इति । (भा)

कर्त्तरि अर्थे सङ्गते विशेष्ये इष्यत इत्यर्थः ॥

कर्त्तर्यर्यमिति । (कै)

अत एवाजर्यमिति निपातनाश्रयणम् । इष्टिरिति कर्त्रर्थत्वसङ्गत-विशेष्यकत्वरूपेत्यर्थः ॥

गत्यर्थानामिति (भा)

भाष्यम् । इष्टासङ्गतमिति कर्त्तरि क्तः । तदर्थे च निपात्य-मानमजर्यं कर्त्तरीति प्रतीयते । तदसङ्गतम् । सङ्गतमिति मैत्री-पर्यायस्य भावक्तान्तस्यैवात्र ग्रहादतस्तत् तात्पर्यमाह

---

अजर्यं सङ्गतम् ॥ नञ्पूर्वाज्जीर्यतेः कर्त्तरि यन्निपात्यते सङ्गतं चेत् विशेष्यम् । सङ्गतमिति नपुंसके भावे क्तः । न जीर्यतीत्यजर्यं मता सङ्गतम् । इह अजर्यमिति समुदायस्य सङ्गतं वाच्यमित्यर्थो न ग्राह्यः । उदाहरणे तत्प्रयोगानुपपत्तेः । न च घटः कलश इतिवत् व्याख्यानपर-

---

"अजर्यं सङ्गतम्" ॥ 'सङ्गमने कर्त्तरीति' । सूत्रे सङ्गतमिति नपुं-सके भावे क्त इति दर्शयति, कर्त्तरीति तयोरेव कृत्यक्तखलर्था इति भावे मा भूदिति निपातनाश्रयणं तेन भावे सङ्गतकर्तृकेऽपि ण्यदेव भवति अजार्यं सङ्गतेनेति । 'अजरितेति' । टच् ॥

**तथापीति ॥** (कै)

**तेन योगादिति** (भा)

भाष्यस्य तेन साहचर्यादित्यर्थः ॥

**सोपसर्गस्येति ।** (कै)

अर्थान्तरवृत्तेति भावः ॥ ननु कालादिकर्मसद्भावात् प्रथम-कर्मकत्वं तत्राह

**द्रव्येति ।** (कै)

एतच्च "गतिबुद्धीति" सूत्रे "कालाध्वनोरिति" सूत्रे च निरूपितम् ॥

**कर्त्तरीति ।** (कै)

वार्त्तिकारम्भवादयाह भाष्ये

**भावे तर्हीति ।** (भा)

गत्यर्थेभ्यो विशेष्यविधानेन भावेऽपि क्तदर्शनादिति भावः ॥

प्रत्याख्यानवाद्याह

**सङ्गतग्रहणमिति ।** (भा)

तथा च तत्सामर्थ्यात्कर्त्तर्येव भविष्यति नार्थो वार्त्तिकेनेत्यर्थः ॥

वार्त्तिकारम्भवाद्याह

---

तथा सत्प्रयोगः । तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतमिति भट्टिप्रयोगात् । मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्धेति कालिदासप्रयोगस्तु सङ्गतमित्यध्याहृत्य व्याख्येयः । सङ्गतं किम् । अजरिता कम्बलः । कर्त्तरि निपातनमित्युक्तत्वात् भावे सङ्गतकर्तृकेऽपि क्तएदेव भवति । अजार्यं सङ्गतेनेति ॥

**कर्त्तृविशेषणमिति ।** (भा)

कर्त्तृपदाध्याहारेणेति भावः ॥ तद्व्याचष्टे

**वैयधिकरण्यमिति ।** (कै)

अजर्यसङ्गतेनेत्युदाहरणमिति भावः । एवं च तत्सामर्थ्याभावेन भावे प्रत्ययव्यावृत्त्यर्थं कर्त्तरीति वाच्यम् । निपातनसामर्थ्याद्वा कर्त्तरीति भावः ॥

**वैयधिकरण्येऽपीडिति ।** (कै)

कर्त्तरि निष्ठायां सामानाधिकरण्येऽपि तद्विकल्प इति भावः ॥

---

## वदः सुपि क्यप् च । ३ । १ । १०६ ॥

**यत्राधिकारस्येतीति ।** (कै)

यथा मण्डूकानुवृत्तिविषये "धान्यानामि"त्यादौ ॥

**अवधीति ।** (कै)

यथाऽलुगधिकारः प्रागनङ इति ॥

**सिंहेति ।** (कै)

यथा "प्राचां फे"त्यत्र । एवं सर्वत्रेति ॥

---

# भुवो भावे । ३ । १ । १०७ ॥

प्राथम्यादिति । (भा)

धातुपाठे इति भावः । प्रसिद्धत्वाच्चेत्यपि बोध्यम् ॥

भुवो भावे ॥ भवतेरनुपसर्गे सुप्युपपदे क्यप् स्यात् भावे । यत्तु नानुवर्त्तते पूर्वसूत्रे चानुकृष्टत्वात् । ब्रह्मणो भावो ब्रह्मभूयम् । सुपीत्येव । भव्यम् । अनुपसर्ग इत्येव । प्रभव्यम् । ननु अनुपसर्गेण भवतिरकर्मकः तस्माद्भाव एव भविष्यति तत्किं भावग्रहणेनेति चेन्नैवम् । प्राप्त्यर्थात्कर्मण्यपि प्रसङ्गात्सत्तार्थकादपि कालादिकर्मण्यपि प्रसङ्गात् उत्तरार्थत्वाच्च ॥

# हनस्त च । ३ । १ । १०८ ॥

भाष्ये

भ्रूणहत्येति । (भा)

शब्दशक्तिस्वभावादेतद्विहितक्यबन्तस्य स्त्रीत्वमित्यर्थः ॥

---

हनस्त च ॥ हन्तेर्धातोरनुपसर्गे सुबन्त उपपदे भावे क्यप् स्यात् तकारश्चान्तादेशः । ब्रह्महत्या । एतत्सूत्रविहितक्यप्प्रत्ययान्तस्य स्वभावात् स्त्रीलिङ्गत्वमेव लोके । छन्दसि तु क्लीबतापीष्यते । सनादेव दस्युहत्याय जज्ञिषे । छन्दसि स्त्रियां क्यप् चिद्दक्ष्यः । तरति ब्रह्महत्यां योऽश्वमेधेन यजते । सुपीति किम् । घातीति वर्त्तते । णमुत्र न भवति । सकर्मकाद्भावे विधानाभावात् । कर्माविवक्षायामकर्मकत्वेपि न भवत्यनभिधानात् । अनुपसर्ग इत्येव । प्रघातो वर्त्तते ॥

"हनस्त च" ॥ 'ब्रह्महत्येति' । स्वभावतः स्त्रीलिङ्गत्वमस्य क्यबन्तस्य यथान्येषाम्भावे कृत्यानां नपुंसकत्वं, छन्दसि तु क्यबन्तस्यापि नपुंसकत्वमिष्यते सनादेव दस्युहत्याय जज्ञिषे, छन्दसि च स्त्रियां चिद्दक्ष्य', अस्यै ब्रह्महत्यायै तृतीयं परिगृह्णामीति । 'प्रघातो वर्त्ततइति' । किं पुनः कारणं घञ् प्रत्युदाह्रियते न णमुदित्यत आह 'णमुत्र भावे न भवतीति' । कर्माविवक्षायामकर्मकत्वे सत्यपीति भावः, सकर्मकात्तु भावे णमुतः प्राप्तिरेव नास्ति ॥

# एतिस्तुशास्वृदृजुषः क्यप् । ३ । १ । १०९ ॥

आत्मनेपदिभ्यामिति । (कै)

आकारवद्विकरणाभ्यामित्यपि बोध्यम् । एतदंशे उत्तरमाचार्यमप्यनुग्राहकम् ॥

एतिस्तुशास्वृदृजुषः क्यप् ॥ सुप्यनुपसर्गे भावइति निवृत्तम् । एभ्यः क्यप् स्यात् । एतीति इण एव ग्रहणं नेङिकोः । तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्देशानुपपत्तेः । तथा च रक्षार्थं वेदानामध्येयं व्याकरणमिति भाष्ये यदेव प्रयुक्तः । केचित्तु इणवदिक इति वक्तव्यमिति वचनादधीत्यमित्युदाहरन्ति । इत्यः । कथन्तर्हि उपेयमिति । इङ् गताविति भौवादिकाद्यत् । स्तुत्यः । शिष्यः । शास इदङ्हलोरिति इत्वम् । शासिवसीति षत्वम् । आङः शासु इच्छायामित्यस्यापि ग्रहणमविशेषात् । तेन

"एतिस्तुशास्वृदृजुषः क्यप्" ॥ एतीति तिपा निर्देशः, किमर्थं धातोर्ग्रहणं यथा स्यादिवर्णान्तस्य मा भूदिति, अत्र तेन एव ग्रहणं नेङिकोः तयोरधिपूर्वयोरेव प्रयोगादेतीति निर्देशानुपपत्तेः तथा च रक्षार्थं वेदानामध्येयं व्याकरणमिति भाष्ये यदेव प्रयुक्तः । केचित्तु इणवदिक इति वक्तव्यमिति वचनादधीत्या मातेत्यप्युदाहरन्ति । 'स्तुत्य इति' । ह्रस्वस्य तुक् । शिष्य इति' । 'शास इदङ्हलो'रितीत्वं 'शासिवसिघसीनां चे'तिषत्वम्, आङः शासु इच्छायामित्यस्यापि ग्रहणमविशेषात् तेनाशास्यमिति धातुस्वरेण मध्योदात्तं पदं भवति ण्यति तु गतिकारकोपपदात्कृदिति अन्तस्वरितत्वं स्यात् । केचित्तु शासु अनुशिष्टावित्यस्यैव ग्रहण-

## वृणातिरिति । (कै)

वृङ् सम्भक्तावित्ययम् । एवं च वाक्यपूर्वज एवेति भावः । वस्तुतो व्याख्यानादच वृञो ग्रहणमित्येव तत्त्वम् ॥

## संहिताया एव नित्यत्वमिति । (कै)

अविच्छिन्नपादपर्यन्तत्वमेवात्र नित्यत्वम् ॥

आशास्यमिति धातुस्वरेण मध्योदात्तं पदं भवति । ण्यति तु गतिकारकोपपदात्कृदिति अन्तस्वरितत्वं स्यात् । केचित्तु शासु अनुशिष्टावित्यस्यैव ग्रहणमिच्छन्ति । वृ इति वृञो ग्रहणं न वृङः पूर्वोत्तरसाहचर्यादुभयपदिनो ग्रहणाज्ज्ञापकात् । यदयं ईडवन्दवृशंसदुहां ण्यत इति वार्यशब्दस्याद्युदात्तत्वं शास्ति तत्र हि ईडिवन्दिभ्याम् अकारवदिकारणप्रकृतिभ्यां साहचर्याद् आत्मनेपदिनो वृङो ग्रहणम् । वृत्यः । वृत्यः । जुष्यः । क्यबिति वर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम् । तेन ओरावश्यके ण्यतं बाधित्वा क्यबेव भवति । तथाहि । इह सूत्रे शौतेर्ग्रहणस्यावकाश आवश्यकविवक्षायां स्तुत्य इति. ओरावश्यक इत्यस्याव-काशोऽवश्यलाव्यम् अवश्यस्तुत्य इत्यत्र उभयप्रसङ्गे परत्वात् ण्यत् स्यात् पुनः क्यब्ग्रहणात् क्यबेव भवति । शंसिदुहिगुहिभ्यो वेति वक्तव्यम् । शस्यम् शंस्यम् दुह्यम् । दोह्यम् गुह्यम् गोह्यम् अन्ये तु वृत्तावेव

मिच्छन्ति । 'ओरावश्यकइत्यादि' । इह स्तुग्रहणस्यावकाश आवश्यका-विवक्षायां स्तुत्य इति, 'ओरावश्यक' इत्यस्यावकाशोऽवश्यलाव्यमिति, अवश्यस्तुत्य इत्यत्रोभयप्रसङ्गे परत्वाद् ण्यत्स्यात् पुनः क्यब्ग्रहणात्क्यबेव भवति । 'इग्रहणे वृञो ग्रहणमिष्यते न वृङ इति'। ज्ञापकात्, यदयम्-'ईडवन्दवृशंसदुहां ण्यत' इति वार्यशब्दस्याद्युदात्तत्वं शास्ति तत्र ईडि-

# अर्थनिश्चयाभाव इति । (कै)

आज्यशब्दस्य रूढत्वादाङर्थोऽस्ति न वेति निश्चयाभाव इत्यर्थः ।

ख्यातम् । भाष्ये तु नास्ति । तत्र प्रशस्यमप्यशः, ईडवन्दवृशंसदुहां ण्यत इति सूत्रद्वयप्रामाण्यात् शंसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम् । आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम् ॥ अञ्जू व्यक्तिम्रक्षणादिषु । अस्मात् बाहुलकात्करणे क्यप् । अनिदितांहल इति नलोपः । आज्यम् । ननु ण्यत्येव नलोपः कस्मान्नोक्त इति चेन्न । कुत्वप्रसङ्गात् । तित्स्वरप्रसङ्गाच्च । तस्मात्क्यबन्त एवायम् । नन्वेवमवग्रहः प्राप्नोति । न चेष्टापत्तिः । आज्यं किमासीत्परिधिः क आसीदित्यादौ पदकारैस्तदकरणादिति चेत् । अत्र भाष्यम् । न लक्षणेन पदकारा अनुवर्त्याः पदकारैस्तु लक्षणमनुवर्त्यमिति । अयमाशयः । संहितैव नित्या पदविच्छेदस्तु पौरुषेयः । अत एवार्थविनिश्चयाभावान्नावगृह्णन्ति । यथा हरिम्नव इति । अत्र किं हरिशब्द इकारान्त उत हरिच्छब्दस्तकारान्त इति सन्देहः । किञ्च वनेन वाय इति मन्त्रे वेति वाय इति च चकार शाकल्य इत्युपन्यस्य उदात्तं त्वेवमाख्यातमभविष्यत् इति अधायिशब्दे अट्स्वरप्रसङ्गेन दूषयित्वा वेरपत्यं वाय इत्येकपद्येन सिद्धान्तं कुर्वन् यास्कः पदविभागस्य पौरुषेयत्वं स्पष्टमेवाचष्टे । अपि च सति पदत्वे अवग्रहो ऽस्ति तु नेति इयमपि

वन्दिभ्यां साहचर्यादात्मनेपदिनो दुहो ग्रहणम् । 'शंसिदुहीत्यादि' शंसु स्तुतौ दुह प्रपूरणे । गुहू संवरणे । 'शस्यमिति' । क्यप्यन्ते उपधालोपः, भाष्य एतदुपसङ्ख्यानं न दृष्टम् । 'आङ्पूर्वादिति' । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । 'आज्यमिति' । 'कृत्यल्युटो बहुल'मिति करणे क्यप्, पूर्ववदुपधालोपः, अथ कस्माद् ण्यत्येवोपधालोपो नोक्तः कुत्वप्रसङ्गात्तित्स्वरप्रसङ्गाच्च तस्मात्क्यबन्त एषः, यद्येवमवग्रहः प्राप्नोति आज्यमित्या

समासे संहिता नित्येत्येव पदस्य साधुत्वाभावात् । सम्प्रदायमात्र-शरणस्य तस्य लक्षणा विषयतेत्यर्थं मन्ये ॥

---

प्रायोवादमात्रं सम्प्रदायानुरोधादुभयस्यापि वक्तृभिः परित्यागो दृश्यत एव । गोभिर्मदाय गोभ्यो गातुमित्यादौ अवग्रहाभावात् । ईयिवांसमतिस्त्रिधः, देवयन्तो यथामतिमित्यादाववग्रहाभावेति दिक् । प्रक्रियाकौमुद्यान्तु अत्र गतौ लोपश्च चेत्यस्य आज्यमित्युक्तं तत्तु भाष्यविरुद्धम्, अर्थानवगुणाच्चेति प्रामाणिकैरुपेक्ष्यमेव ॥

---

आज्यमिति, अवग्रहस्य को दोषः, नहि लक्षणेन पदकाराः अनुवर्त्याः किन्तु पदकारैर्नाम लक्षणमनुवर्त्यं पदविच्छेदो हि पौरुषेयः संहितैव तु नित्या। ये चार्थनिश्चयाभावे नावगृह्णन्ति यथा हरिद्रव इति किं हरिद्रुशब्द इकारान्त उत हरिच्छब्दस्तकारान्त इति सन्देहात् । 'कथमिति' । इत्थं एवैतद्रूपमिति मन्यमानस्य प्रश्नः । 'एतिरिति' । इ गतावित्यस्य ॥

# ई च खनः। ३। १। १११॥

क्यप्संनियोगेनेति। (कै)

ननु अन्तरङ्गे इत्वे कृते एकदेशविकृतन्यायेन प्रामाण्यवारणार्थं तदावश्यकम्। इत्वन्तु पक्षे चरितार्थं किञ्च अत: कर्त्तृयकीति सूत्रे भाष्ये "ये विभाषे"त्यत्र ये इत्यस्य विषयसप्तम्यन्ततया व्यक्ततया पदत्वेन नान्त्यः पूर्वमेवात्वे ततः परत्वात्सवर्णदीर्घे एकदेशविकृतन्यायेन इ च खन इत्यस्य प्रवृत्तौ खेयमिति स्यात्तद्वारणार्थं दीर्घनिर्देश इति केषाञ्चिदाशय इति चिन्त्यमेतद् इति

ई च खनः॥ खनः क्यप् स्यात् इकारश्चान्तादेशः। दीर्घनिर्देशः प्रश्लेषार्थः। तत्र द्वितीय इकारो येविभाषेत्यात्वबाधनार्थः। अन्यथा येविभाषेत्यस्यावकाशः खायते खन्यते। इत्वस्यावकाशः यस्मिन्पक्षे आत्वं नास्ति। आत्वपक्षे उभयप्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात्। येविभाषेति विषयसप्तमी। तथा च यकारादौ बुद्धिस्थ एव भवदात्वमन्तरङ्गम्। द्वयं त्विकारः क्यपा सह विधानाद्बहिरङ्गः तदिदमुक्तम्। येविभाषेति विषयसप्तमीति पक्षमाश्रित्य सूत्रकृता दीर्घोच्चारणं कृतम् भाष्यकृता तु

---

"इ च खनः"। दीर्घोच्चारणं किमर्थं न इ च खन इत्येवोच्यत दीर्घस्य ह्रस्वस्य वा श्रवणे नास्ति विशेषः. ह्रस्वादेशे 'सत्यतुकोऽसिद्ध' इत्येकादेशस्यासिद्धत्वाद ह्रस्वाश्रयतुकस्यादिति चेद् न. पदान्तपदाद्योरेकादेशस्तुग्विधावसिद्धः. अन्यथा ब्रह्मोज्झमिति पाठाद्रूपस्यासिद्धत्वाच्छे चे'ति ह्रस्वाश्रयो नित्यस्तुक् स्यादित्यत आह। 'दीर्घनिर्देश इत्यादि'। एतेन ह्रस्वद्वयमत्र विधीयते न दीर्घ इति दर्शयति पूर्वं तु

केचित् ॥ भाष्याशयस्तु व्यवस्थितविभाषयाऽचात्वाप्रवृत्तिरिति । इदञ्च तवाप्यावश्यकम् । अन्यथा आकारस्य दीर्घकारेऽपि खीय-मिति स्यान्न तु खेयमिति । न च खनेर्नस्यानुनासिके आकारः स्यात् । तस्माद्गुणेऽपि कदाचित् तादृश एव स्यात् तद्वारणाय इकाररूप एवेकार इत्यर्थं दीर्घनिर्देश इति वाच्यम् । स्थान्यनु-रूपेऽनुनासिक एवोच्चारणीयेऽननुनासिकोच्चारणात् । स्पष्टं चेदं "पथिमथि" "अष्टन आ" इत्यत्र भाष्यकैयटयोरित्याहुः ॥

- - -

परसप्तमीमाश्रित्य प्रत्याख्यानम् । तथा हि परसप्तमीपक्षे इत्वमन्तरङ्गम् । परनिमित्तमनपेक्ष्य विधानात् । क्यप्सन्नियोगशिष्टं हि तत् । तथा च तदेवात्वस्य बाधकम् । ननु ह्रस्वादेशे तस्य पूर्वेण सह आद्गुणे सत्यपि षत्वतुकोरसिद्ध इति एकादेशस्यासिद्धतया ह्रस्वस्य पिति कृतीति तुक् स्यात् अतो दीर्घ एव विधेय इति चेन्न पदान्तपदाद्योरेकादेशस्तुग्विधाव-सिद्धः न त्वन्योऽपीति वक्ष्यमाणत्वात् । अन्यथा वृत्ते कृत्रिमित्यत्र डावाद्-गुणस्यासिद्धत्वात् ह्रस्वेति ह्रस्वाश्रयो नित्यस्तुक् स्यात् । इष्यते तु दीर्घा-त्पदान्ताद्वेति वैकल्पिक इति दिक् । खेयम् ॥

- - -

यथा श्रुताश्रयणे तु सप्तमीकारस्थान्तादेश इति 'तत्रेति' प्रश्ने । 'सति ये विभाषेत्यात्वबाधनार्थं इति' अन्यथा ये विभाषेत्यस्यावकाशः खायते खन्यते अस्य त्ववकाशो यस्मिन्पक्षे आत्वं नास्ति आत्वपक्षे उभय-प्रसङ्गे परत्वादन्तरङ्गत्वाच्चात्वं स्यात् । एतच्च ये विभाषेति विषयसप्तमी-पक्ष उच्यते, तदा हि यकारादौ बुद्धिस्थ एव भवदात्वमन्तरङ्गम् अयं त्विकारः क्यपा सह विधानाद्बहिरङ्गः । परसप्तमीपक्षे त्विदमेवेत्वमन्तरङ्गं परनिमित्तमनपेक्ष्य विधानात् ॥

# भृञोऽसंज्ञायाम् । ३ । १ । ११२ ॥

प्रतिषेध इति । (भा)

भाष्ये स्त्रीलिङ्गभार्याशब्दविषयेऽनर्थकोऽसंज्ञायामिति प्रतिषेध इत्यर्थः ॥ असंज्ञीशब्दस्य संज्ञाशब्देन समानाधिकरणसमासमभिप्रेत्य तद्विरुद्धे कर्मणि संज्ञाशब्दं व्युत्पादयति

संज्ञायत इति । (कै)

असंज्ञी रूपा बोध्या यस्यास्तौत्यर्थः ॥

भृञो ऽसंज्ञायाम् । क्यप् स्यात् । भृत्याः कर्मकराः । भर्तव्या इत्यर्थः । तथाच क्रियाशब्दोयं न तु संज्ञा । समस्र बहुलम् ॥ असंज्ञायामेव सूत्रेण नित्यं प्राप्तस्य क्यपो विकल्पार्थमिदं वार्तिकम् । सम्भृत्याः । सम्भार्याः । असंज्ञायां किम् । भार्यो नाम क्षत्रियः । संज्ञायां पुंसि वृत्तत्वान्न ते भार्या प्रसिध्यति । स्त्रियां भावाधिकारोस्ति तेन भार्या प्रसिध्यति ॥ अथवा बहुलं कृत्याः संज्ञायामिति च स्मृतम् । यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा ॥ अस्यार्थः । ते तव सूत्रकारस्य भार्याशब्दो न सिध्यति ण्यतं बाधित्वा संज्ञायां समजनिषदेत्यादिना क्यपः

---

"भृञो ऽसंज्ञायाम्" ॥ 'भर्तव्या इत्यर्थ इति'। एतेन क्रिया शब्दत्वं दर्शयन् संज्ञात्वमपाकरोति । 'संपूर्वाद्विभाषेति' । असंज्ञायामेव सूत्रेण नित्यं प्रसक्तस्य क्यपोयं विकल्पः । प्राप्तविभाषेत्यर्थः । 'संज्ञायामित्यादि' । प्रतिषेधस्येति शेषः । असंज्ञायामित्यस्य प्रतिषेधस्य भार्यो नाम क्षत्रिय इत्यत्र पुंसि वृत्तत्वाच्चरितार्थत्वान्न ते सूत्रकारस्य भार्या शब्दः सिद्ध्यतीत्यर्थः । पुंसि चरितार्थे हि प्रतिषेधे स्त्रियां क्यपा भवि-

अन्यथेति । (कै)

"संज्ञायां समजेति" क्यबन्तानां समज्या इत्यादीनां स्त्रीलिङ्गत्वादिति भावः ॥

लौकिकीत्विति । (कै)

न च विपरीतं किं न स्यादिति वाच्यम् । "स्त्रियां क्तिन्"-इत्यत्र न स्त्रीत्वस्यैव ग्रहणास्यापि तत्रैव प्रवृत्तेरिति भावः ॥ भाष्ये

यथा न्यासमिति । (भा)

"संज्ञायां समेति" सूत्रे यदधिकं न स्त्रियामित्यादिकं तन्न कार्यमित्यर्थः ॥

---

प्रसङ्गात् । ननु भृञोऽसंज्ञायामिति प्रकृतसूत्रे संज्ञायां निषेधसामर्थ्यात् संज्ञायां समजेत्यादिसूत्रान्तरप्राप्तोपि क्यप् भृञः संज्ञायां न भविष्यति । न चैवं तत्र संज्ञायामित्यस्य वैयर्थ्यं, धात्वन्तरेषु चरितार्थत्वात् इत्याशङ्क्याह । संज्ञायामित्यादि । प्रतिषेधस्येति शेषः । असंज्ञायामित्यस्य प्रतिषेधस्य पुंसि भार्या नाम क्षत्रिय इत्यत्र दृष्टत्वात् चरितार्थत्वात् । तथा च सामर्थ्यं नास्तीति भावः । तस्मात् भार्याशब्दो न सिध्यतीति चोद्यं सुस्थम् । उत्तरमाह । स्त्रियां भावाधिकारोऽस्तीति । ननु संज्ञायां समजेति सूत्रे वृत्तिकृद्वक्ष्यति भाव इति न स्मर्यते पूर्वं एवाधिकार इति । युक्तं

---

तथ्यम् । ननु भार्याशब्दोपि संज्ञा, अभ्रियमाणापि हि भार्या भार्येत्युच्यते तत्कृतोऽस्य क्यपः प्रसङ्गः, न ह्यनेन क्यपा भवितव्यमिति यस्तु संज्ञायामेव विधीयते संज्ञायां समजनिषदेत्यादिना तस्यात्र प्रसङ्गः, न च तस्यापि प्रतिषेधसामर्थ्यान्निवृत्तिः, पुंसि प्रतिषेधस्य चरितार्थत्वादिति चोद्यम् उत्तरमाह । 'स्त्रियां भावाधिकारोऽस्तीति' ननु संज्ञायां समजनिषदेत्यत्र वक्ष्यति भाव इति न स्मर्यते पूर्वक एवाधिकार इति यथा समजन्ति

भाव इति तथानुवर्त्तत इति । (भा)

ननु "समजनिषदनिपतानाम"धिकरणे मन्यविषयोः करणे तेन सिद्धे णकारः कथं भावे इत्यस्य तत्र सम्बन्ध इति चेन्न भृञ् विषये भाव इत्यस्य तत्र सम्बन्ध इति चेन्नेतिवर्त्तते इत्यर्थः । एवं च भृञो भाव एवेष्यत इति भावः । एवमग्रे भावाधिकारोऽस्तीत्यपि व्याख्येयम् ॥

संज्ञाशब्द इति । (कै)

संज्ञाशब्देन कर्मसाधनेन संज्ञायमानमभिधीयते । तथाभिधेये प्रत्ययश्चेत् तर्हि भृत्याशब्देन स्यादेव रहित्यभिधानमिति भावः ॥ भावसाधनेन धातूनामनेकार्थत्वाद्रूढिरुच्यते तदाह

चैतत् । समजन्ति तस्यामिति समज्या । निषीदन्ति तस्यामिति निषद्येत्यादिदर्शनात् । तत्कथमुच्यते स्त्रियां भावाधिकारोऽस्तीति । सत्यम् । स्त्रियां स्त्रीप्रकरणे संज्ञायां समजेत्यादिना क्यपि विधीयमाने भावस्याधिकारः । अभिधेयत्वोपगमलक्षणो व्यापारोऽस्ति । शब्दशक्तिस्वाभाव्याद्भाव एव क्यप न तु कर्मणीत्याशयः । एतदपरितोषादेवाह । अथवेति न पतत्यनेनेत्यपत्यम् । असन्तात् भावकर्मणोर्विधीयमानोऽपि यत् हलन्तात्यगो न भवति जन्यमित्यत्रापि हलन्तादेव भित्तिरित्यत्र सिद्धिरादि-

तस्यामिति समज्या निषीदन्ति तस्यामिति निषद्येत्यादि भवति तत्कथमिदमुच्यते स्त्रियां भावाधिकारोऽस्तीति, नेदमपूर्वं चोद्यं हरिकार एव हि तत्र वक्ष्यति कथं तदुक्तं स्त्रिया भावाधिकारोऽस्तीति स्त्रियां स्त्रीप्रकरणे संज्ञायां समजेत्यादिना क्यपि विधीयमाने भावस्याधिकारोऽभिधेय भावोपगमलक्षणो व्यापारोऽस्ति शब्दशक्तिस्वाभाव्याद् भाव एव तेन क्यप्

**रूढिरिति । (कै)**

तद्विषयोऽर्थ इत्यर्थः । तेन रूढ्यर्थो गम्यत इत्यर्थः । नाम-धेयवाचिसंज्ञाशब्दस्तु करणव्युत्पन्नश्च इति बोध्यम् ॥

**अपर आहेति (भा)**

भाष्ये

**सिद्धन्तु स्त्रियां संज्ञाप्रतिषेधात् (भा)**

इत्याद्यकरणेन पक्षान्तरत्वं

**कर्मणि क्यबभावादिति । (कै)**

भृञ इति शेषः । अन्ये स्वरान्ये स्वरार्थं यदेवेष्यते स बाहुल-कादेव सिद्ध इति यनिजनेरित्युक्तमुपसंख्यानं न कार्यमिति बोध्यम् ॥ भाष्ये

**सम्भारा इति । (भा)**

सम्भरा इति पाठे भृ इति या दीर्घान्ता आदेर्कदोरब्बोध्यः ॥

---

ण्योऽङ् इत्यङो विषये क्तिन् । सर्वमिदं यथा बाहुलकाद्भवति, एवं भार्याशब्दे क्यब्विषये ण्यद्भवतीत्यर्थः । अथवा इत्थं समाधेयम् । क्यब्विधौ भृञ् भरणे इति भ्वादिरेव गृह्यते न जौहोत्यादिको डुभृञ् । द्व्यनुबन्धकत्वात् । एवञ्च बिभर्तेर्वा भृञ भरणे इति दीर्घान्तात् क्याद्वेर्वा ण्यति भार्याशब्दो निर्बाध एवेति ।

---

भवति न कर्मणि तेन भार्या प्रसिद्ध्यतीति कर्मणीत्यभिप्रायः, एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति भृञ् भरणे इत्यस्यैव क्यब्विधौ ग्रहणं न डुभृञ् धारणपोषणयोरित्यस्य, अतस्तस्माद्वा भृञ् भरणे इत्यस्माद्दीर्घान्ताद्वा भार्येति प्रसिद्ध्यतीति परिहारान्तरमप्यत्र सम्भवति ॥

# राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्ट-पच्याव्यथ्याः। ३। १। ११४॥

## सूसर्तिभ्यामिति (कै)

राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः॥ एते सप्त क्यबन्ता निपात्यन्ते। अभिषिक्तः क्षत्रियो राजा तेन सोतव्यो ऽभिषवद्वारेण निष्पादयितव्य इत्यर्थे कर्मणि क्यप्। दीर्घत्वञ्च निपात्यते रूपार्थम्। यद्वा लतात्मकः सोमो राजा। राजानं क्रीणन्तीत्यादौ दर्शनात्। स सूयते कण्ड्यते अत्रेत्यर्थे अधिकरणे क्यप्। निपातनं रूपार्थम्। तेन आद्यपक्षे अश्वमेधादौ द्वितीयपक्षे ज्योतिष्टोमादौ च नातिप्रसङ्गः। राजसूयशब्दश्च पुन्नपुंसकलिङ्गो ऽर्धर्चादित्वात्। सरत्याकाशमार्गे इति सूर्यः। सृ गतौ। कर्तरि क्यप् निपातनादुत्वं हलि चेति दीर्घः। यद्वा षू प्रेरणे तुदादिः।

“राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः”॥ ‘राज्ञा सोतव्य इति’। अभिषिक्तः क्षत्रियो राजा तेन सोतव्योऽभिषवद्वारेण निष्पादयितव्य इत्यर्थः, कर्मणि क्यप् दीर्घत्वं च निपात्यते, ‘राजा वा इह सूयत इति’। अत्र पक्षे लतात्मकः सोमो राजा राजानं क्रीणन्तीत्यादौ दर्शनात्, सुनोतिरत्राप्यभिषवे ऽधिकरणे क्यप्निपातनं रूपार्थं, तेन ज्योतिष्टोमादौ न भवति, पूर्वस्मिन्नपि पक्षेऽश्वमेधादावतिप्रसङ्गः। ‘सूसर्तिभ्यामिति’। ननु सर्तेरुत्वं सुवतेर्वा रुडागम इत्यभिधानाद्विकल्पोऽत्राभिप्रेत इति चार्थाभावाद् द्वन्द्वानुपपत्तिः, भाष्यकारप्रयोगात्तु द्वन्द्वः, प्रयुक्तं हि भाष्ये सूसर्तिभ्यां च सर्तेरुत्वं सुवतेर्वा रुडागम इति। ‘सर्तेरुत्वमिति’।

भाव्यस्य क्यप् निपात्यत इति शेषः । कुप्ये गुप्यादेः कत्वम् । सुवर्णरजतभिन्नं धनं कुप्यम् ॥

---

सुवति कर्मणि लोकं प्रेरयतीत्यर्थे कर्तरि क्यपि कृते क्यपोरुडागमश्च निपात्यते । मृषोपपदाद्वदेः कर्मणि क्यप् । पक्षे यति प्राप्ते नित्यं क्यप् निपात्यते । विश्रोध्यनिश्चेयम् । भवन्ति नोद्दामगिरां कवीनामुच्छ्राय-सौन्दर्यगुणा मृषोद्या इति माघः । रोचते असौ रुच्यः । कर्तरि क्यप् । गुपेरादेः कुत्वञ्च संज्ञायाम् ॥ कुप्यम् । सुवर्णरजतातिरिक्तस्य धनस्येयं संज्ञा । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः । कर्मकर्तरि निपातनम् । इहान्तोदात्तत्वमपि निपात्यते । शुद्धे तु कर्मणि कृष्टपाक्या इत्येव भवति । न व्यथते अव्यथ्यः । कर्तरि क्यप् । अत्र वार्तिकानि सूर्यरुच्याव्यथ्याः कर्तरि ॥ सूसर्तिभ्यां च सर्तेरुत्वम् ॥ सुवतेर्वा रुडागमः ॥ कुप्यं संज्ञायामिति ॥

दीर्घत्वं तु रपरत्वे सति 'हलि चे'त्येव सिद्धम् । 'सुवतेर्वा रुडागम इति' । सुवतेरिति पञ्चमी सुवतेः परस्य क्यप इत्यर्थः, रुगागम इति पाठे षष्ठी । 'सरतीति' । आकाशे । 'सुवतीति' । षू प्रेरणे तुदादिः, कर्मणि लोकं प्रेरयतीत्यर्थः, उदिते हि तस्मिन्क्रियासु लोकस्य प्रवृत्तिः, कर्तृप्रत्ययेन कर्तरि निपातनं दर्शयति, एवं रुच्याव्यथ्ययोरपि द्रष्टव्यम् । आह च सूर्यरुच्याव्यथ्याः कर्तरीति । 'कुप्यमिति' । संज्ञायामेतदिष्यते सुवर्ण-रजतव्यतिरिक्तस्य धनस्येयं संज्ञा, सर्वत्रातिप्रसङ्गो निपातनाश्रयेण परि-हार्यः । 'कर्मकर्तरि निपातनमिति' । अन्तोदात्तस्य चेति द्रष्टव्यम्, आह हि कृष्टपच्यस्यान्तोदात्तत्वं कर्मकर्तरि चेति, शुद्धे तु कर्मणि कृष्टपाक्य इत्येव भवति ॥

# प्रत्यपिभ्यां ग्रहेः । ३ । १ । ११८ ॥

अपिगृह्य । (भा)

शब्देन बलात्कारग्राह्यमुच्यत इति केचित् ॥

# अमावस्यदन्यतरस्याम् । ३ । १ । १२२ ॥

यत्प्रत्यय इति । (कै)

सूत्रे तदानुपूर्व्या एव श्रवणादित्यर्थः ॥

अमावस्यदन्यतरस्याम् ॥ अमाशब्दः सहार्थे वर्तते । अमात्य इत्यादौ दर्शनात् । तस्मिन्नुपपदे वसेर्धातोरधिकरणे ण्यत् तन्निमित्तायां वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । निपातनादेव कालविशेषे रूढिर्लभ्यते । अमा सह सन्निकृष्टौ वसतोऽस्यां चन्द्रार्कौ इत्यमावस्या अमावास्या । एकदेशविकृतस्यानन्यत्वात् अमावास्यायावेति दीर्घमध्यमनूद्य विहित-

---

"अमावस्यदन्यतरस्याम्" ॥ 'अमाशब्दः सहार्थे वर्तत इति' । अमात्य इत्यादौ दर्शनात् । 'तस्मिन्नुपपद इति' । उपपदत्वमपि निपातनादेव, अमेति वा सप्तम्या लुका निर्देशः, तकारोच्चारणात्प्रकृतस्य ण्यपत्वावन्निपातनं न भवति, यदि तु परमप्रकृतस्य यतो निपातनं स्यात्स्वरे दोषः स्यादिति मति यस्याशब्दे यतो नाव इत्याद्युदात्तत्वं तदुतर-

## अन्तस्वरितमिति । (कै)

अमेति सुप्यजातीकमित्युपपदत्वात् निपातनेन वा तत्त्वादुपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणेति भावः ॥

## यत्प्रत्ययेति । (कै)

निरस्तावयवविभागः समुदाय एव निपात्यते तस्य च तकारान्तत्वाद् अन्तस्वरितत्वं सिध्यतीति भावः ॥ अमावास्याशब्दस्थाने चेदं निपातनमिति तद्ग्रहणेनास्य ग्रहणमपि सिद्धमिति तात्पर्यम् ॥

भाष्ये

स्वरितो वृत्तमध्यादपि सिद्ध्यति । यदि तु यत्प्रत्ययान्तस्येदं पाक्षिकं निपातनमित्याश्रीयेत तदा यता मुक्ते अमावास्येत्यधिकरणे ण्यदेव तावद्दुर्लभः । अथापि बाहुलकाल्लभ्येत, एवमपि अमावास्याया वेत्यत्र ण्यदन्तग्रहणे यदन्ते न गृह्येत । किञ्च ण्यत्पक्षे उपपदसमासो न स्यात् । मयूरव्यंसकादित्वात्सिध्यतीति चेत् एवमपि गतिकारकोपपदादिति स्वरो न स्यात् । किं त्वन्तोदात्तः स्यात् । इष्यते तु तिस्वर एव । अमावास्या-

पदप्रकृतिस्वरत्वेपि स एव स्वरोवतिष्ठते ण्यति त्वन्तस्वरितत्वं भवति तथा यता मुक्ते ऽमावास्येत्यधिकरणे ण्यन्न प्राप्नोति, 'कृत्यल्युटो बहुल'मिति भविष्यति, एवमप्युपपदसमासो न प्राप्नोति, मयूरव्यंसकादित्वात्सिध्यति, एवमपि गतिकारकोपपदादिति स्वरो न प्राप्नोति, तथा 'अमावास्याया वे'ति ण्यदन्तस्य यत्कार्यं तद्यदन्तस्यामावस्याशब्दस्य न स्याद् भिन्नत्वादिति यदन्तपक्षे दोषं दृष्ट्वा प्रकृतस्यापि ण्यत एव निपातनमित्याह । 'ण्यत्प्रत्ययोभवतीति' । किं तर्ह्युच्यते ण्यत्प्रत्ययो भवतीति न पुनर्ण्यत्प्रत्ययो निपात्यत इति, सत्यं स एवार्थोनिपातनाद् ण्यत्प्रत्ययो भवतीत्यर्थः ।

छिनत्तीत्याद्युदात्तत्वं न प्राप्नोतीति । (भा)

छिनत्तीतिपरसप्तमीत्यभिप्रायेणेदम् । प्रकृते स्वरितत्वं न प्राप्नोतीत्यपि बोध्यम् । तत्सूत्रे प्रत्ययग्रहणस्य प्रत्याख्यास्यमानत्वात् तद्रीत्येदं भाष्यमित्यन्ये ॥

एकतरस्येतीति । (कै)

वसधातुभ्यां ण्यतोः कृतयोरन्यतरस्येत्यर्थः ॥

सुभगासुपूर्व । यदाग्नेयोऽष्टाकपालोमावास्यायामित्यादौ स्यामध्ये स्वरितत्वस्य शेषनिघातस्य च पठ्यमानत्वात् । तस्मात् ण्यदन्तस्यैव वृद्धौ सत्यां पक्षे ह्रस्वो निपात्यत इति यथाव्याख्यानमेवादर्तव्यम् । यथा च भाष्यम् । अमावसोरहं ण्यतोर्निपातयाम्यवृद्धिताम् । तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति ॥ इह व्यक्तिभेदाश्रयो द्विवचननिर्देशः । एकस्येति शेषः । ण्यतोः, ण्यदन्तयोः । अमापूर्वयोर्वसोर्मध्ये एकस्य अवृद्धितां ह्रस्वम्, अहं निपातयामि । सूत्रकारेणैक्यमापन्नस्येयमुक्तिः । तथा सति, तयोः शब्दयोरेका तद्धितवृत्तिर्ययोः । तथा सिध्यति एकदेशविकृतस्यानन्यत्वात् ।

'अन्यतरस्यां वृद्ध्यभावो निपात्यत इति' । ण्यत्प्रत्ययो नित्यः वृद्ध्यभावस्तु पाक्षिक इत्यर्थः । 'सह वसत इति' । सन्निकृष्टौ वसत इत्यर्थः । यदुक्तं ण्यत्प्रत्ययो निपात्यत इति तत्रायं गुण इत्याह । 'एकदेशविकृतस्यानन्यत्वादिति' । ण्यति अमावास्येति स्वतः प्राप्तं रूपं वृद्ध्यभावस्तु तस्यैव विकार इति भावः, यद्वा ण्यति वृद्धौ कृतायां पक्षे ह्रस्वोपि निपात्यते स एव वृद्ध्यभाव उक्तः, एवं श्लोकेप्यवृद्धितामिति, किमत्र निपात्यत इत्याशङ्कायां श्लोकः । 'अमावसोरित्यादि' । वृद्धिभावाभावकृतविशेषाश्रयो द्विवचननिर्देशः । 'निपातयामीति' । एकस्यैवेति शेषः, अमापूर्वयोर्व-

वसोरिति । (भा)

पञ्चम्यर्थे षष्ठी । द्विवचनं ण्यदेऽप्यमाशब्दे उपपदे निपात्यते इति बोध्यम् । अन्यथोपपदत्वाभावे समास उत्तरपदप्रकृतिस्वरश्च न स्यादिति बोध्यम् । वार्त्तिकेऽवृद्धिताशब्दे तद्रूपो लभ्यते तद्ध्वन्यथाह

एकदेशेति ॥ (कै)

भाष्ये

स्वरश्च मे इति । (भा)

तिङ्प्रत्ययप्रयुक्तः स्वरित इत्यर्थः ॥

---

एवं निपातयतो मे स्वरोपि सिध्यति । स च व्याख्यात एव । न च सिद्धान्तेपि उत्तरपदप्रकृतिस्वरो दुर्लभः । सूत्रे सप्तम्यभावेन उपपदसंज्ञाया अप्रवृत्तौ उपपदात्परत्वाभावादिति वाच्यम् । अमेति सप्तम्यालुका निर्देशादिति भावः ॥

सोर्ण्यन्तयोर्मध्ये एकस्य वृद्ध्यभावमहं निपातयामीत्यर्थः । सूत्रकारेणैवमापन्नस्यैतद्वचनं, तथा सति किं सिद्धमित्यत्राह । 'तथेति' । एकानद्धितद्धितिरेकदेशविकृतस्यानन्यत्वाद् एतयोर्द्वयोरपि सिद्धतीत्यर्थः । 'स्वरश्च मे प्रसिद्ध्यतीति' एवं निपातयतो मम स्वरोपि सिद्ध्यति, व्याख्यातः स्वरः ॥

# छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि । ३ । १ । १२३ ॥

निकृतेराद्यन्तविपर्ययः कृतार्थम् इत्ययुक्तं मत्वाह

कृतशब्दस्येति ॥ (कै)

तत्प्रयोजन इत्यस्यान्तस्थाने तदुत्पत्तिः प्रयोजनस्येत्यर्थः।
तद्धनयन्नाह

छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ एतानि सप्तदश छन्दसि निपात्यन्ते। कृती छेदने अस्मात् निस्पूर्वात् क्यपि प्राप्ते ण्यत् आद्यन्तयोर्विपर्यासः निसः षत्वं च निपात्यते। निष्टर्क्यं चिन्वीत

"छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि"। 'नुमभाव-

(अ. ३ । पा. १ । आ. ६) (छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्य-
मर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्य-
प्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्य-
पृडानि । ३ । १ । १२३ ।)

## परस्परेति । (कै)

अन्यथा आद्यन्तयोस्थाने तृतीयवर्णं करणमप्याद्यन्तविपर्ययः स्यादिति भावः ॥ निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थं इत्येव भाष्ये पाठ इति कैयटतात्पर्यम् । साम्प्रतपुस्तकेषु तु निष्टर्क्ये कृतेराद्यन्तविपर्ययश्छन्दसि कृताद्यर्थो यथा कृतेस्तर्क इत्यादि दृश्यते । तत्र निष्टर्क्ये कृतेश्छन्दसि इत्यन्वयः । निपात्यत इति शेषः । प्रत्ययप्रकरणात्क्यप्निपात्य षत्वं च निपात्यतामित्यर्थः ।

पशुकामः । देवशब्द उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घत्वं तुगभावश्च । स्पर्द्धन्ते वा उ देवहूये । अत्र प्रपूर्वादुत्पूर्वाच्च नयतेः क्यप् । प्रणीयः । उन्नीयः । उत्पूर्वाच्छिषेः क्यप । उच्छिष्यम् । मृङ् प्राणत्यागे । स्तृञ् आच्छादने ध्वृ हूर्छने । एभ्यो यत् । मर्यः । स्तर्या । स्त्रियामेवास्य निपातनम् । ध्वर्यः । खनेर्यत्ण्यतौ । खन्यः । खान्यः । देवशब्द उपपदे यजेर्यप्रत्ययः । शुन्धध्वं दैव्याय कर्मणे देवयज्यायै । प्रत्ययस्वरेणान्तोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरः । स्त्रीलिङ्ग एवेदं निपातनम् । आङ्पूर्वात्पृच्छेः क्यप् । आपृच्छ्यं धरुणं वाज्यर्षति प्रतिपूर्वात्सीव्यतेः क्यप् षत्वञ्च । प्रतिषीव्यः । ब्रह्मण्युपपदे वदेर्ण्यत् । वदः सुपि क्यप् चेति प्राप्तयोः क्यब्यतोरपवादः । ब्रह्मवाद्यम् । अथ कथं ब्रह्मोद्यं वदन्तीति । छन्दसि विशेषविहितेन ण्यता लोके चरितार्थस्य वदः सुपीति क्यपः बाधप्रसङ्गात् ।

स्येति'। यदा जुहोतेस्तदेति भावः । 'उपचाय्यपृडमिति' मृड सुखे पृड च इत्येतस्मादिगुपधलक्षणः कः, उपचाय्यं च तत्पृडं चेति कर्मधारयः

( छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्य-
मर्यस्तर्याध्वर्यखन्यखान्यदेवयज्याआपृच्छ्य-
प्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्य-
पृडानि । ३ । १ । १२३ । ) (अ. ३ । पा. १ । आ. ६)

अन्यथा ऋदुपधत्वात् क्यबेव स्यादिति भावः। आद्यन्तविपर्ययः कृताद्यर्थ इत्यस्य कृताद्यर्थं आद्यन्तविपर्यय आवश्यकस्तेनाचापि सिद्धे तदर्थं न निपातनमित्यर्थः। कृताद्यर्थं इत्यादिशब्दार्थमेव दर्शयति कृतेस्तर्कं इत्यादिना ॥ अपर आह

**निष्टर्क्ये व्यत्ययमिति ।** (भा)

वर्णव्यत्ययं प्रत्ययव्यत्ययं चेत्यर्थः ॥

**व्यत्ययो बहुलमिति ।** (कै)

सूत्रेणेति भावः ॥ एवं च षत्वमात्रफलकं निपातनमित्याह

न च वासरूपन्यायः। सरूपत्वात्। नानुबन्धकृतमसारूप्यमित्युक्तत्वात्। सत्यम्। कृद्व्यत्ययोऽत्र बोध्यः। उक्तं हि। कालहलच् स्वरकर्तृयङां चेति। तत्र हि कर्तृग्रहणं कृत्प्रत्ययपरमित्यवोचाम। भवतेस्तौतेश्च ण्यत्। भाव्यः। स्ताव्यः। उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च निपात्यते पृडे उत्तरपदे। मृड सुखने। पृड च। इत्येतस्मादिगुपधलक्षणः कः। उपचाय्यपृडम्। हिरण्य इति वक्तव्यम्। उपचेयपृडमेवान्यत्। अत्र वार्त्तिकम्। निष्टर्क्ये व्यत्ययं विद्यात् निसः षत्वं निपातनात्। ण्यदायादेशौ इत्येतौ उपचाय्ये निपातितौ। ण्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः।

'हिरण्ये चेति वक्तव्यमिति'। 'हिरण्येऽभिधेय इत्यर्थः'. 'व्यत्ययमिति'। आद्यन्तविपर्यास इत्यर्थः। 'ण्यदेकस्मादिति' एकस्माद्धातोर्ण्यत्प्रत्ययो निपात्यते, तदनन्तरेषु देवहूयादिषु चतुर्षु चतुर्भ्यो धातुभ्यः क्यप् निपा-

 ( छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्य-
मर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्य-
प्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्य-
पृडानि । ३ । १ १०३ । )

**निसः षत्वमिति ।** (भा)

भाष्ये

**ण्यद्विधिश्चतुरिति ।** (भा)

सुजन्तमेतत् । चतुरो वारानित्यर्थः । चतुर्भ्य इति यावत् ॥

**उपपूर्वाच्चिनोतेरिति ।** (भा)

पृडे उत्तरपदे इति यावत् । पृडेरिगुपधलक्षणः कः ॥

---

ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥ व्यत्ययमिति । आद्यन्तविपर्यासमित्यर्थः । चतुर्भ्य इति देवहूयादिषु चतुर्भ्यो धातुभ्यः क्यप्, उपसर्गभेदाच्च यतेर्भेदः । द्वौ क्यपाविति । द्वाभ्यां धातुभ्यां द्वाविति भावः । ण्यद्विधिश्चतुरिति । सुजन्तम् । चतुरो वारान् ण्यद्विधीयत इत्यर्थः ॥

र्यते । उपसर्गभेदाच्च यतेर्भेदः । द्वौ क्यपाविति’। द्वाभ्यां धातुभ्यां द्वौ क्यपौ निपात्येते इत्यर्थः । ‘ण्यद्विधिश्चतुरिति’ सुजन्तमेतत्, क्रियाभ्यावृत्तिवाचि चतुरो वा ण्यद्विधीयत इत्यर्थः ॥

# ऋहलोर्ण्यत् । ३ । १ । १२४ ॥

पाणौ सृजेर्ऋदुपधादिति क्यपोऽपवादो ण्यत् ॥

लपिदभिभ्यां च । (भा)

योरदुपधादिति ण्य एव ॥

---

ऋहलोर्ण्यत् ॥ ऋवर्णान्तात् धातोर्हलन्ताच्च ण्यत् स्यात् । कार्यम् । हार्यम् । वाक्यम् । पाक्यम् । सूत्रे पञ्चम्यर्थे षष्ठी । ऋ इति च अर्तेर्ग्रहणं न भवति किन्तु वर्णग्रहणम् । हला साहचर्यात् । परङ्कार्यमिति निर्देशात् । ईडवन्दवृशंसदुहांण्यत इति लिङ्गाच्च । अत्र वार्त्तिकानि । पाणौ सृजेर्ण्यद्विधिः ॥ ऋदुपधत्वात्प्राप्तस्य क्यपोपवादः । पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः । समवपूर्वाच्चेति वक्तव्यम् ॥ समवसर्ग्या । लपिदभिभ्याञ्चेति वक्तव्यम् ॥ अपलाप्यम् । अवदाभ्यम् । आभ्यां पोरदुपधादिति प्राप्तस्य यतोपवादः । अत्र दभिर्धातुष्वपठितोऽपि वार्त्तिकवचनात् चुराद्यन्ते बहुलमेतन्निदर्शनमिति बहुलग्रहणाल्लुम्पादिवत्साधुः । तथा च प्रयुज्यते । न तानशन्ति न दभाति तस्कर इति, विष्णुर्गोपा अदाभ्य इति च । जयादित्यस्तु आद्यं वार्त्तिकद्वयम् एतिस्तु शास्विति सूत्रे पठित्वा तृतीयवार्त्तिकोक्तयोर्धात्वोर्मध्ये लपिम् आसुयुवपीति सूत्रे रपि-लपि प्रक्षिप्य अनुक्तसमुच्चयार्थेन चकारेण दभेः सङ्ग्रहमाह । तत्र वैरूप्यं निर्बीजमेवेत्यवधेयम् ॥

"ऋहलोर्ण्यत्" ॥ 'ऋवर्णान्तादिति' । अर्त्तेस्तु ग्रहणं न भवति हला साहचर्यात् परं कार्यमिति निर्देशाद् 'ईडवन्दवृशंसदुहां ण्यत' इति लिङ्गाच्च ।

# ओरावश्यके । ३ । १ । १२५ ॥

ननु उक्तार्थत्वादवश्यशब्दप्रयोग एव न स्याद् ण्यदेव वा न स्यादिति कुतो नोक्तमत आह

द्वावपूपाविति ॥ (कै)

द्योत्य (भा) इत्युक्तेर्द्योतकसमुच्चयो दृष्ट एवेति लभ्यते । उपपदत्वाभावात् स्वरसमासयोरनुपपत्तिरिति भावः ॥ ननु विस्पष्टादीनि गुणवचनेऽषित्यनेन पूर्वपदप्रकृतिस्वरविधानादच चोत्तरपदप्रकृतिस्वरस्येष्टत्वेन विस्पष्टादिवदित्यसङ्गतमिति मत्वाह

ओरावश्यके । उवर्णान्ताद्धातोर्ण्यत् स्यात् आवश्यके द्योत्ये । अवश्यं भाव आवश्यकम् मनोज्ञादित्वाद्वुञ् । अव्ययानां भमात्रे टिलोपः । लाव्यम् । पाव्यम् । द्योतितार्थस्यापि क्वचित्प्रयोगो दृश्यते । लाघवं प्रत्य-

"ओरावश्यके"। 'अवश्यं भात्र आवश्यकमिति'। मनोज्ञादित्वाद्वुञ्, अव्ययानां भमात्रे टिलोपः, किं पुनरवश्यार्थवाचिन्युपपदे प्रत्यय आहो स्विदावश्यके द्योत्ये, तत्राद्ये पक्ष उपपदरहितात्प्रत्ययो न स्यात् लाव्यं पाव्यमिति तस्माद् द्वितीयः पक्ष आश्रीयत इत्याह । 'आवश्यके द्योत्य इति'। 'स्वरसमासानुपपत्तिरिति'। उपपदपक्षे उपपदसमासो लभ्यते गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वं च द्योत्यपक्षे त्वेतद्द्वयमपि न सिद्ध्यतीत्यर्थः। 'अवश्यलाव्यमिति'। लुम्पेदवश्यमः कृत्य इति मलोपः, द्योतितार्थस्यापि क्वचित्प्रयोगो दृश्यते लाघव प्रत्यनादरात्,

यथेति । (कै)

एवं च मयूरव्यंसकादिषु निपातनादेव सिद्धे विस्पष्टादीनीति सूत्रमपि न कार्यमिति भावः ॥

---

नादरात् । अवश्यलाव्यम् । अत्रोपपदसमासासम्भवेऽपि मयूरव्यंसकादेराकृतिगणत्वात्समासः ॥ उत्तरपदप्रकृतिस्वरत्वमपि तत्रैव निपातनाद्बोध्यम् ॥

न त्वेतदत्र वक्तव्यं लुम्पेदवश्यमः कृत्ये इति वचनादेव द्योतिते अवश्यमः प्रयोग इति तस्यावश्यकर्मत्वादौ चरितार्थत्वात् । 'मयूरव्यंसकादित्वादिति' । तस्याकृतिगणत्वादिति भावः । 'उत्तरपदप्रकृतिस्वरत्वे चेति' । मयूरव्यंसकादिनिपातनादेव स्वरोऽपि भविष्यतीत्यपि प्रकृतं वक्तुम् ॥

# आनाय्यो नित्ये । ३ । १ । १२७ ॥

## सम्भावने लिङिति । (कै)

दक्षिणाग्नौ युक्तं त्वं सम्भाव्यते निपातनादित्यर्थः ॥

आनाय्योऽनित्ये ॥ नयतेराङ्पूर्वात् ण्यदायादेशौ निपात्येते । रूढ्यर्थमपि निपातनम् तेन घटादौ न भवति । किन्तु दक्षिणाग्निविशेष एव भवति ; तथाहि । दक्षिणाग्नेर्योनिर्विकल्प्यते । वैश्यकुलाद्वित्तवतः भ्राष्ट्राद्वा । गार्हपत्याद्वेति । तत्र यो गार्हपत्यादानीयते आहवनीयेन सहैकयोनिः तत्रैवेदं निपातनं तस्य चानित्यत्वम् । सततमप्रज्वलनात् । अत्र भाष्यम् । आनाय्योऽनित्य इति चेद्दक्षिणाग्नौ कृतं भवेत् । एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ॥ चेदित्यस्यानन्तरं घटादिष्वतिप्रसङ्ग इति शेषः । भवेदिति सम्भावने लिङ्, निपातनादेव रूढिः सम्भाव्यत इत्यर्थः । एकयोनाविति । आहवनीयेन सहेति शेषः । आनेय इति घटादावनित्ये भिन्नयोनौ च दक्षिणाग्नौ अचोयदिति यदेव भवतीत्यर्थः ॥

"आनाय्योऽनित्ये" ॥ 'रूढिरेषेति' । तेन घटादावतिप्रसङ्गो नोद्भावनीय इति भावो निपातनाच्च रूढित्वम्, उक्तं हि रूढ्यर्थं च निपातनमिति । 'कुतः पुनरनित्यत्वमित्यत्राह' । 'तस्य चानित्यत्वमिति' । 'नित्यमजागरणादिति' । सततमज्वलनादित्यर्थः, ज्वलनमेव हि तस्य जागरणम्, दक्षिणाग्नावपि विशिष्ट एवेष्यते न सर्वत्रैवेति दर्शयति । 'यस्येति' । योनिरुत्पत्तिस्थानम् । वैश्यकुलादित्यादिना योनिविकल्पं दर्शयति । 'आनाय्योऽनित्य इति' । 'चेदिति' घटादिष्वपि प्रसङ्ग इति शेषः । 'भवेदिति' । सम्भावने लिङ् निपातनादेव सम्भाव्यत इत्यर्थः ; 'एकयोनाविति' 'आहवनीयेन' । 'आनेयोऽन्यथा भवेदिति' । घटादावनित्ये भिन्नयोनौ च दक्षिणाग्नौ 'अचो यदि'ति यदेव भवतीत्यर्थः ।

# पाय्यसांनाय्यनिकाय्यधाय्यामान-हविर्निवाससामिधेनीषु । ३ । १ । १२९ ॥

भाष्ये

पाय्यनिकाय्ययोरिति । (वा)

आयादेशोऽपि निपात्यत इति बोध्यम् ॥

पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ यथासंख्यं चतुर्षु चत्वारो निपात्यन्ते । पाय्यं मानम् । मीयतेनेन मानम् माङो ण्यत्प्रत्ययः करणे । आतोयुक् चिण्कृतोरिति युक् धात्वादेः पत्वञ्च निपातनात् । मेयमन्यत् । सान्नाय्यं हविर्विशेषः । सम्यङ् नीयते होमार्थमग्निं प्रतीति । सम्पूर्वान्नयतेर्ण्यदायादेशौ उपसर्गदीर्घत्वञ्च निपात्यते । ऐन्द्रन्दध्यमावास्यायाम्, ऐन्द्रं पयो ऽमावास्यायामिति विहितयोर्दधिपयसोः संज्ञयम् । माघस्त यथाश्रुतग्राही हविर्मात्रे प्रायुङ्क्त । प्रतिशाखमशीर्णज्योतिरग्राहितानां विधिविहितविरिञ्चैः सामिधेनीरधीत्य । कृतगृहदरितीघध्वंसमध्वर्युमृत्विङ्कृतमयमवलोके साधुमान्नाय्यमभिहिति ॥ नन्विदमपि दधिपयोविषयकमेव किं न स्यादिति वाच्यम् चन्द्रोदया-

"पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु" । मीयतेनेनेति मानं हूयत इति हविः निवसत्यस्मिन्निति निवासः समिधामाधानी ऋक् सामिधेनी । 'माङो ण्यत्प्रत्यय इति' । करणे तत्र 'अतो युक् चिण्कृतोरि'ति युक् । 'मेयमन्यदिति' । भावकर्मणोर्यदेव भवतीत्यर्थः । 'सान्नाय्यमिति' सम्यङ्नीयते होमार्थमग्निं प्रतीति कर्मणि ण्यत् । हविर्विशेष इति' । ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोमावास्यायामिति

स्तमयवर्णनपूर्वकं सूर्योदयं प्रक्रम्य पठितस्यास्य कृष्णप्रतिपद्विषयत्वेन तत्र दधिपयोयोगस्यासम्भवात् । हविर्विशेषवाचकस्य सामान्ये विशेषान्तरे वा लक्षणेत्यपि बोध्यम् । निकाय्यो निवासः । निपूर्वाच्चिनोतेरधिकरणे ण्यत् आयादेश आदेः कत्वञ्च निपात्यते निचीयतेऽस्मिन्धान्यादिकमिति विग्रहः । निचेयमन्यत् । अत्रैवार्थे निकायशब्दोऽप्यस्ति स च निवासचितिशरीरोपसमाधानेष्वादेश्चक इत्यत्र व्युत्पादयिष्यते । धाञो ण्यत्प्रत्ययः सामिधेन्याम् । समिधामाधानी सामिधेनी । समिधामाधाने षेण्यण् । प्रवोवाजा इत्यादिका ऋचः सामिधेन्यः । अत्र च न सर्वा सामिधेनी धाय्येत्युच्यते किन्तु समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा पृथुपाजा अमर्त्य इत्यादिकैव । सूत्रे सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थम् । तथा चासामिधेन्यामपि दृश्यते । धाय्याः शंसति । अग्निर्नेता त्वं सोमक्रतुभिरिति ज्योतिष्टोमे मरुत्वतीये शस्त्रविधानमेतत् । तत्र धीयते अनया समिदिति करणे ण्यदिति हरदत्तग्रन्थः पृथुपाजा इत्यादिविषयः । धीयत इति धाय्येति कर्मणि ण्यदिति माधवग्रन्थस्तु अग्निर्नेतेत्यादिसाधारण इति विवेकः । सर्वस्यायं विशेषो निपातस्य रूढ्यर्थत्वाल्लभ्यते ॥

विहितयोर्दधिपयसोः । माघस्तु यथाश्रुतार्थग्राही हविर्मात्रे प्रायुङ्क्त कृतसयमवल्लीढे साधु सान्नाय्यमग्निरिति । 'निचीयतेऽस्मिन्धान्यादिकमिति' । 'अधिकरणे ण्यत्' । 'धाय्येति' । धीयतेऽनया समिदिति करणे ण्यत् पूर्ववद्युक् । 'ऋग्विशेषस्येति' । प्रवोवाजा अभिद्यव इत्यादिकस्य । 'किं तर्हि काचिदेवेति' । समिध्यमानवतीं समिद्धवतीं चान्तरेण विकृतिषु प्रक्षिप्यमाणा पृथुपाजा अमर्त्य इत्यादिका । कथं पुनरयं विशेषो लभ्यत इत्याह । 'रूढिशब्दो ह्ययमिति' । अत एव निपातनाश्रयणमिति भावः । रूढित्वमेव द्रढयति । 'तथा चेति' । धाय्याः शंसतीति ज्योतिष्टोमे मरुत्वतीये शस्त्रे विधानमेतत्, सामिधेनीग्रहणं प्रयोगविषयोपलक्षणार्थमिति भावः ॥

# क्रतौ कुण्डपाय्यसंचाय्यौ। ३। १। १३० ॥

यद्विधेय इति। (भा)

तेन "यतोऽनाव" इत्याद्युदात्तः। कृदुत्तरपदप्रकृतिस्वरेण तत्कृता च प्रकृतिनिपात्यत इत्यपि बोध्यम् ॥

---

क्रतौ कुण्डपाय्यसञ्चाय्यौ। एतौ निपात्येते क्रतौ वाच्ये। तत्र कुण्ड-शब्दे तृतीयान्ते उपपदे पिबतेर्धातोरधिकरणे यत् प्रत्ययो निपात्यते युक्च। कुण्डेन पीयते अस्मिन्सोम इति कुण्डपाय्यः क्रतुः। ननु अत्र ण्यदेव निपात्यतां प्रकृतत्वात्। एवञ्च युक् न निपातनीयः। अतो युगि-त्येव सिद्धत्वादिति लाघवमपीति चेत्। नैवम्। तित्स्वरप्रसङ्गात्। इष्यते तु यतोनाव इत्याद्युदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरेण तस्यैव परिनि-ष्ठितत्वात्। तथा च प्रयुज्यते। यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्य इति। सम्पूर्वाच्चिनोतेर्ण्यत् आयादेशश्च निपात्यते। सञ्चीयते असौ सञ्चाय्यः क्रतुः। क्रताविति किम्। कुण्डपानं, सञ्चेयः ॥

"क्रतौ कुण्डपाय्यसंचाय्यौ" ॥ ण्यति प्रकृते यत्प्रत्ययान्तः कुण्डपाय्य-शब्दो निपात्यत इत्युक्तं तत्र प्रयोजनमाह। 'यतो नाव इतीति'। यदु-त्तरपदस्याद्युदात्तत्वं कृदुत्तरपदप्रकृतिस्वरेण स एव स्वरः सिद्धो भवती-त्यर्थः, ण्यति तु स्वरितत्वं स्यात् ॥

# अग्नौ परिचाय्योपचाय्यसमूह्याः । ३ । १ । १३१ ॥

भाष्ये

वहेरर्थादिति । (भा)

समुह्यशब्दे इति शेषः । तत्र कृते सम्प्रसारणादीर्घत्वे निपातनादित्यर्थः ॥

अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ एते निपात्यन्ते अग्नावभिधेये । अग्निश्चेह न ज्वलनः किन्तु तद्धारणार्थमिष्टकाचयननिर्मितस्थलविशेषः तत्रैव निरूढत्वात् । परिपूर्वादुपपूर्वाच्च चिनोतेर्ण्यदायादेशौ निपात्येते । परिचाय्यः । उपचाय्यः । सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वञ्च निपात्यते । समूह्यं चिन्वीत पशुकामः । अग्नाविति किम् । परिचेयम् । उपचेयम् । संवाह्यम् । इह सम्पूर्वादूह वितर्के इत्यस्मादनेकार्थत्वाद्वहेरर्थे वर्तमानाद्धलन्तत्वाण्ण्यति समूह्यमिति सिद्धम् । युक्तं चैतत् । समूह्यं चिन्वीत पशुकामः । पशवो वै पुरुषः । पशुनेवास्मै तत्समूहतीति वाक्यशेषेण ऊहिना व्याख्याने समूह्यशब्दस्य निरुक्तत्वात् । उक्तञ्च वार्त्तिककृता । समूह्य इत्यनर्थकं वचनं सामान्यकृतत्वात् । वह्यर्थमिति चेदूहेस्तदर्थत्वात्सिद्धम् । ऊहिविग्रहाच्च ब्राह्मणे सिद्धमिति ॥

"अग्नौ परिचाय्योपचाय्यसमूह्याः" ॥ 'अग्नाविति' । न ज्वलने किं तर्हि तदर्थे इष्टकाचयनविशेषे, तत्रैव रूढत्वात्, इह संपूर्वादूह वितर्के इत्यस्मादनेकार्थत्वाद्वहेरर्थे वर्तमानाद्धलन्तत्वाद् ण्यति समूह्यमिति सिद्धं, तथा च समूह्यं चिन्वीत पशुकामः पशवो वै पुरुषः पशुनेवास्य तत्समूहतीति वाक्यशेषेणोहिना ब्राह्मणे समूह्यशब्दो निरुक्तः ॥

बहिस्समानार्थेनेति । (कै)

संवाह्यमित्यत्रौ तु न । अनभिधानादिति भावः ॥

ऊहि विग्रहादिति । (भा)

ब्राह्मणे ऊहिना विग्रहदर्शनाद् ऊहेर्वह्यर्थत्वं सिद्धमित्यर्थः ॥

---

# ण्वुल् तृचौ । ३ । १ । १३३ ॥

भाष्ये

यदि तृ इत्युच्यते मातरौ मातर अत्रापि प्राप्नोतीति । (भा)

न च निरनुबन्धकत्वादस्यैव ग्रहणं स्यादिति वाच्यम् । लक्ष्यानुरोधेन ज्ञापकसिद्धतयाऽनित्यत्वेन च तस्या इहाप्रवृत्तिरिति भावः ॥

- - - - - - -

ण्वुल्तृचौ ॥ धातोर्ण्वुल्तृचौ स्तः । इत ऊर्ध्वमध्यायपरिसमाप्तेरुत्सर्गतः कर्तरि कृदित्युक्तेः कर्तरि प्रत्ययाः । पाचकः । पक्ता । तृचश्चकारः सामान्यग्रहणाविघातार्थः । तुश्छन्दसि, तुरिष्ठेमेयः सु इति । एवञ्चाप्तृन्निति सूत्रेऽपि तृन्तृचोः पृथग्ग्रहणं विहाय अप् तृन् इत्येव ग्रहणमुचितम् ॥

**तृप्रत्ययान्ता इति ।** (कै)

निरनुबन्धकतृप्रत्ययान्ता इति व्यर्थः । अस्यापि तृच्त्वे यथा न्यासेऽप्यापत्तेः । चत्वेन "तृ इत्युच्यमाने" इत्यस्या असङ्गत्यापत्तेः ॥ भाष्ये

**तृ इति वक्ष्यामीति ।** (कै)

एवं च तृनोग्रहणसिद्ध्यर्थं चकार इति भावः ॥

**यदि तृ इत्युच्यते इति ।** (भा)

चकारसामर्थ्यात्सानुबन्धकग्रहणेऽपि निरनुबन्धकग्रहणं दुर्वारमेवेति भावः ॥ अन्यथापि तदर्थत्वं दर्शयति

**इति चोभयोर्ग्रहणमिति ।** (भा)

इदमुणादयो व्युत्पन्ना इति शाकटायनादिमते । अव्युत्पत्तिवादिमते तु प्राप्तिरेव न । मातयतीत्यादौ तृलोपवारणायाव्युत्पत्तिपक्ष एवावश्यक इति अत इद् इति ( ७ । १ । १०० ) सूत्रे कैयटः ॥

**किं कारणमिति ।** (भा)

कस्माद्धेतोरित्यर्थः ॥ हेतुमाह "धातुमात्रा"दित्यादिना ॥

**अन्येषामिति ।** (भा)

ण्वुल् तृच् व्यतिरिक्तानामित्यर्थः ॥ एवं च वर्त्तमान इति कृते दोषः । ण्वुल् तृचोऽस्तु । अन्यत्र कालेनाभिधानं स्वीकार्यमिति भावः ॥

# नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः । ३ । १ । १३४ ॥

## भवः सर्व इति (भा)

भाष्ये पाठः ॥

नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ नन्द्यादेर्ल्युः ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दिग्रहिपचादयश्च न धातुपाठे सन्निविष्टाः संगृह्यन्ते । किन्तर्हि नन्दनरमण इत्येवमादिषु प्रातिपदिकगणेषु ये प्रकृतिभागास्त इह बुद्ध्या पृथक्कृत्य गृह्यन्ते । नन्वेवं किमनेन सूत्रेण गणपाठादेव नन्दनादिशब्दानां साधुत्वोपपत्तेरिति चेत् । अत्र हरदत्तः । असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनुपयोगात् गणपाठो नापेक्षिष्यते इति । तस्यायमाशयः । एतएव साधव इति स्वरूपनियमपरं हि व्याकरणशास्त्रं तच्च सूत्रेष्वेव हि तत्सर्वमिति न्यायेन सूत्रात्मकम् । तथा च यत्सूत्रैः कथमपि न विषयीकृतं तस्य गाव्यादिवदर्थादसाधुत्वं प्रसज्येतेति । नन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् दनादे समृद्धौ ।

"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः" ॥ 'आदिशब्दः प्रत्येकमभिसंबध्यत इति' गणपाठादिति भावः । 'अपोद्धृत्य ये पठ्यन्त इति' । ते गृह्यन्त इत्यन्वयः, अपोद्धृत्येति बुद्ध्या पृथक्कृत्येत्यर्थः । किमर्थं पुनरपोद्धृत्य प्रत्ययविधानं यावता नन्दनादीनां गणपाठादेव सिद्धं साधुत्वम्, उच्यते, असत्यस्मिन्नष्टाध्याय्यां क्वचिदप्यनुपयोगाद्गणत्रयपाठो ऽनार्षोऽध्यवसीयेत । 'नन्दिवाशीत्यादि' । टुनदि समृद्धौ, वाशृ शब्दे, मदी हर्षे, दुष वैकृत्ये, राध साध संसिद्धौ, वृधु वृद्धौ, शुभ शुम्भ शोभार्थे, रुच दीप्तौ । 'दूषण इति' । 'दोषोणौ' णित्वम् । 'सहितपीत्यादि' । षह मर्षणे, तप सन्तापे, शमु दमु उपशमे । 'जल्पन इत्यादि' । जल्प जप व्यक्तायां वाचि । रमु क्रीडायाम्, दृप हर्षविमोचनयोः, क्रदि आह्वाने रोदने च ।

नन्दयतीति नन्दनः। वाशृ शब्दे वाशनः मदी हर्षे मदनः। दुष वैकृत्ये दोषोणाविति दूषणः। राध साध संसिद्धौ। विप्रो यज्ञस्य साधनः। ल्युः कर्त्तरीति पुंस्त्वम्। कथन्तर्हि होतुराकृतिसाधनं धेनुरिति। करणे ल्युटि सामान्ये नपुंसकं भविष्यति। वृध वृद्धौ वर्द्धनः। शुभ शुम्भ शोभार्थे शोभनः। रुच दीप्तौ रोचनः। सहितपिदमः संज्ञायम्। षह मर्षणे सहनः। तप सन्तापे तपनः। दमु उपशमे दमनः। जप जल्प व्यक्तायां वाचि। जल्पनः। रमु क्रीडायां रमणः। दृप हर्षविमोचनयोः दर्पणः। क्रदि आह्लादे रोदने च। सङ्क्रन्दनः। कृष विलेखने सङ्कर्षणः। लृष अलीके हर्षणः। अर्द हिंसायां जनमर्दयतीति जनार्दनः। कर्मण्यणि प्राप्ते। एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम्। यु मिश्रणे। यवनः। षूद क्षरणे। मधुर्नामासुरस्तं सूदयतीति मधुसूदनः। ञिभी भये विपूर्वात् णिचि भियोहेतुभयेषुगिति षुक विभीषणः। लूञ् छेदने। निपातनाल्लत्वम्। लवणः। णश अदर्शने दमु उपशमे ण्यन्तौ। वित्तं नाशयतीति वित्तनाशनः। कुलं दमयतीति कुलदमनः। शत्रुदमनः। इति नन्द्यादिः। ग्रह उपादाने ग्राही षह

कृष विलेखने, ऋष अलीके, अर्द हिंसायाम्, जनमर्दयतीति जनार्दनः, कर्मण्यणि प्राप्ते, एवमुत्तरत्रापि कर्मण्युपपदे द्रष्टव्यम्। यु मिश्रणे, षूद क्षरणे, मधुनामाऽसुरस्तं सूदयतीति मधुसूदनः। ञिभी भये। णिचि 'भियो हेतुभये षुक्'। लूञ् छेदने, णश अदर्शने, दमु उपशमे, ण्यन्तौ, चित्तं नाशयतीति चित्तनाशनः, कुलं दमयतीति कुलदमनः। 'ग्राहीत्यादि'। ग्रह उपादाने, षह मर्षणे, तमु उपक्षये, दसु च, भस भर्त्सनदीप्त्योः, तिष्ठतेरातो युक्, मन्त्र गुप्तभाषणे चुरादिः, अर्ह हिंसायाम्। 'रक्षीत्यादि'। रक्ष पालने, श्रु श्रवणे, डुवप् बीजसन्ताने, शो तनूकरणे, एषां निशब्दउपपदे णिनिः। 'याचीत्यादि'। टुयाच याञ्चायाम्, हृञ् हरणे, व्रज गतौ, वद व्यक्तायां वाचि, वस निवासे, एषां प्रतिषिद्धानां णिनिर्भवति, प्रतिषिद्धार्थानामित्यर्थः, प्रतिषिद्धार्थता च नञ्पूर्वाणां भव-

मर्षणे उत्साही । दम् उपशमे । उद्दामी । भस भर्त्सनदीप्त्योः । उद्भासी । तिस्रतेर्गतौ यक । स्थायी । माने ग्रमपरिभाषणे चुरादिः मन्त्री । अर्द हिंसायाम् समर्दी । रक्षश्रवपशां नौ । रक्ष पालने । निरक्षी । श्रु श्रवणे । निश्रावी । डुवप् बीजसन्ताने । निवापी । शो तनूकरणे निशायी । चत्वारो ऽमी निपूर्वाः । याच व्याहृसंव्याहृव्रजवदवसां नञ्पूर्वाणाम् । दुयाच याच्ञायाम् । हृञ् हरणे । व्रज गतौ । वद व्यक्तायां वाचि । वस निवासे । अयाची । अव्याहारी । असंव्याहारी । अव्राजी । अवादी । अवासी । अचामचित्तवत्कर्तृकाणाम् । अजन्तानां धातूनाम् अचेतनकर्तृकाणां णिनिर्भवति । प्रतिषिद्धार्थानामेव । अकारी । अहारी । शीङ् स्वप्ने । विशयी । वृद्ध्यभावो निपातनात् । षिञ् बन्धने विषयी । वृद्ध्यभावः प्राग्वत् । इह षत्वमपि निपातनादिति गणरत्नमहोदधिव्याख्यायां वर्द्धमानः । विशयी । विषयी देशे इति वृत्तिः । अभिभावी भूते । अभिभूतवान् अभिभावी । राध संसिद्धौ । अपराधी । रुधिर् आवरणे । अवरोधी । उपरोधी । परिभावी । इह पाक्षिको वृद्ध्यभावो निपात्यते । इति ग्रहादिः ।

तौवि दर्शयति । 'अयाचीत्यादि' । यद्यपि निञ्शब्दोऽपि विदर्भरथिरित्यादौ प्रतिषेधे दृष्टः, याच्यादीनां तु निपूर्वाणां णिनिर्न दृश्यत इति नञेव णिनिर्विज्ञायते । 'अचामित्यादि' । अजन्तानान्धातूनामचित्तकर्तृकाणां प्रतिषिद्धार्थानां णिनिर्भवति, न विद्यते चित्तमस्येत्यचित्तः स कर्त्ता येषान्ते तथोक्ताः । 'विशयी विषयीति' । शीङ् स्वप्ने, षिञ् बन्धने वृद्ध्यभावो निपातनात् । 'अभिभावीभूत इति' । अभिभूतवानभिभावी । अपराधी अवरोधी, राध साध संसिद्धौ, रुधिर् आवरणे । 'परिभवी परिभावीति' । पक्षे वृद्ध्यभावः । 'पचेत्यादि' । डुपचष् पाके । वच परिभाषणे, डुवपिबतार्थः, एवं वदिरपि । चल कम्पने, पत्लृ गतौ । 'नदट्टिति' । नद अव्यक्ते शब्दे । टकारो ङीबर्थः, एवमुत्तरत्रापि । भष भर्त्सने, प्लुङ् गतौ. चर गत्यर्थः, गॄ निगरणे । तॄ प्लवनतरणयोः, चुर स्तेये,

डुपचष् पाके । वच परिभाषणे । इत्यादि । आकृतिगणोऽयम् । तथा च शिवशमरिष्टस्य करे इति सूत्रे कृञो ऽच्प्रत्ययः कृतः । कर्मणि घटो ऽठच् इति सूत्रे च घटेः । तथा यङोचि चेति सूत्रेण अस्मिन्नच् प्रत्यये परे यङो लुग्विहितः । भाष्ये च अजपि सर्वधातुभ्यो वक्तव्य इत्युक्तम् । किमर्थं तर्हि पचाद्यनुक्रमणमिति चेत् । नदट् इत्यादौ अनुबन्धासञ्जनार्थम् । कर्मोपपदानामिगुपधानां च बाधनार्थम् । अन्येषान्तु प्रपञ्चार्थम् । तथाहि । नदट् । भषट् । प्लवट् । चरट् । गरट् । तरट् । चोरट् । देवट् । सूदट् एते टितः । नद अव्यक्ते शब्दे । टो ङीबर्थः । नदः । नदी । भष भर्त्सने भषी । प्लुङ् गतौ प्लवी । चर गतौ चरी । गॄ निगरणे । गरी । तॄ प्लवनतरणयोः । तरी । चुर स्तेये । चोरी । दिवु क्रीडादौ । देवी । सूदिरक्षार्थः । सूदी । मिष स्पर्द्धायाम् । मेषः । कुप क्रोधे । कोपः । सृप्लृ गतौ । सर्पः । इह दिविप्रभृतिषु इगुपधत्वात्कः प्राप्तः । डुभृञ् । जारं बिभर्तीति जारभरा । श्वानं पचतीति श्वपचा । अनयोः कर्मण्यण् प्राप्तः । न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात् पक्षे कर्मण्यणपि भवतीति कैयटादयः । जुषप्रभृतीनान्तु पाठः प्रपञ्चार्थ एवेति विवेकः ॥

दिवु क्रीडादौ, सूदिरक्षार्थः, जुष् वयोहानौ, म्रड् प्राणत्यागे, क्षमूष् सहने, षिवु तन्तुसन्ताने, मिष स्पर्द्धायाम्, कुप क्रोधे, मिधृ मेधाहिंसनयोः, व्रण गात्रचूर्णने चुरादिः, नृती गात्रविक्षेपे, दृशिर् प्रेक्षणे, सृप्लृ गतौ, डुभृञ् धारणपोषणयोः, जारं बिभर्तीति जारभरा, एवं श्वानं पचतीति श्वपचा, न्यङ्क्वादिषु श्वपाकशब्दस्य पाठात्पक्षे कर्मण्यणपि भवति । 'पचादिराकृतिगण इति' । तत्सम्बन्धिन आदिशब्दस्य प्रकारवचनत्वात्, तथा च 'शिवशमरिष्टस्य करे' इति कृञोच् प्रत्ययः कृतः । घटेश्च 'कर्मणि घटोऽठजि'ति, तथा यङन्तानां 'यङोचि चे'ति यङोस्मिन्नचि लुगुक्तः, भाष्ये चाजपि सर्वधातुभ्यो वक्तव्य इत्युक्तं पचाद्यनुक्रमणन्तु नदडित्यादावनुबन्धासञ्जनार्थं कर्मोपपदानाम् इगुपधानां च बाधकबाधनार्थम्, देवडित्युभयार्थमन्येषां तु प्रपञ्चार्थं द्रष्टव्यम् ॥

# पाघ्राध्माधेट्दृशः शः । ३ । १ । १३७ ॥

## केचिदिति । (भा)

भाष्ये श्नः संज्ञायामित्यादेशेऽकार उच्चारणार्थ इति जिघ्र इति पञ्चमीति भावः ॥

## केचिज्जिघ्रभावस्येति । (भा)

वार्त्तिके जिघ्र इति षष्ठ्यन्तं मन्यन्ते ॥

पाघ्राध्माधेट्दृशः शः ॥ एभ्यः पञ्चभ्यः शप्रत्ययः स्यात् । पिबतीति पिबः । जिघ्रः । धमः । धयः । स्त्रियान्तु टाप् । धया । यद्यपि धेट-ष्टित्वात् स्तनन्धयीत्यत्रेव इहापि ङीप् प्राप्नोति । तथापि खशन्ते एव ङीप् न तु शप्रत्ययान्ते इति नासिकास्तनयोरिति सूत्रे हरदत्तः । इह सूत्रे उपसर्ग इति केचिदनुवर्तयन्ति तत्तु बहूनामसम्मतम् । तथा च प्रायुङ्क्त श्रीहर्षः । पताकिनि धूमस्य धयानोघमुखानिति श्रूयते च यदा पश्यः पश्यते सवर्गमिति । अत्र पिबतेरेव ग्रहणं न तु पा रक्षणा इत्यस्य । लुग्विकरणत्वात् । श्नः संज्ञायां प्रतिषेधः ॥ अत्र च व्याघ्रादि-भिरिति सौत्रनिर्देशो लिङ्गम् । व्याघ्रः । आतश्चोपसर्गे इति कः ॥

"पाघ्राध्माधेट्दृशः शः" ॥ पा पाने, घ्रा गन्धोपादाने, ध्मा शब्दाग्नि-संयोगयोः, धेट् पाने, दृशिर् प्रेक्षणे, पा रक्षणे इत्यस्य तु लुग्विकरणा-त्वादग्रहणम् । 'उत्पिब इत्यादि' । पाघ्रादिसूत्रेण यथायोगं पिबादय आदेशाः । 'व्याघ्र इति' अत्र 'तश्चोपसर्गे' इति क एव भवति, अत्र च व्याघ्रादिभिरिति वचनं लिङ्गम् ॥

**केनस्थे अकारलोप इति** (भा)

"आतो लोप" इत्यत्रार्धधातुक इत्यधिकारादिति भावः । "आभ्यस्तयोरि"त्यस्य प्राप्तिरेव न ॥

---

# अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च । ३ । १ । १३८ ॥

---

**अरविन्दः** (भा)

अर्धर्चादि ॥

---

अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥ अनुपसर्गेभ्यो लिम्पादिभ्यः शप्रत्ययः स्यात् । लिम्पतीति लिम्पः । विन्दतीति विन्दः । सूत्रे लिम्पविन्देति भाविना नुमा सनुमकौ निर्दिष्टौ । तेन विकरणेतराणामग्रहणम् । लाभार्थस्यैव तु ग्रहणम् । धृञ् धारणे धृङ् अवस्थाने । ण्यन्तयोर्द्वयोरपि ग्रहणम् । धारयः । अथ कथं न मह्यमनोत्तरधारयस्य न इति श्रीहर्षः । परत्वाद्धि सूत्रधारादिष्विव कर्म-

"अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च" ॥ अनुपसर्गादिति व्यत्ययेनैकवचनमित्याह । 'अनुपसर्गेभ्य इति' । लिप उपदेहे, विद्लृ लाभे, आगामिना नुमा सनुम्कयोर्ग्रहणं तेन विद्यन्तराणामग्रहणम्, धृञ् धारणे, धृञ् अवस्थाने, ण्यन्तयोर्द्वयोरपि ग्रहणम्, पार

ण्यन्ता भाष्यम्। तथा च वार्त्तिकम्। अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेनेति। सत्यम्। कर्मणः शेषत्वविवक्षायामणोप्राप्त्या शे कृते शेषषष्ठ्यन्तेन समासो भविष्यति। एतेन गङ्गाधरभूधरजलधरादयो व्याख्याताः। पार कर्मसमाप्तौ। पारयतीति पारयः। विद चेतनाख्यानादिषु चुरादिः। ज्ञानार्थानामन्यतमो वा हेतुमण्ण्यन्तः। वेदयतीति वेदयः। एजृ कम्पने ण्यन्तः। उदेजयतीत्युदेजयः। चिति संज्ञाने चुरादिः। चेतयतीति चेतयः। सत सुखे चुरादिण्यन्त इति वोपदेवः। सातिः सौत्रो हेतुमण्ण्यन्त इति हरदत्तः। सातयः। वासरूपन्यायेन क्विपि सात्। सम्पदादित्वाद्भावे क्विवा। एवञ्च एष एवानन्दयतीति श्रुतिबलादानन्दयितृविज्ञानमानन्दमित्यादिश्रुतिबलादानन्दरूपं ब्रह्म साच्छब्दार्थः। तदस्त्येषामिति सात्वन्तो भक्ताः। एतेन सात्वतां पतये नम इत्यादि व्याख्यातम्। सदेव सात् इत्युक्त्वा आर्षत्वञ्च वदन्तः प्रत्याख्याताः। षह मर्षणे चुरादिर्हेतुमण्ण्यन्तो वा। साहयः। उदाहरणेषु लिम्पविन्दिभ्यां तुदादिभ्यःशः। शेमुचादीनामिति नुम्। धारयादिषु शब्गुणायादेशाः। अनुपसर्गादिति किम्। प्रलिपः। नौ लिम्पेरिति वक्तव्यम्॥ निलिम्पा नाम देवाः। गवादिषु विन्देः संज्ञायामिति वक्तव्यम्। गोविन्दः। अरविन्दः। चक्रस्य नाभिनेम्योरन्तराले स्थितानि काष्ठानि अरः, तदाकाराणि दलानि सादृश्यात्तच्छब्दभाञ्जि लभत इत्यर्थे कर्मण्यणो बाधनायेदम्॥

तीर कर्मसमाप्तौ, विद चेतनाख्यानादिषु चुरादिः, ज्ञानार्थानामन्यतमो वा हेतुमण्ण्यन्तः, एजृ कम्पने ण्यन्तः, चिती संज्ञाने चुरादिः, सातिर्हेतुमण्ण्यन्त, षहमर्षणे चुरादिर्हेतुमण्ण्यतो वा। 'लिम्पः विन्द इति'। 'तुदादिभ्यः शः' 'शे मुचादीना'मिति नुम्, धारयादिषु शब्गुणायादेशाः। 'नौ लिम्पेरिति'। छन्दसि तु धर्त्ता च विधर्त्ता च विधारय इति दृश्यते। 'अरविन्द इति'। अराकाराणि दलान्यरशब्देनोच्यन्ते॥

# प्रसृल्वः समभिहारे वुन् । ३ । १ । १४९ ॥

साधुकारिणीति (भा)

समभिहारग्रहणस्थाने इदं कार्यमित्यर्थः ॥

इति नागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

इति वङ्गदेशीयकाश्यपगोत्रोत्पन्न-चट्टोपाध्यायवंशसमुद्भव-बङ्कवल्लभ-शर्मविरचिते महाभाष्यप्रदीपोद्द्योतविषमपदव्याख्याने तृतीयाध्यायस्य प्रथमे पादे षष्ठमाह्निकम् ॥

प्रसृल्वः समभिहारे वुन्। एभ्यो वुन् स्यात् साधुकारिणि कर्त्तरि। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते, भूयः सहचारात्। यो हि यां क्रियां पुनःपुनरनुतिष्ठति स तत्र कौशलं लभत इत्युत्सर्गः। तेन सकृदपि यः सुष्ठु करोति तत्र भवति बहुशोऽपि दुष्टं कुर्वति न भवति। प्रवकः। सरकः। लवकः। सूत्रे प्रसृल्व इति पञ्चम्याः स्थाने जस् ॥

"प्रसृल्वः समभिहारे वुन्" ॥ प्रसृल्व इति पञ्चम्याः स्थाने जस्, 'ओसपी'ति यथादेशः। 'साधुकारित्वं लक्ष्यत इति'। प्रायः सहचरितत्वात् पुनःपुनरनुष्ठानं समभिहारः, यस्य यां क्रियां पुनःपुनरनुतिष्ठति तस्य तत्र प्रायेण कौशलमुपजायते ऽतः प्रायः साहचर्यात्साधुकारित्वं लक्ष्यते, लक्षणया तत्र वर्त्तत इत्यर्थः, तेन किं सिद्धं भवतीत्याह। 'सकृदपीति' ॥

## महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

# कर्मण्यण् । ३ । २ । १ ॥

यस्य सती* परिणामिनी प्रकृतिर्नाश्रीयते यस्य चाविद्यमाना तन्निर्वर्त्यमित्युच्यत इत्यर्थः । तदेवाह

### यस्येति । (कै)

कार्यसामानाधिकरण्येन प्रतीयमानं नास्तीत्यर्थः । यथा मृदं घटं करोतीति ॥

* सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥

कर्मण्यण् ॥ कर्मण्युपपदे धातोरण्प्रत्ययः स्यात् । कर्म च सप्तधेत्युक्तम् । तत्सर्वमविशेषादिह गृह्यते । निर्वर्त्ये, कुम्भं करोतीति कुम्भ-

---

"कर्मण्यण्" । कर्मणीति नेदं स्वरूपग्रहणमशब्दसञ्ज्ञेति प्रतिषेधात्, ननु चार्थस्येयं सञ्ज्ञा नशब्दस्य, न शब्दसंज्ञेति नैवं विज्ञायते

**विवक्ष्यते इति।** (कै)

कार्यभेदेनेति शेषः॥

**तदा विकार्यं कर्मेति।** (कै)

अवस्थाद्वयानुगमेन पूर्वाकारपरित्यागेनाकारान्तरप्राप्त्यवगमादिति भावः॥

**भेदविवक्षायामिति।** (कै)

कर्मणः सकाशादुपादानस्य भेदविवक्षायामित्यर्थः॥

**मृदा घटमिति।** (कै)

करणत्वविवक्षायां तृतीया नोचेत्सम्बन्धसामान्यविवक्षायां मृदो घटमिति षष्ठीति बोध्यम्॥

---

कारः। विकार्ये, काण्डलावः। प्राप्ये, वेदाध्यायः। यद्येवं, ग्रामं गच्छति आदित्यं पश्यति हिमवन्तं शृणोतीत्यादौ प्राप्नोति। सत्यम्। अनभिधानान्नेति भाष्यम्। तत्रानभिधानं यत्राभिधानं तत्रैव। अन्यत्र तु यथालक्ष्यं भवत्येव। यत्तु हरौ त्रिविधं कर्मेह गृह्यत इत्युक्तं तस्यायमाशयः। आदित्यं पश्यतीत्यादौ मा भूदित्येवमर्थं कर्मणि निर्वर्त्यमान-

---

शब्दस्य संज्ञा शब्दसंज्ञेति किन्तर्हि शब्दे संज्ञा शब्दसंज्ञेति, शब्दशब्देन शब्दानामनुशासनं व्याकरणमुच्यते, असति च बाधे कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणं युक्तं तस्मात्पारिभाषिकस्य कर्मणो ग्रहणमङ्गीकृत्य तस्यावान्तरभेदमाह। 'त्रिविधं कर्मेति'. ता एव तिस्रो विधा दर्शयति। 'निर्वर्त्यं विकार्यं प्राप्यं चेति'। यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते तन्निर्वर्त्यं, यथा कुम्भं करोति पुत्रं प्रसूत इति, यस्य तु सत एव

*विकार्यमपीति । (कै)

पूर्वरूपस्य सर्वात्मनापरित्यागतदभावाभ्यामित्यर्थः ॥

† दर्शनादिति । (कै)

प्रत्यक्षादित्यर्थः । निर्वर्त्ये स्वरूपलाभ एव क्रियाकृतो विशेषो विकार्ये विकाररूप एव सः । घटं करोति सुवर्णं कुण्डलं करोति काष्ठं भस्म करोति । अनुमानाद्यथाऽपुत्रः सुतः करोतीति । अत्र सुतस्वरूपलाभो सुखप्रमादानुमेयो नित्यसत्त्वकल्पेऽविच्छिन्नपारम्पर्य इत्यर्थः ॥ ननु वेदाध्यायादीनामित्यादिनैव सर्वसंग्रहे सिद्धे यत्र च नियुक्त इत्यादेर्वैयर्थ्यमत आह

* प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् ।
किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
† क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

विक्रीयमाण इति वक्तव्यमित्याशङ्क्य वार्त्तिककृतोक्तम् । कर्मणि निर्वर्त्यमाने विक्रियमाण इति चेद्वेदाध्यायादीनामुपसङ्ख्यानमित्यादि । एवं स्थिते त्रिविधमपीह कर्म गृह्यते, न तु प्राप्यं न गृह्यत इति । एवञ्च त्रिविधमिति वृत्तिं दृष्ट्वा सूत्रान्तरोक्तं नेह गृह्यत इति न भ्रमितव्यम् ।

कश्चिद्विकारः क्रियते तद्विकार्यं, स च विकारः क्वचित्प्रत्यक्षगम्यः, यथा काष्ठानि भस्म करोति, सुवर्णं कुण्डलं करोतीति, क्वचिच्छास्त्रगम्यो व्रीहीन् प्रोक्षतीति, अत्र प्रोक्षणेन व्रीहिषु कश्चिदतिशयो जन्यत इति शास्त्रादेव गम्यते, एतावता च भेदेन संस्कार्यमेतत्कर्मेति चातुर्विध्यं मीमांसका

वेदाध्यायादीनामिति । (भा)

वस्तुतः प्रपञ्चार्थमेव तानीति बोध्यम् ॥

शास्त्रेणापि । (कै)

कर्मण्यणिति सामान्यशास्त्रेणापि ॥ ननु सर्वधातुभ्योऽण्विधानेन कुम्भकार इति कथमणोऽवकाश इत्यत आह

यद्देति । (कै)

सर्वधातुविषयस्येऽत्ययच् प्रवादरूपक इत्याह

तथा चेति । (कै)

उदाहरणान्तराणि काण्डै विषयाणि ॥

तथा च दिवः कर्मचेत्यत्र संज्ञासमावेशस्य प्रयोजनमुक्तम्, मनसा देव इत्यत्र कर्मत्वादण् करणत्वात्तृतीयेति । एवञ्च वृत्तावासः पर्वतावास इत्याद्यपि यथाभिधानं भवत्येव । शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वञ्च ॥ शील समाधौ । कमु कान्तौ । भक्ष अदने । चुरादि-

मन्यन्ते, क्रियाकृतविशेषाभावे तु प्राप्यं कर्म, यथा वेदमधीते चर्चां पाठयतीति, ननु च कर्तुरीप्सिततममित्येतदेव कर्म त्रिविधमन्यदप्यस्ति 'तथायुक्तं चानीप्सित'मिति तच्च द्विविधं द्वेष्यमितरच्च, तथा 'अकथितं च' एवं 'दिवः कर्म च' तथा 'अधिशीङ्स्थासां कर्मेति' तदेवमवान्तरभेदविवक्षायां सप्तविधं कर्म । उक्तं च

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥

**काणाविति ।** (कै)

"इगुपधज्ञे"ति कः । कर्मण्यण् ॥ भाष्ये

**अर्थज्ञः कर्मोपपद इति ।** (भा)

विप्रतिषेधेन प्राप्तमणं बाधित्वातोऽनुपसर्ग इति क इति तात्पर्यम् ॥ एतत्तात्पर्यमजानान एकदेश्याह

**नैष युक्त इति ।** (भा)

प्रश्नाविषये काणोर्थ इत्यर्थः ॥

**तेषां ण इति ।** (भा)

श्याद्व्यधेति विहितः । तत्र हि श्या आदिति छेदः ॥

---

ण्यन्तः । चरिर्गत्यर्थः आङ्पूर्वः । तस्य णिज्करणं चरेर्वृद्ध्यर्थम् । कृदुत्तरपदप्रकृतिस्वरं बाधितुं पूर्वपदेत्यादि । मांसं शीलयति मांसशीला । मांसकामा । मांसभक्षा । अत्र अणि सति ङीप्स्यात् । योऽण्णकार्यमिति तु ताच्छीलिक एवेति वक्ष्यते । मनेर्दीर्घत्वञ्चेति सप्रत्ययान्तत्वादन्तोदात्तो मांसशब्दः । कल्याणचारा । कल्याणशब्दो लघावन्त इति मध्योदात्तः । ईक्षिक्षमिभ्यां चेति वक्तव्यम् ॥ अत्रापि पूर्वपदप्रकृतिस्वरत्वं चेति सम्बध्यत

---

इति । तत्किमुच्यते त्रिविधं कर्मेति । केचिदाहुः कर्तुरीप्सिततममेवात्र कर्म गृह्यते ऽन्यत्राण् न भवतीति, अन्ये त्वाहुः । आदित्यं पश्यतात्यादौ मा भूदित्येवमथं कर्मणि निर्वर्त्यमाने विक्रियमाणे इति वक्तव्यमित्याशङ्क्य वार्त्तिककारेणोक्तं कर्मणि निर्वर्त्यमाने विक्रियमाणे इति चेद्वेदाध्यायानामुपसंख्यानमित्यादि तदनेन प्रदर्श्यते, त्रिविधमपि कर्म गृह्यते न पुनः प्राप्यं न गृह्यत इति न तु सूत्रान्तरोक्तं व्यावर्त्यते, तथा च 'दिवः

**स यथैवेति ।** (भा)

बाध्यसामान्यचिन्तयाणोऽपि स बाधक इत्यर्थः सिद्धो विप्रतिषेधं विनापीत्यर्थः । तदाह

**प्राप्तिमात्रस्येति ॥** (कै)

**न तु कर्मोपपदस्येति ।** (कै)

एवं च विप्रतिषेधो युक्त एवेति भावः ॥ नन्वर्थश्च इत्यत्राणं विधातुं न कप्रत्ययेन विप्रतिषेध उच्यते किन्त्वातोऽनुपसर्गे क इति कं विधातुम् । एवं चेगुपधेति कस्याणा बाधेऽपि आतो नुपसर्ग इति केन तृतीयकक्ष्याप्राप्तेन तृतीयकक्ष्याप्राप्तस्येगुपधेति कस्य विप्रतिषेधः सम्भवत्येवेत्याह सिद्धान्त्येकदेशी

---

एव । वाक्यभेदस्तु वैचित्र्यार्थः । सुखप्रतीत्या । बहुक्षमा स्यादेतत् । यो मांसम्भक्षयति तस्य मांसं भक्षो भवति । तत्र भक्षयतेः 'कर्मण्यण्'न्तस्य बहुव्रीहिणा सिद्धम् । एवमन्यत्रापि । यस्तु अणन्तस्य घञन्तस्य बहुव्रीहिः । न च बहुभक्ष इत्यत्र बहोर्नञ्वदिति उत्तरपदान्तोदात्तत्वं स्यादिति वाच्यम् । भावे घञन्तेन बहुषु भक्षोऽस्येति विग्रहेणोपपत्तेः । न

---

कर्म चे'त्यत्र समावेशस्य प्रयोजनमुक्तं मनसा वेत्र इत्यत्र कर्मत्वादशकरणत्वात्तृतीयेति, एवं च कुत्सावासः पर्वताधिवास इत्याद्यपि यथादर्शनं भवतीति । 'अनभिधानादिति' । तत्रानभिधानं यत्रासिद्धं तत्रैवान्यत्र तु यथालक्षणं भवत्येव, तथा च पठति यथालक्षणमप्रयुक्त इति । 'शीलिकामीक्ष्यादि' । शील समाधौ, भक्ष अदने चुरादिः, कमु कान्तौ णिङन्तः, चर गत्यर्थ आङ्पूर्वः, शास्य शिक्षायां चरेर्दण्डार्थम् । 'पूर्वपदप्रकृतिस्वरत्वं

**कर्मोपपदोऽपीति ।** (भा)

अणः क इति "आतोऽनुपसर्गे" इत्ययमिति भावः ॥

**उभयोरिति ।** (भा)

सोपपदनिरुपपदयोः कयोरित्यर्थः ॥

**कर्मोपपदस्य कस्य विषय इति ।** (कै)

अनकारान्तत्वादिति भावः । किन्तु गोद इत्यवकाश इति वक्तुं युक्तमिति तात्पर्यम् ॥

**क्रममाहत्येति ।** (कै)

अर्थश्च: कर्मोपपदो भवति विप्रतिषेधेनेत्युत्तरं नैष युक्त इत्यादियुक्तो विप्रतिषेध इत्यन्तं भाष्यन्त्वेकदेश्युक्तिरित्युक्तमेव ॥ अथ विप्रतिषेधस्योदाहरणान्तरमाह

---

त्वत्र बहुत्वरप्राप्तिरस्ति । उत्तरपदार्थस्य बहुत्वाभावात् । एवञ्च वार्त्तिकद्वयमपि नारम्भणीयमिति चेत् । मैवम् । कर्मण्यणं बाधितुं तस्यावश्यारम्भत्वात् । अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥ पचादिभ्योच् अनुपपद अकारः । तस्यावकाशः । पचतीति पचः । कर्मोपपदस्यावकाशः काण्डलावो ग्रजसि । ओदनपाच इत्यत्र उभयप्रसङ्गे परत्वादणेव ।

चेति' । तत्पुरुषपदप्रकृतिस्वरस्यापवादः । 'मांसशीलेति' । अचापि सति ङीष्यात्, सोपि क चिदन्तं भवतीत्येतत्तु ताच्छीलिक एव सा भवति मनेर्दीर्घश्चेति सप्रत्ययान्तो मांसशब्दः, कल्याणशब्दो लघावन्ते द्वयोश्च बहुलो गुरुरिति मध्योदात्तः । अस्यायमर्थः, अन्ते लघौ परतौ द्वयोश्चान्त्ययोर्लघ्वोः परतो बहवः शब्दस्य यो गुरुः स उदात्तो भवति, बहुष इति

**अनुपपदस्य** (कै)

इत्यादिना ॥ भाष्ये

**का तर्हि गतिरिति ।** (भा)

तृतीयस्य प्रश्नः । समासे पूर्वपदप्रकृतिस्वरत्वं दर्शयितुं पूर्वपदस्वरान् दर्शयति ।

**मांसातिकामी ।** (भा)

एकस्मिन्नन्ते लघौ द्वयोर्वा तं ययोर्लघ्वोः मतोर्बह्वच्‌बह्वच्कस्येत्यर्थः ॥ भाष्ये

**ईकारस्य मा भूदिति ।** (भा)

अतोऽणः कृत इति भावः ॥

---

तेनोपधावृद्धिः । उपपदसमासश्च नित्यो भवति । अचि तु षष्ठीसमासो वैकल्पिकः स्यात् । कथं तर्हि गङ्गाधरः श्रीधरः वज्रधरः भूधरः खगधरेत्यादि । अत्र केचित् । युगपद्विवक्षायां हि भवतु विप्रतिषेधः । केवलप्रकृत्यर्थविवक्षयान्तु अचि कृते पश्चात्कर्मसम्बन्धे सिद्धं रूपमिति । अत्र परदृक्तः । एवं सति ओदनपच इत्यपि स्यात् । तच्चानिष्टम् । किञ्चोक्तरीतिन्यायविरुद्धा एकत्वात्प्रयोगस्य । न हि तस्मिन्नेव प्रयोगे विवक्षितं

बह्वच इत्यर्थः, अषित्यत्र पूर्वाचार्यसंज्ञा । 'इच्छिद्भ्यामिभ्यां चेति'। अत्रापि पूर्वपदप्रकृतिस्वरत्वं चेत्येव वाक्यभेदस्तु वैचित्र्यार्थः । इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति तत्र भक्षयतेः कर्मण्येरन्तस्य बहुव्रीहिणा सिद्धम्, एवमन्यत्रापि, यः पुनरण्यन्तस्तस्य घञन्तस्य बहुव्रीहिर्नार्थ एतेन, ननु बहुभक्ष इत्यत्र बह्वोर्नञ्वदित्युत्तरपदान्तोदात्तत्वं प्राप्नोति

**मांस तस्य भक्ष इति ।** (भा)

भक्षः कर्मण्यण् ॥ "घञजपाः पुंसीति" नित्यपुंस्त्वम् । एतेनेदं भावघञ्विषयमेवेत्यदपास्तम् ॥

**भक्षणं भक्ष इति ।** (कै)

भावेऽजिति भावः । कर्माजन्तेन समानाधिकरणबहुव्रीहिणा-नभिधानात् । तत्र तवाप्यावश्यकमेवेति बोध्यम् ॥ भाष्ये

**तज्ज्ञापयत्याचार्य इति ।** (भा)

न त्वणि सति मांसभक्षति प्रयोगः स्यादिति तद्वारणेन चरितार्थं वार्तिकम् । कथं ज्ञापकमिति चेत् । अनभिधानादणभावं मन्यते ।

---

चाविवक्षितं च कर्म भवति । तस्मादोदनंपच इत्यसाधुरेव । गङ्गाधरादयस्तु संज्ञाशब्दा इत्याह । चेदं वक्तव्यम् । परिनिष्ठिते प्रयोगे कर्मान्यथात्वेऽपि प्रक्रियादशायां कर्मेण विवक्षायां न क्षतिः । कथमन्यथा ग्रामं गत्वादौ अन्तरङ्गः पदसंस्कारो बहिरङ्गत्वेन न विहन्येतेत्यादि तत्रतत्रोच्यते । किञ्च कर्मणः शेषत्वविवक्षयापि गङ्गाधरादिशब्दानां

---

एवं तर्हि भावेऽजन्तेन अधिकरणपदो बहुव्रीहिर्भविष्यति बहवः भक्षोऽस्य बहुभक्ष इति, तत्रोत्तरपदार्थस्य बहुत्वाभावाद्बहुस्वरो न भविष्यति, सत्यम्, अणबाधनार्थं तु वचनम् अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन । पचादिभ्योऽच् अनुपपदोऽकारस्तस्यावकाशः पचतीति पचः, कर्मोपपदस्यावकाशः काण्डलावः शरलावः, ओदनपाच इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति तेनोपपदविशिष्टपदसमासश्च नित्यो भवति अपि तु

लावयतेरण् प्रत्यय इति। (कै)

णिवृत्तप्रेषणप्रकृतिकप्रकृतार्थणिजन्ताद् प्रत्यये इत्यर्थः। अन्यथा काण्डानि लुनातीत्यनेन समानार्थत्वं न स्यात्। काण्डानि लाव इत्यत्र लाव इति जातावेकवचनं बोध्यम्॥

अण्बाधनार्थमेवेति। (भा)

अनभिधानेन प्रत्याख्यानं तु न चमत्कारीति भावः॥ भाष्ये

न त्वभ्योभिगमेति। (भा)

अभ्योभिगमा तु नेष्यते तस्मादनभिधानमेव तदर्थमाश्रयणीयं न लेकप्रयोजनार्थं सामान्यज्ञापकाश्रयणमिति भावः॥

---

सौष्ठवे सम्भवति रथन्तरादिवन्न केवलं संज्ञात्वमाश्रयितुं युक्तम्। ओदनपचशब्दोऽपि उक्तरीत्या प्राप्नोत्येव। यदि तस्यासाधुत्वे प्रमाणमस्ति तर्ह्यनभिधानं शरणीक्रियतामित्यास्तां तावत्। प्रकृतमनुसरामः। पचादिभ्य एवाजिति यथाश्रुतसूत्रमनुसृत्य विप्रतिषेध उदाहृतः। यदा तु अजपि सर्वधातुभ्य इति पक्षस्तदा अपवादत्वादेव तस्याण् बाधको बध्यः। किरतेरिगुपधज्ञाप्रीकिरःकोनुपपदः। तस्यावकाशः विक्षिपः विलिखः।

---

षष्ठीसमासो विकल्पितस्स्यात्, न च वाच्यं युगपद्विवक्षायां भवतु विप्रतिषेधः केवले पच्यर्थे विवक्षिते ऽपि कृते पचादोदनसम्बन्धे विवक्षिते ओदनपच इत्यपि प्राप्नोति एकत्वात्प्रयोगस्य नहि तस्मिन्नेव प्रयोगे विवक्षितं चाविवक्षितं च कर्म भवति तस्मादोदनपच इत्यसाधुरेव, गङ्गाधरः श्रीधरः वज्रधरः भूधरः जम्धरेति तु संज्ञाशब्दाः, यदा त्वजपि सर्वधातुभ्य इति पक्षस्तदापवादत्वादेव तस्याण् बाधकः, तथा 'इगुपधज्ञाप्रीकिरः कः'

लूयत इति लव इति । (कै)

न च निवृत्तप्रेरणादिति प्रागुक्तरीत्या तदर्थो लावशब्दोऽप्यस्तीति वाच्यम् । सा हि कल्पना क्वचिदिष्टप्रयोगसिद्धये न त्वनिष्टायेति भावः ॥ चतुर्थ्यन्तप्रयोग एव व्यत्ययोक्तेस्तत्राविशेषोऽणघोरत आह

अवग्रह इति । (कै)

न लक्षणेन पदकारा अनुवर्त्या इत्यादि भाष्येणावग्रहार्थताया लक्षणस्य दूषितत्वादिदं व्यर्थमित्यनेन सूचितम् ॥

---

कर्मोपपदस्य स एव । काण्डभेद इत्यत्र परत्वादण् । तथा अनुपसर्गाल्लिंपविन्देति अनुपपदः शः । तस्यावकाशः लिम्पतीति लिम्पः । कर्मोपपदस्य स एव । कुड्यलेप इत्यत्र परत्वादण् । तथा आतश्चोपसर्गे इति कः अनुपपदः सुग्लः सुम्ल इत्यत्र सावकाशः । कर्मोपपदस्तत्रैव गोसन्दाय इत्यत्र परत्वादणेव भवति ॥

---

अनुपपदस्तस्यावकाशः विक्षिपः विलिखः कर्मोपपदस्य स एव, काण्डभेद इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति, तथा ऽनुपसर्गाल्लिम्पविन्देत्यनुपपदः शस्तस्यावकाशो लिम्पतीति लिम्पः कर्मोपपदस्य स एव, कुड्यलेप इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति 'आतश्चोपसर्गे' इति कोनुपपदस्तस्यावकाशः सुग्लः सुम्लः कर्मोपपदस्य स एव, गोसन्दाय इत्यत्रोभयप्रसङ्गे परत्वादयमेवाण् भवति ॥

# आतोऽनुपसर्गे कः । ३ । २ । ३ ॥

प्रसारणिनः । सम्प्रसारणभाजः ॥

ब्रह्मज्य इति । (भा)

के हि सम्प्रसारणे इयङ् स्यादिति भावः ॥ भाष्ये

किमुच्यते सर्वत्रेति । (भा)

सर्वत्रेत्यस्य कमात्रे इत्यर्थः ॥ तमाह

अन्यत्रापीति । (भा)

आतश्चोपसर्गे इत्यत्रापीत्यर्थः ॥

आतोऽनुपसर्गे कः ॥ आदन्ताद्धातोरनुपसर्गात् कर्मण्युपपदे कप्रत्ययः स्यात् । अणोपवादः । गोदः पार्ष्णित्रम् । अनुपसर्गे किम् । गोसन्दायः । अत्र वार्त्तिकम् । कविधौ सर्वत्र प्रसारणिभ्यो डः । सम्प्रसारणभाजः प्रसारणिनः । ज्या वयोहानौ । ब्रह्म जिनातीति ब्रह्मज्यः । सर्वत्रग्रहणात्प्रेव । आतश्चोपसर्गे, आह्वः प्रह्वः । अत्र के सति सम्प्रसारणं स्यात् । आह्व अ इति स्थिते सम्प्रसारणे पूर्वत्वे च कृते उवङादेशे आहुवः प्रहुवः इति प्राप्नोति । एवं ब्रह्मजिय इति प्राप्नोति । न चेरनेकाच इत्यनेन

"आतोनुपसर्गे कः" ॥ कविधौ सर्वत्र प्रसारणिभ्यो डो वक्तव्यः, संप्रसारणभाजः प्रसारणिनः, ज्या वयोहानौ, ब्रह्म जिनातीति ब्रह्मज्यः, सर्वत्रग्रहणान्नानन्तर्यमित्येव 'आतश्चोपसर्गे' आह्वः प्रह्वः के हि संप्रसारणप्रसङ्गः, आह्व अ इति स्थिते संप्रसारणे पूर्वत्वे च कृते उवङादेशे

**एवं तर्हि वार्णादिति ॥** (भा)

इयायेत्यादिसिद्धयेऽस्या विभिन्ननिमित्तकेऽपि प्रवृत्तिरावश्यकीति भावः ॥

**समानाश्रयेति ।** (कै)

तदनाश्रयणेप्याहेति वक्तुमुचितम् ॥

**तर्हीति ।** (भा)

किञ्चानर्थकमिति भावः ॥ भाष्ये

**अन्तरङ्गं हि पूर्वत्वमिति ।** (भा)

यद्यपि वार्णपरिभाषयापि आल्लोपस्य नित्यत्वं वक्तुं शक्यं तथापि तदनाश्रयेणैवास्य ग्रन्थस्य प्रवृत्तेर्न दोषः । प्रकारान्तरेण तदुपपादयितुमाह

यण् । अङ्गस्य एकाच्त्वात् । ननूभयत्रापि सम्प्रसारणे कृते आतोलोपः । तस्य स्थानिवद्भावादियङुवङौ न भविष्यत इति चेत् । स्यादेवम् । यद्यातोलोपो लभ्येत । स तु दुर्लभः । अन्तरङ्गेण पूर्वत्वेन बाधात् । न च वार्णादाङ्गं बलीयः, व्याश्रयत्वात्, नन्वेवमपि व्यर्थमेव वार्त्तिकम् । प्रागेव सम्प्रसारणादातोलोपे कृते तस्य स्थानिवद्भावादसिद्धत्वाद्वा उवोङोप्रवृत्तौ यणादेशेन आह्वः प्रह्व इत्यादेः सिद्धत्वात् । तथाहि । नित्यं सम्प्रसारणम्, आतोलोपे कृते अकृते प्रसङ्गित्वात् । अल्लोपस्तु कृते च सम्प्र-

आह्ववः प्रह्वव इति प्राप्नोति, एवं ब्रह्मजिय इति प्राप्नोति, ननु संप्रसारणे कृते आतो लोपस्तस्य स्थानिवद्भावादियङुवङौ न भविष्यतः, लोपो न सिद्ध्यति अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति समानाश्रये च वार्णादाङ्गं बलीय इति एवन्तर्हि प्रागेव संप्रसारणादातो लोपो भविष्यति परत्वाद् नित्यं संप्र-

यस्येति ॥ (भा)

नन्वनादिष्टादच इति । (कै)

अत एव न पदान्तसूत्रस्थसवर्णग्रहणं भगवता प्रत्याख्यातं न धातुसूत्रस्थं भाष्यं तु तत्रैव योजितमिति न तद्विरोध इति बोध्यम् । समाधानान्तरस्य सम्भवादनित्यमिदम् ॥ नाश्रितमिति तत्त्वं तु धातुना सिद्धमिदं रूपमत आह

अकृत इति । (भा)

वर्णादाङ्गं बलीय इति पूर्वरूपं बाधित्वा लोप इति पक्षेऽप्यस्यासिद्धिर्बोध्या ॥ भाष्ये

---

सारणं यद्यपि पूर्वत्वेन बाध्यते तथापि यस्य च निमित्तं लक्षणान्तरेण विहन्यते यत्तदपि नित्यमिति नित्य एव । द्वयोर्नित्ययोः परत्वादाल्लोपः । ततः सम्प्रसारणं तत इयङ्वङौ प्रसक्तौ आतोलोपस्य स्थानिवत्त्वान्न भविष्यतः । न च अनादिष्टादचः पूर्वत्वं नास्तीति वाच्यम् । स्थानिद्वारकस्य सत्त्वात् । यत्त्विह कैयटेनोक्तं शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते न त्वनादिष्टादचः पूर्वत्वे लौकिके इति, तदापाततः । अचः परस्मिन्नित्यतिदेशस्याशास्त्रीयतया तस्यैव स्थानिवत्त्वेनातिदेशः सम्भवतीति न पदान्तसूत्रीयसवर्णग्रहणाद्युपष्टम्भेन प्रागेव वर्णितत्वात् । किञ्चाकार-

---

सारणं कृताकृतप्रसङ्गित्वात्, आतो लोपस्त्वनित्यः कृते संप्रसारणे पूर्वत्वेन बाध्यते यस्य च निमित्तं लक्षणान्तरेण विहन्यते न तदनित्यं तदेवं परत्वादातो लोपस्ततः संप्रसारणं तत इयङ्वङौ प्रसक्तावाल्लोपस्य स्थानिवत्त्वान्न भविष्यतः, ननु योनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव आदिष्टाच्चैषोचः पूर्वं इदानीमेव कृतः पूर्वमल्लोपः पश्चात्संप्रसारणमिति

**अन्तरङ्गत्वादात्वमिति ।** (भा)

एवं चात्वे पूर्वरूपलोपयोः प्राप्तयोर्वार्णादिति न्यायेन लोपे तस्य स्थानिवत्त्वादुवङ् स्यादिति भावः ॥

**एवं तर्हीति ।** (भा)

प्राग्वदेव किञ्चेत्यर्थ ॥

**प्रसज्यप्रतिषेधेत्विति ।** (कै)

वचित्वपीत्यत्र कितीत्यपि । यदि विषये सप्तमी तदा भाष्यं सम्यगेव ॥ भाष्ये

**आत्वे कृते सम्प्रसारणमिति ।** (भा)

आत्वे कृते लोपे कृते सम्प्रसारणे कृते प्राप्तोवङि स्थानिवत्त्वाभावेऽपि असिद्धत्वादुवङो ऽसिद्धिरिति भावः ॥ समाधत्ते

लोपस्य आभीयत्वे नासिद्धत्वान्न दोषः न चैवं जुहुवतुः जुहुवुः अत्राप्युवङ् न स्यादिति वाच्यम् । स्थानिद्वारकस्य अनादिष्टादचः पूर्वत्वस्य आभीयासिद्धत्वस्य च अनित्यत्वेनेह प्रवृत्तेः । अथवा सम्प्रसारणाच्च एङः पदान्तादित्यत्र एङ इति योगो विभज्यते । सम्प्रसारणादेङि परे पूर्वपरयोः पूर्व एकादेशो भवतीति सम्प्रसारणाच्चेत्येव सिद्धे ज्ञापनार्थमिदम् । यत्र सम्प्रसारणात्परः एङ सम्भवति तत्र अनैमित्तिकत्वेनान्तरङ्गमप्यात्वं अकृत्वा

एवं तर्ह्याकारलोपस्यासिद्धत्वादुवङ न भविष्यति, इहापि तर्हि जुहुवतुः जुहुवुः, आल्लोपस्यासिद्धत्वादुवङन प्राप्नोति आभीयमसिद्धत्वमनित्यमित्यत्र न भविष्यति, अथ वा संप्रसारणाच्च एङः पदान्तादित्यत्र एङ इति योगविभागः संप्रसारणादेङि परतः पूर्वपरयोः पूर्वमेकादेशो भव-

**एवं तर्हीति ।** (भा)

योगविभागसामर्थ्यादन्तरङ्गमप्यात्वं बाधित्वा पूर्वं सम्प्रसारणं पूर्वत्वञ्चेति उवङ् विधौ जुहुवुरित्यादाविति भावः ॥

**पर्युदासाश्रयेऽपीति ।** (कै)

अन्यथान्योन्याश्रयः स्यादिति भावः । आभीयासिद्धानित्यत्वेनापि जुहुवतुरिति सिध्यति । हुः के कृते आल्लोपात्पूर्वं सम्प्रसारणं यतो नित्यं नित्यत्वं दर्शयति

**कृतेति ।** (भा)

एवं च ह्वेयण् फलतीत्यर्थः ॥ वार्त्तादित्यादि व्याचष्टे

सम्प्रसारणं कर्तव्यमिति । तेन जुहुवतुरित्यत्र एरन्तादे लिटि विहिते सम्प्रसारणं पूर्वत्वम् । ततश्च न स्थानिवत्त्वं नाप्यसिद्धत्वमिति सिद्धमिष्टम् । आह्वः प्रह्व इत्यत्र तु आकारान्तलक्षणः प्रत्ययो यस्मात्स्वे कर्तुमशक्यः । अतः पूर्वमात्वाम् । ततः प्रत्ययः अल्लोपः सम्प्रसारणं स्थानिवद्भावादसिद्धत्वाद्वा इयङुवङोरभावः । तस्मान्मास्तु वार्त्तिकमिति चेत् । सत्यम् । इत्थं प्रत्याख्यातमेव भाष्ये किन्तु अस्ति वार्त्तिकस्योक्तिसम्भवः । आभात्वप्रत्याख्यानपक्षे हि स्थानिवत्त्वमेव शरणम् । तत्र च स्थानिवद्भावकमनादिष्टादचः पूर्वत्वमाश्रयणीयन्तच्चानित्यमिति ज्ञापयितुमिदं वार्त्तिकमिति ।

तीति, किमर्थमिदं, न संप्रसारणाच्चेत्यत्र सिद्धं, ज्ञापनार्थं, यत्र संप्रसारणात्पर एङ् संभवति तत्रा 'दैच उपदेशेऽशीति' त्वात्वं न भवतीति, यदि स्यात्पर्वत्वेन तस्य निवृत्तिविधानमनुपपन्नं स्यात् तेन जुहुवतुरित्यत्रानैमित्तिकत्वेनान्तरङ्गमप्यात्वमकृत्वा एरभावादेव लिटि विहिते संप्रसारणं

**तच्च कृते इति ।** (कै)

यतो ऽनादिष्टादचः पूर्वत्वे स्थानिवत्त्वमतो भगवान् कात्यः प्रचारविभ्यो डमोवाचेत्यन्वयः ॥ प्रत्याख्यानवाद्याह

**तेनासिद्धिर्यणस्तु न इति ।** (भा)

तेनाभीयादिति सूत्रेण (६।४।२२) यतोऽसिद्धिरतो यण् नास्तीत्यर्थः ॥ "प्रोवाच भगवान् कात्य" इत्युक्त्या डविधानस्या-सिद्ध्यर्थमावश्यकता ध्वनिता । तथा चेदमेव ज्ञापकमीदृशे विषये आभीयासिद्धत्वाभावस्य । वार्णादाङ्गमित्यस्य तदभावस्य वेति । शुक्रवतुरित्यादिसिद्धिर्योगविभागस्य तत्रापि कर्त्तव्यत्वेन गौरवस्य तदवस्थत्वादिति च ध्वनितम् । एवं च तेनासिद्धिरित्युक्तिरेक-देशिनः प्रौक्तिरिति च ध्वनितम् ॥

---

एतत्प्रत्याख्यातुं प्रवृत्तो भाष्यकारोऽपि स्थानिवद्भावमुपन्यस्य दूषयित्वा असिद्धतां प्रत्यक्षीकुर्वन् स्थानिवद्भारिकायाः अनादिष्टादचः पूर्वतायाः ज्ञापितत्वतां ध्वनयति । तत्फलन्तु अचः परस्मिन्निति सूत्र एवावोचामेत्यलं बहुना ॥

---

पूर्वत्वे न स्थानिवत्त्वं नासिद्धत्वमिति सिद्धमिष्टम्, आङःप्रङः प्रयाण्य इत्यत्र त्वाकारान्तलक्षणः प्रत्ययो नासत्यात्वे भवितुमर्हतीति पूर्वमात्वन्ततः प्रत्ययः, आल्लोपः संप्रसारणम्, असिद्धत्वादियङुवङोरभावः ॥

# सुपि स्थः । ३ । २ । ४ ॥

भाष्ये

भावे चेति । (भा)

चात्कर्त्तरि ॥

कच्छेन पिबतीति । (कै)

अकर्मण्युपपदे प्रत्ययार्थं सुपीति योगविभाग इति भावः ॥

सुपि स्थः ॥ सुबन्ते उपपदे तिष्ठतेर्धातोः कः प्रत्ययः स्यात् । समस्थः । विषमस्थः । अत्र सुपीति योगो विभज्यते । सुपि आकारान्तेभ्यो धातुभ्यः कप्रत्ययः स्यात् । द्वाभ्यां पिबतीति द्विपः । स्थः ॥ सुपि तिष्ठते कः स्यात् भावे । आखूनामुत्थानमाखूत्थः । प्रक्रियाकौमुद्यान्तु आखूत्थमिति नपुंसकं पठ्यते तत्रामादिकम् । भाष्यादौ सर्वत्र पुल्लिङ्गस्यैवोदाहृतत्वात् । ल्युः कर्त्तरीमनिज्भावे कः किर्घोः प्रादितोऽन्यत इत्यमरकोषाद्भावे कस्य पुंस्त्वविधानाच्च । भावे नञ्क्तचिड्भ्योन्य इति नपुंसक-

"सुपि स्थः" ॥ सुपीति न सप्तमीबहुवचनस्य ग्रहणं किन्तर्हि प्रत्याहारस्य 'सुप्तिङन्तं पदम्' 'सुप आत्मनः क्यच्' 'सुपोधातुप्रातिपदिकयोः' 'अव्ययादाप्सुप' इत्यादौ तस्यैव प्रसिद्धत्वात् । 'द्वाभ्यां पिबतीति' । ननु रूढिशब्दा द्विपादयस्तत्रासन्तमप्यवयवार्थमाश्रित्यकर्मोपपद एव कः करिष्यते, नैतदेवं, द्वाभ्यां पिबतीत्यादेरवयवार्थस्य सम्भवतोपरित्यागेनैव

## सत्येवार्थ इति । (कै)

एव शब्दो वाक्यालङ्कारे संभवति योग्येऽर्थेऽसदर्थाश्रयण-व्युत्पादनमयुक्तमित्यर्थः ॥

## नित्यसमासेति । (कै)

"उपपदमतिङ्" इत्यनेनेति भावः ॥ घञर्थे कविधानमित्येतदुदाहरणपरे "स्थास्नापाव्यधिहनियुध्यर्थमि"त्यत्र स्थग्रहणं तु क्रमाचार्थमिति बोध्यम् ( घञ्वृहनिश्चिगमश्च । ३ । ३ । ५८ ॥ इतिसूत्रस्थ घञर्थे कविधानं स्थास्ना-वार्तिकम् ) ॥

---

विधाने कस्य पर्युदासाच्च । ननु स्थ इति सूत्रे णविधीयमानोपि कः कृत्त्वात्कर्तर्येव स्यादिति चेन्न । आत इत्यनेनैव सिद्धेः । तथा च स्थ इत्यारम्भसामर्थ्यान्न कर्त्तरि किन्त्वानिर्दिष्टार्थत्वात्स्वार्थे । धातोश्च स्वार्थो भाव एव । नन्वेवं घञर्थेकविधानमित्यनेनैव गतार्थत्वमिति चेन्न । वार्त्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेः । किञ्च नित्यसमासार्थमिदम् । अन्यथा हि षष्ठीति सूत्रेण पाक्षिकः समासः स्यात् । इष्यते तु नित्यमुपपदसमासः । तथा च आखूनामुत्थानमिति अस्वपदविग्रहः क्रियते । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमित्यत्र स्थाग्रहणान्तु कर्तृवर्जिते कारके यथा स्यादि-

---

व्युत्पत्तौ सम्भवत्यामस्याः कल्पनाया अयुक्तत्वात्, यत्र त्वत्यन्तमसम्भवो युक्ता तत्रैव सा कल्पना यथा तैलपायिकादौ । 'अनेन भावे यथा स्यादिति' । आरम्भसामर्थ्यात्तावदयं कर्त्तुरपकृष्यते न चान्योर्थो निर्दिश्यते, अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ति स्वार्थश्च धातूनां भाव एव । ननु घञर्थे कविधानमिति भावे कः सिद्धः, सत्यं, नित्यसमासार्थन्तु

प्रत्यासन्नत्वादिति । (भा)

अत एवास्य नित्यमेकत्वमेव न तु घञादिवाच्योवङ्द्वित्वादियोगो याति भावः ॥

तक्रकौण्डिन्येति । (कै)

विधेयविषये एव स न्यायो नानुवादविषय इत्यन्ये ॥

---

त्येवमर्थम् । इत ऊर्ध्वं कर्मणि सुपीति च द्वयमप्यनुवर्त्तते । तत्र सकर्मकेषु कर्मणीत्युपतिष्ठते । स्यग्नोनुदक इति यावत् । अन्यत्र सुपीति सुप्यजातौ णिनिरिति यावत् । एवञ्च प्रकृतस्य सुब्ग्रहणस्य उपसर्गेतरपरत्वं सत्सूद्विषेति सूत्रस्थेनोपसर्गेऽपीत्यनेन ज्ञापितमिति सुप्प्रातिपदिकग्रहणार्थं णिनिविधौ पुनः सुपग्रहणमिति वक्ष्यामः ॥

---

वचनम् अन्यथा पाक्षिकः षष्ठीसमासः स्याद् नित्य एव तूपपदसमासो भवति तथा चाखूनामुत्थानमित्यस्वपदेन विग्रहः कृतः, घञर्थे कविधानमित्यत्र स्थग्रहणं कष्टवर्जिते काकेऽपि यथा स्यादिति ॥

# तुन्दशोकयोः परिमृजापनुदोः । ३ । २ । ५ ॥

तत्र सामर्थ्यादिति । (भा)

एवं हि सति ते गम्ये भवत इत्यर्थः ॥ तुन्दपरिमृजेरविच्किति वेति पक्षे वृद्धिः प्राप्नोति सा भवत्येव सत्यभिधाने यणचीत्येव वक्तव्ये अजादावित्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति तत्त्वं तत्र तद्भावात् । यस्मिन्विधिरिति परिभाषालभ्यादिग्रहणस्यैव तत्रानुवादाच्च । अन्यत्तु भाष्यस्वरसात् तत्र

तुन्दशोकयोः परिमृजापनुदोः ॥ तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजापनुदिभ्यां धातुभ्यां कप्रत्ययः स्यात् । आलस्यसुखाहरणयोरिति वक्तव्यम् । आलस्ये सुखोत्पादने च गम्यमाने प्रत्यय इत्यर्थः । तत्र सामर्थ्यादलसे कर्त्तरि सुखस्य चाहर्त्तरि प्रत्यय इति फलितं भवति । तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः । अत्र मृजेरजादाविति वैकल्पिकी वृद्धिर्नेति हरदत्तः । भवतीत्यपरे । एतन्मतद्वयबलाबलं तु क्ङिति चेति

"तुन्दशोकयोः परिमृजापनुदोः" । 'तुन्दपरिमृज इति' । मृजेरजादौ संक्रम इत्यत्र यस्मिन्विधिस्तदादावित्येव सिद्धे आदिग्रहणं मुख्याजादिपरिग्रहार्थं तेन व्यपदेशिवद्भावेनाजादावत्र के वृद्धिर्न भवति 'आलस्य इत्यादि' । आलस्ये गम्यमाने सुखोत्पादने च प्रत्यय इत्यर्थः, तत्र सामर्थ्यादलसे कर्त्तरि सुखस्य चाहर्त्तरि प्रत्ययो भवतीत्युक्तं भवति 'शोकापनोद एवान्य इति' । यस्मांमारानित्यताद्युपदेशेन शोकमेव केवल-

**कृङिन्त्पदेनातिदेशिकात्क्ङितोरेव ग्रहणं व्याकरणान्तरे संक्रमपदेन तयोरेव ग्रहणाच्चेति परे । मूलविभुजादिभ्य इति तादर्थ्ये चतुर्थी ॥**

**काकगुहा इति ।** (भा)

**काकेभ्यो गूहितव्या इत्यर्थः । घञर्थे कविधानमित्यनेनापि सिद्धमेतत् । सरसि सरस्यां वा कौ मोदत इत्यर्थः ॥**

---

सूत्रे प्रतिपादितम् । अलसादन्यत्र तुन्दपरिमार्ज इत्येव भवति । शोकापनुदः सुखस्याहर्ता । यस्तु संसारासारत्वाद्युपदेशेन शोकमेव केवलमपनुदति न तु सुखमुत्पादयति स शोकापनोदः । कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥ तादर्थ्ये एषा चतुर्थी । मूलविभुजादिसिद्ध्यर्थमित्यर्थः । मूलानि विभुजतीति मूलविभुजो रथः । नखान्मुञ्चतीति नखमुचानि धनूंषि । कौ मोदते कुमुदं सरोरुहम् । इह यद्यपि काकगुहास्तिला इति भाष्यवृत्त्यादिषु उदाहृतं तथापि काकेभ्यो गूहितव्या इति कर्मार्थावगतेः घञर्थे कविधानमित्यनेनेदं द्रष्टव्यमिति हरदत्तः । आकृतिगणोऽयम् । तेन महीध्रकुध्रगिध्रगोरुहादि सिद्धम् ॥

---

मपनुदति न तु सुखमुत्पादयति स शोकापनोदः 'मूलविभुजादिभ्य इति' । तादर्थ्ये एषा चतुर्थी मूलविभुजादिसिद्ध्यर्थमित्यर्थः, आकृतिगणश्चायं तेन महीध्रकुध्रगिध्रगोरुहादि सिद्धं भवति । 'काकगुहा इति' । काकेभ्यो गूहितव्या इति कर्मणि कप्रत्ययः इष्यते, अतो घञर्थे कविधानमित्यत्रेदं द्रष्टव्यम् ॥

# गापोष्टक् । ३ । २ । ८ ॥

**बहुलं तणीति । (भा)**

पक्षे "आतोऽनुपसर्गे" इति कः ॥

**या ब्राह्मणी सुरापीति । (भा)**

**सुरां पिबतीत्यर्थे एवायं प्रयोग इति बाहुलकाश्रयणम् ॥**

---

गापोष्टक् ॥ आभ्यां टक् स्यादनुपसर्गे कर्मण्युपपदे । सामगः । सामगी । अत्र वार्त्तिकम् । सुरासीध्वोः पिबतेरिति ॥ अत्र पिबतेरिति लुग्विकरणपरिभाषालभ्यार्थकथनम् । उपपदपरिगणनन्तु वाचनिकमेव । सुरापः । सुरापी । सीधुपः । सीधुपी । सुरासीध्वोः किम् । क्षीरपा ब्राह्मणी । पिबतेरिति किम् । सुरां पाति रक्षतीति सुरापा । अनुपसर्गे किम् । सामसङ्गायः । गामादाग्रहणेष्वविशेषेऽपि गै शब्द इत्यस्यैवात्र ग्रहणं न तु गाङ् गताविवस्य सानुबन्धस्य, नापि गा स्तुताविति जुहोत्यादेः । निरनुबन्धेन अलुग्विकरणेन च पिबतिना साहचर्यात् । अनभिधानाद्वा । बहुलं तणि ॥ या ब्राह्मणी सुरापा भवति नैतां देवाः पतिलोकं नयन्ति ॥

"गापोष्टक्" ॥ 'गायतेरिति' । गामादाग्रहणेष्वविशेष इति गाङो लुग्विकरणस्यापि ग्रहणं प्राप्तं पिबतिनाहचर्यात्तु न भवति । 'सामगीति' । टकः कित्त्वादातो लोपः, टित्वान् ङीप् । सुरासीध्वोः पिबतेरिति वक्तव्यमित्यत्र पिबतेरिति लुग्विकरणालुग्विकरणपरिभाषालभ्यस्यैवार्थस्य कथनमुपपदपरिगणनं तु वाचनिकमेव । 'क्षीरपेति' । स्त्रियामेव विशेषात् स्त्रीलिङ्गमुदाहृतम् ॥

# हरतेरनुद्यमनेऽच्। ३।२।९॥

लिङ्गेति। (कै)

तत्फलं तु देवदत्तसखीत्यादौ टजभावः॥

धार्यर्थे इति। (भा)

ग्रहणपूर्वकधारणे लाक्षणिकाद् ग्रहेरित्यर्थः॥

---

हरतेरनुद्यमनेऽच्॥ उत्क्षेपणादन्यस्मिन्नर्थे वर्त्तमानाद्धरतेर्धातोः कर्मण्युपपदे ऽच् स्यात्। अणोऽपवादः। अंशहरः। रिक्थहरः। अनुद्यमने किम्। भारहारः। अच्प्रकरणे शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम्॥ शक्तिग्रहः। लाङ्गलग्रह इत्यादि। लिङ्गविशिष्टपरिभाषया घटग्रहणेनैव सिद्धे घटीग्रहणं परिभाषाया अनित्यत्वज्ञापनार्थम्। तेन मद्रराज्ञीत्यत्र टच् न। द्विषतीताप इत्यत्र द्विषत्परयोरिति खच् नेति दिक्। सूत्रे च धार्यर्थे॥ ग्रहेरुपसंख्यानमित्येव। सूत्रग्रहः। धार्यर्थे इति किम्। यः सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव यथा स्यात्। सूत्रग्राहः॥

---

"हरतेरनुद्यमनेऽच्"। 'अच्प्रकरण इति'। लिङ्गविशिष्टपरिभाषयाथ घटग्रहणेन घटीग्रहणेऽपि सिद्धे घटीग्रहणं परिभाषाया अनित्यत्वज्ञापनार्थम्। 'सूत्रग्राह एवान्य इति'। यस्सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव भवतीत्यर्थः॥

# ग्रमिधातोः संज्ञायाम् । ३ । २ । १४ ॥

**ककारव्यत्ययेनेति ।** (कै)

नैषा शङ्करेति भाष्यविरोधाच्चिन्त्यमेतत् ॥

**धातुग्रहणं न कर्त्तव्यमिति ।** (कै)

टबाधनार्थं न कर्त्तव्यमित्यर्थः । क्विपोबाधनार्थं तु तदावश्यकमिति स्थः कचेति सूत्रे भाष्ये स्पष्टम् ॥

---

शमिधातोः संज्ञायाम् ॥ शमि उपपदे धातुमात्रात्संज्ञायां विषये अच् स्यात् । शङ्करः । शम्भवः । शंवदः । धात्वधिकारे पुनर्धातुग्रहणमपवादविषयेऽपि प्रवृत्त्यर्थम् । तथा च वार्त्तिकम् । शमिसंज्ञायां धातुग्रहणं कृञोहेत्वादिषु टप्रतिषेधार्थमिति ॥ असति धातुग्रहणे शमिसंज्ञायामित्यस्यावकाशः । शम्भवः शंवदः कृञोहेतुताच्छील्य इत्यस्यावकाशः श्राद्धकरः । शङ्कर इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्यात् । धातुग्रहणसामर्थ्यादजेव भवति । शङ्करा नाम परिव्राजिका तच्छीला । कुणरवाडवस्त्वाचार्यो मन्यते शृणातेः शब्दकर्मणा एतद्रूपम् । पृषोदरादित्वाद्रकारस्य ककार इति । तन्मते धातुग्रहणं चिन्त्यप्रयोजनम् ॥

"शमिधातोः संज्ञायाम्" । 'धातुमात्रादिति' । मात्रग्रहणेनापवादविषयेऽपि विधानं भवतीति दर्शयति । 'शङ्कर इति' । ऐहिकमामुष्मिकं मोक्षाख्यं च सुखं करोतीति शङ्करः धातुग्रहणस्य प्रयोजनं दर्शयन्मात्रग्रहणप्रतिपादितमेवार्थं स्पष्टीकरोति । 'शमिसंज्ञायामिति' । अस्मिन्सूत्र इत्यर्थः । असति धातुग्रहणे शमिसंज्ञायामित्यस्यावकाशः शम्भवः, शम्वद इति कृञो हेतुताच्छील्य इत्यस्यावकाशः श्राद्धकर इति, शङ्करा इत्यत्रोभयप्रसङ्गे परत्वाट्ट एव स्याद् धातुग्रहणसामर्थ्यादजेव भवति । कुणरवाडवस्त्वाचार्यो मन्यते शृणातेः शब्दकर्मणा एतद्रूपं पृषोदरादित्वाद्रकारस्य ककार इति तन्मते धातुग्रहणं चिन्त्यप्रयोजनम् ॥

# अधिकरणे शेतेः । ३ । २ । १५ ॥

मयूरव्यंसकेति । (कै)

दिग्धसहपूर्वता प्रायोगिकी बोध्या । पृथग् दिग्धसहशब्दस्य सिद्ध्यभावात् ॥ गिरौ शेत इत्यर्थे तद्धितस्याविधानादाह

गिराविति ॥ (भा)

अन्येत्वाहुरिति । (कै)

अत्राकृचित्त्वदन्तशब्दासिद्धिरव्ययत्वापत्तिः। शसः स्वार्थिकत्वेन गिरौ शेत इति विग्रहासङ्गतिश्च ॥

अधिकरणे शेतेः ॥ सुपीति सम्बध्यते । अच् स्यात् खे शेते खशयः पार्श्वादिषूपसङ्ख्यानम् । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः । दिग्धसहपूर्वाच्च । दिग्धेन सह शेत इति विग्रहे दिग्धसहशयः । अत्र दिग्धसहशब्दो मयूरव्यंसकादिः, तस्य शयशब्देन सह उपपदसमासः । उत्तानादिषु कर्तृषु । उत्तानः शेते उत्तानशयः । अवमूर्धशयः । अवनतो मूर्धा यस्य अवमूर्धः अधोमुखः शेते इत्यर्थः ।

“अधिकरणे शेतेः”। ‘पार्श्वादिष्विति’ अनधिकरणार्थमिदं तद्विग्रहेण दर्शयति । ‘पार्श्वाभ्यामिति’, ‘दिग्धसहशय इति’। दिग्धेन सह शेत इत्यपि कृते मयूरव्यंसकादित्वात्समासः दिग्धसहशब्दो मयूरव्यंसकादिस्तस्योपपदसमासः ‘अवमूर्धशय इति’ अवनतो मूर्द्धा यस्य अवमूर्द्धा अधोमुखः शेत इत्यर्थः ‘गिरौ डश्छन्दसीति’। यदि छन्दसी-

वैरेति (छविः)

वीरवाणी वीरादागते । "तत्र भवमि"ति वशिष्ठस्येदं तेन कृतं प्रोक्तं वा । गिरौ शेते गिरिं श्यति वा गिरिशः ॥ "निमित्तम्" अर्थः ॥ "अवधिः" प्रत्यायानां प्रकृतिः । तत्प्रकृरैरित्यर्थः ॥

---

गिरौ डश्छन्दसि ॥ गिरौ शेते गिरिशः । तद्धितो वा ॥ गिरिरस्यास्तीति गिरिशः लोमादित्वाच्छः । इह यद्यपि कृत्तद्धिताभ्यां गिरिशशब्दो द्वेधा भाष्यवार्त्तिकयोर्व्युत्पादितस्तथापि लोके तद्धितान्त एव न तु कृदन्तः । डश्छन्दसीत्युक्तेः । एवञ्च प्रत्याहतास्तो गिरिशप्रभावात्, आरोपितं यद्गिरिशेन पश्चात्, गिरिशमुपचचार प्रत्यहं सा सुकेशीत्यादि प्रयुञ्जानानां कवीनां न कोप्यपराधः । गिरौ शेते इति व्याचक्षाणानां तु प्रमाद इत्यवधेयम् ॥

त्युच्यते कथं गिरिशमुपचचार प्रत्यहं सा सुकेशी, आरोपितं यद्गिरिशेन पश्चादिति निरंकुशाः कवयः । अन्ये त्वाहुः, इह यो गिरौशेते गिरिस्तस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः तथा चात्रैव वार्त्तिकं तद्धितो वेति, न च लोमादिष्वपि छन्दोग्रहणमस्ति तेन भाषायामपि गिरिश इति भवति एवं च कृत्वा निघण्टुषु पाठोप्युपपन्नो भवति । 'गिरौशेत इति' । गिरावास्त इत्यर्थः ॥

# चरेष्टः । ३ । २ । १६ ॥

कुरूंश्चरतीति । (कै)

तानिच्छतीत्यर्थः ॥ यद्यर्थभेदो न स्यात्तर्हि द्वितीयान्तात्प्रत्ययानुत्पत्तिप्रतिपादनं व्यर्थं स्यादत आह

यश्चेति । (कै)

भिक्षाचरेचरतिः चरणकरणकार्जने लाक्षणिको भक्षणार्थो वा तत्रैव चायं प्रयोग इष्यते भाष्यप्रामाण्यात् । एतेन भिक्षया हेतुना चरतीत्यर्थकभिक्षाचरप्रयोगसाधकेन तत्सूत्रेण विपरीतं कर्मणीत्यस्य सम्बन्ध एव ज्ञाप्यतेति परास्ताः । सेनाग्रहणस्य ज्ञापकत्वं तु नोक्तं सेनां चरति सेनायां वेत्यर्थद्वये ऽपीष्टेः । एवं चाधिकरण इति कर्मणीति चोभयोरप्यधिकारो यथायोगं च सम्बन्ध इति ध्वनितम् ॥

# दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु। ३। २। २१॥

इत्याहुरिति। (कै)

अचाक्षुचिवीजं तु वार्त्तिकस्य हेत्वादौ टवाधनेन चरितार्थ-

---

दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु॥ एषु सुबन्तेषु यथायोगं कर्मसु चोपपदेषु करोतेष्टः स्यात्। अहेत्वाद्यर्थ आरम्भः। दिवा दिवसो करोति प्राणिनश्चेष्टायुक्तानिति दिवाकरः। अत्र दिवाशब्दः अह्नीति सप्तम्यन्तस्यार्थे वर्त्तत इति तस्य कर्मत्वानुपपत्तेः सुपीत्यनेन सम्बन्धः। शेषाणान्तु कर्मणीत्येव। यदि तु वृत्तिविषये दोषामन्यमह-

---

"दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु"॥ यथायोगमिति'। तत्र दिवाशब्दो ऽह्नीति सप्तम्यन्तस्यार्थे वर्त्तत इति तस्य कर्मत्वानुपपत्तेः सुपीत्यनेनाभिसम्बन्धः शेषायां तु कर्मणीत्यनेन, यदि तु दोषामन्यमह-दिवामन्या रात्रिरितिवद्वृत्तिविषये कर्मत्वमभ्युपगम्येत तदा दिवाशब्द-

तथा सूत्रस्थकिमादिग्रहणस्य भाष्येऽप्रत्याख्यानेन चाहेत्यादौ सूत्रे

---

दिवामन्या रात्रिरितिवत् कर्मत्वमभ्युपगम्यते तदा सर्वेषां कर्मणीत्यनेनैव सम्बन्धो बोध्यः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । सूत्रे भास्करान्तेति भाःशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते । तेन भास्कर इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः । यद्वा कस्कादिषु बोध्यः । कारकरः । कर एव कारः । प्रज्ञादित्वात्स्वार्थे अण् । अन्तकरः । अनन्तकरः । अन्तकरशब्देन नञ्समासेप्येतदेव रूपम् । स्वरे तु विशेषः । नञ्समासे हि सति शिष्टोऽव्ययपूर्वपदप्रकृतिस्वरः । अनन्तशब्दस्योपपदत्वे तु कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । आदिकरः । बहुकरः । बहुशब्दोऽत्र वैपुल्यवचनः । संख्यावचनस्य तु संख्यावचनग्रहणेनैव सिद्धेः । नान्दीकरः । किंकरः । लिपिलिबिशब्दौ पर्यायौ । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । संख्या, एककरः । द्विकरः । जङ्घाकरः । बाहुकरः । अहस्करः । अहन्, रोऽसुपीति रेफः । कस्कादित्वात्सः । यत्करः । तत्करः । धनुष्करः । अरु-

---

स्यापि कर्मणीत्यनेन संबन्धः । 'सकारस्येति' । भास्करान्तेति भाशब्दस्य प्रत्ययसन्नियोगेन सकारो निपात्यते तस्माद्भास्कर इत्यत्र विसर्जनीयजिह्वामूलीयौ न भवतः, अथ वा सकारस्य विसर्जनीयजिह्वामूलीयौ न भवतः कुतः निपातनात् । भास्करान्तेति सूत्रे सकारोच्चारणमेव निपातनम् । 'कारकर इति' । कर एव कारः प्रज्ञादित्वात्स्वार्थेऽण्, 'अनन्तकर इति' । अन्तकरशब्देन नञ्समासेप्येतद्रूपं सम्भवति स्वरे हि दोषः स्यात् सति शिष्टोऽव्ययपूर्वपदप्रकृतिस्वरः प्रसज्येत इष्यते हि गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । 'बहुकर इति' ।

किमादिग्रहणमामथ्यांद्धो भवत्येवेति। न च विपरीतमेवास्तु सूत्रस्थकिमादिग्रहणस्य सार्थक्यानुपपादनात्॥

---

ष्करः। नित्यसमासेनुत्तरपदस्थस्येति षत्वम्। किं यत्तद्बहुषु कृञोज्विधानत्॥ वार्त्तिकमेतदिति कैयटहरदत्तौ। इष्टिरिति माधवः। किङ्करा। यत्करा। तत्करा। वार्त्तिकेन सूत्रबाधाट्टस्याभावात् किं करोत्यसाधुरिति कैयटः। हेत्वादावपि तं बाधित्वा परत्वादजेवेति तस्याशयः। वृत्तौ तु पद्यान्तरमप्युक्तम्, अथवा पचादिपाठः करिष्यत इति। इह किमादिग्रहणमपनीय पचादिष्वेव किं यत्तद्बहुषु कृञिति पठितव्यमिति तस्यार्थः। वार्त्तिकमपीष्यमेव व्याख्येयमित्याशयः। अस्मिन्पक्षे हेत्वादिविवक्षायां परत्वाट्टेन भाव्यम्। तेन किं करणशीला किं करीति भवत्येव। पुंयोगविवक्षायान्तु निर्विवादो ङीप्। किं यत्तद्बहुष्वज्वेति प्रक्रियायां विकल्पोक्तिस्तु आकरविरुद्धत्वात्कर्मण्यणोपि पक्षे प्रसङ्गाच्चायुक्तैव। न चाजभावे सौत्रष्टः, सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्तत्वात्। अथ वा सौत्रस्यापनयनं मास्त्विति प्रौढिवादेन नेया, ताच्छील्यादौ व्याख्यानभेदात् फलितं विकल्पमाश्रित्य विषयविशेषाभिप्रायेण कथं चिद्वा नेया॥

बहुशब्दो वैपुल्यवचनः, संख्यावचनस्य तु संख्याग्रहणेनैव सिद्धम्, लिपिलिबिशब्दौ पर्यायौ। 'अहस्कर इति', अहन् गोसुपीति रेफः पूर्ववत्षत्वम्। 'धनुष्करः अरुष्कर इति'। 'नित्यं समासेनुत्तरपदस्थस्ये'ति षत्वम्, किं यत्तद्बहुषु कृञोज्विधानमिति वार्त्तिकेन सूत्रस्य बाधितत्वादस्याभावाद्धेत्वादिष्वन्यत्र किं करोत्यसाधुरित्याहुः। क्वचिद्ग्रन्थः। अथ वा पचादिषु पाठः करिष्यत इति। तत्रायमर्थः इह किमादिग्रहणमपनीयपचादिष्वेव किं यत्तद्बहुषु कृञ इति पठितव्यमिति॥

# फले ग्रहिरात्मम्भरिश्च । ३ । २ । २६ ॥

भाष्ये

**आत्मनो मुमिति ।** (भा)

समासे कृतेन लोपे च कृते ततः प्राग्वा मुम् निपात्य इत्यर्थः ॥

---

फले ग्रहिरात्मम्भरिश्च ॥ एतौ निपात्येते । फलानि गृह्णातीति फलेग्रहिर्वृक्षः । स्यादवन्ध्यः फलेग्रहिरित्यमरः । भट्टिकाव्ये तु फलग्राहि-मात्रे इन् प्रयुज्यते फलेग्रहीर्हंसि वनस्पतीनामिति । उपपदस्यैदन्तत्वं इन्प्रत्ययश्च ग्रहेर्निपात्यते । आत्मानं बिभर्तीत्यात्मम्भरिः । आत्मशब्द-स्योपपदस्य मुमागमः इन्प्रत्ययश्च भृञो निपात्यते । चकारोऽनुक्तसमुच्चयार्थ इति वृत्तिः । कुक्षिम्भरिः । छन्दसि फलशब्दस्यादन्तत्वमपि दृश्यते । यो वनस्पतीनां फलग्रहिरिति । इदमपि कुक्षिम्भरिवच्चकारेण सङ्ग्राह्य-मिति हरदत्तः । चान्द्रास्तु आत्मोदरकुक्षिष्विति पठन्ति । तथा च मुरारिः । ज्योत्स्नाकरम्भमुदरंभरयश्चकोरो इति । देवापिवातापिप्रभृ-तयोऽप्यनेन सिद्धाः । भाष्ये तु भृञः कुक्ष्यात्मनोर्नुम्चेत्यातावदेव स्थितम् ॥

"फले ग्रहिरात्मम्भरिश्च" ॥ 'उपपदस्यैकारान्तत्वमिति' । छन्दस्य-कारान्तत्वमपि दृश्यते यो वनस्पतीनां फलग्रहिरिति, स कुक्षिम्भरिव-च्चकारेण समुच्चेतव्यः ॥

# नासिकास्तनयोर्ध्माधेटोः । ३ । २ । २९ ॥

**एतावान् योग इति ।** (कै)

एतद्व्याख्यापकं वार्त्तिकमित्यर्थः ॥

**वार्त्तिकस्यापीति ।** (कै)

अपिना "नाडीमुष्ट्योश्चेति" ( ३ । २ । ३० ) सूत्रस्यापि "मुष्टौ ध्मश्चेति" वार्त्तिकं नाडीमुष्ट्योश्चेति पठितसूत्रस्य व्यवस्थापकमेव । नैतावता तत्सूत्रमप्रामाणिकमिति भ्रमः कार्यः । यथासंख्यसूत्रस्य भाष्ये स्पष्टं तत्सूत्रोपादानात् । यद्यपि नाडीमुष्टिविषये तत्सूत्रे यथासंख्यमुक्तं तथाप्येतद्भाष्यवार्त्तिकविरोधात्तद्भाष्यं

---

नासिकास्तनयोर्ध्माधेटोः ॥ खश् स्यात् । तत्र यथासंख्यं वारयितु वार्तिकम् । स्तने धेटः ॥ नासिकायां ध्मश्च धेटश्च ॥ स्तनं धयतीति स्तनन्धयः । धेटष्टित्वस्य अवयवे अचरितार्थत्वात्स्तनन्धयी । अत्रैव च ङीबिष्यते नान्यत्रेत्याङरिति हरदत्तः । अत्रैवेति खश्प्रत्ययान्तोपलक्षणम् । तथा च क्षीरस्वामी । स्तनन्धयीत्यादौ ङीबर्थ इति । वर्द्धमानोऽपि

---

"नासिकास्तनयोर्ध्माधेटोः" ॥ 'नासिकन्धम इति' । पाघ्रादिसूत्रेण धमादेशः । तच्चैतदित्यादिना यथासंख्याभावे हेतुमाह, तच्चैतत् यथासंख्याभावलक्षणं कार्यम् एतेन च व्याख्यातत्वां मूलत्वेन सूत्रकारस्याप्यत्र

प्रौढिवाद इति बोध्यम्। एवं चात्र नाडीशब्देन धार एवसम्बधो मुष्टिशब्देनोभयोरिति बोध्यम्॥ पूर्ववार्त्तिकदूषणेन नाडीशब्द-सम्बन्धोऽप्युभयोरित्याह

नासिकानाडीत्यादि। (भा)

अत्र भाष्ये धेटश्चेति वर्त्तते॥

---

मुष्टिन्धयौ। स्तनन्धयौ। खश्प्रत्ययान्त एव ङीविति। तेन पाघ्राध्मा-धेट्दृशः श इति शप्रत्यये आतोनुपसर्गे इति कप्रत्यये च टाबेव॥ अत्र च सम्प्रदाय एव शरणम्। नासिकन्धमः। पाघ्रेति धमादेशः। नाडिकन्धयः॥

---

किञ्चिदभिप्रेतमित्येतावत्प्रदर्श्यते तेनैतन्नचोदनीयमुत्तरसूत्रवत्प्रत्येकमभिसम्बन्धः कस्मान्न भवति विपर्ययो वा कस्मान्न भवतीति। 'स्तनन्धयतीति'। अत्रैव ङीविष्यते नान्यत्रेत्याहुः॥

## आढ्य सुभगस्थूलपलितनग्नान्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । ३ । २ । ५६ ॥

ख्युनभावे करणे ल्युटोऽवश्यं मत्त्वेनाच्वाविति व्यर्थमित्याह भाष्ये

**ख्युना मुक्ते इति ॥** (भा)

भाष्ये

**स एव च स्वरः ।** (भा)

मित्वरलित्वराभ्याम् ॥

---

आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सत्सु कर्मसूपपदेषु करोतेः ख्युन् स्यात् । करणे च्वेर्वैकल्पिकत्वात् द्विविधाश्च्व्यर्था आढ्यादयः च्व्यन्ता अच्व्यन्ताश्च । तत्र च्व्यन्ताः पर्युदस्यन्ते । अनाढ्यमाढ्यं करोत्यनेन आढ्यङ्करणम् । सुभगङ्करणमित्यादि । च्व्यर्थेष्विति किम् । आढ्यन्तैलेन कुर्वन्ति । अभ्यञ्जय-

---

"आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्" ॥ 'आढ्यादिष्विति' । अनेन आढ्यादीनामुपपदत्वं दर्शयति । करणे कारक इत्यनेनापि करणस्य प्रत्ययार्थत्वम् । अथैवं कस्मान्न विधायते करण उपपदे आढ्यादिषु कर्तृष्विति, उच्यते, च्व्यर्थेष्वच्वाविति वचनाद् आढ्यादिशब्दाः स्वरूपप्रधानाः न च शब्दानां कर्तृत्वमुपपद्यते,

## ल्युटा भाव्यमिति । (कै)

अवश्यभाव्यमित्यर्थः ॥

## तदयुक्तमिति । (कै)

भाष्यविरोधादित्यर्थः । उत्तरार्थत्वं वदता इहार्थत्वाभावस्य भाष्यकृता बोधितत्वादिति भावः ॥

## केचिदेवेति । (कै)

स्पष्टं प्रतीयमानक्रियावेशा इति भावः ॥

न्तीत्यर्थः । अनेकार्थत्वाद्धातूनाम् । तेन नात्र प्रागनाढ्यः सन् आढ्यः क्रियते इति अभूततद्भावाभावः । अस्तु वा अभूततद्भावः तथापि प्रकृतेरविवक्षायां प्रत्युदाहरणम् । प्रकृतिरेव परिणामित्वेन यदा विवक्ष्यते यथा अपटास्तन्तवः पटीभवन्तीति तदा च्विप्रत्ययः । तथा च तत्र वार्त्तिकम् । प्रकृतिविवक्षाग्रहणं चेति ॥ अच्वाविति किम् । आढ्यीकरोत्यनेन । स्यादेतत् । करणाधिकरणयोश्चेति ल्युटात्र भवितव्यम् । न च ल्युटः ख्युनश्चेह विशेषोऽस्ति । उभयथापि ह्याढ्यीकरणमित्येव रूपम् । स्त्रियामप्ययम्, अरुर्द्विषदजन्तस्य मुमिति ह्रस्वत्वं मुम् चान-

ननु च श्रवणेन करोति सुखमाढ्यशब्द इत्यत्र शब्दस्यापि कर्तृत्वं सम्भवति, एवं तर्हि व्याख्यानात्तथा नाश्रीयते, अच्वाविति तत्पुरुषो बहुव्रीहिर्वा- ऽऽश्रीयन्त इत्यर्थः, प्रत्येकं सम्बन्धात्त्वेकवचनं, कथं एतत्ख्यर्थाश्च भवन्त्य- च्व्यन्ताश्च भवन्तीत्याह । 'च्विविकल्पेन विधानादिति' । 'आढ्यङ्करण- मिति' ख्युनः खकारो मुमर्थः, लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गेष्वा- ढ्यादिषूपपदेषु ह्रस्वार्थश्च, नकारः स्वरार्थः, योरनादेशः । 'अभ्युद्भवती- त्यर्थ इति' । अनेकार्थत्वाद्धातूनां, तेनात्र प्रागनाढ्यः सन्नाढ्यः क्रियत इति

**द्रव्योपलक्षणार्थमिति।** (कै)

अवस्थाविशेषविशिष्टस्योपलक्षणायेत्यर्थः॥ ननु क्रियाप्रकारको बोध इति तात्पर्यम्। वस्तुतस्तु अभिधानलाभाय्या केषांचिदेव कृत्प्रयोगाणां गतिसम्बन्धो न सर्वेषामिति भाष्यतात्पर्यः॥ भाष्ये

**दृष्णुजिति।** (भा)

"भुवश्चे"त्यनेन प्रदेवदत्त इत्यत्र प्रशब्दस्य देवनक्रियायां दानक्रियायां वा योनाद्य इत्याह

व्ययस्य विधीयते। च्व्यन्तस्याव्ययम्, ऊर्यादिच्विडाचश्चेति निपातत्वात्। न च ख्युनि सति उपपदमतिङिति नित्यसमासो लभ्यते ल्युटि तु नेति वाच्यम्। ल्युट्यपि गतिसमासस्य सम्भवात्। तस्यापि नित्यसमासत्वाविशेषात्। न च स्त्रीप्रत्यये विशेषः। उभयत्रापि ङीबेव भवति। ल्युटि टिड्ढाणञिति सूत्रेण, ख्युनि तु नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानमिति तत्रत्येन ख्युन उपसंख्यानेन। न च स्वरे विशेषः। ल्युटि हि लित्स्वरेण कृञ उदात्तत्वं ख्युन्यपि लित्स्वरेण तथैवेति। तस्मादच्वाविति व्यर्थमिति चेत्। सत्यम्। उत्तरार्थं तदुक्तमिति भाष्यकाराः। एतच्च आढ्यीकरणमित्यादिरूपं ल्युटा भवत्येवेति भाव इति

---

अभूततद्भावाभावो भवतु वाऽभूततद्भावस्तथापि युक्तमेवेदं प्रत्युदाहरणमित्याह। 'प्रकृतेरविवक्षायामिति'। प्रकृतिरेव परिणामित्वेन यत्र विवक्ष्यते यथा तन्तवः पटो भवतीति तदा च्विप्रत्ययः, तथा च वार्त्तिकं प्रकृतिविवक्षा ग्रहणं चेति, प्रकृतिः कार्यस्य पूर्वावस्था 'अच्वाविति किमिति'। अस्य वक्ष्यमाणोऽभिप्रायः तमाविष्करोति। 'ननु चेति'। ल्युटात्र भवितव्यमिति'। 'करणाधिकरणयोश्चे'ति, न च ल्युटः ख्युनश्च विशेषोऽस्तीति ल्युटि तावदाढ्यीकरणमिति रूपं स्वरोऽपि लित्स्वरेणो-

## देवशब्दस्येति॥ (कै)

नाव्य इत्याह

## तदवयवस्य चेति॥ (कै)

तदवयवस्य चेति बहुव्रीहिः॥ व्याघ्रादौ तर्हि संज्ञाशब्दे कथं गतिसम्बन्धोऽत आह

## व्याघ्रादयस्त्विति॥ (कै)

-- — –

कैयटः। यत्तु जयादित्येनोक्तम् प्रतिषेधसामर्थ्यात् ख्युन्यसति ल्युडपि न भवति। तेन ल्युटोप्ययमर्थतः प्रतिषेध इति। तस्यायमाशयः। केवलोत्तरार्थत्वे तत्रैवाचाविति ब्रूयात्। इह करणसामर्थ्यात्तु ल्युडपि न। यथा इकोचिविभक्ताविव्यत्राजग्रहणस्य उत्तरार्थत्वे सत्यपि इहकरणसामर्थ्यान्नुमतेऽव्यस्यानित्यता ज्ञाप्यत इत्यभिप्रायेणाह। इह किञ्चित्त्वपो इतीति वक्ष्यते। तथा चोत्तरार्थतापि काममस्तु न तु केवलोत्तरार्थतेति। भाष्यवार्त्तिकस्वरसेन तु केवलोत्तरार्थत्वं लभ्यते। अतस्तद्विरोधाद्वृत्तिकृन्मतमयुक्तमिति कैयटः॥

उत्तरपदाद्युदात्तत्वं ख्युन्यपि नित्स्वरेणाद्युदात्तत्वं 'खित्यनव्ययस्य' 'अरुर्द्विषदजन्तस्य मुमि'ति ह्रस्वत्वं मुम् चानव्ययस्य विधीयते उरन्ताख्यव्ययम्। 'ऊर्यादिच्विडाचश्चे'ति निपातत्वात्. स्त्रियामप्युभयत्र टिड्ढाणञित्यादिना ङीब् भवति, अतो रूपे स्वरे च नास्ति विशेषः। 'उत्तरार्थश्चेति'। उत्तरसूत्रे खिष्णुच्खुकञ्भ्यां मुक्तो टआदिभिर्भवितव्यमित्यस्ति विशेषः, कथं तर्हि पूर्वमुक्तं प्रतिषेधसामर्थ्यादिति, अस्मिन्सूत्रे प्रतिषेधसामर्थ्यादिति भावः, केवलोत्तरार्थत्वे हि तत्रैवाचाविव्यवक्ष्यत्, यथा वक्ष्यते इह किं चित्त्वपो इति, भाष्ये तूत्तरार्थमेव स्थितम्॥

# कर्त्तरि भुवः खिष्णुच् खुकञौ । ३ । २ । ५७ ॥

भाष्ये न खुखुरिति पाठः ॥

उदात्तत्वादिति । (भा)

तेन "एकाच उपदेशे" इत्यस्याप्रवृत्तिरिति भावः ॥ कृत्योकेष्णुचेति ( ६ । २ । १६० ) सूत्रेण नञः स्वराभावादाह

कर्त्तरि भुवः खिष्णुचखुकञौ ॥ आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु सुबन्तेषूपपदेषु भवतेर्धातोः कर्त्तरि खिष्णुच् खुकञ् एतौ स्तः । आढ्यम्भविष्णुः । आढ्यम्भावुकः । सुभगम्भविष्णुः । सुभगम्भावुक इत्यादि । कर्तृग्रहणं करणाऽनुवृत्त्यर्थमुत्तरार्थञ्च । खकारो मुमर्थः । अकारो वृद्ध्यर्थः । स्यादेतत् । खिष्णुच इकारो मास्तु खस्नुरिति खख इति । वोच्यताम् । तत्रायमप्यर्थः । स्वरार्थश्चकारो न कर्त्तव्यः । प्रत्ययस्वरेणैवाभिमतसिद्धेः । कथन्तर्हि इकारादित्वमिति चेत्, इडागमेनेति ग्रहाण । न चैकाच उपदेश इतीण्निषेधः । भवतेरुदात्तत्वात् । अत्रोत्तरं वार्तिककार आह । नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुच इति ॥ नञ इति पञ्चमी । नञ उत्तरस्य खिष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः । यद्ययमिकारादिर्न क्रियेत ततः सत्यपीटि कृत्योकेष्णुचार्वादयश्चेति सूत्रे अस्य

"कर्त्तरि भुवः खिष्णुच्खुकञौ" ॥ कर्तृग्रहणं करणनिवृत्त्यर्थमुत्तरार्थं च, खकारो मुमर्थः, चकारः स्वरार्थः, अकारो वृद्ध्यर्थश्च, किमर्थं खिष्णुजिकारादिः क्रियते न खस्नुरित्येवोच्येत, तत्रायमप्यर्थः, स्वरार्थश्चकारो न कर्त्तव्यो भवति प्रत्ययस्वरेणैव सिद्धम्, अनेनैवेमिकारादित्वं सिद्ध्यति तत्राह । 'उदात्तत्वादिति'. भवतिरयमुदात्तः, तस्योदात्तत्वादिड् भविष्यति । 'नञस्त्विति' । नञ इति पञ्चमी नञ उत्तरस्य खिष्णुजन्तस्य स्वरसिद्ध्यर्थमित्यर्थः यद्ययमिकारादिर्न क्रियेत ततः सत्यपीटि कृत्योकेष्णुचार्वादयश्चेत्यस्य ग्रहणं न स्याद् अस्य चकाराभावात्'

**नञ उत्तरस्येति ।** (कै)

अन्तोदात्तविधायकमिदं पूर्वपदप्रकृतिस्वरापवादः ॥ ननु तदनुबन्धकपरिभाषया इष्णुच एव ग्रहणं भविष्यति न खिष्णुच इत्यत आह

**इकारोच्चारणेति ।** (कै)

चकारोच्चारणेनैव द्वयोर्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषा तदनुबन्धकपरिभाषा बाधे च खिष्णुचः करणेन षत्वणत्वयोरसिद्धत्वाभावे च सिद्धे इकारोच्चारणं व्यर्थमिति "अयमपीटि कृते इति" भाष्य तात्पर्यम् ॥ "न सिद्ध्यतीत्यादि" त्वेकदेश्युक्तिरिति बोध्यम ॥

---

ग्रहणं न स्यात् । अस्य चकारानुबन्धाभावात् अथोच्यत । अयमपि चित् । खिष्णुच् इति एवमपि लाक्षणिकत्वात्षत्वणत्वयोश्चासिद्धत्वादिष्णुजिति रूपाभावात ग्रहणं न स्यादित तत इकारादित्वं क्रियते । अत्रेदं वक्तव्यम् । सत्यपीकारादित्वे तदनुबन्धकग्रहणे नातदनुबन्धकस्येति परिभाषया अलंकृञादिष्णुच एव ग्रहणेन भाव्यं, नास्य । अथोच्येत । इकारोच्चारणसामर्थ्यादस्यापि ग्रहणमिति इत्थं खिष्णुजयमस्तु तत्रेटि कृते चकारानुबन्धसामर्थ्यादस्यापि ग्रहणमस्त्विति किमिकारेण । तस्माच्चिन्त्यमेतत् यत्तु हरदत्तेन षत्वणत्वयोः सामर्थ्यादस्य ग्रहणं भवतीत्युक्तम् । तदप्यापाततः । सूत्रपक्षया णाद्युक्तौ पद्यत प्रक्रियालाघवेन षत्वणत्वयोः करणस्योचिततया सामर्थ्यायोगादिति दिक् ॥

अथास्यापि चकारः क्रियेत एवमपि लाक्षणिकत्वात् षत्वणत्वयोश्चासिद्धत्वादिष्णुजितिरूपाभावाद्ग्रहणं न स्यादित तत इकारादित्वं क्रियते, ननु च सत्यपीकारादित्वे तदनुबन्धकग्रहणे नातदनुबन्धकस्य, एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्येति चालंकृञादेरिष्णुच एव ग्रहणेन भवितव्यं नास्य, इकारोच्चारणसामर्थ्यादस्यापि ग्रहणं भविष्यतीति मन्यते । यद्येवं खिष्णुजयमस्तु तत्र षत्वणत्वयोस्तु करणस्य च करणसामर्थ्यादिटि कृते ऽस्यापि ग्रहणं सिद्धमिति चिन्त्यप्रयोजनमिकारादित्वम् ॥

# स्पृशोऽनुदके क्विन् । ३ । २ । ५८ ॥

## एकाचोऽयमिति (भा)

भाष्ये । यङ्लुगन्तात्त्वयं न क्विन् अनभिधानादिति भावः ॥ ननु क्विग्रहणे क्विपोऽपि ग्रहणं स्यादत आह

स्पृशो ऽनुदके क्विन् ॥ अनुदके सुबन्तउपपदे स्पृशेः क्विन् स्यात् । यद्यपि स्पृशेः सकर्मकत्वात्कर्मण्युपपद इत्येव प्राप्तस्तथापि पूर्वसूत्रात्कर्तरी-त्यनुवृत्तेः सुपीत्येवोपपदं निर्णीयते । तथाहि । कर्तरि कृदित्येव कर्तरि क्विनः सिद्धत्वात्कर्त्रनुवृत्तिः कर्तृप्रचयार्था । कर्मण्युपपदे एकः कर्ता करणादौ चापर इत्येवं कर्तृप्रचयः । तथा च सुबन्त उपपद इति फलितं भवति । घृतं स्पृशतीति घृतस्पृक् । मन्त्रेण स्पृशतीति मन्त्रस्पृगिति प्राञ्चः । वस्तुतस्तु पूर्वसूत्रे कर्तृग्रहणं व्यर्थमेव । तद्धि न तत्रैव करणा-नुवृत्तिनिरासार्थम् । अस्वरितत्वादेव तत्सिद्धेः । नापीह कर्तृप्रचयार्थम् । मन्त्रस्पृगित्यादेः क्विपापि सिद्धेः । न च क्विपि कुत्वं न स्यादिति वाच्यम् । क्विन्प्रत्ययो यस्मात्तस्यान्यत्रापि कुत्वमिति वक्ष्यमाणत्वात् । अन्यथा ऋत्विगित्याद्यसिद्धेरित्यवधेयम् । अनुदक इति किम् । उदकस्पर्शः । न चेह क्विपा उदकस्पृगिति रूपं दुर्वारमिति वाच्यम् । अनुदक इति पर्यु-

"स्पृशोऽनुदके क्विन्" ॥ 'ननु चेत्यादि' । 'सुपि स्थ' इत्यत्रोक्तं सकर्मकेषु कर्मणीत्युपतिष्ठते ऽन्यत्र सुपीति ततश्च सुबन्त उपपदे क्विन् प्रत्यय इत्युक्तमनुपपन्नमिति भावः । 'तत्कर्तृप्रचयार्थमिति' । 'कर्तरि कृदि' त्येव कर्तरि क्विनः सिद्धत्वात्कर्त्रनुवृत्तेर्नान्यत्प्रयोजनमस्तीति भावः । 'कर्तृप्रचयो लभ्यत इति' । कर्मण्युपपदएकः कर्ता करणादौ चापर इत्येवं प्रचयो भवति । 'घृतस्पृगिति' । 'क्विन्प्रत्ययस्य कु'रिति प्रकारस्य

तदनुबन्धेति। (कै)

अत्र सूत्रे कर्मणीति सम्बध्यत एव। मन्त्रस्पृगित्यादि तु क्विपा सिद्धम्॥

क्प्रत्ययस्येति। (भा)

बहुव्रीह्याश्रयणात्कुत्वमपि सिद्धम्॥

---

दानसामर्थ्यात्क्विबपोप्यप्रवृत्तेः। कथन्तर्हि मन्त्रस्पृगित्यादेः क्विपा सिद्धिरुक्तेति चेत्, उदके क्विपोप्रवृत्तावपि मन्त्रादावुपपदे प्रवृत्तौ बाधकाभावादिति दिक्। क्विनः ककारो गुणप्रतिषेधार्थः। इकारो वेरपृक्तस्येति विशेषणार्थः। नकारस्तु यद्यपि नाद्युदात्तार्थः। एकाजयं क्विनो विधानात्तत्र धातुस्वरेणैव सिद्धेः। यस्त्वनेकाच् दघृगिति, तत्रान्तोदात्तस्य वक्ष्यमाणत्वात्। तथापि क्विन्प्रत्ययस्य कुरिति विशेषणार्थः। क्विप्रत्ययस्येत्युच्यमाने सन्देहः स्यात्। क्वेः क्विपो वा निर्देश इति। न च क्वेर्निर्देशएकः पकारः क्विपस्तु द्वाविति विशेषः। क्वेरपि निर्देशे पकारस्य चर्त्वचेति द्विर्वचनोपपत्तेः। न चैवं क्विपि पकारत्रयमिति वाच्यम्। झरोझरीति लोपोपपत्तेः। व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषानुपलम्भाच्च॥

खकारः सोऽयत्वेनान्तरतम्यात्, 'भ्रमा अग्नोन्ते' क्विनः ककारो गुणवृद्धिप्रतिषेधार्थ इकारो 'वेरपृक्तस्ये'ति विशेषणार्थः, नकारः किमर्थः एकाजयो ह्ययं विधीयते तत्र धातुस्वरेणैव सिद्धं यस्तह्यनेकाज दघृगिति वक्ष्यत्येद्भुषेर्द्विर्वचनमन्तोदात्तत्वश्चेति एवन्तर्हि 'क्विन्प्रत्ययस्य कु'रिति विशेषणार्थः, क्विप्रत्ययस्येत्युच्यमाने सन्देहः स्यात् क्वेः क्विपो वा निर्देश इति, क्वेरपि निर्देशे पकारस्यानधि चेति द्विर्वचम्॥

# ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजि-क्रुञ्चां च। ३। २। ५९॥

**अन्तोदात्तत्वं चेति।** (भा)

**इदं च क्विनो नकारमन्त्वे उक्तम्। स्रगुष्णिगोर्निपात्यमानवस्तुनः स्पष्टत्वात्त्रोक्तम्॥**

ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाश्च॥ आद्याः पञ्च क्विन्नन्ता निपात्यन्ते। ततस्त्रिभ्यः क्विन्विधीयते। तत्रापि निपातनैः सह निर्देशात्किंचिदलाक्षणिकमस्ति। तद्यथा। अञ्चेः सकर्मकत्वात्कर्मण्येव प्राप्तः सुबन्तमात्रे विधीयते। युजिक्रुञ्चिभ्यां तु केवलाभ्यामेव। युजेर्विधानसामर्थ्याच्च। न हि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोऽस्ति कुत्वस्य चोः कुरित्यनेनैव सिद्धत्वात्। अनुपपदे तु युजेरसमास इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं भवति सार्थकम्। क्रुञ्चेर्नलोपाभावश्च निपात्यते। ऋतौ यजति ऋत्विक्। इह ऋतुशब्दे उपपदे यजेः क्विन्। ञिधृषा प्रागल्भ्ये, अस्य क्विन् द्विर्वचनमन्तोदात्तत्वञ्च निपात्यते। दधृक्। सृजेः कर्मणि क्विन् अमागमश्च निपात्यते। सृज्यते इति स्रक्। दिशेः कर्मणि क्विन्। दिश्यते इति दिक्। उत्पूर्वात्स्निहेः। क्विन्। उपसर्ग-

"ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च"। 'ऋतौ यजतीति'। वसन्तादिकं 'ऋतुं यजतीति'। यस्मिन्यागे ऋतुर्देवता यथा वसन्ताय कपिञ्जलानालभते पिशङ्गास्त्रयो वासन्ता इत्यृतुपशूनालभते ग्रैष्मौ हैमन्त उतगो वसन्ता शारदा इत्यादौ तदभिप्रायमेतत्। 'ऋतुप्रयुक्तो वेति'। वसन्ते वसन्ते ज्योतिषा यजेतेत्यादौ यत्कर्तृत्वं तदभिप्रायमेतत्। 'सत्वञ्चेति'। अन्यथा 'सात्पदाद्योरिति निषेधः स्यात्। 'सुबन्तमात्र-इति'। अन्यथा सकर्मकत्वात्कर्मण्येव स्यात्। 'केवलादेवेति'। एतत्त क्विन्विधानसामर्थ्यादपि लभ्यते नहि सोपपदाद्युजेः क्विनि क्विपि वा विशेषोऽस्ति कुत्वस्य 'चोः कु'रित्यनेनैव सिद्धत्वात्, अनुपपदे तु

क्रुञ्चामिति (प्र)

निपातनान्नलोपाभाव इति ॥

धृषेश्चेति । (भा)

सूत्रो भाष्ये स्पष्टम् ॥

न्नलोपः सस्य षत्वञ्च । उष्णिक् । प्राङ् । प्रत्यङ् । युङ् युञ्जौ । सोपपदात्तु सत्सूद्विषेति क्विप् । अश्वयुक् । यदि तु निपातनसाहचर्यात्सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत तदा सत्सूद्विषेति सूत्रे युजिग्रहणं शक्यमकर्त्तुम् । कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः । नोपधाविमौ । तथा च निकुचितीरित्यत्र नलोपो दृश्यते । सन्निपातपरिभाषायाः फलानि पठन् वार्त्तिककारोप्याह । उदुपधत्वमकिमर्कित्वस्य निकुचित इति । ञकारस्तु स्तोरिति चुत्वेन, तस्यासिद्धत्वाच्चोः कुरिति कुत्वं न । ञकारोपधं पठतां तु कवञ्चौ कवञ्चौ इत्यादौ प्राप्तं कुत्वं सडि झलीति नाद्रियते । सडिति प्रत्याहारः । सनः सशब्दादारभ्य आ महिङो ङकारात् । अत्र के चित् । कुञ्चिरेक एव धातुः । तस्य ककारात्परो रेफोपि क्विन्सन्नियोगेन निपात्यत इत्याहुः । चोः कुरिति सूत्रे वामनम काशिकायां स्पष्टमेतत् ॥

युजेरसमास' इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं भवति सार्थकं, यदि तु निपातनसाहचर्यात्सोपपदादनुपपदाच्च युजेः क्विन् भवतीत्युच्येत तदा सत्सूद्विषेत्यत्र युजिग्रहणं शक्यमकर्त्तुम् । 'नलोप कस्मान्न भवतीति' । कुञ्च क्रुञ्च कौटिल्याल्पीभावयोरिति नोपधावेतौ धातू । तथा निकुचितिरिति नलोपो दृश्यते चुत्वेन तु ञकारस्य श्रवणं तस्यासिद्धत्वाच्चकारे परत 'चोः कु'रिति कुत्वं न भवति कुञ्चौ कुञ्च इत्यादौ ञकारोपधं तु पठतां स्यात् तत्र सडि झलीति वचनान्न भवतीति वक्तव्यं, सडिति प्रत्याहारः सनः सशब्दादारभ्या महिङो ङकारात्, अन्ये तु कुञ्चिरेक एव धातुस्तस्य ककारात्परो रेफोपि क्विन्सन्नियोगेन निपात्यत इत्याहुः । तदेत् 'चोः कु'रित्यत्र वामनो वक्ष्यति ॥

# त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० ॥

अकारः केवलस्वरार्थ उतान्यार्थोऽपीति विचार तात्पर्यमाह

**अकारस्येति** ॥ (कै)

भाष्ये

**नकारेणापीति** । (भा)

न च ञ्जनुबन्धकत्वादस्य कनो ग्रहणं न स्यादिति वाच्यम् । येनानुबन्धेन ञ्जनुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः ॥

**यः कृतोऽर्थ इति** । (कै)

प्रकृते दृशेः कर्त्तेत्यर्थः ॥ भाष्ये

---

त्यदादिषु दृशो ऽनालोचने कञ् च ॥ अनालोचनार्थाद् दृशेर्धातो- स्त्यदादिषु कञ्स्याच्चात्क्विन् । तादृक् । तादृशः । यादृक् । यादृशः । कञो ञकारो विशेषणार्थः । ठकठञ्कञिति स्वरार्थश्च । अनालोचने किम् । तत्पश्यतीति तद्दर्शः । तादृशायस्तु रूढिशब्दाः । ते च असता-

---

"त्यदादिषु दृशोऽनालोचने कञ्च" ॥ पश्यार्थैश्चेत्यत्र वक्ष्यति आलोचनं चक्षुस्साधनं विज्ञानमिति, इह तु ज्ञानमात्रप्रतिषेधं मन्यते । 'यादृक् तादृगिति' । दृग्दृशवतुष्विति वर्त्तमाने 'आ सर्वनाम्नः' इत्यात्वम् । 'अकारो विशेषणार्थ इति' । आद्युदात्तत्वस्य नकारेणापि सिद्धत्वात् अकारो- पधस्य प्रयोजनं विशेषणमेवेत्यर्थः न तु स्वरो न प्रयोजनमित्युच्यते

**इवार्थेऽयं तद्धित इति ।** (भा)

अयं भावः । यथा दृग्दृशवतुष्विति । सूत्रे दृक्षे इति वार्त्तिकबलादनुक्तोऽपि क्सः कल्प्यते । तथा इवाधिकारे तद्धिते त्यदादिभ्यो दृग्दृशट् दृक्षप्रत्ययाः कल्प्याः ॥ दृशदिदृष्टत्वाच्च ङीषपि सिद्ध इति दिष्टेति सूत्रे कात् ग्रहणमपि न कार्यमिति लाघवमिति ॥ भाष्ये

**तमिवात्मानं पश्यतीति ।** (भा)

प्रेरणावृत्ताविति अन्तर्भावितण्यर्थत्वाण्णिच् । तमिवात्मानं जनान् दर्शयतीत्यर्थः । अत्र प्रेरणावृत्त्याधिकार्थत्वेनाज्ञानार्थत्वं कर्मण्युपपदे एवायम् । तेन निवृत्तप्रेषणतया स इव पश्यतीति विग्रहोऽनुचितः । "समूद्विषेति" सूत्रे एव कर्मणीत्यस्य निवृत्ते-

---

यवयवार्थेन व्युत्पाद्यन्ते । अत एव अनालोचन इत्युक्तम् । दृश्यर्थाभावेऽयं विधिः । सति तु दृश्यर्थे अणेव भवतीति भावः । भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शिता । तमिवेमं पश्यन्ति जनाः । स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थात् । तथा दृग्दृशदृक्षा इवार्थे तद्धितप्रत्यया एवेत्यपि

---

तं पश्यति तद्दर्श इति चक्षुर्विज्ञानेऽणेव भवति, कथं पुनः प्रयुज्यमानस्यैव दृशेरनालोचनार्थत्वमित्याह । 'तादृशादयो रूढिशब्दा इति' । ततः किमित्याह । 'नैवात्रेति' । रूढिशब्दा ह्यसताप्यवयवार्थेन व्युत्पाद्यन्ते यथा तैलपायिकादयः, एतदर्थमेवानालोचन इत्युक्तं दृश्यर्थाभावे ऽयं विधिः, सति तु दृश्यर्थेऽणेव भवतीति । भाष्ये तु कर्मकर्त्तरि व्युत्पत्तिर्दर्शिता तमिवेमं पश्यन्ति जनाः सोयं स इव दृश्यमानस्तमिवात्मानं

मत्त्वू इति सूत्र भाष्ये ध्वनितत्वेनाचानुवृत्तेः सत्त्वात् । ननु कर्मकर्त्तेति व्यवहारोऽनुपपन्नः कर्मत्वाभावात् कर्मवद्भावाभावाच्चेत्यत आह

कर्मण एवेति ॥ (कै)

पक्षान्तरं स्थितं भाष्ये । तच्च टिड्ढाणञिति सूत्रे व्युत्पादयिष्यामः । समानान्ययोश्चेति वक्तव्यम् ॥ सदृक् । सदृशः ॥ अन्यादृक् । अन्यादृशः । क्सोपि वक्तव्यः ॥ त्यदादिषु समानान्ययोश्च ॥ तादृक्षः । सदृक्षः । अन्यादृक्षः ॥

पश्यतीति, तत्र कर्मव्यापारमात्रे वा वृत्तिर्दृशेः, कृत्स्नधात्वर्थाध्यारोपो वा सौकर्यातिशयप्रतिपादनायेति द्रष्टव्यम् । 'समानान्ययोश्चेति' । समानस्य दृग्दृशवतुषु सभावविधानात्सिद्धम्, क्सश्चेति त्यदादिषु समानान्ययोश्च तादृक्षः सदृक्षः । 'अन्यादृक्ष इति' । दृक्षे चेति वक्तव्यमिति सभाव आत्वं च ॥

# सत्सूद्विषद्रुहदुहयुजविदभिदच्छिद-जिनीराजामुपसर्गेऽपि क्विप् । ३ । २ । ६१ ॥

कर्मवोपपदमिति । (कै)

कर्मणीत्यधिकारादिति भावः ॥ सुप्ग्रहणं तु तन्निवृत्तिद्योतनायेति बोध्यम् ॥ वस्तुतः सुब्ग्रहणमेवात्रानुवर्त्तते कर्मणीति

सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ सुपीति वर्त्तते । कर्मग्रहणं तु स्पृशोऽनुदके इत्यतः प्रभृति नानुवर्तते । तत्र ह्यनुवृत्तेन कर्तृप्रचयार्थेन कर्तृग्रहणेन तन्निवृत्तिरित्युक्तम् । कर्तृ-ग्रहणप्रत्याख्याने तु व्याख्यानादेव कर्मग्रहणनिवृत्तिरित्यन्यदेतत् । सदा-दिभ्यो धातुभ्यः सुप्युपसर्गेऽप्यनुपसर्गेऽप्युपपदे क्विप् स्यात् । उपसर्गग्रहणं ज्ञापनार्थम् । सुपिस्थ इत्यतः प्रकृतस्य सुप्ग्रहणस्य उपसर्गेतरपरत्वमिति । युक्तञ्चैतत् । विशेषसन्निधौ आम्नातस्य सामान्यशब्दस्य तदतिरिक्तपरत्वौ-चित्यात् । अत्फलन्तु स्पृशोऽनुदके क्विन्नित्यत्र उपसर्गस्याग्रहणमिति कैयटः । यत्तु सामान्यापेक्षं ज्ञापकमाश्रित्य वदः सुपि क्यप् चेत्यत्रापि उपसर्गेतर-

"सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्" ।
'अतः प्रभृतीति' भाष्यकारप्रयोगात्प्रभृतिशब्दयोगे पञ्चमी । वदः सुपि क्यप चेति' प्रयोजनदिगियं दर्शिता, अत्र ह्यनुपसर्ग इति वर्त्तते तस्मात्

निवृत्तमित्यन्याख्यानमेवैतत् । अत्र सूत्रे उपसर्गेऽपि ग्रहणं अनुपसर्ग इत्यस्य अतोऽनुपसर्ग इति सूत्रादनुवर्त्तमानस्याग्रे निवृत्तिद्योतनाय भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्याया-

---

परत्वमुक्तं भाष्यवृत्त्योस्तत्तु मन्दप्रयोजनम् । तत्रत्य भाष्ये गदमदचरयमश्चेति सूत्रादनुपसर्गग्रहणमनुवर्तत इति सिद्धान्तितत्वात् । वस्तुतस्तु कैयटोक्त-मपि फलं चिन्त्यमेव । स्पृशेरुपसर्गे क्विनभावेपि क्विपो दुर्वारत्वात् । तत्र च क्विन् क्विपोः स्वरे रूपे वा विशेषस्य दुर्लभत्वात् । अथवा सत्यभि-धाने यङ्लुगन्ते अनेकाच्कत्वेन स्वरे विशेषो वर्णनीयः । वस्तुतस्तु अनुदके इति पर्युदासादत्र सत्ववाचकस्यैव ग्रहणेनोपसर्गे प्राप्तिरेव नास्ति । यत्तु गापोष्टगित्यत्र फलमित्याहुः । तन्न । तत्रापि अनुपसर्गे इत्यनुवृत्तेः । कर्मणीत्यस्य सम्बन्धेपि सुपीत्यस्यासम्बन्धेन ज्ञापकाप्रवृत्तेश्च । तस्मात् सुपिस्थ इत्यत्रैव यथाकथंचित्फलविशेषो वर्णनीय इत्यास्तान्तावत् । हंसः शुचिषत् । पूर्वपदादिति षत्वम् । तत्र च छन्दसीति वर्त्तते । तेन भाषायां शुचिसदित्येव भवति । तथा च माघः । मसस्तु येन द्युसदां न्यधीयतेति । आदितेयादिविषद इत्यत्र तु सुषामादिपाठात् षत्वमिति माधवः । उप-निषत् । सदिरप्रतेरिति षत्वम् । सू इति द्विधा साहचर्यात्सुतेरादादि-कस्य ग्रहणम्, न तु सुवतिसूयत्योः । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् । प्रध्रुक् । गोधुक् । प्रधुक् । युजिर् योगे, युज समाधौ द्वयोरपि ग्रहणम् । अश्वयुक् । प्रयुक् । विद ज्ञाने, विद विचारणे, विद सत्तायाम्, त्रयाणामपि ग्रहणम्, न लाभार्थस्य विदेः । अकारस्य विव-

---

'स्पृशोनुदके क्विन्नि'त्यादौ प्रयोजनं द्रष्टव्यम् । 'सुवतेरिति' । न्यायस्य तुल्यत्वाद्दैवादिकस्याप्यग्रहणम् । 'शुचिषदिति' । छान्दसोयं प्रयोगो हंसः शुचिषदिति । पूर्वपदादिति षत्वं, शुचिसदिति पाठे लौकिकः प्रयोगः ।

नुपसर्ग इत्यस्यानधिकारं द्योतयति तत्फलं ज्ञापकसिद्धस्या-सार्वत्रिकत्वेन प्र इत्यादिसिद्धिः। ननु "वचः सुपी"त्यत्र "गदनदे"त्यतोऽनुपसर्गग्रहणानुवृत्तिप्रदर्शनपरं वार्त्तिकं नापूर्व-करणपरमत आह

---

त्त्वितत्वात्। वेदवित्। प्रवित्। काष्ठभित्। प्रभित्। रज्जुच्छित्। प्रच्छित्। शत्रुजित्। सेनानीः। प्रणीः उपसर्गादसमासेपीति णत्वम्। अग्रणीः। ग्रामणीः। अत्र ज्ञापकाण्णत्वम्। स एषां ग्रामणीरिति निर्देशो हि पूर्वपदस्थान्निमित्तादुत्तरस्य नयतेर्नकारस्य असंज्ञायामपि णत्वं ज्ञापयति। नीरूपविषयं चेदं ज्ञापकम्। तेन ग्रामनाय इति कर्मण्यणि णत्वन्न। ज्ञापकस्य सामान्यापेक्षत्वादग्रशब्दादपि णत्वम्। नन्वेवं गमादिशब्देभ्योपि प्राप्नोतीति चेत्। इष्टापत्तिरित्येके। अग्रग्रामाभ्यां नयतेरिति वचनाज्ज्ञापनमपि उपपदद्वयमात्रविषयम्। नीरूपमात्र-विषयता तु वचनस्याप्यवधेयेत्यन्ये। स्वराट्। विराट्। सम्राट्। मोरा-जीति मत्वम्। इह युजिग्रहणं प्रक्यमकर्तुमिति ऋत्विग्दधृक् इति सूत्र एवावोचाम। अत्र जयादित्यः। अन्येभ्योपि दृश्यत इति सामान्येन क्विब्वक्ष्यते तस्यैवायं प्रपञ्च इति। नन्वेतदसङ्गतम्। तस्य ताच्छीलिकत्वा-दिति चेत्। सत्यम्। क्विप्चेति सूत्रमिह विवक्षितम्। तत्रापि हि विजुपेछन्दसि, आतोमनिन्क्वनिब्वनिपश्च, अन्येभ्योपि दृश्यन्ते इति सन्नि-हितं दृशिग्रहणमनुवर्त्य वचनविपरिणामेन व्याख्यातुं शक्यत इत्याशयेनो-दाहृतजयादित्यग्रन्थप्रवृत्तेः। एतेन स्थःकचेति सूत्रे क्विप् सिद्धो ऽन्येभ्योपि

---

'कथमत्र णत्वमिति'। ग्रामणीविषयः प्रश्नः, प्रणीरित्यत्र तूपसर्गाद-समासेपीति णत्वमस्त्येव। 'ज्ञापकादिति'। पूर्वपदस्थान्निमित्तादुत्तरस्य नयतिनकारस्यासंज्ञायामपि णत्वं भवतीति सामान्येन ज्ञापकमित्यर्थः,

(सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्। ३। २। ६१।) (अ. ३। पा. २। आ. १)

## अनुपसर्गेति॥ (कै)

## यच्च चेति। (कै)

यत्र "स्पृशोऽनुदके" इत्यादावनुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः। इदं चिन्त्यम्। अत्रापि "अतोऽनुपसर्गे" इत्यतोऽनुवृत्तिसम्भवात्॥

---

दृश्यत इतीति भाष्यं तत्रत्यवृत्तिश्चेत्युभयमपि व्याख्यातम्। अत्रेदमवधेयम्। सूत्रस्य प्रपञ्चार्थत्वे स्थिते सुविदेत्यत्र धातुविशेषणापरिग्रहे वृत्तिकृतोक्तो यत्नो निष्फलः। सुवतिसूयत्योर्विन्दतेश्च क्विप् चेति क्विपो दुर्वारत्वात्। न चेह धातुविशेषग्रहणं नियमार्थं तेन सुवत्यादिषु क्विप् चेति सूत्रं न प्रवर्त्तेत इति वाच्यम्। प्रपञ्चार्थमिदं सूत्रमिति स्वोक्तिविरोधात्। किञ्च लुग्विकरणालुग्विकरणयोरिति परिभाषया सुवतिसूयत्योरेव ग्रहणं न्याय्यं साहचर्यमात्रपुरस्कारे वा उच्चारणार्थाकारवद्भिः पूर्वोत्तरैः साहचर्यमुपेत्य कथं विदेत्यकारविवक्षोक्ता कथं वा युजेत्युभयग्रहणमवोचत्। न हि युजविदयोरण्वपि वैषम्यमस्ति। तस्मादिह वृत्तिकृतां तदनुगामिनामन्येषाञ्च धातुविशेषपरिग्रहे अभिनिवेशो निर्मूलो निष्फलश्च। ननु प्रपञ्चत्वोक्त्या सूत्रमर्थात्प्रत्याख्यातम्। तथा च सूत्रग्रहणे उपसर्गनिवृत्तिर्न ज्ञाप्येतेति चेत् मा ज्ञापि। तत्फलस्य प्रागेव शिथिलीकृतत्वात्। एवञ्च णिनिविधौ सुब्ग्रहणमपि न कर्त्तव्यमिति महदेव लाघवमिति दिक्॥

---

तेनाग्रण्योरित्यत्रापि भवति कर्मण्यणि तु न भवति नोरूपविषयत्वाज्ज्ञापनस्य, अन्ये त्वग्रग्रामाभ्यां नयतेरिति वक्तव्यमिति वचनाज्ज्ञापनमपि तद्विषयं तत्रापि नोरूपविषयमिति स्थिताः॥

# अदोऽनन्ने । ३ । २ । ६८ ॥

# क्रव्ये च । ३ । २ । ६९ ॥

भाष्ये

आमात्सस्यदित्येवमर्थमिति । (भा)

लो एतत्सिध्यर्थमित्यर्थः ॥

---

अदोऽनन्ने ॥ छन्दसीति निवृत्तम् । अन्नभिन्ने सुप्युपपदे अदेर्विट् स्यात् । आममत्ति आमात् । सस्यात् । अनन्ने किम् । अन्नादः । भाषायां कर्मण्यण् । छन्दसि तु व्यत्ययेन पचाद्यजित्युक्तम् । तेन अन्नाद इत्यत्र अन्न अद इत्यवग्रहः सिध्यति ॥

क्रव्ये च । क्रव्योपपदे अदेर्धातोर्विट् प्रत्ययः स्यात् । क्रव्यमत्ति क्रव्यात् । पूर्वेणैव सिद्धे वचनमसरूपबोधनार्थम् तेनाणन भवति । कथन्तर्हि क्रव्यादो ऽस्र आशर इत्यमरः । अत्राहुः । कृत्तविकृत्तपक्व-मांसशब्द उपपदे अण् । तस्य च पृषोदरादित्वात्क्रव्यभाव इति ।

---

"अदोऽनन्ने" ॥ 'अन्नाद इति' । भाषायामणेव भवति छन्दसि त्वकारादनुपपदादित्यणि प्राप्ते पचाद्यजिष्यते, तेनान्नाद इत्यन्न अद इत्यवग्रहो भवति ॥

"क्रव्ये च" ॥ 'वासरूपबाधनार्थमिति' । तथा च वार्तिकम् अदोनन्ने क्रव्यग्रहणं वासरूपनिवृत्त्यर्थमिति । 'कथन्तर्हीति' । यदि वासरूपविधि-बाधनार्थमिति भावः । 'कृत्तविकृत्तेति' । कृत्तं छिन्नं तदेव पुनर्विशेषतः

(क्रव्ये च । ३ । २ । ६९ ।)

## क्रव्याद् इत्यणेनेति । (कै)

आममांसभक्षणकर्त्रर्थ इति भावः ॥ पक्कमांसशब्दे उपपदे अदेरण् उपपदस्य क्रव्यादेशः । पृषोदरादित्वादित्यत्र तु न भाष्यानुग्रहः । अव्ययशब्देन तद्बोधाच्च । एवं च क्रव्याद इत्यसाध्वेवेति बहवः ॥

---

अस्यार्थः । कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तं, पूर्वकालेति समासः । तस्य पक्कशब्देन पुनः स एव समासः । ततो मांसशब्देन पुनर्विशेषणसमासः । तस्य क्रव्यादेशः । नन्वेवं क्रव्याद इति रूपस्यावर्जनीयतया किं वासरूपबाधनार्थेनानेन वचनेन । वार्त्तिकविरोधश्च । यदाह । अदोऽनन्ने क्रव्यग्रहणं वासरूपविज्ञत्यर्थमितीति चेन्नैवम् । अर्थभेदादुभयसाधुत्वोपपत्तेः । आममांसभक्षको हि क्रव्यात् । विशिष्टपक्कभक्षकस्तु क्रव्याद इति ॥

---

कृत्तमिति पूर्वकालेति समासः, तस्य पक्कशब्देन पुनः स एव समासः, ततो मांसशब्देन पुनर्विशेषणसमासः । 'पृषोदरादित्वात्क्रव्यभाव इति' । यद्येवं क्रव्याद इत्यस्य रूपस्यावर्जनीयत्वादलं वासरूपबाधनार्थं नानेन वचनेन वार्त्तिकविरोधश्चैवं वदत इत्याशङ्क्याह । 'कृत्तविकृत्तेत्यादि' । अर्थभेदादुभयमपि नास्ति किलेत्ययमभिप्रायः ॥

# मन्त्रे श्वेतवहोक्थशस्पुरोडाशो-ण्विन् । ३ । २ । ७१ ॥

भाष्ये

श्वेतवहादीनामिति । (भा)

अनन्तरयोगे षष्ठीपदस्येत्यस्य तदन्ते पदत्वस्य सम्भावनाया-मित्यर्थः । केचित्तु तत्सम्बन्धिनो ण्विनः स्थाने डस्वक्तव्य इत्यर्थ इत्याहुः ॥ ननु डसुत्पत्तिवेलायां कथं पदत्वमत आह

भावीति ॥ (कै)

भाष्ये

क्रियते व्यर्थमिति । (भा)

तेन षकारादीनामेव रुत्वमिति भावः ॥ भाष्ये

---

मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्यो ण्विन्प्रत्ययः स्यान्मन्त्रे । धातूपपदसमुदायाश्चेह निपात्यन्ते । अलाक्षणिककार्यार्थं प्रत्ययस्तु विधीयते । श्वेतशब्दे कर्तृतायिन्युपपदे वहेर्धातोः कर्मणि कारके ण्विन्प्रत्ययो भवति । श्वेता एनं वहन्ति श्वेतवा इन्द्रः । तं श्वेतवाहम् । उक्थे कर्मणि करणे वोपपदे शंसतेः प्रत्ययो नलोपश्च । उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः ।

---

"मन्त्रे ... ... ... ... ... ... ॥ 'एतेभ्य इति' । श्वेतादिपूर्वेभ्यो वहादिभ्यो धातुभ्य इत्यर्थः । 'धातूपपदसमुदाया इति' । किमर्थमित्याह । 'अलाक्षणिकेति' । श्वेतवा इत्यादिषु अन्वयाः श्वेतवाः

( मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ।
३ । २ । ७१ । )

**उक्थशस्शब्दस्येति ।** (भा)

तत्प्रकृतिकस्येत्यर्थः ॥

**तन्न वक्तव्यमिति ।** (भा)

ननु वामरूपन्यायेन डस्विषये दीर्घोऽपि सत्त्वेन तदर्थं निपातनमावश्यकमिति चेन्न । एतद्भाष्यप्रामाण्येनादेशपक्षस्यैवौचित्यात् । कैयटे डस्प्रत्यय इति व्यवहारः स्थानिवद्भावलभ्यप्रत्ययत्वेनेति बोध्यम् ॥

**अवश्यं तद्वक्तव्यमिति ।** (भा)

डसारम्भेऽपीत्यर्थः ॥

**न तर्हीदानीमिति ।** (भा)

हादीनामेव रुत्वं विधेयं दीर्घस्तु ण्विनि वृध्यैव सिद्ध इति भावः ॥ "अन्यथा" डसभावे ॥

---

उक्थशासा । उक्थशासः । दाशृ दाने अस्य पुरस्पूर्वस्य आदेर्डत्वं कर्मणि च प्रत्ययः । पुरो दाश्यते पुरोडाशः । श्वेतवाहादीनां डस् पदस्येति वक्तव्यम् ॥ यत्र डसन्तस्य पदत्वं भविष्यति तत्र ण्विनोपवादो डस्प्रत्ययो वक्तव्य इत्यर्थः । ततश्च श्वेतवाहावित्यादावपदान्तविषय एव सूत्रोक्तो ण्विनुदाहार्यः । श्वेतवा इत्यादि तु सौत्रस्य ण्विनोपवादेन औपसंख्यानिकेन डस्प्रत्ययेनैव सिध्यतीत्यवधेयम् । वृत्तौ ण्विनं प्रकृत्य

---

पुरोडाश्चेति निपातनाड्डत्वम् । 'उक्थशा इति' । नलोपे 'अत उपधाया' इति वृद्धिः, रुत्वम्, 'डत्पदस्यति' । प्रत्येकमभिसम्बध्यते भाविपदत्वाश्रयेण चेदमुच्यते यत्र डसन्तस्य पदत्वं भविष्यति तत्र ण्विनोपवादो डस्प्रत्ययो वक्तव्य इत्यर्थः, यद्येवमनेन डसि कृते सान्तस्यसन्तस्येति दीर्घ

इत्येतदपि संबुध्यर्थमिति । (कै)

पदान्ते डसन्तत्वादिति भावः ॥ ननु डसेवमास्तु तत्राह

उक्थशोभ्यामिति ॥ (कै)

यदि मन्त्रे इति । (कै)

उक्थशसशब्दस्येति भाष्यस्वरसेन लोपोपधावृध्यभावयो-र्निपातनेच्छासर्वोपधाह्रस्वनिपातनात् वृध्यभावे उक्थशोभ्यामित्यस्य सिद्धेः शासेर्विच संबुद्धावुक्थशा इत्यस्यापि सिद्धेर्द्वयमपि न कार्यमिति ॥

---

श्वेतवा इत्याद्युदाहरणन्तु डसविषये ण्विनोऽपि प्राप्तिः स्थितेत्येताव-न्मात्राभिप्रायकतया कथञ्चिन्नेयम् । न च डसं विनापि अवयाःश्वेतवा इत्यनेन रुत्वं निपात्यतामिति वाच्यम् । अविशेषेण निपातने श्वेतवाहा-वित्यादावतिप्रसक्तेः । पदान्तविषयत्वेऽपि श्वेतवोभ्यामित्यादावुत्वं न सिध्येत् । तस्माड्डस वाच्य एव । नन्वेवं श्वेतवा इत्यादिनिपातनं व्यर्थमिति चेन्न । तस्य सम्बुद्ध्यर्थत्वात् । एवञ्चोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्त्तव्यं यदि मन्त्रे दर्शनमस्तीति कैयटादयः । एवं स्थिते मन्त्रमात्र-विषयाणामेषां शब्दानां प्रक्रियाकौमुद्यां लौकिकेषूदाहरणमनुचितम् । वैदिकप्रक्रियायान्तु वक्ष्यते । डसन्तत्वेन सान्तप्रातिपदिकेष्वेवोदाहर्त्त-मुचिता अप्येते ऽपदान्तविषये ह्रकारान्तत्वादिकं पुरस्कृत्य यथायथं तत्तत्प्रघट्टकेषूक्ता इति बोध्यम् ॥

---

रुत्वे च श्वेतवा इत्यादि सिद्धं नार्थोऽनेन। श्वेतवा इति निपातनेन, एवन्तर्हि सम्बुद्ध्यर्थं निपातनं हे श्वेतवा इत्येति अत्वसन्तस्येत्यत्र हि असम्बुद्धाविति वर्त्तते इसपि वक्तव्या उत्वार्थं श्वेतवोभ्यामुक्थशोभ्यामिति, एवंचोक्थशा इत्यपि सम्बुद्ध्यर्थं निपातनं कर्त्तव्यं यदि मन्त्रे दर्शनमस्ति ॥

# स्थः क च । ३ । २ । ७७ ॥

सप्तमीनिर्देशादेव तदादिविधौ लब्धे पुनर्वकारादाविति वचनमुख्यवकारादिप्रतिपत्त्यर्थमिति वदन्तं प्रत्याह

भाष्यकारवचनेति ॥ (भा)

यद्वा पावान इति प्रयोगस्य निपातनात् सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह

---

स्थः क च ॥ तिष्ठतेः सुप्युपपदे कः स्यात्क्विप् च । सूत्रे केत्यविभक्तिको निर्देशः । शंस्थः । शंस्थाः । इह सुपिस्थ इति कः प्राप्तः । तिष्ठतेरन्तर्भावितण्यर्थतया शमित्यस्य कर्मत्वे तु आतोनुपसर्गे क इति कः प्राप्तः क्विप्चेति क्विबपि । न च विशेषविहितेन कप्रत्ययेन क्विपो बाधः शङ्क्यः । वासरूप इत्युक्तेः । तदित्थम् । कक्विपोः पर्याये प्राप्ते तदुभयबाधेन शमिधातोः संज्ञायामिति खच् प्राप्तः । स हि धातुग्रहणसामर्थ्यात्कृञो हेत्वादिषु टं यथा बाधते तथा तिष्ठतेः कक्विपावपि बाधेत । अतस्तमप्यचं बाधितुं कक्विपाविह पुनर्विधीयेते । ननु शंस्था

---

"स्थः क च" ॥ 'केत्यविभक्तिको निर्देशः । 'अन्येभ्योपि दृश्यत-इति' । क्विबिति सिद्ध एवेत्यपेक्ष्यते, ननु तच्छीलादिग्रहणं तत्रानुवर्त्तते तस्मात् क्विप् चेति क्विप् सिद्ध एवेति वक्तव्यम् । यद्वा तच्छीलादिग्रहणं तत्र न सम्बन्धनीयमिति मन्यते, नन्वेवमपि सुपि स्थ इति

भाष्येति । (कै)

अत एव ध्यायतेः सम्प्रसारणमिति वार्त्तिके दधातेर्वा धीरिति भाष्ये क्विपपीत्वं कृतं वस्तुतो भाष्ये क्विप्पदेन सादृश्यादिरुच्यते इतीत्वाप्रत्युक्तिरेवाचेति बोध्यम् ॥ भाष्ये

क क्विपाविति । (भा)

"आतोऽनुपसर्ग" इति क्विप्चेति विहितौ । तत्र कस्य बाधे प्राप्त इति न सिध्येत् तदर्थस्य को विधेयः कस्य चाण् बाधकत्वेन क्विबपवादत्वाभावात् परत्वेन क्विपो नित्यबाधवारणाय क्विबपि विधेय इति भावः ॥ न चात्रैव मंस्था इत्यस्य सिद्धत्वेन क्विपो

इत्यत्र क्विपि लुप्ते प्रत्ययलक्षणेन प्रमास्येतीत्वं स्यादिति चेन्न । स्थानिवद्भावस्यानल्विधाविति निषेधात् । प्रत्ययलोप इति सूत्रन्तु नियमार्थमिति सिद्धान्तात् । यत्त्विह कैयटेनोक्तमीत्वमवकारादाविति वचनाद् भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाभाव इति । तदनल्विध्यर्थं प्रत्ययलोप इति सूत्रमिति पूर्वपक्षमभिप्रेत्य, तत्राप्यवकारादाविति वचनलोकारे सुधीवेति न सिध्येदित्यपरितोषेण द्वितीयपक्षस्वीकार इति बोध्यम् । स्यादेतत् । घ्रमिधातोरित्यस्यानन्तरमेव स्थःकचेति सूत्रताद्धकारेणाच् समुच्चीयताम् । तत्र सवर्णदीर्घ घ्रंस्रा इति भविष्यति । एवञ्चोत्सर्गापवादयोः समानदेशतया सन्दर्भशुद्धिरपि लभ्यते । इत्वा-

विशेषविहितः कः सामान्यविहितं क्विपं बाधेत वासरूपविधिना सोऽपि भविष्यति । 'घ्रमि धातोः संज्ञायामच बाधन इति' । अन्यथा यथा कृत्रो हेत्वादिषु टं बाधते धातुग्रहणात्तथा तिष्ठतेरपि कक्विपौ बाधेत अतोऽमप्यचं बाधित्वा कक्विपावेव यथा स्यातामिति पुनर्वचनमित्यर्थः ।

बाधे फलाभावः । शंस्था शब्दात् शषि अतो लोपानापत्तेः । हृदतिङ्ङिति सूत्रस्थभाष्योक्तरीत्यैकादेशस्य स्थानिवत्त्वात् पुरस्तादिति न्यायेन तस्यैव तेन बाध इति तु न शक्यम् । येन नाप्राप्तिन्यायेन क्विप एव बाध इत्यस्यापि वक्तुं शक्यत्वात् । तस्मादाध्यसामान्यचिन्तयोरपि स बाधकः स्यादिति तात्पर्यम् ॥

---

भावार्थं च न यतनीयमिति । नैवम् । अशंस्था इत्यत्र अचकावशक्तावित्युत्तरपदान्तोदात्तत्वापत्तेः । हृद्दृच्छयोगतिकारपूर्वस्यापीति शंस्था इत्यस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु नञ्पूर्वपदप्रकृतिस्वर एव सिध्यति ॥

---

'शंस्था इति' । क्विपि लुप्ते प्रत्ययलक्षणेन घुमास्थादिसूत्रेणेत्वमत्र प्राप्नोति भाष्यकारप्रयोगात्तु न भवति, केचित्त्वीत्वमवकारादाविति वचनं पठन्ति तेषां सुपीवा सुधीवा अत्रापि न स्यात् ॥

# सुप्यजातौ णिनिस्ताच्छील्ये । ३ । २ । ७८ ॥

भाष्ये

अनुपसर्ग इत्येवमिति । (भा)

उपसर्गेऽपीति ग्रहणाद् ज्ञापकादित्यर्थः । एतेन सुब्ग्रहण-मुपसर्गनिवृत्त्यर्थमिति वृत्तिकारोक्तमपास्तम् ॥

---

सुप्यजातौ णिनिस्ताच्छील्ये ॥ अजातिवाचिनि सुबन्त उपपदे ताच्छील्ये द्योत्ये धातोः कर्तरि णिनिः स्यात् । उष्णभोजी । शीतभोजी । अजाताविति किम् । ब्राह्मणानामन्त्रयिता । ताच्छील्यस्य विवक्षित-त्वान्नलोकेति षष्ठीप्रतिषेधः । ताच्छील्ये किम् । उष्णं भुंक्ते कदाचित् । अत्र भाष्यम् । सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् । अनुपसर्ग इत्येवं तदभूत् । इदं तु सुब्मात्रे यथा स्यात् । उदासारिण्यः प्रत्या-सारिण्य इति । अस्यायमाशयः । सत्सूद्विषेति सूत्रे सुपिस्थ इत्यतः सुपीत्यनुवर्तते तच्चोपसर्गेतरपरम् । उपसर्गेऽपीति पृथग्ग्रहणात् । तदिहानु-वर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यात् । न चोपसर्गेऽपीत्यंशो-पीहानुवर्तयितुं शक्यः । केवलमजबाधनार्थत्वेन निर्णीते स्थःकचेति पूर्वसूत्रे उपसर्गेऽपीत्यंशस्य फलाभावेन विच्छिन्नत्वादिति । यद्यप्युत्तरा-

---

"सुप्यजातौ णिनिस्ताच्छील्ये" । 'ब्राह्मणानामन्त्रयितेति' । ताच्छी-ल्यस्य विवक्षितत्वात्तृन् प्रत्ययान्ततः, न लोकाव्ययेति षष्ठीप्रतिषेधः ।

र्थतया पूर्वत्राप्यनुवृत्तिरिति वा मण्डूकप्लुतिन्यायेनेहैव सम्बन्ध इति वा सुब्ग्रहणस्यैव शब्दाधिकार इति वा सत्सूद्विषेति सूत्रे वर्णितरीत्या तस्यानावश्यकतेति वा सुवचं तथापि सूत्रकाराशयवर्णनमात्रमेतत्। निष्कर्षे तु मा भूदिह सुब्ग्रहणमनुवृत्त्यैव निर्वाहात्। सर्वथापि सुब्मात्रे उपपदे णिनिः न त्वनुपसर्ग एवेति सिद्धान्तः। तथा च प्रयुज्यते। स बभूवोपजीविनाम्। न्यषेधि शेषोऽप्यनुयायिवर्गः। अरिष्टशय्यां परितो विसारिणा। पतत्यधो धाम विसारि सर्वतः। विसारिभिः सौधमिवांशुजालैः। प्रभाविनं भाविनमन्तमात्मनः। न वञ्चनीयाः प्रभवोऽनुजीविभिरित्यादि। यत्त्विह वृत्तिकृतोक्तं सूपीति वर्त्तमाने पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थमिति। तन्न। भाष्यविरोधात् उदाहृतप्रयोगविरोधाच्च। न चैते प्रयोगा आवश्यकादिणिनिना कथंचिन्निर्वाह्या इति वाच्यम्। यथाश्रुते बाधकाभावात्। यद्यपि वृत्तिकृतोक्तमुत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानमिति, तदपि न, भाष्ये तादृशवार्त्तिकाभावात्। एतेन उत्प्रतिभ्यामिति प्रतीकमुपादाय सुबित्यस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भ इति वदन् हरदत्तोऽपि प्रत्युक्तः। भाष्यविरोधात्। आष्टमिकसकलग्रन्थविरोधाच्च। तथाहि। कृत्यच इति सूत्रे अनुमानगमीयागमीनिनिष्ठादेशाः प्रयोजयन्तीत्येतद्वाक्यान्तर्गतेनिग्रहणव्याख्यावसरे सुप्यजातौ णिनिः। आवश्यके चेति व्याख्यातम्। सुप्यजातावित्यस्योपसर्गे प्रवृत्त्यभावे असङ्गतमेव तत्स्यात्। कृत्यच इत्यत्रोपसर्गादित्यनुवृत्तेः। यदप्यनुगादिनष्ठगित्यत्राऽस्मादेव निपातनाण्णिनिरिति विसारिणोमत्स्य इत्यत्र च पूर्ववण्णिनिरिति तदप्येतेनापास्तम्। यदपि

---

'उत्प्रतिभ्यामिति'। पुनः सुब्ग्रहणस्योपसर्गनिवृत्त्यर्थत्वादयमारम्भः। 'साधुकारिणि चेति'। अताच्छील्यार्थमिदं तच्चैतज्ज्ञापकात्सिद्धं यदयमा केस्ताच्छीले इत्यत्र तच्छीलेत्यभिधाय साधुकारिग्रहणं करोति

माधवेनोक्तम्, अस्मादेव विसारिण इति निर्देशाद्यसन्नियोगेनैव णिनि-रित्युक्ता निषिद्धस्य पदमनर्थम्। विसारीति पृथक् प्रयोगः। पृथक्-प्रयोगमसहमानेनैव न्यासकारेणापि ग्रहादित्वाभिमिनिरित्युक्ता अत एव निपातनादित्युक्तम्। निपातनञ्च प्रत्ययसन्नियोगेनैवेति सिद्धान्तितम्। तदपि न। विसारिणोमत्स्य इत्यत्र मत्स्य इति किम्। विसारी देवदत्त इति प्रत्युदाहरता वृत्तिकृता सह विरोधात्। भाष्यविरोधस्त्वस्त्येव। एतेनोपसर्गनिवृत्त्यर्थमिति वृत्तिकृद्वचनं केवलोपसर्गनिवृत्त्यर्थमिति प्रसादकारोक्तिरपि प्रत्युक्ता। यत्तु सप्तपदार्थीटीकायां व्यापीत्याद्युप-श्लेषादुदासारिण्यः प्रत्यासारिण्य इतिवत्साधुरित्युक्तम्। तदपि उदाहृत-प्रसादकारवाक्ये केवलपदस्य असहायपरतया अनेकोपसर्गे णिनिर्भव-त्येवेत्यर्थं गृहीत्वा रभसादेवोक्तमिति सर्वमिदं भाष्यतत्त्वानपेक्ष्यमेवेति दिक्। अत्र वार्त्तिकद्वयं, णिनविधौ साधुकारिण्युपसंख्यानम्॥ अता-च्छील्यार्थमिदम्। एतच्च ज्ञापकात्सिद्धम्। यदयमाक्वेरिति सूत्रे तच्छीलतद्धर्म इत्यभिधाय साधुकारिग्रहणं करोति तज् ज्ञापयति साधु-कारिणि अताच्छील्येपि णिनिर्भवतीति। साधुकारी। साधुदायी। ब्रह्मणि वद उपसंख्यानम्॥ ब्रह्मवादिनो वदन्ति। ब्रह्म वेदः। इदमपि वार्त्तिकमताच्छील्यार्थमिति कैयटहरदत्तौ। यत्तु भट्टवार्त्तिके ब्रह्मवादि-शब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया व्याख्यानं कृतं तस्यायमाशयः। सुप्यजाताविति सूत्रेण ताच्छील्ये समनन्तरोक्तवार्त्तिकेन साधुकारिणि च णिनिः। आवश्यकाधमर्ण्ययोर्णिनिरिति आवश्यके णिनिस्तु तद्धर्मे पर्यवस्यति। न त्विच्छाक्वेरिति सूत्रस्य व्यापारोऽस्तीति दिक्॥

तज्ज्ञापयति साधुकारिण्यताच्छील्येपि णिनिर्भवतीति। 'ब्रह्मणि वद इति'। ब्रह्म वेदः, इदमप्यताच्छील्यार्थम्॥

# व्रते । ३ । २ । ८० ॥

स्थायीत्यत्रेति । (कै)

नन्वत्र कथं णिनिः सुप उपपदस्याभावात् इति चेन् न । उत्तरसूत्राद्बहुलग्रहणमपकृष्य कंबलादपि विधानेनाप्तेः । यद्वाऽऽदिणिन्यं तस्यैव वा प्रकरणाद्व्रतपरत्वपरिसंख्यया पूर्वपक्षो विधिमाश्रित्यपरिहारः ।

यस्मिन्नश्नातीति । (कै)

एकादश्यादौ ॥ भाष्ये

*तद्यथा स्थायीति । (भा)

स्थायीत्यत्रोपपत्तिरुक्ता आस्थायीति पदमन्ये ॥

†स्थण्डिलस्थायीति (भा)

पाठ इति केचित्तदुभयमपि भाष्ये कैयटविरुद्धम् ॥

---

* अयं पाठो बहुषु पुस्तकेषु नास्ति ॥

† अयं पाठो बहुषु पुस्तकेषु न दृश्यते ॥

---

व्रते ॥ सुप्युपपदे धातोर्णिनिः स्याद्व्रते गम्यमाने । समुदायोपाधिरयम् । धातूपपदप्रत्ययसमुदायाच्चेद् व्रतं गम्यत इत्यर्थः । स्थण्डिलशायी ।

---

"व्रते" ॥ 'समुदायोपाधिश्चायमिति' । न प्रत्ययार्थविशेषणं तथा हि सति व्रत एव कर्त्तरि प्रत्ययः स्यान्न तद्वतीति भावः । समुदायोपाधित्वमेव स्पष्टयति । 'धातूपपदेत्यादि' । कामचार इच्छाप्रवृत्तिः तत्प्राप्तौ सत्यां नियमः, स च द्विविधः सम्भवति स्थण्डिले व्रत एव श्राद्धं

व्रतविषय इति । (कै)

न हि तादृशव्रतसम्भवः । व्रते णिनि प्रकृतत्वाच्च । प्रागुक्त-सङ्कल्पत्वप्रसिद्ध एवेति भावः ॥

अथ नानुवर्त्तत इति । (कै)

उपमानं शब्दार्थप्रकृतावेव ( ६ । २ । ८० ) इति सूत्रस्य पाष्ठभाष्येऽयमपि पक्षो दृश्यत इति भावः ॥ अत्र पक्षे स्वर-भेदोक्तिरेकदेश्युक्तिरिति बोध्यम् । उत्थित एवाद्य भविष्यामि न तूपवेक्ष्यामीत्येवं सङ्कल्परूपं व्रतमेतत् तिष्ठन् सूचयते पक्षे स्वरभेदोक्ति रित्यादिवदुत्थाने स्थाधातुरचेति परे । पाष्ठभाष्यमेक-देश्युक्तिः ॥ भाष्ये

---

अश्राद्धभोजी । यद्यपि द्विधा नियमः सम्भवति स्थण्डिले शेतएव अश्राद्धं भुङ्क्तएवेति वा । स्थण्डिलएव शेते अश्राद्धमेव भुङ्क्ते इति च । तथापि आद्ये प्रत्ययो न भवति व्रते इत्युक्तेः । शास्त्रसिद्धो । नियमो हि व्रतं न च शयितव्यमेव भोक्तव्यमेवेत्येवंरूपं शास्त्रमस्ति अस्ति तु स्थण्डिले एव शयितव्यम्, अश्राद्धमेव भोक्तव्यमिति तस्मात्तत्रैव प्रत्ययः । अताच्छील्यार्थमनार्थं वा आरम्भः ॥

---

भुङ्क्त एवेत्येवं रूपो वा स्यात् स्थण्डिलएव शेते अश्राद्धमेव भुङ्क्ते इत्येवं रूपो वा, तत्र पूर्वके नियमे यदैवासावशयनादिना ऽश्राद्धं न भुङ्क्ते तदैव व्रतलोपः प्राप्नोति । न चैवंविधं शास्त्रमस्ति स्थण्डिले शयितव्यमेव अश्राद्धं भोक्तव्यमेवेति अस्ति तु स्थण्डिल एव शयितव्यम्, अश्राद्धमेव भोक्तव्यमिति, व्रत इति तु शास्त्रितो नियम इत्युक्तं तस्माद् द्वितीयो नियम विज्ञायत इत्याह : 'सति शयन इत्यादि' ॥

भुजिप्रतिषेधवाचिन इति । (भा)

तदर्थबोधकस्य नञ इत्यर्थः ॥

सुप्युपपदे इति । (कै)

बहुलग्रहणं तु क्वचिदिष्टसिद्धये इति भावः ॥

---

# आत्ममाने खश्च । ३ । १ । ८३ ॥

पूर्वं कर्मणा इदानीं कर्तृत्वाभावेन युगपदेकस्य कर्मकर्तृत्व-विरोधेन चेदमसङ्गतमत आह

यदेति । (कै)

केवलविशिष्टभेदेन शब्दभेदेन वा न कर्तृकर्मविरोध इति भावः ॥

---

आत्ममाने खश्च ॥ मननं मानः । आत्मशब्दः स्वपरः । कर्मणि षष्ठ्या समासः । प्रत्ययार्थत्वेन सन्निहितः कर्ता स्वपदार्थः आत्मकर्मक-मनने वर्तमानान्मन्यतेर्धातो सुप्युपपदे खश् स्यात् । चाण्णिनिः । यद्यपि वासरूपविधिना सिद्धोसौ तथाप्यविच्छेदाय समुच्चीयते । तेन करणेयञ

---

"आत्ममाने खश्च" ॥ 'चकाराण्णिनिश्चेति' । वासरूपविधिना सिद्धोपि णिनिरविच्छेदाय समुच्चीयते, तेन करणे यञ इत्यत्र णिनेरे-वानुवृत्तिर्भवति नानन्तरस्य खशः, आत्मशब्दोयमपरव्यावृत्तिं कुर्वाणो यत्प्रतियोगिनमर्थमाचष्टे स स्वशब्दपर्यायो गृह्यते न चेतनद्रव्यवचनः, मननं मानः भावे घञ् आत्मनो मान आत्ममानः कर्मणि षष्ठ्या समासः,

आत्मग्रहणमनर्थकमिति । (कै)

यद्यप्युभयप्राप्ताविति नियमादपि न कर्त्तरीति वक्तुं शक्यं तथापि उभयोः प्रयोगाभावाद्च तदप्राप्तिः । किञ्च तेन षष्ठ्या-समासाप्राप्तिः ॥

कर्मणि चेति । (भा)

निषेधादित्याशयमाह:। तदाह्यति भाष्यकृत् । "आत्मग्रहणसाम-र्थ्यात् कर्मणीति ज्ञास्यति"। इदमुपलक्षणं कर्मस्थक्रियया तुल्य-क्रियत्वस्यापि। वस्तुत: कर्मकर्तृग्रहणमिति भाष्यस्य कर्मवद्भावो वक्तव्य इत्यर्थः। यथास्यापि कर्मकर्तृत्वेन ग्रहणं व्यवहारो भवति

---

इत्यादौ णिनिरेवानुवर्त्तते न तु खश् । दर्शनीयमात्मानं मन्यते दर्शनीय-मन्यः । दर्शनीयमानी । पण्डितम्मन्यः । पण्डितमानी । आत्ममान इति किम् । दर्शनीयमानो देवदत्तो यज्ञदत्तस्य । खशः खकारो मुमर्थः । दर्शनीयम्मन्या कुमारीत्यादौ ङ्यर्थश्च । शकारः सार्वधातुकसंज्ञार्थः । दिवादित्वाच्छ्यन् । स्वरस्तु 'सतिशिष्टोपि विकरणस्वरः सार्वधातुकस्वरं न बाधत' इति खश एव भवति न तु नित्स्वर इति भाष्यकैयटपद-

---

तत्र कस्येत्यपेक्षायां प्रत्ययार्थस्य सन्निहितत्वात् मन्तुरेवात्मन इति गम्यते तदाह । 'प्रत्ययार्थं कर्त्तेति' । दर्शनीयत्वादिना धर्म्मेणेति विशिष्टमिति शेषः, कर्त्तरि षष्ठ्यास्तु समासो न भवति सर्वस्या एव मतेर्मन्तृकर्तृक-त्वाव्यभिचाराद्, एवं चेतनद्रव्यवचनेप्यात्मशब्दे कर्त्तरि षष्ठ्यामव्यभिचारा-दविशेषणं कर्मणि षष्ठ्या न तु चेतनान्तरे कर्मणि प्रत्ययप्रसङ्गस्तस्मा-त्स्वशब्दपर्याय एवात्मशब्दः । 'दर्शनीयं मन्य इति' । शरीरधर्ममपि दर्शनीयत्वादिकमात्मधर्ममेव मन्यन्ते संसारिणः शरीरशरीरिणोरन्यप्रयो-

तथा वक्तव्यमित्यक्षरार्थः । अनेनैव तत्फलसिद्ध्या तत्प्रत्याख्याते भाष्ये यद्यन्तासेरिति व्याख्यायामस्य तास्योरुत्पत्तौ तु वाचनिकमेवेदं बोध्यम् ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

---

मञ्जर्यादिषु स्थितम् । एवञ्च सतिशिष्टोपि विकरणस्वरो लसार्वधातुकस्वरं न बाधत इति यत्तत्तत्तत्र प्राचां ग्रन्थेषूक्तम् । तत्र लादेशत्वमविवक्षितमित्यवधेयम् । अत एव दिवादिभ्यस्तानशि श्यनि नित्स्वरेणाद्युदात्तत्वमित्येवंपरः कैयटग्रन्थ आपाततो न तु श्रद्धेय इति प्रपञ्चितमस्माभिः स्थानिवत्सूत्रे ॥

---

गोलकयोरिवाभेदं मन्यमानाः । 'पण्डितं मन्य इति' । एक स्याप्यात्मनः स्वरूपेण कर्तृत्वम्पण्डितत्वादिविशिष्टरूपेण कर्मत्वं च युज्यत एव यथोक्तमाचार्यैः, असत्प्रयोगसम्भिन्ना ज्ञानस्यैव च कर्त्तरि भवन्ती तत्र संवित्तिर्युज्यतेताप्यात्मकर्तृकेति, खशः खकारो मुमर्थः, दर्शनीयं मन्या कुमारीत्यादौ ह्रस्वार्थश्च, शकारस्सार्वधातुकसंज्ञार्थः दिवादित्वाच्छ्यन् स्वरस्तु सति शिष्टोपि विकरणस्वरस्सार्वधातुकस्वरन्न बाधइति खश एव भवति न नित्स्वरः । 'दर्शनीयमानो देवदत्तो यज्ञदत्तस्येति' । कर्मणि षष्ठी तदपेक्षयास्यापि दर्शनीयशब्दस्य गमकत्वात्समासः ।

## महाभाष्यप्रदीपोद्योतः।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

# भूते। ३। २। ८४॥

**यस्य सत्ता व्यपवृक्तेति। (कै)**

**अतीतेत्यर्थः ॥**

**तस्यैवेति। (कै)**

**अन्यच तत्कालवृत्तित्वेन भूतशब्दप्रयोगो गौण इति भावः। एतदाशयानभिज्ञस्य न वै इत्यादिग्रन्थ इति तात्पर्यम् ॥**

भूते ॥ अधिकारोयम्। वर्तमानेलडिति यावत्।

"भूते" ॥ यस्य सत्ता व्यपवृक्ता तत्सर्वं भूतशब्देनोच्यते तत्र न ज्ञायते कस्मिन् भूत इति किं साधने भूते किं वा धात्वर्थे तत्राह। धात्वधिकाराच्चेति'; चशब्दः पूर्वोक्तेनार्थेनास्य सङ्गतिन्द्योतयति। 'धात्वर्थभूत इति'। ननु धात्वधिकाराद्धातौ भूत इति युक्तं न तु धात्वर्थे भूतइति, उच्यते, प्रयोगे प्रत्ययस्य द्योत्यं भूतत्वमर्थस्यैव विशेषणं

अनुज्ञाप्रतिबन्धाभ्यामिति । (कै)

तद्रूपाभ्यामित्यर्थः । तत्रानुज्ञया स्थित्युत्पत्तिहेतुः । ईश्वराधिष्ठितत्वेन च तदुपपत्तिः ॥ ननु नित्ये काले तत्त्वेनाया व्यपवृक्तत्वाभावात् कथं भूतत्वव्यवहार इत्यत आह

तच्च संसर्गीति । (कै)

तत्क्रियया उपाधिभूतया यो भेद उपधेयस्य तत्कृतो मासादिव्यवहार इत्यर्थः ॥

अन्ये त्विति । (कै)

तथा च तस्या अनित्यत्वात् सिद्ध एव भूतादिव्यवहार इत्यर्थः । आद्ये यत्नोपाधेर्निर्वक्तुमशक्यत्वम् । उत्तरदेशसंयोगावच्छिन्नक्रियेति चेत् तस्या विशेष्यविशेषणसम्बन्धरूपत्वे त्रयाणामपि स्थिरत्वात् क्षणव्यवहारनियामकत्वाभावः । अतिरिक्तः सिद्धोऽतिरिक्तः क्षणपदार्थ इति तत्प्रचयैरेव कलामुहूर्त्तादिव्यवहारोपपत्तौ किमखण्डेन तेन स्पष्टश्चेदं "कालाः परिमाणिने" (२।२।५) त्यत्र भाष्ये इति निरूपितं तत्रैव । ईश्वरस्यापि कालनियामकत्वेन कालत्वव्यवहारः श्रुत्यादिष्विति बोध्यम् । अन्ये त्विति मतेऽपि एव

---

भवितुमर्हति विशेषणान्तरवत् न तु शब्दस्य तस्य स्वाभिधेयप्रतिपादने व्ययत्वादिविशेषणसम्बन्धप्रत्यययोग्यत्वात्, किं च नित्यो धातुर्नित्यत्वेपि भूतात्प्रत्ययविधिरनुपपन्नः, उच्चारितत्वलक्षणे भूतत्वे विशेषणं अर्थन्तर्च्चनुच्चारितात्प्रत्ययविधिः सम्भवति नित्यस्वायं भूतशब्दोतिक्रान्तवाचीति निष्ठायामितरेतराश्रयत्वादप्रसिद्धिरित्यपोह्यम् ।

द्दोषोऽस्त्येव। किञ्च अविद्धपरिमाणेऽपीयमुक्तिरसङ्गता तथा अपि क्रियान्तरस्यैव परिच्छेदकत्वेऽनवस्थापत्तिरिति दिक्॥

**शब्दस्येति।** (कै)

स्वाभिधेयप्रतिपादने व्यग्रतया विशेषणसम्बन्धायोग्यत्वादिति भावः॥

**गुणाभावाद्गुणस्येति।** (कै)

नित्यत्वादित्यनेन भूतादिशब्दव्यापारायोग्यत्वं दर्शयति।

**वैयर्थ्यादिति।** (कै)

अनुच्चारितात्प्रत्ययविधेरसम्भवादिति भावः॥

**न च शब्दस्येति।** (भा)

भाष्ये तस्य नित्यत्वेन भूतादिविशेष्यतायां सम्भवो नेत्यर्थः। अनित्यत्वपक्षेऽपि यथा वर्त्तमानशब्दस्य प्रकृतित्वसम्भवो न तथा भूतभविष्यतोः शब्दयोः प्रकृतित्वसम्भव इति योजना बोध्या॥

**क्रियायां भूतायामिति।** (भा)

तस्यां भूतत्वं च वर्त्तमानत्वं सप्रतियोगिकालवृत्तित्वम्॥

**भूतकालेनेति।** (भा)

भूतकालक्रियावाचकेनेत्यर्थः॥

**अव्ययनिर्देशादिति।** (भा)

वार्त्तिकेऽव्ययपदमर्श आद्यजन्तं व्याप्यान्तरपरं चेत्याशयेनाह

**अव्ययवतेति॥** (भा)

**अव्ययमेष इति ।** (भा)

अव्ययस्य भूते शब्दस्य निर्देशादिति वार्त्तिकार्थ इति भावः ॥

**नित्येनार्थेनेति ।** (कै)

साधुत्वतानवशब्दे कारणं नाप्यसाधुत्वज्ञानं प्रतिबन्धकमित्यर्थः । परमतेऽपि शिष्टाप्रोच्चारितत्वेन साधुत्वानुमानाद्बोधः शास्त्रजं तत्प्रत्ययं तु यस्माद्भविष्यतीत्यदोषः । यदि तु शास्त्रेणैव निष्पाद्यः स्यात् स्यादयं दोष इति भावः ॥ भाष्ये

**नव्येतीति ।** (भा)

विविधमर्थं न प्राप्नोतीत्यक्षरार्थः । शास्त्राभावोऽपि तदर्थक एवायमिति भावः । तदुक्तं कैयटेन

**नित्यत्वमित्यर्थ इति ॥** (कै)

**क्व पुनर्नव्येतीति ।** (भा)

क्वेतिविषयसप्तमी । कस्मिन्विषये विविधमर्थं न प्राप्नोति किं रूपं विविधमर्थं न प्राप्नोतीत्यर्थः । तत्रोत्तरमाह भाष्ये

**एतौ कालविशेषाविति ॥** (भा)

**तद्विधानस्येति ।** (भा)

तस्मिन्विधानं यस्येत्यर्थः । भूतशब्दवन्तोऽपि स्वभावत एव भूतमात्रवाचका भवन्ति किम् अधिकारेणेति भावः ॥

**सामान्येनेति ।** (कै)

कालसामान्येनेत्यर्थः ॥

सामान्ये इति। (कै)

मप्तम्यन्तपाठस्तु युक्त एव॥ ननु वृत्तौ कर्मणीति सूत्रे कुत्सितग्रहणं कृतमिति अकुत्सितार्थं तदिति चेन्न। कुत्सितग्रहणस्य भाष्येऽभावात्। शब्दशक्तिस्वभावसिद्धं चेत्तत्रापीति भाष्याशयः॥ ननु तेनैव सिद्धे कुमारीत्यादिव्यर्थमिति चेत्तत्राह

पुनर्विधानं त्विति। (कै)

कुमारहन्तेत्यादिव्यावृत्तये इत्यर्थः॥

विशेषविहितः। (कै)

उपपदविशेषे विहितः॥

इत्ययं भूतेऽपीति। (कै)

इत्यपरमपि भूते प्रसज्येतेत्यन्वयः॥

तक्रकौण्डिन्येति। (कै)

कुमारशीर्षयोर्विशेषविहितो णिनिः "कर्मणि हन" (३।२।८६।) इत्येतं बाधते। तच्च तेनापि णिनेटैव विधानेन णिनेर्बाधस्य वक्तुमशक्यतया तत्सहचरितभूतकालो बाध्यते इति। वर्त्तमानभविष्यतोरेव कुमारेत्यादिणिनिर्भवति। एवं च तद्बाधनेन चरितार्थं शास्त्रमिति वामरूपन्यायबाधे मानाभावेन कुमारहन्तेत्याद्यपि सिध्यतीति भावः। कुमारघातीत्यादौ विधीयमानः कुमारेत्यादिणिनिर्भविष्यद्वर्त्तमानयोर्यथा स्यात्तस्य भूतार्थे निवृत्तिश्च यथा स्यादिति भूताधिकार इति भाष्याक्षरार्थः। इदं चिन्त्यं तक्रकौण्डिन्यन्यायस्य विधेयविषयत्वात्। तस्माद्भूताधिकार-

सामर्थ्यात् "कर्मणि हन" इत्यत्रायमेव णिनिर्भूते इति नियम इत्यस्य णिनेर्भूते निवृत्तिरिति भाष्यार्थः। यथास्य णिनेरधिकाराभावेऽपि स्वभावत एव भूते निवृत्तिर्भविष्यतीत्यरुचेः प्रयोजनान्तरमाह भाष्ये

**आखुहेति॥** (भा)

**यज्ञसंयोग इति।** (कै)

यज्ञसंयोगविषये शतादङ्ङनिप्स्विषु कालेष्वपवादो माभूदित्यन्वयः। प्रसङ्गाद्वर्त्तमानाधिकारस्यापि प्रयोजनप्रदर्शनं वार्त्तिके भूताधिकारस्येत्युपलक्षणम्। तत्र ङ्वनिब्भूताधिकारे शता वर्त्तमानाधिकारे ङ्वनिप सुयजोर्ङ्वनिबितिविहितं कालभेदो न स्यादिति वाक्यरूपेण वर्त्तमानेऽपि ङ्वनिप्प्राप्नोतीति भावः॥

**नजिङेति।** (भा)

स्वपितृषोर्नजिङ् (३।२।१७२) अयं वर्तमानाधिकारे। लिट् भूताधिकारे। छन्दसि लिट् (३।२।१०५) लिटः कानज्वा (३।२।१०६) क्वसुश्च (३।२।१०७) इत्यस्य भाष्ये

**सर्वकालापवादः।** (भा)

इत्यस्य सर्वकाल लिटोऽपीति यावत्॥

**असत्यधिकार इति।** (कै)

वर्त्तमाने इत्यधिकारेऽसतीत्यर्थः॥

**सतित्विति।** (कै)

वर्त्तमान इत्यधिकारे सति उणादय इत्यस्य तदधिकारस्य-

त्वाद् अस्ति वर्त्तमानकाल इति भावः॥ रूढिशब्दत्वादेवोणादिषु बाधकरूपविधिर्नास्तीति तात्पर्यम्। एतत्प्रयोजनोक्तिरेकदेशिनः। उणादीनां व्युत्पन्नत्वाऽसम्भवात्। क्वसुकानचोरपि वर्त्तमानकाल एव साधुत्वस्य तत्सूत्रे भाष्ये उक्तत्वेनान्यत्रानाश्रितत्वस्यासङ्गतेश्च॥

## असत्यधिकार इति। (कै)

भूतवर्त्तमानयोरधिकारयोरसतोरित्यर्थः॥

## कानच इति। (कै)

क्वसोरप्युपलक्षणमिदम्। यद्वा कानजुपलक्षितस्य लिड् इत्यर्थः॥

## लसार्वधातुके इति। (कै)

तत्र चानशः सार्वधातुकत्वेऽपि लादेशत्वाभावः। कानचो लादेशत्वेप्यार्धधातुकत्वमित्युभयत्राप्यन्तोदात्तत्वमेवेति भावः॥

## कर्त्रभिप्राय एवेति। (कै)

अतस्मिंस्तु क्वसुरिति भावः॥ भाष्ये

## चानशताच्छील्यादिषु सर्वकालोपवादो माभूद् (भा)

इत्युत्तरम्॥ अग्निमादधानस्येत्येव पाठः ( भाष्ये )। सुषुपुषो नेहाग्निमित्यपाठः॥

## आदधानस्य (भा)

इत्येवान्यत्रेति। भूतार्थातिरिक्तवर्त्तमानत्वविवक्षायाम् अकर्त्रभिप्राये कर्त्रभिप्राये च आदधानस्येत्येव॥ भूते तु कर्त्रभिप्राये एव तथा। अकर्त्रभिप्राये तु क्वसुरेवेत्यर्थः।

---

# ब्रह्मभ्रूणवृत्रेषु क्विप् ।३।२।८७॥

किं धातूपपदेति । (कै)

भाष्ये नियमार्थोऽयमारम्भः ॥ किमविशेषेणेत्येव पाठः ॥

ब्रह्मादिष्वेव । (कै)

इत्यादिनियमाकारलेखस्तु लेखकप्रमादात् । अन्यथा तदाकारप्रदर्शनेनैव नियमान्तरतिरस्कारात्पुनः प्रश्नानुपपत्तेः ॥

उपपदविशेषे इति । (भा)

नियमस्य सजातीयापेक्षत्वाद् हनेः क्विप् उपपदविशेष एवेत्यर्थः ॥

ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ब्रह्मादिषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा । क्विप्चेत्यनेन सिद्धे नियमार्थमिदम् । नियमस्त्वेह चतुर्विधोपीष्यतइति वृत्तिकारः । तस्यायमाशयः । इह सूत्रे श्रुतत्वात्पूर्वं ब्रह्मादय उद्देश्याः । ततोनन्तरं प्रकृतित्वाद्धन्तिः ततः परिशेषाद्भूत इति । क्विप् तु सर्वान्ते निर्देष्टव्यः । विधेयत्वात् । तदेवं वचनव्यक्तिः । ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति । एवं स्थिते यत्रैवकार-

"ब्रह्मभ्रूणवृत्रेषु क्विप" ॥ 'चतुर्विधस्यात्रेति' । धातूपपदकालप्रत्ययविषयः, भाष्ये तूपपदविषयनियमद्वयं प्रदर्शितं तदुपलक्षणं न तु नियमान्तरव्यावृत्त्यर्थमिति गम्यते, ब्रह्मादिष्वेव हन्तेरिति धातुनियमः, अत्रापि नियमे भूत इत्याश्रयणात् कालान्तरे उपपदान्तरेपि भवत्येव

एतस्मिंश्च विशेष इति । (भा)

भूत इत्यर्थः । तेन भूते हन्तेः क्विब् ब्रह्मादिष्वेवेति नियम इति भावः ॥ तदाह

अनेनेति । (कै)

धातोर्ब्रह्माद्यतिरिक्ते उपपदे भूतकालावच्छिन्नेऽर्थे वर्त्तमानात् क्विपोः सम्बन्धबोधकत्वादिति भावः ॥ भाष्ये

अथेति । (भा)

एतस्माच्चनियमाङ्गीकारे इत्यर्थः ॥

---

स्ततोऽन्यत्र नियम इति न्यायेन नियमोऽन्यत्र भवन् अनन्तरे भवति । ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरनिर्दिष्टत्वादुपपदान्तरसम्बन्धनिवृत्तिफलो नियमो भवति । ब्रह्मादिषु हन्तेरेव । भूत इति तु अनन्तरत्वाविशेषेऽपि प्राथम्यादुपपदनियमः ब्रह्मादिषु हन्तेर्भूत एव । क्विबिति तु आनन्तर्ये क्विब्धात्वोरविशिष्टेऽपि प्राधान्यात्प्रत्ययनियमः । ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ कालनियमः । सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः । अस्तमायाविशेषत्वात् चतुर्विधस्यापीह ग्रहणम् । तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूत इत्याश्रयणात्कालान्तरे उपपदान्तरेऽपि भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहा । अरिहयोरि-

---

पुरुषं हन्ति हनिष्यति पुरुषहेति, ब्रह्मादिषु हन्तेरेवेत्युपपदनियमः, अत्रापि भूत इत्याश्रयणात्कालान्तरे धात्वन्तरादपि भवत्येव शत्रुं जयति जेष्यति वा शत्रुजिदिति, भूतकाले क्विबेवेति कालनियमः । 'नान्यः प्रत्यय इति' । यथा कर्मणि हनः कर्मण्यणित्युपपदान्तरे तु भूतेऽपि

कालनियम इति । (कै)

भूतकालावच्छिन्नार्थाद् धातोः क्विबतिरिक्तासरूपप्रत्ययस्यापवादत्वात् तात्पर्यतः कालनियमोऽयमिति बोध्यम् ।

नियमद्वयमिति । (कै)

ब्रह्मादिष्वेव क्विवेवेति । (कै)

वक्ष्यमाणस्यैवकारस्य श्रुत्युपस्थापितेऽन्वयो न्यायप्रामाण्याद्-भयत्रापीति तत्त्वम् ॥

उत्तरस्य योगस्य वचनार्थ इति । (भा)

सापेक्षत्वेऽपि गमकत्वात् समासः ॥ धातुनियमस्येदं साम्नमिति दर्शयति

---

हयोगविपक्षत्वात् । ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणात्कालान्तरे धात्वन्तरादपि भवत्येव । वृत्रं जयति जेष्यति वा वृत्रजिदिति । भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्वित्युक्तेः पुरुषहा अरिहेति प्राग्वत् । भूत एव क्विवेवेति कालनियमेऽपि उपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव । पितृव्यं हतवान् पितृव्यघातीति । सोपपदस्य प्रत्ययो नियमेन व्यावर्त्यते । निष्ठा तु भवत्येव । वृत्रं हतवानिति । भाष्यकारस्तु प्रकृति-कालनियमावेव व्यशिश्रियत् । तस्यायमाशयः । धातुकालौ हि नेह सूत्रे श्रुतौ किन्तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ । अतस्तयोरेवोपरोधो

---

प्रत्ययान्तरं भवत्येव पितृव्यं हतवान्पितृव्यघातीति सोपपदस्य प्रत्ययो नियमेन व्यावर्त्यते निष्ठा तु भवत्येव वृत्रं हतवानिति, तथा भूत एवेति प्रत्ययनियमः । अत्रापि ब्रह्मादिषु हन्तेरित्याश्रयणादुपपदान्तरे

यस्मादिति ॥ (कै)

नन्वेतदर्थं छन्दसीत्येवास्तु सामर्थ्यादुपपदान्तरे भविष्यति किं बहुलग्रहणेनेत्यत आह भाष्ये

न च भवति ॥ (भा)

अभिचेति । (भा)

तावन्मात्रोक्तौ क्विबेवेति । (कै)

नियमादण् न स्यात् स भवत्वित्येतदर्थं बहुलपदमिति भावः ॥

---

न्याय्यः । न तूपपदप्रत्यययोः । अनुपस्थापितत्वात् । एवं न्यायोपष्टम्भेन भाष्येण सह विरोधात् वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम् । यत्तिह हरदत्तेनोक्तं धातूपपदविषयनियमद्वयं भाष्ये प्रदर्शितमिति । तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयम् ॥

धात्वन्तराच्च कालान्तरेपि भवत्येव, कथं पुनरेकस्मिन्नेव योगे चतुर्विधो नियमो लभ्यत इत्याह । 'तदेतदिति' । आरम्भसामर्थ्यादेव चतुर्विधो नियमो लब्धुं शक्यते तत्रैव तूपोद्बलकमेतदुक्तं वेदितव्यम् ॥

# कर्मणीनिर्विक्रियः ॥ ३ । २ । ९३ ॥

ननु कर्मणः कथं कुत्सितत्वमत आह

यस्य सोमेति ॥ (कै)

कर्मणीनिर्विक्रियः ॥ कर्मण्युपपदे विपूर्वात्क्रीणातेरिनिः स्यात् । अत्र वार्त्तिकम् । कर्मणि कुत्सितग्रहणमिति । एतच्च पुनः कर्मग्रहण-सामर्थ्याल्लभ्यते । यत्कर्म क्रियया सम्बध्यमानं कर्तुः कुत्सामावहति तत्रे-त्यर्थः । सोमादयस्तु विक्रीयमाणाः शास्त्रे प्रतिषेधात्कुत्सावहाः । सोम-विक्रयी । घृतविक्रयी । तैलविक्रयी । कुत्सितग्रहणान्नेह धान्यविक्रायः ॥

"कर्मणीनिर्विक्रियः" । कर्मणीति वर्तमाने इति' । कर्मणि पुन-ग्रहणतः कर्तुः कुत्सानिमित्ते कर्मणीति यत्कर्म क्रियासम्बद्धं कर्तुः कुत्सामाव-हति तत्रेत्यर्थः, सोमादीनां विक्रयः शास्त्रे निषिद्धः ॥

# निष्ठा । ३ । २ । १०२ ॥

तौसदिति वचनमित्यादिवार्त्तिकं तौसदिति (३।२।१२७) सूत्रे तेन समानन्यायमिदमित्याह भाष्ये

असंसक्तयोरिति । (भा)

नावित्युक्ते हि अगृहीतविशेषणरूपमात्रपरामर्शाद्दोष इति भावः । मित्र इत्यादौ अनिः क्त इति वर्त्तमाने क्तः ॥

यदि पुनरिति । (भा)

भाष्यं पूर्वोक्तेन पुनरुक्तमित्याशङ्क्याह

यौ लौकिके इति ॥ (कै)

न दृष्टाविति । (कै)

अनुबन्धविशिष्टौ न दृष्टावित्यर्थः ॥ कथमश्रुतत्वमत आह

एतदुक्तं भवतीति ॥ (भा)

भाष्ये

निष्ठा ॥ धातोर्भूते निष्ठा स्यात् । तयोरेवेति क्तः कर्मणि क्तवतुस्तु कर्त्तरि । कृतः कटः । कटं कृतवान् । आदिकर्मणि निष्ठा वक्तव्या ॥

"निष्ठा" । 'क्तक्तवतू निष्ठेत्युक्तमिति' । ककारः कित्कार्यार्थं उकार उगित्कार्यार्थो ऽत्वसन्तस्येति विशेषणार्थश्च । 'निष्ठायामित्यादि' । अप्रसिद्धिरनिष्पत्तिः कस्य संज्ञायाः संज्ञिनो वा कार्यमित्याह । 'संज्ञयेति' । यदि हि क्तक्तवतुग्रहणं क्रियेत इह च संज्ञाविधौ ततो न स्यादितरेतराश्रयत्वमिति संज्ञयेत्युक्तम् । 'तनोश्च तयोरिति' । लोके शास्त्रे वा

**दृष्टश्रुतयोरिति ।** (कै)

श्रीतः क्तः (३।२।१८७) इत्यादौ अत्र शास्त्रज्ञानात्तत्त्व-प्रत्यभिज्ञानात्प्रयोगेऽनुबन्धविगमेऽपि दृष्टत्वं बोध्यम् ॥ भाष्ये

**द्विः क्तेति ।** (भा)

तद्बोधकं ग्रहणमित्यर्थः ॥

**क्तक्तवतू भूते ततो निष्ठेति ॥** (भा)

**सामान्येनेति ।** (कै)

एकत्वपदेन तदाश्रयो लक्ष्यते । साधारणपर्यायस्त्वेकशब्द इत्यन्ये ॥ ननु वृध्यादिसंज्ञापि कृत्रिमत्वादनित्यैव तत्कथं तत्रायं समाधिर्नेत्यत आह

**वृध्यादिकेति ॥** (कै)

**विषयनियतत्वादिति ।** (कै)

संज्ञाविषयस्य शास्त्रे प्रयोगे चैकरूपत्वेन संज्ञिनो नित्यत्वात् । संज्ञानित्या साधुत्वात् । व्याख्यानस्य च सम्भवो नैवं प्रकृते इति भावः ॥ ननु संज्ञायाः स्वतो भावित्वमनुपपन्नमत आह

---

कृतः कटः । कर्तुमारब्ध इत्यर्थः । न्याय्यं त्वाद्यपवर्गात् । उपसङ्ख्यानप्रत्या-ख्यानमेतत् । आदिभूतो यः क्रियाक्षणः अपवृक्तः तस्मिन्नेव अवयवे

---

न तावल्लोके सानुबन्धावेतौ क्तः शास्त्रेऽपि यद्यपि श्रीतः क्तः नपुंसके भावे क्त इति क्तः स्वरूपेण विहितोऽस्ति भूते तु काले नास्ति क्तवतुस्तु न क्वाप्य-स्तीति भावः 'भाविनी संज्ञेति' । संज्ञिनो भावित्वात् संज्ञापि भाविनी

**संज्ञिन इति ॥ (कै)**

**सामर्थ्यादिति । (कै)**

अन्यस्योत्पन्नस्य निष्ठासंज्ञाया अभावादिति भावः ॥

**आदिकर्म इति (कै)**

कर्मशब्दः क्रियावाची । एकफलोद्देशप्रवृत्तसमूहरूपा च क्रिया तत्र वार्त्तिकफलं दर्शयति ।

**आद्येष्विति । (कै)**

सम्पूर्णसमूहस्य व्यपवृक्ते हि भूतव्यवहार इति भावः ॥

**क्रियाक्षणेष्विति । (कै)**

अत्र क्षणशब्दः सूक्ष्मग्राह्यकालोपलक्षणम् । अन्यथा क्षणरूपले क्रियायास्तद्वदेव सूक्ष्मकालावच्छिन्नत्वात् । प्रत्यक्षत्वाभावापत्त्या पश्य मृगो धावतीत्यादेर्लोपापत्तिरिति बोध्यम् ॥ वस्तुतः क्रियाप्रत्यक्षैव फलानुमेया च तद्बध्यति भाष्ये

समूहरूपारोपात्सिद्धः प्रत्यय इति भावः अत एव लुङादयोऽपि प्रयुज्यन्ते । उक्तञ्च । समूहः स तथाभूतः प्रतिभेदं समूहिषु । समाप्यते ततो भेदे कालभेदस्य सम्भव इति ॥

सूत्रशाटकवत्तद्यथास्य सूत्रस्य शाटकं वयेति तन्तुवाय उक्तः स पश्यति यदि शाटको न वातव्यो ऽथ वातव्यो न शाटकः शाटको वातव्यश्चेति विप्रतिषिद्धं, मन्ये स वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति 'सामर्थ्यादिति' : 'क्तक्तवतू निष्ठे'ति वचनात् अन्यस्योत्पन्नस्य निष्ठेति संज्ञाया अभावस्सामर्थ्यम् . 'आदिकर्मणीति' कर्मशब्दः क्रियावाची एक

अत्यन्तापरिदृष्टेति। (भा)

अत्र एव रूपेण समुदायगतरूपेण वा प्रत्यक्षेत्यर्थः। पश्य मृगो धावतीत्यादिप्रयोगस्तत्कालसंयोगदर्शनाभिप्रायेण। इन्द्रियैर्वा ज्ञानसामान्यलक्षणा निरूपयिष्यते चेदं वर्त्तमाने लट् (३।२।१२३) इति सूत्रे॥

आद्येषु क्रियालक्षणेष्विति (कै)

क्वचित्पाठः। तत्राद्येषु क्रियावयवेष्वित्यर्थः॥

भीतः क्त इति। (कै)

यदि तद्विषयमेव स्यात् वर्त्तमानग्रहणमेव कुर्यादिति चिन्त्यमिदमिति हरदत्तः। तेन कानुमानेऽपि कावलर्थं वचनमावश्यकमित्यपरे॥

यस्माल्लट इति। (कै)

धात्वर्थस्य वर्त्तमानत्व एव यतो लोके विकल्पेन प्रयुज्यतेऽतो वक्तव्येत्यर्थः। यद्भवन्त्यर्थं वा भाष्ये ऽन्वयः॥ भाष्ये

---

पाणोद्देशप्रवृत्तत्वासमूहरूपा क्रिया, तत्राद्ये क्रियाक्षणेऽपवृक्तेपि धात्वर्थरूपायाः क्रियाया अनपवृक्तत्वाद्वचनं न्याय्या त्वाद्यपवर्गात् न्याय्या तेषां भूतकालता कुतः आद्यपवर्गात् आदिभूतक्रियाक्षणोपवृक्तः तस्मिन्नेव चावयवे समूहरूपो धात्वर्थः परिसमाप्तः, उक्तं च।

समूहः स तथा भूतः प्रतिभेदं समूहिषु।
समाप्यते ततो भेदे कालभेदस्य सम्भवः॥

इति, तथा च प्राकारैर्लोकटं देवदत्त इति लङपि प्रयुज्यते कटावयवे वा कटशब्दो द्रष्टव्यः, ततः केषां चित्कटावयवक्षणानामपरिसमाप्तेः

आदिरचेति । (भा)

आद्यक्रियालक्षण इत्यर्थः॥ ननु तस्य भूतत्वेऽपि धात्वर्थस्य क्रियात्वानपायात् आह

आदिभूत एवेति ॥ (कै)

समासत्वात् । (कै)

आरोपितत्वात् ॥

प्रतिभेदम् । (हरिः)

प्रत्यवयवम् ॥

समूहिषु । (हरिः)

अवयवेषु ।

समाप्यते । (हरिः)

आरोप्यत इत्यर्थः ।

अभेदे । (हरिः)

अवयवे समूहाभेदे ॥

तेन क्रिया न दृश्यते इति । (कै)

प्रत्यन्तमवयवशः समूहरूपा न दृश्यत इत्यर्थः ॥

अनवस्थानाच्चेति । (कै)

अनेनावयवस्याप्यप्रत्यक्षत्वं क्षणिकत्वेनानवस्थानादित्यर्थः ॥

प्रकरिष्यति कटं देवदत्त इति लुट्प्रयोगोऽप्यविरुद्ध । अपर आह ज्ञापकात्सिद्धं यदय 'मादिकर्मणि क्तः कर्तरि च' 'उदुपधाद्भावादिकर्मणो-रन्यतरस्या'मिति चाह तज्ज्ञापयति भवत्यादिकर्मणि क्त इति, नैतदस्ति

**क्रमात्सदसतामिति।** (हरिः)

भूयोऽवयवसन्निकर्षः समूहप्रत्यये कारणमिति भावः॥ चक्षुरादिभिरसम्बन्धे हेतुः

**सद्वस्तुविषयैरिति॥** (हरिः)

**येन शब्देनेति।** (भा)

सामानाधिकरण्ये तच्छब्देनापि तस्यैव परामर्शात् शब्दे यदि समाप्तिश्चेत्का स्यात्। न च सायुक्तिमती। अतो वैयधिकरण्येन व्याचष्टे

**येनावयवेन सम्बध्यते।** (कै)

यत्र यत्रावयवे आरोप्यत इत्यर्थः। यो योऽवयव फलानुकूलत्वेन विवक्ष्यते तत्रैव समाप्यते। तत्रावयवे समाप्ते समूह एव समाप्यतेऽतो भवतीत्यर्थः॥

**वेणिका।** (भा)

कटचरमावयवः। तदन्तः कट इत्यस्य तदन्तकटनिर्वर्तकः क्रियासमूह इत्यर्थः॥

---

ज्ञापकं, 'ओतः श्यनि' इति योऽयं वर्त्तमाने श्यन्तद्विषयमेतत्स्यात्, यदि तद्विषयमेव स्याद्वर्त्तमानग्रहणमेव कुर्यात्॥

# लिटः कानज्वा । ३ । २ । १०६ ॥

वासरूपविधिरिति । (कै)

ननु "हशश्वतोर्लङ् चेति" ( ३ । २ । ११६ ) ज्ञापकादादेशगतवैरूप्यमादायलविधौ वासरूपो नास्तीत्युक्तम् एवं च प्रकृते स्यादेव । न च प्रत्ययविधिविषयस्यादेशेष्वभाव आदेशविधावपि प्रत्यय इत्यस्योपस्थितेराद्युदात्तश्चेति । सूत्रभाष्यसम्मतत्वात् इति

---

लिटः कानज्वा ॥ क्वसुश्च ॥ छन्दसि लिटः कानचक्वसू वाऽऽस्तः । योगविभाग उत्तरार्थः । योऽग्निं चिक्यानः । मन्दानः । सोमम्पपिवान् । अनन्तरस्यैव लिट इमावादेशौ, लिड्ग्रहणन्तु प्रत्ययान्तरत्वप्रसङ्गनिवृत्त्यर्थम् । वावचनमुत्तरार्थम् । कानचश्चित्करणं स्वरार्थम् । क्वसोरुकार उगित्कार्यार्थः । जक्षिवानित्यादावुगिदचामिति नुम् । उपेयुषीत्यादावुगितश्चेति ङीप् । वसोः संप्रसारणमित्यत्र सामान्यग्रहणमप्युकारस्य प्रयोजनम् । अथ किमर्थं कित्करणम्, ईजानः सुषुजानस्तेया इत्यादौ

---

"लिटः कानज्वा" ॥ 'चिक्यान इति' । चिञ् चयने विभाषा चेरिति कुत्वम् । एरनेकाच इति यणादेशः । 'न च भवतीति' वावचनस्य प्रयोजनं दर्शयति, वासरूपविधिस्तु आदेशेषु नास्ति हशश्वतोर्लङ् चेति वचनादित्युक्तम् । नन्वनन्तरसूत्रविहितस्य लिटो नित्यमादेशोऽस्तु यस्तु छन्दसि लुङ्लङ्लिट इति लिट् तत्र तिङां श्रवणं भविष्यति, न । तस्य धातुसम्बन्धविषयत्वादधातुसम्बन्धे तिङां श्रवणं न स्यात् लिण्मात्रस्य च ग्रहणमित्यनन्तरमेव वक्ष्यति । पूर्वस्यैवेत्यादि' । प्रत्ययान्तरं तु कानच् न भवति वावचनाद्वासरूपविधिनैव लुङादीनां सिद्धत्वादिति भावः । 'लिण्मात्र-

**सूत्रभाष्यसम्मतत्वाद् इति** (भा)

चेन्न । एतद्ग्रहणादादेशरूपप्रत्ययविधौ तदनुपस्थितिकल्पनात् तत्फलं सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव । न पक्षे तिङ इति भावः ॥

**उत्तरत्वेति ।** (कै)

केचित्तु तस्य धातुसम्बन्धे विधानेनाधातुसम्बन्धे विधानेनाधातुसम्बन्धे पक्षे भूतसामान्ये लिट्स्थानिकतिङः श्रवणार्थमिदमावश्यकमित्याशयो भाष्यस्येत्याहुः । यत्तु वृत्तौ लिङित्यनु-

---

सम्प्रसारणं गुणनिषेध एत्वाभ्यासलोपश्चासंयोगाल्लिटः कित्त्वादेव सिद्धम् । अस्तु तर्हि संयोगान्तार्थम् । बन्ध बन्धने । वृत्रस्य यद्बद्धधानस्य रोदसीत्वमर्णावान् बद्धधानां अरण्याः अनानिदितामिति नलोपः । अभ्यास, धकारस्य छन्दादिशेषेण निवृत्तिः प्राप्ता छान्दसत्वान्न भवति । झलाञ्जश्-झशीति जश्त्वं दकारः । एवमञ्जेः, आञ्जिवान् । उपधालोपः । नैवम् । छान्दसौ हि क्वसुकानचौ । लिट च छन्दसि सार्वधातुकमपि भवति । छन्दस्युभयथेति वचनात् । तत्र सार्वधातुकमपिदिति ङित्त्वम् । न च संयोगान्तेषु कित्त्वङित्वयोर्विशेषोऽस्ति । तस्मादपार्थमनयोः कित्त्वमिति

---

स्येति' । भाष्ये त्वनन्तरस्यैव लिटोयमादेशो लिङ्ग्रहणं च प्रत्ययान्तरत्वं मा विज्ञायीति, वावचनं चोत्तरार्थमिति स्थितं कानचश्चित्करणं स्वरार्थं कित्करणं किमर्थं नासंयोगाल्लिट किदित्येव सिद्धत्वेन ईजानश्लेपाण इत्यादौ संप्रसारणेत्वाभ्यासादिलोपादिकार्यं भविष्यति संयोगान्तार्थं, बन्ध बन्धने वृत्रस्य यद्बद्धधानस्य, त्वमर्णावान् बद्धधाना अरण्या अनानिदितामिति नलोपः छान्दसत्वादभ्यासधकारस्य छन्दादिशेषेण निवृत्त्यभावे झलां जश् झशीति जश्त्वं दकारः, ननु छान्दसः कानच् लिट च छन्दसि सार्वधातु-

वर्त्यविभक्तिविपरिणामेन सिद्धे लिङ्ग्रहणेन लिण्मात्रस्यादेशो ज्ञाप्यते इति वा वचनमावश्यकमेवेत्युक्तं तत्र प्रकृतभाष्यविरोधादित्याहुः॥ भाष्ये पुनः

**कित्करणादिति।** (भा)

आदिवानित्यादौ ग्रहणस्य ऋच्छत्यृतामित्यत्र ऋकारान्तरप्रश्लेषेण ऋधातोः पुनर्विधानाद्बोध्य इति दिक्॥

---

चेत्। अत्राहुः। ऋच्छत्यृतामिति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति परितस्तरे तेरतुस्तेररिति, एवमिहापि स्यात्। यतः सुचावर्हिरतिंस्तिरणाः तथा तितीर्वानिति। तस्मात्तत्रये कित्करणम्। नचैवम् आरिवान् सर्वाभ्रणान्यारवौ इत्यत्रापि गुणो न स्यादिति वाच्यम्। ऋकारान्तरप्रश्लेषेण ऋधातौ पुनर्विधानादिति दिक्। यत्तु केचित् कित्करणसामर्थ्याद्भाषायामपि क्वसुकानचौ स्त इत्याहुः। तद्भाष्यविरुद्धम। भाषायां सदेत्यादिसूत्रविरुद्धश्चेत्युपेक्ष्यम्॥

कमपि भवति छन्दस्युभयथेति वचनात् तत्र सार्वधातुकमपिदिति ङित्वं ङितीत्युपधालोपो भविष्यति, न च संयोगान्तेषु कित्वङित्वयोर्विशेषोऽस्ति, ऋकारान्तगुणप्रतिषेधार्थं तु, ऋच्छत्यृतामिति ऋकारान्तानां प्रतिषेधविषये गुण आरभ्यते स यथेह भवति परितस्तरे इति एवमिहापि स्यात् परितितिस्तिराण इति तस्मात्कित्करणं, कित्करणसामर्थ्याद्भाषायामपि कानज्भवतीत्येतत्तु भाष्यविरोधादुपेक्ष्यम्॥

# भाषायां सदवसश्रुवः । ३ । २ । १०८ ॥

इति मत्वाहेति । (कै)

एवं च विकल्पमात्रविधानेऽस्य तात्पर्यमिति भावः ॥

अनद्यतनपरोक्षयोरिति । (भा)

वचनस्य तयोरपि क्वसुर्विधेयः । तेन च तद्विषयो लिडनुमातव्यः स च वेत्यर्थः ॥ ननु भूतसामान्येऽनुमितस्य विशेषपरतापि भविष्यति किमनेनेत्यत आह भाष्ये

---

भाषायां सदवसश्रुवः ॥ एभ्यो भूतसामान्ये लिड् वा स्यात्तस्य च नित्यं क्वसुः स्यात् । पक्षे यथास्वं प्रत्ययाः । सेदिवान् । असदत् ।

---

"भाषायां सदवसश्रुवः" ॥ 'आदेशविधानादेवेत्यादि' । यदि भाषायां सदादिभ्यो भूतसामान्ये लिडन स्यात्ततस्तादृशस्य लिट आदेशविधानमनुपपन्नं स्यादिति मन्यते, ननु च लिटः कानज्वेत्यत्र पुनर्लिड्ग्रहणस्य प्रयोजनमुक्तं योपि परोक्षे लिड्विहितस्तस्याप्ययमादेशो भवतीति तच्चेत्यमिहापि यः परोक्षे लिट् स भाषायामपि सदादिभ्यः सम्भवतीति तस्यैवेदमादेशविधानं स्यात्, उच्यते लङ्लिड्विषयेपि परत्वादनुद्यतनभूतेर्भवतीति वक्ष्यति ततो नानेन परोक्षे लिट आदेशाभिधानं किन्तर्हि भूतसामान्ये ततस्त्वादेशविधानादेव लिडपि तद्विषयो ऽनुमातव्यः, यद्येवं तस्य पक्षे क्वस्वादेशः पक्षान्तरे तिङां श्रवणं प्राप्नोति, न वावचनेन सुरभिक्वसम्बध्यते क्वसुर्वा भवतीति किं तर्हि लङभिसम्बध्यते भाषायां सदादिभ्यो वा लिट् तस्य नित्यं क्वसुरादेशो भवतीति इत्यग्रहणोप्यभिन्नवार्थे योजनीयः

**अपवाद इति ॥** (भा)

तद्व्याचष्टे

**लुङोऽपवाद इति ॥** (कै)

ननु अनद्यतनादौ लिङ्कैकल्पिकत्वस्य नित्यं क्वसुरित्युपस्थितत्वादिति न स्यादत आह

**एतदादेशेति।** (कै)

अन्यद्यनेत्यादिवचनेन तयोरप्यनेन लिडनुमानान्न दोषः ॥ ननु वाग्रहणानुवृत्तौ क्वसोर्विकल्पः स्यादत आह

**तच्च नेति।** (कै)

व्याख्यानादिति भावः ॥

---

असीदत्। ससाद। उषिवान्। अवात्सीत्। अवसत् उवास। शुश्रुवान्। अश्रौषीत्। अशृणोत् शुश्राव लङ्लिङ्विषयेपि भवति। परस्तादनुवृत्तेः ॥

'उपासददिति'। 'लृदित्त्वादङ्'। उपासीददिति'। पाघ्रादिसूत्रेण सीदादेशः। 'अनूषिवानिति'। यजादित्वात्सम्प्रसारणं शासिवसिघसीनां चेति षत्वम्। 'अन्ववात्सीदिति'। सस्यार्द्धधातुक इति तत्वम्। 'अनूवासेति'। लिट्यभ्यासस्योभयेषामित्यभ्यासस्य सम्प्रसारणम्। लुङ्विषयेपि परस्तादनुवृत्तेर्भवतीति'। अन्यथा भूतसामान्ये लुङ्विहितस्तत्रैव धातुविशेषेणादेशविधानेनानुमितो लिडपवादः, तथा भूतविशेषे लङ्लिटौ लुङ एवापवादौ सदादिभ्यस्तु भूतविशेषे एतत्सूत्रविहितं च कार्यं प्राप्नोति लङ्लिटौ च अपवादविप्रतिषेधाल्लङ्लिटावेव स्याताम् ॥

# उपेयिवाननाश्वाननूचानश्च । ३ । २ । १०९ ॥

इडागमादिति । (कै)

"वस्वेकाजाद्घसाम्" (७। २। ६७) इत्येकाज्लक्षणादित्यर्थः । द्वित्वे कृते सेकाच्त्वात्तदप्राप्तेरनित्यत्वमिट इति भावः ॥ नन्वेकादेशे एकतर एकाच्त्वात्तत्प्राप्तिरिति सोऽपि नित्य इत्यत आह

तत्सामर्थ्यादिति ॥ (कै)

न चेति । (कै)

तत्र द्वित्वे सवर्णं दीर्घबाधित्वेणोपनिमित्ताभावादेशाप्राप्तौ दीर्घः सावकाश इति भावः ॥

उपेयिवाननाश्वाननूचानश्च ॥ उपेत्यविवक्षितम् । व्याख्यानात् । ईयिवांसमतिस्रिध इति दर्शनाच्च । इणो नञ्पूर्वादश्नातेरनुपूर्वाद्वचेश्च भूतसामान्ये वा लिट तस्य नित्यं क्वसुकानचौ । पक्षे तु लङादयः ।

"उपेयिवाननाश्वाननूचानश्च" ॥ 'उपपूर्वादिणः क्वसुरिति' : निपात्यत इत्यर्थः । लिडादेशश्चायम् । अन्यथा द्विर्वचनाभ्यासदीर्घत्वे अपि निपातयितव्ये स्यातां तथा ग्राममुपेयिवानित्यत्र न लोकाव्ययेति षष्ठीप्रतिषेधो न स्यात् । 'द्विर्वचनमिति' । इडागमात्पूर्वं नित्यत्वात्क्रियत इत्यर्थः । 'अभ्यासदीर्घत्वमिति' । 'दीर्घ इणः किताै' त्यनेन । 'तत्सामर्थ्यादिति' । यदि ह्येकादेशः स्याद्दीर्घविधानमनर्थकं स्यादेकादेशेनैव दीर्घस्य सिद्धत्वात्,

## विशेषेति । (कै)

वसादिलक्षणेत्यर्थः ॥

## तदाऽऽज्ञादाविति । (कै)

प्राप्तविषय एव प्रतिप्रसवसम्भावादिति भावः । किञ्च पूर्वस्यैव विधौ स्थानिवत्त्वन्तु ॥ पूर्वपरयोरिति सिद्धान्तादीयतुरित्यादौ तद्-प्रवृत्त्या सवर्णदीर्घाप्राप्तेरभ्यासदीर्घस्य नैकादेशबाधकत्वमिति तद्-सिद्ध एवेति न तन्निपातनफलमित्यपि बोध्यम् ॥

## ईयादेश इति । (कै)

अन्यथेटि कृते "इणो यणि" (६ । ४ । ८१) ति स्यादिति भावः ।

अगात् । ऐत् । इयाय । अनाश्वान् । इडभावोऽपि निपात्यते । नाशीत् । नाश्नात् । नाश । वचेः कर्त्तर्येव कानच् न तु भावकर्मणोः । निपातन-सामर्थ्यात् । अन्ववोचत् । अन्वब्रवीत् । अनूवाच । अत्रेदमवधेयम् ।

ननु चाभ्यासदीर्घत्वस्येयतुरित्यादिरवकाशः स्यात् अत्र हि इह अतुस् इति स्थिते दीर्घत्वमेकादेशश्च प्राप्नोति इणो यणिति यणादेशस्य तत्र वार्णादाङ्गं बलीय इति बह्वाश्रयत्वेनैकादेशस्य बहिरङ्गत्वाद्वा यणेव भवति ततश्च दीर्घविधानमर्थवद्भवति, एवं मन्यते अत्रापि पूर्वपरविधि-रेकादेशः पूर्वविधिरिति तत्र कर्त्तव्ये यणादेशस्य स्थानिवत्त्वात्स्यादेवैका-देशः तदेवमभ्यासदीर्घत्वमनवकाशत्वात्सवर्णदीर्घत्वं बाधत इति तस्मा-त्सूत्रकृत् तत्सामर्थ्यादेकादेशप्रतिबन्ध इति । 'तत्रेति' 'एवं सतीत्यर्थः । 'स निपात्यत इति' । निपातनाश्रयणमिदर्थम् । अन्यत्सर्वं पूर्वत्रैवेणाग्रहणा-देव सिद्धमित्यर्थः, यदि तर्ह्यैदर्थमेतन्निपातनं संप्रसारणविषयेऽपि प्राप्नोति

**तदर्थमिति ।** (कै)

ईयादेशे दीर्घोच्चारणमसन्ध्युच्चारणं चोपेत्यस्याविवक्षायां बीजं द्रष्टव्यम् । भाष्ये इयिति ह्रस्वपाठे ईयिवानित्यादौ छान्दसो वर्णव्यत्ययो बोध्यः । लोके तु उपेयिवानित्येव साधुः । उपेत्यविवक्षायां मानाभावादित्यन्ये ॥ भाष्ये

**न हि दीर्घत्वमिति ।** (भा)

इयतुरित्यादौ प्रागुक्तरीत्या चारितार्थ्यादिति भावः ॥

**न हीति ।** (कै)

किन्तु शास्त्रातिदेश इति भावः ॥

---

भाषायां सदवसेति सूत्र एवेण् ग्राह्य, उपेयिवानिति तु न निपात्यम् द्वित्वात्प्रागेव परत्वादिट् । नन्वेवं बिभिद्वानित्यादावपीट्प्रसङ्गः । तत्र द्वित्वस्य नित्यत्वात् । इणस्तु इडपि नित्यः । द्वयोर्नित्ययोः परत्वादिट् ।

---

अत्र वसादेरिति विशेषानुपादानात् यथा वक्ष्यति नित्यश्चायं वल्निमित्तो विघातीति तत्राह । 'क्रादिनियमात्प्राप्तस्येति' । चशब्दो हेतौ नाचपूर्व इड्विधीयते किं तर्हि योयं बलादिलक्षण इट् क्रादिनियमेन प्राप्तो 'वस्वेकाशाद्घसा'मिति नियमेन प्रतिषिद्धः स एव प्रतिप्रसूयते प्रतिबन्धापनयेन पुनः प्रवर्त्यते तेनाजादावतिप्रसङ्गो न भवतीत्यर्थः, अन्ये त्वभ्यासदीर्घत्वे कृते धात्विकारस्य व्यञ्जनं यणादेशन्निपातयन्ति ईयिवस् इति स्थिते वस्वेकाजाद्घसामित्येवेट् सिद्धः स च वलादिलक्षण इति नास्त्यतिप्रसङ्गः अपर आह : पूर्वसूत्र एवेण्ग्रहणं कर्त्तव्यं नार्थो निपातनाश्रयणेन, अत्र यदुक्तमीयतुरित्यत्राभ्यासदीर्घत्वे कृते एकादेशात्पूर्वं वार्णादाङ्गं बलीय इति यणि कृतेपि तस्य स्थानिवत्त्वादेकादेशः प्राप्नोति, ततश्चावश्यमभ्यासदीर्घत्वेन बाधितव्य एकादेश इति तन्न, नहि स्थानिवद्भावेन रूपमतिदिश्यते

**रूपाश्रयश्चेति ।** (कै)

अकृ अचपदाभ्यान्तद्रूपेणोपस्थितयोरेव दीर्घ इति भावः ॥ न कार्यातिदेशे दोषस्तदवस्थ इत्यरुचेराह

**अथवेति ।** (कै)

वस्तुतः पूर्वस्यैव विधौ स्थानिवत्त्वमिति बोध्यम् ॥ भाष्ये

**निष्प्रतिद्वन्द्व इति ।** (भा)

एकादेशात्पूर्वमिटोभावे यणप्राप्तेरिति भावः ॥

**यणादेशो निपात्यत इति ।** (भा)

एकादेशबाधकतयेति भावः ॥

---

न च कृते द्वित्वे ऽनेकाच्त्वादिण् न लभ्यत इति वाच्यम् । ईयतुरित्यादाविव सवर्णदीर्घे सत्येकाच्त्वात् । न च दीर्घइणः कितीति दीर्घसामर्थ्यादेकादेशबाधः । इणोयणिति यणि कृते दीर्घस्य चरितार्थत्वात् । न च यणि

---

रूपाश्रयस्य पूर्वपरयोरेकादेशो न यकारस्य भवितुमर्हति, किन्तु यणादेशेन बाधितस्यैकादेशस्य पुनस्स्थानिवद्भावेनापि प्रवृत्त्यभावो बाधितत्वादेव किमतो यद्येवमिदं ततो भवति, इणः क्वसौ विहिते द्विर्वचनं च प्राप्नोति वस्वेकाजाद्घसामितीडागमस्य किमत्र कर्तव्यं परत्वादिट् नित्यं द्विर्वचनं कृतेपीटि प्राप्नोत्यकृतेपि प्राप्नोतीति, इडपि नित्यः कृते द्विर्वचने ऽभ्यासदीर्घत्वे एकादेशे च एकाच्त्वात्प्राप्नोति इदानीमेव कृतमभ्यासदीर्घत्वेन न बाधितव्य एकादेश इति तदेवमुभयोर्नित्ययोः परत्वादिट् द्विर्वचनमभ्यासदीर्घत्वं परस्य यणादेशः ईयतुरित्यादिवत्सिद्धमुपेयिवानिति, बिभिदानित्यादौ नित्यत्वात्पूर्वन्द्विर्वचनमेव भवति । 'न चात्रोपसर्गस्तन्त्रमिति' । एवमाचार्याणामुपदेश इति भावः । 'अनुपसर्गाचेति' । ईयिवांसमतिस्रिध इति हि छन्दसि दृश्यते । 'लुङादयो भवन्तीति' । लङ्लिड्विषयेपि परत्वाद-

**इणो भाषायामिति ।** (कै)

पूर्वसूत्र एवेण्ग्रहणं कार्यमिति भावः ॥ भाष्ये

**अस्य पुनरिट् चेति ।** (भा)

द्वित्वे कृते एकादेशे तत्प्राप्तेरिति भावः ॥

**न विहन्यते ह्यस्येति ।** (भा)

अस्येटो निमित्तं द्विर्वचनेन न विहन्यते इत्यर्थः ॥ लकाराणां भावकर्मणोरपि सत्त्वेन तत्राप्यनूचानः स्यादतो भाष्ये

**कर्त्तरीति ॥** (भा)

---

कृतेपि स्थानिवद्भावेनैकादेशः स्यादिति वाच्यम् पूर्वमात्रस्य विधौ स्थानिवद्भावः न तु पूर्वपरविधौ । विधिग्रहणसामर्थ्यादित्युक्तत्वादिति दिक् ।

लुङ्त्तरेयं विधिर्भवतीति दर्शयति । 'उपागादिति' इणो गा लुङि गातिस्थाघुपाभूभ्य इति सिचो लुक् । 'उपैदिति' । अदादित्वाच्छपो लुक् आडजादीनामाटश्च । 'उपेयायेति' । तिपो णलि वृद्ध्यायादेशौ द्विर्वचनेचीति स्थानिवद्भावादिकारस्य द्विर्वचनम् अभ्यासस्यासवर्णे । 'अश्नातेरिति' । अश भोजने । 'नञ्पूर्वादिति' । तेनान्यपूर्वात्केवलाच्च न भवति । 'नाशीदिति' । तिपि सिचि नेटीति वृद्धिप्रतिषेधः आडजादीनामाटश्च नञा सह सवर्णदीर्घत्वम् । 'नाशेति' । तिपि णलि द्विर्वचने अत आदेरित्यभ्यासदीर्घः, नञा परेण च सवर्णदीर्घत्वम् । 'वचेरिति' । ब्रुवो वचिरित्यस्य तथा च लङ्यन्वब्रवीदित्युदाहरिष्यते, अन्ये तु वच परिभाषण इत्यस्यापि ग्रहणमिच्छन्ति । 'कर्त्तरीति' । न भावकर्मणोः । एतच्च निपातनाल्लभ्यम् । 'अन्ववोचदिति' वच उम् । 'अन्वब्रवीदिति' । ब्रुव ईट् । अनूवाचेति' । पूर्ववदभ्याससंप्रसारणम् ।

# लुङ् । ३ । २ । ११० ॥

भाष्ये

लुङ् लटोरिति । (भा)

तुल्यन्यायत्वाद् लटोऽप्युपन्यासः ॥

कालविशेषेति । (कै)

"अगमाम" इत्याद्युदाहरणेषु अनद्यतनरूपेत्यर्थः ॥

सतोऽप्यविवक्षेति । (भा)

सतामेव लोके सत्त्वेनाविवक्षया नञ्घटितप्रयोग इति भावः ॥

नन्वसतो विवक्षानिरूपणस्य प्रकृते नोपयोगोऽत आह

विवक्षेति ॥ (भा)

भाष्ये

लुङ् ॥ भूतार्थवृत्तेर्धातोर्लुङ् स्यात्। अभूत्। वसेर्लुङ् रात्रिशेषे जागरणसन्तताविति वाच्यम् ॥ रात्रेस्तुर्थे यामे यदा वाक्यं प्रयुङ्क्ते तदा अनद्यतनत्वाल्लङि प्राप्ते तन्निवृत्तये लुङुपसंख्यायते। क्व भवानुषितः।

"लुङ्"। इह भूतसामान्ये लुङ् विधीयते तस्य विशेषे ऽनद्यतने लङ्लिटावपवादौ तद्विषयेपि लुङ् दृश्यते, आगमामघोषात् अपामसोमं अमेयिमहि, पूतीकतृणेषु अभूत्रूपो विवुधसखः परन्तप इति चिरवृत्तं कथयतः प्रयुञ्जते, नैष दोषः, विशेषे सामान्यमस्ति तत्र विशेषाविवक्षायां सामान्याश्रयणेन वस्तुतोनद्यतनेपि लुङुपपद्यते तद्रूपविवक्षायामेव तु लुङ्लिटौ, विवक्षोपारूढो ह्यर्थः शब्दप्रयोगनिमित्तं न वस्तुतः सन्निति

**न्याय्ये प्रत्युत्थाने इति ।** (भा)

प्रत्युत्थानं जागरणं तत्समये प्रत्युत्थितं प्रबुद्धमित्यर्थः ॥ "प्रत्युपस्थितमिति" पाठेऽप्ययमर्थः ॥ प्रस्थितमिति क्वचित्पाठस्तत्रापि प्रबुद्धा प्रस्थितमित्यर्थः । स च रात्रेश्चतुर्थयाम एव तत्र स्मृत्या प्रबोधस्योक्तेः । तदाह

**रात्रेरिति ।** (कै)

अतिक्रान्तरात्रिप्रहरत्रयम् ॥

**जागरितवानिति ।** (कै)

एवं हि पूर्वतनस्य प्रत्युत्थितम् ।

**कश्चित्पृच्छतीति** (भा)

ग्रन्थस्यासङ्गतिः । स्वापं विना प्रत्युत्थानासम्भवात् । तस्माच्चतुर्थे यामे यदा जागरणसन्ततिरिति भाष्यार्थः । तत्र मुहूर्तमपि स्वापे लङेवेत्यर्थ इति केचित् ॥

---

अमुत्रावात्सम् । जागरणसन्तताविति किम् । यदा सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङो निवृत्तिर्मा भूत् । अमुत्रावसमिति ॥

गतमेतत् । 'वसेरिति' वस निवासे रात्रेश्चतुर्थे यामे पृष्टो यदा वाक्यं प्रयुङ्क्ते तदा तस्यातिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमिति लङ् प्रयोगे लुङ्वक्तव्यः, लङ्निवृत्तिपरं चैतत् लुङ् भूतसामान्यविवक्षया सिद्धः । 'जागरणसन्तताविति' । यदा प्रयोक्ता सकलमतिक्रान्तं रात्रिप्रहरत्रयं जागरितवान् तदा लुङ्प्रयोगः, यदा तु सुप्त्वा प्रबुध्य प्रयुङ्क्ते तदा लङ्प्रत्यय एवेत्यर्थः ॥

# अनद्यतने लङ् । ३ । २ । १११ ॥

**अनद्यतन इति ।** (भा)

यदि तत्पुरुषः पर्युदासस्तर्हि व्यामिश्रे दोषः । प्रसज्यप्रतिषेधेऽसमर्थसमासो भूतसामान्ये च स्यादत आह भाष्ये

**बहुव्रीहिनिर्देश इति ।** (भा)

तथा च अविद्यमानाद्यतनभूतकालार्थवृत्तेर्धातोर्लङित्यर्थः । एवं च व्यामिश्रेन भूतसामान्येऽपि नेति भावः ॥ गौणाधारत्वा श्रयणे बीजमाह

---

अनद्यतने लङ् ॥ नास्त्यद्यतनो यस्मिन् भूते तद्वृत्तेर्धातोर्लङ् । अभवत् । बहुव्रीहिव्याख्यानान्नेह । अद्य ह्यश्चाभुञ्ज्महि । परोक्षेऽपि लोकविज्ञाते

"अनद्यतने लङ्" ॥ अनद्यतन इति तत्पुरुषपक्षे पर्युदासस्तेद्व्यामिश्रेऽपि प्राप्नोति अद्य श्वो वा भुञ्ज्महि. भवति ह्यद्यतनानद्यतनसमुदायोऽद्यतनादन्यः, प्रसज्यप्रतिषेधं तु योऽत्राद्यतनस्तदाश्रया प्रतिषेधो भवति किं तु भूतसामान्ये प्राप्नोति भूतविशेषे हि प्रतिषेधः, न च सामान्यं विशेषो भवति, पर्युदासेऽप्ययन्दोषो द्रष्टव्यः, बहुव्रीहौ न विद्यतेऽद्यतनो यस्मिन् सोऽनद्यतनो भूतो धात्वर्थः, तत्र वर्तमानाल्लङ् भवति ततश्चाद्यतनसमुदायेऽद्यतनस्यैकदेशस्य सम्भवान्न भवति प्रसङ्गः, भूतसामान्येऽपि न भवत्येव विद्यते हि सामान्ये विशेषः, अतो बहुव्रीहिरेवायं युक्त इत्याह : 'अनद्यतन इति'। 'बहुव्रीहिनिर्देश इति', बहुव्रीहिणा विवक्षितार्थस्य प्रतिपादनं बहुव्रीहेर्वैयाकरणमित्यर्थः। यदि बहुव्रीहिनिर्देशः, एवं सत्यद्यतनं प्राप्नोति

**न तु तत्त्वत इति ।** (कै)

**कालस्यापीति ॥** (हरिः)

**यथा दिने मुहूर्त्त इति न च तावता मुहूर्त्तसमुदायातिरिक्तं दिनमस्तीत्यर्थः ॥**

**अनुगम्यते ।** (हरिः)

**प्रमाविषयो भवति ॥ भाष्ये**

---

सम्भावितप्रयोक्तृकर्तृकदर्शने लङ्वक्तव्यः ॥ लिटोपवादः । अरुणद्यवनः साकेतम् । लोकविज्ञाते किम् । चकार कटं देवदत्तः । सम्भावितेत्यादि

नह्यद्यतनेऽद्यतनो विद्यते, अद्यतनेपि मुहूर्त्तादिरद्यतनो विद्यते मुहूर्त्तादावपि क्षणादिः कथं व्यपदेशिवद्भावेन यथा मुख्ये भेदे आधाराधेयभावो भवति तटे तिष्ठतीति तथेहापि समुदायावयवभेदाश्रयेण समुदायेऽद्यतनेऽवयवा अद्यतनाः सन्तीत्यनद्यतनो न भवतीत्युच्यते न तु तत्त्वतोवयवव्यतिरिक्तोत्र समुदाय आधारोस्ति, तदुक्तं हरिणा ।

कालस्याप्यपरं कालन्निर्दिशन्त्येव लौकिकाः ।
न च निर्देशमात्रेण व्यतिरेकोनुगम्यते ॥

इति । 'अद्य ह्य इति' ॥ अद्य च ह्यश्चेत्यर्थः, गामश्वं पुरुषमजयमान इति वचशब्दस्याप्रयोगः । 'अभुक्ष्महीति' । भुजोनवन इत्यात्मनेपदं सहिङि लङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावः । चोः कुरिति कुत्वं गकारः, खरि चेति चर्त्वं ककारः, सिचः सस्य षत्वम् । 'परोक्षे चेत्यादि' । परोक्षशब्दोयमतीन्द्रियार्थे वर्त्तते लोकविज्ञाते लोकप्रसिद्धे प्रयोक्तुर्दर्शनविषये लङन्तस्य शब्दरूपस्य यः प्रयोक्ता तस्य दर्शनविषये लङ्वक्तव्यः, ननु विप्रतिषिद्धमिदं यदि परोक्षः कथन्दर्शनविषयः, अथ दर्शनविषयः कथं परोक्षः, शक्यदर्शनत्वाद्दर्शनविषयः कश्चिद्यासङ्गादननुभूतत्वात्परोक्ष

जघानेति । (भा).

कंसवधो हि नेदानीन्तनप्रयोक्तुर्दर्शनयोग्योऽपीत्यर्थः ॥ "अरुणदि"त्युदाहरणे तु तुल्यकालः प्रवक्तेति ध्येयम् ॥

---

किम् । कृष्णः कंसं जघान । नात्रेदानीन्तनस्य प्रयोक्तुर्दर्शनं सम्भाव्यते चिरातीतत्वात् । यस्तु कृष्णावतारसमकालः प्रयोक्ता स लङं प्रयुक्तवानेव । अहं कंसमिति ॥

इति विरोधाभावः । 'अरुणदिति' । रुधिर आवरणे रुधादित्वात् श्नम् तिपो हल्ङ्यादिना लोपः साकेतरोधस्तदानीं प्रयोक्तुर्दर्शनविषयः प्रत्यक्षदर्शनत्वात् लोकप्रसिद्धस्य कचिद्ग्रामकृतादननुभूतत्वात्परोक्षस्य । परोक्ष इति किम् । उदगादादित्यः, इणोलुङ्गादेशादिकार्यम् । 'लोकविज्ञात इति'। किं चकार कटन्देवदत्तः । प्रयोक्तुर्दर्शनविषय इति' । किं जघान कंसं किल वासुदेवः । हन्तेः परोक्षे लिट् द्विर्वचनम् अभ्यासाच्चेति कुत्वं हकारस्य घकारः कंसवधश्चिरकालान्तरवृत्तत्वादिदानीं प्रयोक्तृदर्शनविषयो न भवति यस्तु कंसवधेन तुल्यकालः प्रयोक्ता स लङमेव प्रयुक्तवान् आहन कंसं वासुदेव इति, मूलोदाहरणेऽपि प्रयोक्ता साकेतरोधेन तुल्यकालो वेदितव्यः, तस्यैव ह्यसौ दर्शनविषयो नान्यस्य ॥

'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति' ।

---

१ पातञ्जल—यो—सू ॥ १ । ९ ॥

२ स न प्रमाणोपारोही । न विपर्ययोपारोही च । वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते । तद्यथा चैतन्यं पुरुषस्य रूपमिति । यदा चितिरेव पुरुषस्तदा किमत्र केन व्यपदिश्यते । भवति च व्यपदेशेवृत्तिः । यथा चैत्रस्य गौरिति । तथा प्रतिसिद्ध वस्तुधर्मो निष्क्रियः पुरुषः, तिष्ठति बाणः स्थास्यति स्थित इति, गति निवृत्तौ धात्वर्थमात्रं गम्यते । तथाऽनुत्पत्तिधर्मा पुरुष इति उत्पत्तिधर्मस्याभावमात्रमवगम्यते न पुरुषान्वयी धर्मः । तस्माद्विकल्पितः स धर्मस्तेन चास्ति व्यवहार इति ॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः । ननुशब्दज्ञानानुपाती चेदागमप्रमाणान्तरगतो विकल्पः प्रसज्येत निर्वस्तुकत्वे वा विपर्ययः स्यादित्यत आह स नेति । न प्रमाणविपर्ययान्तर्गतः । कस्माद् यतो वस्तुशून्यत्वेऽपीति प्रमाणान्तर्गतिं निषेधति । शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्ययान्तर्गतिम् । एतदुक्तं भवति—क्वचिदभेदे भेदमारोपयति क्वचित् पुनर्भिन्नानामभेदम् । ततो भेदस्याभेदस्य च वस्तुनोऽभावात्तदाभासो विकल्पो न प्रमाणं नापि विपर्ययो व्यवहाराविसंवादादिति । शास्त्रप्रसिद्धमुदाहरणमाह—तद्यथेति । किं विशेष्यं केन व्यपदिश्यते विशेष्यविशेषणभावो नहि गवा गौर्विशेष्यते । किन्तु भिन्नेनैव चैत्रेण । तदिदमाह—भवति च व्यपदेशे वृत्तिः । व्यपदेश्यव्यपदेश्ययोर्भावो व्यपदेशः । विशेषणविशेष्यभाव इति यावत् । तस्मिन् वृत्तिर्वाक्यस्य यथा चैत्रस्य गौरिति । शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति—तथेति । प्रतिसिद्धो वस्तुनः पृथिव्यादेर्धर्मः परिस्पन्दो यस्य स तथोक्तः । कोऽसौ निष्क्रियः पुरुषः । न खलु सांख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः । क्वचित्पाठः प्रतिषिद्धा वस्तुधर्मा इति । तस्यार्थः—

पातञ्जलोक्तेः। समूहस्य वर्त्तमानत्वं तु प्रारब्धापरिसमाप्तत्वमुक्तमेव सदपि बौद्धमेव तस्य। अनेकक्षणसमूहात्मकं तदात्मकत्वेन प्रसिद्धं क्रियाप्रबन्धरूपं तत्त्वेन च प्रसिद्धमविचारितक्षणमेव बुद्ध्या विषयीकृत्वेत्यर्थः। अन्यथा पूर्वं सर्वथावर्त्तमानकालाभावस्योक्तत्वेन तमसाध्येवेद्युयोक्तेरसङ्गत्वापत्तेः। एवं वास्तववर्त्तमानक्रियाभाव-

प्रतीषेधव्याप्ताः प्रतिषिद्धा न वस्तुधर्माणां तद्याप्यता भावाभावयोरसम्ब न्धादथ च तथा प्रतीतिरिति। लौकिकमुदाहरणमाह—तिष्ठति वाण इति। तथाहि पचति भिनत्तीत्यत्र पूर्वापरीभूतः कर्मक्षणप्रचय एकफलावच्छिन्नः प्रतीयत एवं तिष्ठतीत्यत्रापि। पूर्वापरीभावमेवाऽऽह—स्थास्यति स्थित इति॥ ननु भवतु पाकवत् पूर्वापरीभूतयाऽवस्थानक्रियया वाणाद्भिन्नया वाणस्य व्यपदेश इत्यत आह—गति निवृत्तौ धात्वर्थमात्रं गम्यते। गति निवृत्तिरेव तावत् कल्पिता तस्या अपि भावरूपत्वं तत्रापि पूर्वापरीभाव इत्यहो कल्पना परम्परेत्यर्थः। अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते न पुनः पुरुषव्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह—तथानुत्पत्तिधर्मेति। प्रमाणविपर्ययाभ्यामन्या न विकल्पवृत्तिरिति वादिनो बहवः प्रतिपेदिरे। तत्प्रतिबोधनायोदाहरणप्रपञ्च इति मन्तव्यम्॥ ९॥

यदि हि गन्तृगमनयोरन्यत्वं स्यात्तदा गमननिरपेक्षो गन्ता स्यात् गन्तृनिरपेक्षं च गमनं गृह्यते। पृथक् सिद्धं घटादिव पटः। न च गन्तुः पृथक् सिद्धं गमनं गृह्यत इति। अन्य एव पुनर्गन्तागतेरिति न युज्यत इति प्रसाधितमेतत्तदेवम्।

एकीभावेन वा सिद्धिर्नैकीभावेन वा ययोः।
न विद्यते तयोः सिद्धिः कथं नु खलु विद्यते॥ इति।

मङ्गीकृत्यानुमितबौद्धसमूहरूपक्रियां तद्वर्त्तमानत्वं च बौद्ध-माश्रित्य प्रयोगानुपपादना इदानीं वास्तववर्त्तमानक्रियां तत्तत्-क्षणवर्त्तिनीं योगिप्रत्यक्षप्रमाणिकामाश्रित्य समाधत्ते

**अपर आह । अस्तिवर्त्तमानः**

**काल इति ।** (भा)

क्रियाक्षणं त्रिक्षणावस्थायित्वादिति भावः ॥

---

नास्ति गन्तृगमनयोः सिद्धिरित्यभिप्रायः । अत्राह इह देवदत्तो गन्ता गच्छतीति लोकप्रसिद्धं तत्र यथा वक्ताभावं भाषते कर्त्ता क्रियां करोतीति प्रसिद्धमेवम् । यया गत्या गतिरभिव्यज्यते तां गच्छतीति न यथोक्तदोषः । तदप्यसत् । यस्मात् ।

गत्या ययोच्यते गन्ता गतिन्तां स न गच्छति ।

यया गत्या देवदत्तो गच्छतीति अभिव्यज्यते । स गन्ता संस्तावन्न गतीः प्राप्नोति यदि वा न करोतीत्यर्थः । यस्मान्न गती पूर्व्वोऽस्ति । गतेः पूर्वो गतिपूर्व्वः । यदि गन्तागतेः पूर्वसिद्धः स्यात् स तां गच्छेत् कथम् । यस्मात् कश्चित् त्वं विद्धि गच्छेति । कश्चिद्देवदत्तः किञ्चिदर्थान्तरभूतं ग्रामं नगरं वा गच्छतीति दृष्टः । न चैवं यया गत्या गन्तेत्युच्यते । तस्याः पूर्व्वं सिद्धिरूपो गतिनिरपेक्षो गन्ता नामास्ति यस्तां गच्छेत् ।

अथ मन्यसे यया गत्या गन्तेत्यभिव्यज्यते तामेवासौ न गच्छति । किन्तर्हि ततोऽन्यां गतमिति । एतदप्यसद् यस्मात् ।

गत्या ययोच्यते गन्ता ततोऽन्यः स न गच्छति ।

गती द्वे नोपपद्येते यस्मादेकः प्रगच्छति ॥

यया गत्या गन्ताभिव्यज्यते न त्वन्यामपि स गन्ता सन्न गच्छति । गतिद्वयप्रसङ्गात् । यया गत्या गन्ताभिव्यज्यते गन्ता स न यां चापरां

**आदित्यगतिवन्नोपलभ्यते । (भा)**

प्रत्यक्षेणेति शेषः ॥ क्रियाप्रत्यक्षत्वाभिमानिनो यथा दूरत्ववशाद्गतिरनुमेया तथातिसूक्ष्मकालावच्छिन्नत्वादेकैकक्षणावच्छिन्ना क्रियाप्यनुमेयैवेति भावः ॥ ननु कार्य्येणोत्तरदेशसंयोगादिना एकैकक्षणवर्त्यतिसूक्ष्मवर्त्तमानक्रियायाः कथमनुमानमत आह भाष्ये

गच्छतीत्येतद्गतिद्वयं प्रसक्तं न चैकस्मिन् गन्तरि गतिद्वयमित्ययुक्तमेतत् । एतेन वक्ता वाचं भाषते कर्त्ता क्रियां करोतीति प्रयुक्तम् । तदेव ।

सद्भूतो गमनं गन्ता त्रिप्रकारं न गच्छति ।
नासद्भूतोऽपि गमनं त्रिप्रकारं स गच्छति ॥

गमनं सद्भूतः त्रिप्रकारं न गच्छति । तत्र गम्यत इति गमनमिहोच्यते । तत्र सद्भूतो गन्ता यो गमि क्रियायुक्तः असद्भूतो गन्ता यो गमि क्रियारहितः । सदसद्भूतः य उभयपक्षीयरूपः । एवं गमनमपि त्रिप्रकारं गमिक्रियासम्बन्धेन वेदितव्यम् । तत्र सद्भूतः गन्ता सद्भूतमसद्भूतं सदसद्भूतं त्रिप्रकारं गतं न गच्छति । एतच्च कर्मकारक परीक्षायामाख्यास्यते । एवमसद्भूतोऽपिगन्ता त्रिप्रकारगमनं न गच्छति । सदसद्भूतोऽपीति तत्रैव प्रतिपादयिष्यति । यतश्चैवं गन्तृगन्तव्यगमनानि विचार्यमाणानि न सन्ति ॥

तस्माद्गतिश्च गन्ता च गन्तव्यं च न विद्यते ॥

अत्र नैयायिकाः ।

वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥

वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा तत्संयुक्तः कालः, पतितकालः, योऽधस्तात् स पतितव्योऽध्वा तत्संयुक्तः कालः पतितव्यकालः, नेदानीं तृतीयोऽध्वा वर्त्तते यत्र पततीति वर्त्तमानः कालो गृह्येत, तस्माद्वर्त्तमानः कालो न विद्यते इति ॥

तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥

**अपि चेति ।** (भा)

**विप्रदाहे कालदाहवत् कारकसन्निपाते विज्ञप्तिः । एकैक-क्रिया यद्यपि न लक्ष्यते तथापि त्रिभावा योगिनस्तामस्तीति वेदयन्ते इत्यर्थः । अनेन योगिप्रत्यक्षं प्रमाणं दर्शितम् ॥ नन्वस्म-दादिव्यवहारः कथमत आह**

नाध्वव्यङ्ग्यः कालः, किन्तर्हि क्रियाव्यङ्ग्यः पततीति यदापतनक्रिया व्युपरता भवति स कालः पतितः कालः, यदोत्पत्स्यते स पतितव्यकालः यदा द्रव्ये वर्त्तमाने क्रिया गृह्यते स वर्त्तमानः कालः । यदि चायं द्रव्ये वर्त्तमानं पतनं न गृह्णाति कस्योपरमसुत्पत्स्यमानतां वा प्रतिपद्यते पतितः काल इति भूताक्रिया, पतितव्यकाल इति चोत्पत्स्यमाना क्रिया, उभयोः कालयोः क्रियाहीनं द्रव्यमधःपततीति क्रियासम्बन्धं सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णाति वर्त्तमानः कालस्तदाश्रयौ चेतरौ कालौ तदभावे न स्याता-मिति । अथापि ॥

नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥

यद्यतीता नागतावितरेतरापेक्षौ सिद्ध्येताम्, प्रतिपद्येमहि वर्त्तमान-विलोपम् । नातीतापेक्षाऽनागतसिद्धिः । नाप्यनागतापेक्षा अतीतसिद्धिः कया युक्त्या केन कल्पेनातीताः कथमतीता नागतयोरिति नन्नोपपद्यते विशेषहेत्वभावात् । दृष्टान्तवत् प्रतिदृष्टान्तोऽपि प्रसज्यते । यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिद्ध्येते एवमतीतानागताविति नेतरेतरापेक्षा कस्यचित् सिद्धिरिति । यस्मादेकाभावेऽन्यतराभावादुभयाभावः । यद्ये-कस्यान्यतरापेक्षासिद्धिरन्यतरस्येदानीं किमपेक्षा यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा एवमेकस्याभावेऽन्यतरन्न सिद्ध्यतीत्युभयाभावः प्रसज्यते । अर्थसद्भावव्यङ्ग्यश्चायं वर्त्तमानः कालः विद्यते द्रव्यं विद्यते गुणः विद्यते कर्म्मेति । यस्य चायं नास्ति तस्य ॥

**सूक्ष्मो हीति ।** (भा)

**समूहान्यथानुपपत्तिर्वर्त्तमाने लडिति शास्त्रं च तदनुमापकमिति भावः ॥**

**एकैकक्षणग्रहणे ।** (कै)

**एकैकक्षणस्य वर्त्तमानग्रहणेन ग्रहणे तत्क्षणावच्छेदेन क्रियावेशलक्षणाविकृतिः प्रत्यक्षेण न लक्ष्यते इत्यक्षरार्थः ॥ नन्वेकैकक्षणस्य सूक्ष्मत्वेऽपि समूहः प्रत्यक्षः स्यादत आह**

---

वर्त्तमानाभावे सर्व्वाग्रहणमप्रत्यक्षानुपपत्तेः ॥

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम् न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते ; न चायं विद्यमानं सत्किञ्चिदनुजानाति प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्वन्नोपपद्यते प्रत्यक्षानुपपत्तौ च तत्पूर्व्वकत्वात् अनुमानागमयोरनुपपत्तिः । सर्व्वप्रमाणविलोपे सर्व्वग्रहणं न भवतीति । उभयथा च वर्त्तमानः कालो गृह्यते क्वचिदर्थसद्भावव्यङ्गः । यथा द्रव्यमिति, क्वचित् क्रियासन्तानव्यङ्गः । यथा पचति छिनत्तीति, नानाविधाचैकार्था क्रिया क्रियासन्तानः क्रियाभ्यासश्च नानाविधा चैकार्थाक्रिया-पचतीति स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोपसर्पणमग्न्यभिज्वालनं दर्वीघटनं मण्डस्रावणमधोऽवतारणमिति । छिनत्तीति क्रियाभ्यास उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते । यच्चेदं पच्यमानं क्रियमानञ्च तत्क्रियमाणं तस्मिन् क्रियमाणे ॥

कृतताकर्त्तव्यतोपपत्तेस्तूभयथाग्रहणम् ॥

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतःकालः पक्ष्यतीति । प्रयोजनावसानः क्रियासन्तानोपरमोऽतीतः कालोऽपाक्षीदिति । आरब्धक्रियासन्तानो वर्त्तमानः कालः पचतीति । तत्र या उपरता सा कृतता, या

अनेकेति। (कै)

एवं चावयवरूपा समुदायरूपा च क्रिया अनुमानगम्यैव इति तात्पर्य्यम्। तत्र पक्षेऽनुमितैकैकक्षणवृत्तिक्रियानुमानरूपां धात्वर्थसमूहरूपारोपेण वर्त्तमानप्रयोग इत्याशय इति दिक्॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयस्य द्वितीये द्वितीयमाह्निकम्॥

---

चिकीर्षिता साकर्त्तव्यता, या विद्यमाना सा क्रियमाना। तदेवं क्रियासन्तानस्यस्त्रैकाल्यसमाश्रयः पचति पक्ष्यन् इति वर्त्तमानग्रहणेन गृह्यन्ते क्रियासन्तानस्य ह्यत्राविच्छेदो विधीयते नारम्भो नोपरम इति सोऽयमुभयथा वर्त्तमानो गृह्यते। अपवृक्तो व्यपवृक्तश्च। अतीतानागताभ्यां स्थितिव्यङ्गो विद्यते इत्यमिति क्रियासन्तानविच्छेदाभिधायी च त्रैकाल्यान्वितः पचति छिनत्तीति। अन्यश्च प्रयासस्ति प्रभृतेरर्थस्य विवक्षायां तदभिधायी सङ्ग्रहप्रकारो लोकेषु उत्प्रेक्षितव्यः तस्मादस्ति वर्त्तमानः काल इति॥

महाभाष्यप्रदीपोद्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।



कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# लटः शतृशानचावप्रथमासमानाधिकरणे ॥ ३ । २ । १२४ ॥



भाष्ये

लस्य (भा)

इत्यादि समानाधिकरणेनाप्रथमान्तेन लवाच्यस्य कारकस्यायोगादित्यर्थः ॥

ननु पचन्तं देवदत्तं पश्यत्यादौ तत्सामानाधिकरण्यमस्त्येवेत्यत आह

इहेति ॥ (कै)

गुणभूते इति । (कै)

"[1]क्रियाप्रधानमाख्यातम्" (भा)

इति सिद्धान्तादिति भावः ॥

---

१ तथाच यजुः प्रातिशाख्ये—कात्यायनः —

क्रियावाचकमाख्यातम्
उपसर्गो विशेषकृत् ।
सत्त्वाभिधायकं नाम
निपातः पादपूरणः ॥

एवं च बृहद्देवतायाम्—शौनकः —

क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥

एवं चात्रयास्कः —

भावप्रधानमाख्यातम् ॥

तद्यत्रोभे भावप्रधाने भवतः । पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति । पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् ।

नामपदवाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः । पाक याग त्यागाख्यः । स यत्र प्रधानं गुणभूता क्रिया । तदिदं भावप्रधानम् । किं पुनस्तदिति । आख्यातम् ॥ आख्यायतेऽनेन गुणभावेन अनेक कारक-प्रविभक्ता स्वकमाणेव प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रिया । तस्याश्च प्राधान्येन प्रवर्त्तमानो भावः स्वात्मलाभप्रधान इत्याख्यातः ॥

आह । कथं पुनर्गुणभूता क्रियेति ? उच्यते । तदर्थत्वात् । तदर्था हि सा । भावार्था भावसिद्ध्यर्थमात्मलाभमनुभूयकारकेषु तण्डुलादौ पाकाख्यं भावमभिनिष्पाद्यावसितप्रयोजनेकदेश एव निरो भवति । यस्य च यदर्थं

आत्मलाभस्तत्तद्गुणभूतं भवति। भावमिद्धार्थस्य क्रियाया आत्मलाभस्त स्मादगुणभूतेति गम्यते। भावमिद्ध्यैव चानुमीयते क्रिया परोक्षापि सती॥

आह। कथं पुनः परोक्षा क्रियेति? उच्यते। नहि सेन्द्रियाणा मन्यतमेन स्वरूपस्था सती कदाचिदपि सन्निकृष्यते। किं तर्हि? तदवसाने योऽभिनिष्पद्यते भावः। तेन लिङ्ग्यते। नूनमभिनिर्वृत्ता क्रिया यथा भावोऽयमभिनिष्पादित इति। नाभिनिर्वृत्ता चेदभविष्यद् यथैव सा क्रिया निर्वृत्तेर्नाभवदयं भावः। एवं साम्प्रतमपि नाभविष्यत्। अस्ति चायम्। तस्मादभिनिर्वृत्ता क्रियेत्येवमनुमीयते तदेतदाख्यातं क्रिया वाचकमपि सद्भावार्थत्वात् क्रियाया भावं प्रधानमुच्यत इति एवमेके मन्यन्ते। एके पुनर्भावप्रधानमाख्यातमिति प्रकृत्यर्थप्रधानमिति मन्यन्ते। प्रकृत्यर्थविशेषणं हि प्रत्ययार्थादय इति। भावः। कर्म। क्रिया। धात्वर्थः। इत्यनर्थान्तरम्। स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम्। किं पुनस्तत्? आख्यातम्। आख्यायन्ते स्मै पन्नगंमकानि क्रियागुणभावेन वर्त्तमानान्यनेन क्रिया च तेषामुपरि प्राधान्येन वर्त्तमाने त्याख्यातम्॥

आह। कथं पुनरत्र क्रियायाः प्राधान्यमिति? उच्यते। स ह्यत्रशब्दवाच्या। अर्थगृहीतानि तत्साधनानीति। अतः प्राधान्यमत्र क्रियायाः। इतश्च प्राधान्यम्। कुतः? विशेषप्रत्ययाधानात्। पचतीति प्रथमपुरुषैकवचनान्ते आख्यातशब्दो वर्त्तमानकालकर्तृविषयो यत्किञ्चि- दविवक्षितविशेषमेव पक्त्रादिसाधनमात्मन आश्रयभावेनोपलक्षयन्ननेक क्रिया शक्तिमत्यपि पक्त्रादौ साधने पचिक्रियायामेव विशेषप्रत्ययमा- दधाति। नान्यास क्रियासु। नापि विशिष्टे पक्त्रादौ साधने। यस्य यस्मिन्नर्थे विशेषेण वर्त्तते शब्दः। स एव तस्य प्रधानम्। विशेषेण च क्रियायामाख्यातशब्दो वर्त्तते। गुणभावेन कारके। तस्माद्विशेषप्रत्यया-

धानाद्भावप्रधानमाख्यातमित्युपपन्नम् । अपि च क्रियाव्यापारविज्ञानपरतया पृष्टः— 'किं करोति देवदत्तः'?' क्रियाख्यानपरतयैव प्रत्याचष्टे— 'पचतीति' । नत्वोदनमिति पूर्वमुक्त्वा ततः पचतीति ब्रवीति ॥

अथ कथमुच्यते भावप्रधानमाख्यातमिति । पृच्छा । अमूर्त्ता हि क्रिया निरुपाख्या । सा हि कारकैरभिव्यज्यमाना कारकशरीरे च सन्ती शक्यते निर्दिष्टुम् । इतरथा हि अशरीरा सती सा न गृह्येत । अग्रहणे च सति कथमिव निर्दिश्येत । तन्नैवं सति कारकसमूहेनाभिव्यज्यमाना क्रिया यस्मिन्साधने विशिष्टमात्मीयं कार्य्यमारभते पाकाख्यं तदभिधानशब्दोपपदैव साक्षाद्ग्रहणासम्भवान्निर्दिश्यते । न ह्यनाश्रिता कदाचिदपि गृहीतपूर्वाकृतिरिति साक्षाद्ग्रहणासम्भवः । तस्मादोदनकर्म्मकार्या देवदत्तकर्तृकौदनशब्दोपपदैव निर्दिश्यते । ओदनं पचति देवदत्त इति । तत्राविवक्षितस्वार्थ ओदनशब्दः । अपि च क्रियाव्यापारपिपृच्छिषयैव पृष्टः— किं करोतीति । क्रियाव्यापारमात्रमेव प्रत्याचष्टे—पचतीति । ततः किमिति पर्य्यनुयुक्ते शब्दान्तरेणापाकरोति देवदत्त ओदनमिति । तस्माच्छब्दान्तरवाच्यत्वात् साधनस्य पचतीत्यत्र क्रियैव प्रधानमित्युपपन्नम् । यत्पुनरेतदुक्तमोदनमिति पूर्वमुक्त्वेति । तत्र ब्रूमः । स हि पर्य्यनुयुयुक्षां साधनगतां भाविनीमाशङ्कमानः पर्यनुयोगमात्मनो बुद्ध्यावस्थाप्य तदपाकरणार्थमोदनमिति पूर्वं ब्रवीत्येवं तत्रापि द्रव्यविशेषपरिज्ञानार्थो द्वितीयः पर्य्यनुयोगोऽनुक्तो द्रष्टव्यः । तस्मात् पचतीति शब्दवाच्यत्वादत्र क्रियायाः शब्दान्तरवाच्यत्वाद् द्रव्यस्य क्रियैव प्रधानमिति । इतश्च न द्रव्यप्रधानमाख्यातम् । एकस्मिन् वाक्ये द्वयोराख्यातयोरसमवायात् । पचतिपठतीत्युभयोः प्राधान्यादितरेतरेण समवायो नास्ति । न हीतरः शब्द इतरत्र गुणो भवति । द्रव्यशब्दे च समवायात् । समवैति द्रव्यशब्देनाख्यातशब्दः । पचति देवदत्त इत्युक्ते पचिक्रिया गुणभूतो लक्ष्यते देवदत्तः । तस्मादुपपन्नं भावप्रधानमाख्यातमिति । अपि चोक्तम् ।

क्रियावाचकमाख्यातं लिङ्गतो न विशिष्यते ।
त्रीनत्र पुरुषान् विद्यात्काल तस्तु विशिष्यते ॥

तत्पुनरेतच्चतुः प्रभेदमाख्यातं भवति । कर्त्तरि । भावे । कर्म्मणि । कर्म्मकर्त्तरि चेति । पचतीति कर्त्तरि । भूयते । पच्यते इति भावकर्म्मणोः । पच्यते स्वयमेवेति कर्म्मकर्त्तरि । चतुर्ष्वप्यविवक्षितावयवार्थानि द्रव्याण्यप्रधानानीति क्रिया एव प्रधानम् । तामभिदधत् तयैव लक्ष्यमाणं आख्यातसंज्ञो भवतीत्युक्तम् ॥

एवं च ।

षड्भावविकारा भवन्तीति [1]वार्ष्यायणिः ।

जायते । अस्ति । विपरिणमते । वर्द्धते । अपक्षीयते विनश्यतीति ॥ जायते इति । पूर्वभावस्यादिमाचष्टे । नापरभावमाचष्टे । न प्रतिषेधति ॥ अस्ति इति । उत्पन्नस्य सत्त्वस्यावधारणम् ॥ विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् । वर्द्धत इति स्वाङ्गाभ्युच्चयं सांयौगिकानां वार्थानां वर्द्धते विजयेनेति वा, वर्द्धते शरीरेणेति वा । अपक्षीयत इत्यनेनैव व्याख्यातः प्रतिलोमम् । विनश्यतीत्यपरभावस्यादिमाचष्टे, न पूर्वभावमाचष्टे, न प्रतिषेधति ॥ अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह । ते यथावचनमभ्यूहितव्याः ॥

क्रियेति— यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥
गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥

[1] वार्ष्यायणिः— "तिकादिभ्यः फिञ्" । ४ । १ । १५४ ॥ अपत्येऽर्थे फिञ् वर्ष्यशब्दात् ॥

भूवादि (पा-अ १ । पा ३ । सू १ ।) सूत्रस्थभाष्यार्थप्रतिपादकहरिग्रन्थात् । क्रमजन्मनामेषां व्यापाराणां समूहं प्रतिगुणभूतैस्तत्तद्रूपेण भासमानैरवयवैर्युक्तः संकलनात्मिकयैकत्वबुद्ध्या प्रकल्पिताभेदरूपः समूहः क्रियेति व्यवह्रियत इति द्वितीयकारिकार्थः । अत्रावयवाश्रयं पौर्वापर्यं समुदायाश्रयमेकत्वम् । एतेन पूर्वापरीभूतक्षणसमूहस्य युगपदसंनिधानादेकाक्रियेति भाष्यासङ्गतिरित्यपास्तम् । क्षणानश्वराणामवयवानां वस्तुभूतसमुदायाभावाद्बुद्ध्येत्युक्तम् । पचति पश्यतीत्यादावसिद्धमपाक्षीदित्यादौ सिद्धं वा साध्यत्वेन तत्प्रकारेणाभिधीयमानं क्रियां आश्रितेति योगप्रदर्शनं क्रियतेऽवयवानां क्रमेणोत्पत्त्या अत एवाश्रितक्रमरूपा क्रियेत्याद्यर्थः । एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः । आरोपे च प्रतीतिरेव बलम् । अध्यासगृहीतयैव क्रिययाख्यातस्य संबन्धग्रहो बोध्यः । न चैवं धात्वर्थस्य गौणत्वापत्तिः । तदतिरिक्तमुख्यार्थप्रसिद्ध्या तस्य गौणत्वाभावात् । यस्य हि मुख्योऽन्योऽर्थोऽस्ति तत्रैवेदृशस्य गौणत्वात् । यद्वा तादृशानेकव्यक्तिवृत्तिजातिरेव क्रिया । व्यक्तिद्वारकं च तस्याः साध्यत्वम् । स्फोटवदस्याः क्रमवद्भिरपि क्रियाक्षणैरभिव्यक्तिः । फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानम् । अत एव तन्मात्र वाचकस्य धातुत्वसिद्धिः । अत्र केचित् । सिद्धत्वं क्रियाकाङ्क्षोत्थापकतावच्छेदकं यद्वैजात्यं तद्रूपम् । साध्यत्वं च पूर्वापरीभूतावयवत्वसमानाधिकरणं कारकान्वयादियोग्यतावच्छेदकं क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं च यद्वैजात्यं तद्रूपम् । हिरुगाद्यव्ययानां क्रियाप्रधानत्वव्यवहारस्तु क्रियामात्रविशेषणत्वात् । स्वरादीनां तु स्वःपतिरित्यादौ नामार्थेऽप्यन्वयः । अत एव न हिरुगाद्यर्थे कारकाणामन्वयः । तेषां क्रियान्तराकाङ्क्षासत्त्वात् । तत्र सिद्धत्वं पाक इत्यादौ घञादि बोध्यम् । साध्यत्वं तु सर्वत्रैव धातुप्रतिपाद्यम् । न च धातुतः क्रियान्तराकाङ्क्षानु-

व्यापकतावच्छेदकवैशिष्ट्येनोपस्थितौ कृष्णां नमेच्चेत् सुखं यायादित्यादावाकाङ्क्षाभावेनान्वयो न स्यादिति वाच्यम्। चेच्छब्दसमभिव्याहारेणाकाङ्क्षोत्थापनादित्याहुः। वस्तुतः साध्यत्वं निष्पाद्यत्वमेव तद्रूपेणैव च बोधः। स्पष्टं चेदमुपपदमतिङ् (पा २ । २ । १९ ।) सुटकात्पूर्वः (पा ६ । १ । १३५ ।) इत्यादौ भाष्ये। यद्यपि घटं करोतीत्यादौ घटस्यापि साध्यमानत्वं प्रतीयते। तथापि पदान्तरसमभिव्याहारात्तथा। स्वतस्तु घटादिपदाद्द्रव्यसिद्धत्वेनैव प्रतीयते। सिद्धत्वं च स्वस्वरूपेण बोध्यम्॥ यद्यपि क्रियापि तथा तथापि शब्दशक्तिस्वभावात् स्थूलरूपेण साध्यत्वेनैव तस्याः प्रतीतिः। द्रव्यस्य तु सूक्ष्मरूपेण सिद्धत्वेनैवेति न दोषः। पचति भवति भुङ्क्त्यादौ भवति भुङ्क्त्यादीनां क्रियाकाङ्क्षादर्शनेन तादृशवैशिष्ट्येनाभानात्कारकाद्यन्वयानापत्तिर्धातुत्वानापत्तिश्च। एवं कृष्णां नमेच्चेदित्यादौ चेत्पदेनापि तथाकाङ्क्षायां तद्वैशिष्ट्येनाभानाद्दोष एव। किं ह्यगित्यादेश्च न साध्यत्वेन भानमिति न कारकान्वय इति दिक्। तत्र फलानुकूलः फूत्कारादिर्व्यापारः समूहघटकः फूत्कारत्वाधःसंतापनत्वादितत्तद्रूपेणैव वाच्यः प्रागुक्तहरिकारिकाभ्यां तत्तद्रूपेणैव बोधलाभात्। अत एव देवदत्तः पचतीत्युक्ते स फूत्कारादिमान्नवेति संदेहो न। नानार्थत्वमिष्टमेव। तत्र यदा यो वक्तृबुद्धिस्थस्तदा स वाच्यः। अत एव काष्ठानि पचन्तीति सिद्धम्। तद्व्यापारस्य धात्वर्थत्वाविवक्षायां काष्ठैः पचतीति शक्यतावच्छेदकं तु पचित्वादिकम्। धातुत्वं तु न अतिप्रसक्तत्वात्। धातुत्वाद्यज्ञानतोऽपि बोधाच्च। एतेन धातुत्वेन धातुमात्रस्य क्रियात्ववतिशक्तिस्तत्तद्रूपेण च तत्तद्रूपावच्छिन्नबोधकत्वमित्यपास्तम्। गौरवात्। तादृशशक्तिग्रहस्यादृष्टमात्रार्थत्वाच्च फूत्कारे एव गृहीतशक्तिकस्य व्यञ्जनेन वह्निप्रज्वालनदशायां पचतीति नेष्टमेव। फूत्कारातिरिक्ते विक्लित्त्यनुकूलव्यापारे तथापि तदिष्टमेव। याग इच्छा ज्ञानं चेति वादिविप्रतिपत्तिरपि

क्षीयक्षीयतावृद्धबोधानुसारादेवोपपन्ना। धातूनामनेकार्थत्वात् कदाचित् क्रियात्वेन बोधोऽपि फुत्कारस्यातीतत्वमात्रेणापाद्यौदिति तु भूतत्वादेः समुदाये एवान्वयात्। अस्ति भवति विद्यतीनामर्थः सत्ताऽनेककाल-स्थायिनीति कालगतपौर्वापर्य्येण क्रमवतीति तस्याः क्रियात्वम्। तदुक्तं हरिणा—

आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम्।
पौर्वापर्य्यादिरूपेण प्रविभक्तमिवस्थितम्॥

अस्याः क्रियायाः। यत्र क्रियायां कालदर्शनं कालगतपौर्वापर्य्यस्य तत्रारोप इति हेलाराजः। यद्वा सत्ताविषयव्यापारार्थकत्वेन क्रिया वाचकत्वनिबन्धनधातुत्वसिद्धिः। सत्ता चाऽऽयमष्टाद्भावविकारादनुस्यूतं यद्रूपं सदिति प्रत्ययवेद्यं तत् तद्विषयव्यपारास्वात्मभरणस्वरूपधारणपदाभ्या-मुच्यते। आत्मस्वरूपे च सत्त्वैव सा चात्रस्थूलसूक्ष्मरूपात्मिका। म्रियतौ तत्यागानुकूलव्यापारस्येवात्र तद्वैपरीत्येन तद्धारणानुकूलव्यापारस्य प्रतीतेः। स्पष्टं चेदं भूवादि (पा १। ३। १।) सूत्रे भाष्ये। तदुक्तं निरुक्ते। षड्भावविकारा भवन्तीति वार्ष्यायणिः। जायते। अस्ति। विपरिणमते। वर्द्धते। अपक्षीयते। विनश्यतीति। जायते इति पूर्व-भावस्यादिमाचष्टे, नापरभावमाचष्टे, न प्रतिषेधति। अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणमिति। भावस्य निरुपपदभावशब्दवाच्यस्य जगत्कारणस्य सत्तारूपब्रह्मणो निष्क्रियस्यापि षड़ेते विकारा इव विकारा माया सहकारेण क्रियारूपा विवर्त्ताः। अन्यत्र प्रधानादिस्त्वप्रधानभाव इत्यादि-रीत्या सोपपदभावशब्दप्रयोगः। दृश्यते च भारते याज्ञवल्क्यं प्रति रवि-वाक्ये प्रयोगः।

सांतत्यं शतपथं चैव त्वं प्रणेष्यसि वै द्विज।
तस्यान्ते च पुनर्भावे बुद्धिस्तव भविष्यतीति॥

जायते इति च षड्भावेषु पूर्वस्य जनेरादिमित्युपलक्षणमुपक्रम-प्रभृत्यपवर्गपर्यन्तं जात इति व्यवहारं यावद्भावमाचष्टे तदापरं भाव-मस्त्याख्यमसतो जन्मायोगाद्विद्यमानमपिनाचष्टे शब्दशक्तिस्वभावात्। नापि प्रतिषेधति निरालम्बनं जायत इत्यनापत्तेः। अस्तीति चोत्पन्नस्य सत्त्वस्य सत्तावत्त्वात् स्थूलरूपस्यावधारणं धारणमाचष्टे इति तद्भाष्य-कृतः। भावना फलयोरेकनिष्ठत्वाच्च गच्छतीत्यादाविव न स्पष्टं प्रतीतिः। आमन्नविनाशं कंचिदुद्दिश्य किं करोतीति प्रश्नेऽस्तीत्युत्तराच्च तस्य व्यापारवाचकत्वम्। अन्यत्र तु मुख्यतया निश्चितं किं करोतीति प्रश्नः पाकादिगोचर एवेति निर्णयादस्तीति नोत्तरम्। किं च व्यत्यनुषते इत्यत्र कर्तरि कर्मव्यतिहारे इत्यात्मनेपददर्शनात्तस्य क्रियावाचकत्वम्। कर्मव्यतिहारश्च तत्र क्रिया व्यतिहार इत्युपसर्गप्रादुर्भ्यामिति ( पा ८ । ३ । ८७ । ) सूत्रे भाष्ये स्पष्टम्। घटो भवतीत्यादौ व्युत्पत्त्यनुकूलव्यापारोऽर्थः। स व्यापारश्च साध्यत्वेनाभिधीयमानाश्रयतैव पानकुलनये सर्वपदार्थाना-मवस्थादिरूपेण प्रतिक्षणपरिणामितया तत्तत्परिणामविशिष्टोत्पत्तिनिरू-पितानामाश्रयतानामनेकतया पूर्वापरीभूतावयवकत्वात्ततः। सत्तायामिव कालगतपौर्वापर्यारोपेण वा। यदा सत्कार्यवादे कारणात्मना सदेव यावत् स्थूलं रूपं न प्रतिपद्यते तावज्जायते इत्युच्यते। तत्प्रतिपत्तौ त्वस्तीति तत्र तत्प्रापकव्यापाररूपारोपात्तस्याः क्रियात्वम्। अस्तीत्यस्य च सत्ता भावयतीत्यर्थ इति बोध्यम्। ज्ञानं ब्रह्मेत्यादौ जानातेर्भावे ल्युट्। न च तस्याखण्डत्वेन नित्यत्वेन च पूर्वापरीभूतावयवकत्वेनाभानात्। कथं तत्प्रकृतेर्जानातेर्धातुत्वमिति वाच्यम्। वृत्त्यभिव्यक्तज्ञाने वृत्तिधर्मारोपेण तत्प्रतीत्यात्रापि तदारोपेण तत्त्वोपपत्तेः। ब्रह्मणो निर्विकारत्वनिर्धर्मक-त्वादिश्रुतिभिश्च तस्यारोपितत्वमेवोचितम्। शुद्धचित्तस्य तु अन्यथैवात्रापि निषेधवाक्यसहकारेणाखण्डार्थबोधः। निषेधवाक्यैरेव वा सः। एवमेव ब्रह्मेत्यादौ नपुंसकत्वाद्युपपत्तिरित्यन्यत्र विस्तरः॥

( लटः शतृशानचावप्रथमासमानाधिकरणे । ३ । २ । १२४ । )

**इति क्रियेति । (कै)**

इत्यस्य क्रियाप्रधानत्वादित्यर्थः ॥

**क्रियान्तरयोगाभावादिति (कै)**

एकत्र विशेषणत्वेनान्वितस्य कारकस्यान्यत्र तथाऽन्वयायोगात् कर्तृत्वाद्यतिरिक्तानभिहितशक्त्यन्तरविशेषाभावेन नियमेन प्रथमान्तेनैव सामानाधिकरण्यादिति भावः ॥

**प्राधान्येनेति । (कै)**

'[१]सत्त्वप्रधानानि नामानि' इत्युक्तेः ॥

---

१ तथाच महाभाष्ये भगवान् पतञ्जलिः—

कृदभिहितो भावो द्रव्यवद्भवतीति ॥ ( पा २ । २ । १९ ) ॥

एवं शुक्लयजुः प्रातिशाख्ये कात्यायनः—

सत्त्वाभिधायकं नाम ॥

तथाच बृहद्देवतायां शौनकः—

शब्देनोच्चारितेनेह येन द्रव्यं प्रतीयते ।
तदाक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः ।
तन्नामकवयः प्राहुर्भेदे वचनलिङ्गयोः ॥
क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
संख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्यः ॥

एवञ्चयास्कः—

सत्त्वप्रधानानि नामानि। मूर्त्तं सत्त्वभूतं सत्त्वनामभिः। व्रज्या। पक्तिः। इति।

आख्यातजत्वान्नाम्नां प्रतिज्ञा क्रमं भित्त्वा पूर्वमाख्यातलक्षणमुक्तम्। पश्चान्नामलक्षणमुच्यते। किं पुनस्तत्? सत्त्वप्रधानानि नामानि। लिङ्गसंख्ययोरत्र सद्भाव इति सत्त्वम्। तथा लक्षणोपपत्तेः। तद्द्वयेषु प्रधानं गुणभूताक्रिया नामान्येव तानि। सन्त्याख्यातशब्दे गुणभावेन। सन्ति वा स्वमर्थमाख्यातशब्दवाच्ये गुणभावेनेति नामानि। यथैव ह्याख्याते विद्यमानमपि द्रव्यमविवक्षितमेवमिहापि विद्यमानापि क्रिया अविवक्षिता। द्रव्यपरत्वात् सत्त्वशब्दस्य तद्धिक्रियाजनितमुत्तरकालं क्रियाशेषभूतमभिधाय धात्वर्थोऽसौ व्यावर्त्तते॥

आह। कथं पुनर्नाम्नि क्रियाविद्यत इति। विद्यमानापि वा विवक्षितेति। उच्यते। प्रकृतिः। प्रत्ययो विभक्तिरिति त्रेधा विभज्यमानमेतावदेवैतन्नाम। तत्र प्रकृतिर्धातुरित्येकोऽर्थः। धातुश्च पुनः क्रियावचनः स च नाम्नि विद्यत इति तदभिधेयभूतया क्रियया भवितव्यम्। यथावश्यं यत्रार्थस्तत्र तदभिधायकः शब्दः। यत्र शब्दस्तत्र तद्वाच्योऽर्थ इति। सम्बद्धौ हि शब्दार्थौ वाच्यवाचकत्वेन नित्यमिति। एवं तावत्क्रिया विद्यते यत्पुनरेतदुक्तं विद्यमानापि क्रिया कथमविवक्षितेति? अत्र ब्रूमः। नाम्नि यो धातुः सत्त्वप्रयोजयति तेन प्रातिपदिकेनाभिभूतक्रियाभिधानशक्तिः प्रातिपदिकान्तर्लीनवृत्तिरेव स्वमर्थमुद्भावयितुमशक्नुवन् प्रातिपदिकार्थमेवानुवर्त्तमानो द्रव्यप्रधान एव भवतीत्येवं न विवक्षिता क्रिया। सा तु विद्यमानापि विगृह्यमाणे नाम्नि प्रातिपदिकनिबन्धनादुन्मुच्यमाना द्रव्यगतमर्थं प्रकाशयति। न प्रागविग्रहादिति द्रव्यपरता सत्त्वशब्दस्य गम्यते। तथाचोक्तम्

निर्देशः कर्मकरणं प्रदानमपकर्षणम्।
स्वाम्यर्थोऽप्यधिकरणं विभक्त्यर्थाः प्रकीर्त्तिताः॥

स्त्रीपुंनपुंसकभेदं निपातोपसर्गाणामपि वा क्वचिन्नामत्वमपेक्ष्य बहुवचनेनोक्तं नामानीति। अपरे पुनर्भावकालकारकसंख्याश्चत्वार एतेऽर्था आख्यातस्य। तेषां भावप्रधानता भवति। अतो भावप्रधानमाख्यातमित्युक्तम्। नाम्नोऽपि सत्ता द्रव्यं संख्या लिङ्गमित्येतेऽर्थाः। तेषां द्रव्यप्रधानमित्यतः सत्त्वप्रधानानि नामानीत्युक्तम्॥

अत्र हरिः—

प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते॥

क्रियावाची धातुः सत्त्ववाचि नामेति। गीयते क्रियासत्त्वे च सत्तैव। तथाहि। साधनपरिस्पन्दवशात्क्रियाणां व्यक्तिस्थानीयानां विशेषशब्दवाच्यानां पौर्वापर्ये तद्गतापि जातिस्तथात्वेन प्रतिभासत इति सैव साक्षात्सत्ताख्या क्रिया सकलधातुविषया। तस्या एवावान्तरो धात्वर्थभेद इत्यनन्तरमेव वक्ष्यते। साधनसम्पर्कहेतुकप्रतीयमानरूपा परामर्शे सत्तैव सत्त्वं द्रव्यमित्युच्यत इति सिद्धसाध्यरूपो द्विधा विवर्त्तः सन्मात्ररूपस्य परस्य ब्रह्मणः प्रतिपादितः। तदेव हि सर्वत्रानुगतम्। न चात्र दर्शने सद्भ्यःसत्ता व्यतिरिक्ता भावत इति सर्व्वं तन्मयम्। ततश्च सर्वशब्दानां सत्तावचनत्वाज्जातिपदार्थव्याप्तिः। यद्यपि च द्रव्यपदार्थेऽपि ब्रह्मद्रव्यस्याभिधानमुपाधिभेदभिन्नस्य वक्ष्यति तथापि तात्पर्य्यभेदादवस्थाभेदः। जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्मविवक्षितम्। द्रव्यपदार्थनये तु परिनिष्ठितरूपं परमार्थतयेति दर्शनविकल्पाश्रयमेवं च पक्षद्वयेऽप्येकपक्षीभावरूपः सिद्धान्तः। परमार्थदृष्ट्यात्र सर्वपार्षदत्वात्पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः। एष च सर्व्वत्रैवास्य ग्रन्थकारस्याभिप्रायः। पदार्थचर्चाविषये ब्रह्मदर्शननयेनैव सम्बन्धादिविचारे विनिगमनात्॥

सैव भावविकारेषु षडवस्थाः प्रपद्यते ।
क्रमेण शक्तिभिस्ताभिरेवं प्रत्यवभासते ।

षट्भावविकारा भवन्तीतिऽस्माह भगवान् वार्ष्यायणिरिति निरुक्तकारः । तत्र च भावस्य परमार्थरूपस्य सत्तात्मकस्य जन्मादयो विकारा इत्यर्थः । सन्मात्रस्वभावा हि सत्त्वोत्तरोत्तरविकारापत्तौ जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति व्यपदेशमासादयति । प्रथमतरं च सन्मात्रं रूपमस्ति शब्देन नाभिधीयते अपि तु जन्मोत्तरकालभावी तस्या अवस्था विशेषः । जन्मानन्तरभावि हि रूपं तस्या लोके सदिति व्यवहार्य्यम् । ततः प्राक्पश्चाद्भाविन्यः पुनरवस्था जन्मविपरिणामादिरूपेण व्यवहार्य्याः । तथाहि । स्वशक्तिमाहात्म्यात्पूर्वं जायत इत्यवसीयते पश्चादस्तीति । अवस्थितस्य विकारापत्तिरिति विपरिणमते तत्र विपरिणमन् मुहूर्त्तमपि नावतिष्ठते इति वर्धते यावदनेन वर्धितव्यं ततोऽपक्षीयते मुहूर्त्तमप्यनवस्थास्यादेव । अत एवोक्तं ततोऽपायेन युज्यत इति । ततोऽपि विनाश इत्येवं क्रमस्थितिः । एवम्भूतायास्तस्याः कश्चन शक्तयो विद्यते येनैकैव सती तथातथा विचित्रेण रूपेण प्रतिभासते । न च परिणति-दर्शनाभिप्रायेणायं विकारशब्दः । अनित्यत्वप्रसङ्गात् । अपि तु विवर्त पर्यायोऽयम् । तथाहि सर्वशक्त्यात्मभूतत्वाद् ब्रह्मणोऽनेकविकारप्रदर्शन सामर्थ्यलक्षणा अविद्याख्या शक्तिः कार्य्यभेदादुपचरितनानात्वाऽस्मो ऽस्तीत्यागमविदः । इत्थं च ताभिरेव शक्तिभिर्व्यतिरिक्ताभिर्जन्मादि रूपतयाऽविद्यायामाभासते । तदेव ब्रह्मसर्वभावेषु समानरूपं सत्तात्मक-मन्यस्य तद्व्यतिरिक्तस्याभावादित्येषोऽत्रार्थः ॥

यदि तर्हि स्वशक्तिमाहात्म्याज्जन्मादिरूपतया सर्वत्रावभासते कथं न युगपदवभासः । क्रमेणेति कथम् । न हि क्रमो नाम कश्चित्क्रिया-विशेष इत्याशङ्क्य कालाख्याऽपि शक्तिर्ब्रह्मण एवेत्याऽऽशङ्क्याह

आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम् ।
पौर्वापर्यादिरूपेण प्रविभक्तमिवस्थितम् ॥

योऽयं क्रियाणां क्रमः सोऽप्यात्मभूतोऽस्याः सत्तायाः । न केवलं ना क्रिया एव क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासम्भवेनेनात् यत्र क्रमे इदं कालदर्शनम् । कालं नाम पदार्थान्तरं तीर्थिकाः पश्यन्ति पौर्वापर्यादिरूपेण प्रविभक्तम् । कालस्य प्रविभक्तत्वाद्दर्शनमपि प्रविभक्तमित्युक्तम् । तात्पर्येण तु कालः पौर्वापर्यादिरूपेण प्रविभक्त इव क्रियोपाधिवशात् । क्रमाख्या हि कालशक्तिर्लक्षणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारक्रमेण पौर्वापर्येणाव भासोपगमविधायिनी नापरो द्रव्यभूतः काल इति ॥

अध्याहितकलां यस्य कालशक्तिमुपाश्रिता ।
जन्मादयो विकाराः षड्भावभेदस्य योनयः ॥
तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥

अनपायोपजनविकारित्वान्नित्या ब्रह्मात्मिका सत्ता निरन्वयविनाशा न ह्येतभावो नाम न भावाद्यतिरिक्तः । केवलं प्रागुक्तं च तिरोभावमात्रं भावावभासस्य यदस्माभिरभ्युपगम्यते सैव नास्तिता कथ्यते । सत्त्वैव तिरोभूता स्वकारणेषु शक्तिरूपतयाऽवस्थिता । वस्तूनां नाशो न तु विरूपाख्योऽसौ । समस्तेषु च भावेषु तिरोभूतेषु उपसंहृतक्रमः सिद्धरूप तिरोभावो नाश इत्यादिनामपदप्रत्याय्यः । यदा तु सैव नास्तिता तिरोभावावस्थारूपा साधनसम्पर्कवशात्प्रतीयमानस्वभावा विवक्षिता तदाख्यातपदप्रत्याय्या पूर्वावस्थाऽपच्चीयत इत्युच्यते । तदुक्तम तु विनश्यतीति द्वौ भावविकारौ प्रातिलोम्यपरिणामलक्षणौ । तत्र च भवनधर्मणो भावस्य भवनविरोधात्तिरोभाव मात्रं विनाशः ॥

एवं सत्ताप्रतियोगिनोऽपि प्रथमं तद्विकारत्वमवस्थाप्य जन्मनस्तद्विकारत्वं व्याचष्टे ।

पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥

कारणे शक्तिरूपेणावस्थानात्मकात् पूर्वधर्मात् प्रच्युता, धर्मोत्तराभिव्यक्तिप्रगुणां निष्ठामप्राप्ता सत्ता, गृहीतक्रमा कार्याभिमुखोत्तरावस्थाविशेषमासादयन्ती, जायत इति व्यपदिश्यते न त्वसत एवोत्पादो जन्म । तद्यथा न सतोऽत्यन्तं विनाशः, तथा जन्मनापि नाभूतपूर्वस्याविर्भावः । एतच्च नाभावो जायते भावो नेति भावोऽनुपाख्यतामित्यादिना प्रकटयिष्यति । अत एव चावस्थामात्रत्वात्कार्यकारणयोरभेदाद् यथा विवक्षां जनिक्रियाकर्तृत्वोपपत्तिरङ्कुरो जायत इत्यादौ । एतच्च निपुणतरं कारकसमुद्देशे वक्ष्यते । पूर्वापरावस्थान्तरालवर्तिक्षणपरम्पराक्रमविवक्षायां च जनिक्रियान्वयो न उपरिष्टादवस्थायाम् । तथा वक्ष्यति

पूर्वामवस्थामजहत् संस्पृशन् धर्ममुत्तरम् ।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥

उत्तरावस्थायाश्च पूर्वावस्थायां समारोपात् कर्तृत्वम् । व्याकृतं हि कारकं निरूपयन्तो जायत इति व्यवहरन्ति । निष्ठायां पुनरस्तीति जन्मोत्तरकाला सत्ता व्यपदिश्यते । ततोऽपि धर्मान्तराविर्भावोन्मुखतायां विपरिणमते । तत्रापि वृद्धौ वर्धत इति जन्मविशेषा एवैते न पृथगुपात्ताः । तदयमानुलोम्यपरिणामः । तदेवं सत्त्वक्रियाविवर्तान्वयिनी । अस्यामेव स्वपरः क्रियाभेदः सर्वधातुविषयः । तत्रैव च सिद्धरूपतायां दृश्यता निर्वृत्तिर्निष्पत्तिरिति क्रियापूर्वभाविना नात्यन्तमर्थान्तरभूता ॥

अथ यदुक्तं सम्बन्धिभेदात् सत्तैव भिद्यमानेति, तदिदानीं सम्बन्धिनं दर्शयितुमाह ॥

आश्रयः स्वात्ममात्रा वा भावो वा व्यतिरेकिणः ।
स्वशक्तयो वा सत्ताया भेददर्शनहेतवः ॥

क्रियाद्रव्ययोः सत्तात्मकत्वप्रतिपादनात् तद्व्यतिरेकेण वस्त्वन्तराभावाद् यद्यपि सर्वं सत्तात्मकपरब्रह्ममयं तथापि व्यवहारेऽविद्याप्रतिरूपं यथावभासं भेदस्यासत्यस्यानपह्नवनीयत्वात् । द्रव्यादिसत्ताश्रयः प्रतिभागोऽयमविरुद्धः । तदाश्रयः सत्तायाः स्वाधारो व्यञ्जकत्वात् भेददर्शनस्य भेदावभासस्य न तु भेदस्यैव भावतो भेदाद्धेतुः । यद् यथा एकमपि मुखं तैलोदकादर्शमणिकृपणादावनेकरूपमवभासते । एवं व्यञ्जकानां गवादीनां भेदात्सत्ता गोत्वाश्वत्वादिरूपतयाऽवभासत इत्यर्थः । स्वातीया वा मात्राः कलाः परिकल्पिता भागा अंशा गोत्वादिसामान्यविषयाः परिच्छिन्नविषयाः सर्वविषयायाः सत्ताया विच्छिन्नावभासतां दर्शयन्ति येन तैरेव सा विच्छिन्नेवाविच्छिन्नाप्यवभासते । ते चाश्रयभेदादेव ततः परिकल्पित भेदाः । तथाच

सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता ॥

गोत्वादिभिः सत्ताभेदं वक्ष्यति । दृष्टश्च स्वांशैरेव परिकल्पितैर्भेदावभासः । तद्यथा अवयविनः । आत्मापरोऽपि सद्भवति कल्पनानिर्मितेन भेदेनेति, स्वग्रहणेन विशेष्यते स्वसामात्रात्मेति । दृष्टश्च काल्पनिको भेदो यथा हन्त्यात्मानमात्मनेति । न ह्यात्मव्यतिरिक्तोऽन्यः कश्चित्प्रत्यवभासते । अर्थान्तरत्वेनावभासमाना वा देशकालेन्द्रियादयो भेददर्शनहेतवः । सत्ताया वा इहेदानीमिदमन्यत्रान्यदन्यदिति देशादिनिमित्तो वस्तुभेदः । तथा देशासत्ति विप्रकर्षकृतोऽन्यथावभासो वस्तूनाम् । यथाहुः

दूरे यथा वा महत्सु महानल्पोऽपि दृश्यते ।

तथा रात्रौ नीलोत्पलादीनामन्यथावभासः, अन्यथाहनीति कालकृतो भेदः । तथाच कामलाद्युपहतनयनानां शुक्ले शङ्खे पीतत्वावभास इति इन्द्रियनिमित्तो भेदः । देशादावपि च सत्तायाः सम्बन्धिनोऽन्ये भेदका इति विषयभेदान्नेतरेतराश्रयता । तथा चायमत्र परमार्थः । आत्मीया एव शक्तयो योग्यताख्याः सत्तायास्तथाविधाः सन्ति याभिः विश्वप्रपञ्चं रचयति ।

## लङादिति । (कै)

लङादिवाच्यकारकसमानाधिकरणलड्वाच्यकारकसमानाधिकरणस्येत्यर्थः ॥

## अप्रथमान्तेन । (कै)

इतरार्थेनेत्यादि ॥

## प्रसज्येतेति । (कै)

शतरीव लङ्यपि लकारार्थकर्तुः प्राधान्यस्यादिति भावः ॥ यद्यप्यन्तरङ्गाप्रथमा तथापि प्रधानानुरोधित्वेन बलवतीद्वितीयैव स्यादित्यर्थः ॥

---

तद्यथा चिन्तामणिरर्थिनां यथा संशयमाकारनानात्वं दर्शयति, तथानन्तशक्ति सन्मात्रं ब्रह्माविद्याविलसितमहं सांसारिकप्रमातृविषये नानारूपं प्रकाशतीत्यन्ते वस्तुसतत्त्वमुद्घाटितम् ॥

अत्रेदमुच्यते यद्यपि तिङन्तोपस्थाप्ययोः कर्तृकर्मणोः प्रथमान्तेन सामानाधिकरण्यं नास्त्येव तथापि कृदन्तोपस्थाप्ययोः सामानाधिकरण्यदर्शनात् शतृस्थानिप्रक्रियावस्थायां कल्प्यमानो लकारः प्रत्ययार्थं प्रति प्रधानभूते कर्तृकर्मणी अभिदधानः कल्प्यते। लकारवाच्यांशस्य निवृत्तेरविशेषेऽपि गुणप्रधानभावे वैलक्षण्यमस्तीति फलितोऽर्थः ॥ अप्रथमा इत्यादिकिम्—देवदत्तः पचति। कथं तर्हि सन् ब्राह्मणः। अत्राहुः। लटः शतृशानचाविति योगो विभज्यते। तयोर्विभाषा (३।२।१२४) इत्यतो विभाषानुवर्तते। व्यवस्थितविभाषेयम्। तेन यथादर्शनं प्रयोगोऽप्यवतिष्ठते ॥ अप्रथमा इत्यादिस्तु योगान्तरं विषयविशेषे शतृशानचोर्नित्यतायाः स्पष्टीकरणाय ॥

कर्त्राद्यभिधानमिति (कै)

तदभिधानशक्तिरित्यर्थः ॥

द्वितीयादीति । (कै)

द्वितीयाद्यर्थेत्यर्थः ॥

प्रतिपत्तुमित्यर्थ इति । (कै)

लङ्वाच्यस्याऽप्रथमान्तसामानाधिकरण्यं न भवति लट्वाच्यस्य भवति यत्तत्र किं कारणं प्रतिपत्तुं शक्यं स्वभावातिरिक्तं न किमपीति भाष्यार्थ इति भावः। ततश्च शत्रादिविषयलटोऽस्यैव शतृविधायकशास्त्रत्वलक्षणभावादप्रथमासामानाधिकरण्यमिति न दोष इति तात्पर्य्यः॥ ननु लस्य क्वापि प्रयोगाभावेन कथमीदृशस्वभावावगतिः इतः पक्षान्तरमाह भाष्ये

अथवेति ॥ (भा)

ननु यावदप्रथमासामानाधिकरण्यं न निर्णीतं तावदादेश एव न। आदेशं न चानुमानमित्यन्योन्याश्रयशमनमत आह

सिद्धानामिति ॥ (कै)

प्रक्रियार्थं विहितस्येति। (कै)

अनेन प्रक्रियार्थकल्पनानामबोधकत्वं दर्शयति

विषम उपन्यास इति- (भा)

वदत् प्रष्टव्यः किं प्रत्यक्षेण बाधनिश्चयादनुमानं न उत व्याप्तिग्रहणाभावादिति। तत्राद्य आह

**यद्यपीति ॥** (कै)

**प्रत्यक्षस्तेनाग्नि-** (भा)

इत्यादिग्रन्थेनापि भाष्ये तत्र बाधनिश्चयाभावः प्रतिपाद्यत इति बोध्यम् । प्रत्यक्षेण तत्राग्निसम्बन्ध एव पुरुषेण ज्ञातो गृहीतो न तु बाधः । प्रकृते तु विपरीतमित्यर्थः । लकाराप्रयोगनिमित्तकत्वेनान्यथासिद्धत्वादभावग्राहिणः प्रत्यक्षस्य बाध्यत्वमिति भावः ॥

**सामान्यतो दृष्टेन** (कै)

कार्यकारणभिन्नलिङ्गकेन ॥

**नह्यन्यथेति ।** (कै)

एवं च शतृशानजादेरर्थरूपानुकूलताकमहितमनुमानमन्यथासिद्धप्रत्यक्षात्प्रबलमिति भावः ॥

**रूपसहचारिणस्त्विति ।** (कै)

[1]शुक्लभास्वररूपव्यापकस्येत्यर्थः । तमस्तु न तद्रूपवत् स्पर्शस्योद्भूतस्येति द्रष्टव्यम् । तेन दीपप्रभायां [2]स्पर्शाग्रहेऽपि अनेकदिक्करूपस्य युगपद्ग्रहणेऽपि न दोषः ॥ व्याप्तिग्रहणाभावं समाधत्ते भाष्ये

**कस्यचिदिति ॥** (भा)

तद्व्याचष्टे

१ 'शुक्लभास्वररूपव्यापकस्य' इति क चिह्नित पुस्तके पाठः ॥
२ स्पर्शप्रबन्धो हस्तेन यथा चक्रस्य मन्यते ।
न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥

( लटः शतृशानचावप्रथमासमानाधिकरणे । ३ । २ । १२४ । )

## न भूय इति ॥ (कै)

ननु लट् अप्रथमान्तसामानाधिकरण्यात् तदनुवादेन विहितादेशस्थानित्वादित्यनुमानम् । तत्र दृष्टान्ताभावेन कथं व्याप्तिग्रह इति चेत् । यः स्थानी स आदेशसमानधर्मेति सामान्यतो व्याप्त्यैव सहकारिविशेषवत्त्वाद्विशेषानुमितिः । अत्रापि शतृविधायकशास्त्रमेवानुकूलतर्क इत्याहुः । [1]वृक्षपर्णयोर्जातिलादेश्च वद्भावः स्यादत आह

## भाष्यकारेति । (कै)

व्यक्तिप्राधान्यविवक्षणादितिभावः ॥

भाष्ये

## यदन्यत्प्रथमासमानाधिकरणादिति । (भा)

अथावध्यवधिमतोः साजात्यादन्यत् किञ्चित् समानाधिकरणमेव गृह्यते । तेनाप्रथमान्तेन समानाधिकरणस्य लट इति फलति ॥ यथाश्रुते तु "कौर्वतः" इत्यादौ दोषापादनासंगतिः स्पष्टैव ॥ अन्यथापि "कुर्वतो देवदत्तस्य" इत्यादिपदान्तरसामानाधिकरण्यमस्त्येव इत्यत आह

## [2]कुर्वत इति । (कै)

वृत्तिघटकातिरिक्तविशेष्यापेक्षमितिभावः ॥

१ वृक्षपर्णयोः—अयं वृक्षः । इदं पर्णमिति ॥

२ 'कौर्वत इति' इति बहुषु पुस्तकेषु पाठः ॥

**पदान्तरेति ।** (कै)

देवदत्तस्येत्यादीत्यर्थः ॥

**देवदत्तादिना पदान्तरेणेति ।** (कै)

प्रथमान्तेनेति शेषः ॥

**पूर्वस्मिन्नपीति ।** (कै)

समानाधिकरणसमासरूप "कुर्वद्भक्तिरि"त्यादिः "कुर्वत्तर" इत्यादिषु । कुर्वद्भक्तौ "[1]पुंवत् कर्मधारये"ति पुंवत् ॥

ननु लक्षणान्तरे 'अपचत्कल्पं देवदत्तः' इत्यादौ स्यादत आह

**लक्षणशेष इति ॥** (कै)

अन्तर्वर्तिसुपा प्रत्ययपरत्वेनैव सिद्धे किमुत्तरपदग्रहणेनेत्यत आह

**[2]पृथगिति ॥** (कै)

भाष्ये

**आदेशनिमित्त इति ।** (भा)

तस्मिन् हि प्रातिपदिकत्वे सुबन्तत्वे च तद्धितोत्पत्तेरिति भावः ॥ सुप उत्तरपदनिमित्तत्वम् उत्तरपदस्य च सुबन्तनिमित्तत्वं दर्शयति

---

१ पुंवत् कर्मधारयजातीयदेशीयेषु । पा—अ ६ । पा ३ । सू— ४२ ।

२ 'पृथगुत्तरेति' इत्यपि बहुषु पुस्तकेषु ॥

( लटः शतृशानचावप्रथमासमानाधिकरणे । ३ । २ । १२४ । )

[1]सत्युत्तरपद इति ॥ (कै)

तिङादेशादिति । (भा)

तिङ्रूपादादेशादित्यर्थः ॥ एवं च पच् ल् इत्यत्र तिङो नाधित्वा सुपि समास उत्तरपदे शत्रादितिङां बाधकमिति भावः ॥

निमित्तवन्ताविति । (भा)

उत्तरपदरूपनिमित्तस्य संपन्नत्वादपवादत्वेन शतृशानचावेवेति भावः ॥ ननु पचतीत्यादौ प्रत्ययोत्तरपदयोरभावात्कथमादेशप्रसक्तिरत आह—

अत्रापीति । (कै)

सुबेव प्रत्यय इति भावः ॥

---

१ 'सत्युत्तरपदे इति' इति पाठः-ग-चिह्नितपुस्तके ॥

# लक्षणहेत्वोः क्रियायाः।
# ३। २। १२६॥

---

भाष्ये

**क्रियाया गुणे इति।** (भा)

क्रियायाः कारके इत्यर्थः॥ कारकनिरूपितं यदा लक्षणत्वं धात्वर्थस्य तदर्थमिदम्। तदाह

**गुणशब्देनेति॥** (कै)

**यदा स्थानादिनेति।** (कै)

कथमयं सूचयतीत्यादिप्रश्ने यदेदमुत्तरं तदा तथा सा लक्ष्या भवतीति बोध्यम्॥

**[1]यदा त्विति।** (कै)

यदा क्रियया कारकं लक्ष्यते तदा तदर्थमिदमित्यर्थः॥

१ उपलब्धकैयटग्रन्थे 'तु' घटितपाठो नास्ति। परं त्वनेन नागेशभट्टीय कैयटपुस्तके 'तु' घटितपाठोऽस्तीत्यनुमीयते॥

लक्षणं चिह्नम्। हेतुः फलं साधनं च। क्रियाया लक्षणे हेतौ च यो धातुस्तस्माल्लटः शतृशानचौ स्तः॥ शयाना भुञ्जते यवनाः। इह शयनं भुजिक्रियायाः परिचायकम्। अर्जयन् वसति। अर्जनं वासस्य फलम्। विद्वान् मुच्यते। ज्ञानं मोक्षसाधनम्। इह सत्त्वात्मादिकं बोध्यम्।

देवदत्तो लक्ष्यते इति। (कै)

सूचसमानकालिकस्नानक्रिययेत्यर्थः॥

गृह्यते इति। (कै)

गुणशब्देनेत्यर्थः। अत्र पक्षेऽश्वत्वादिगुणस्येदं लक्षणं न तु क्रियाया इति भावः। अत्र पक्षे 'लक्षणहेत्वोः क्रियायाः' (३।२।१२६) इति सूत्रे गुणे लक्ष्ये उपसंख्यानं कार्यमित्यर्थः॥

भाष्ये

कर्त्तुश्चेति। (भा)

कर्त्तुर्लक्षणभूतयोः क्रिययोर्वाचकाभ्यां पर्य्यायेणेत्यर्थः॥

सदादयश्चेति। (भा)

प्रथमासमानाधिकरणार्थमिदं वाग्रहणस्यार्थमिति। "लटः शतृशानचौ" विति विभक्तसूत्रानुवर्त्तमानवाग्रहणस्य "सदादयश्च" इत्यादिवचनसमुदाय इत्यर्थः॥ ननु क्रिययोरेव लक्ष्यलक्षणभावे "को देवदत्त" इति प्रश्ने एतदुत्तरं न स्यादत आह

स्थितिक्रियेति॥ (कै)

सर्वनामपरामर्शे इति। (कै)

एतद्रूपसर्वनामपरामृष्टदेवदत्तस्य लक्षणमितिफलितम्। अन्यथा

---

लक्षयँस्तु कर्मादिरेवेति बोध्यम्। परिचायकशयनाश्रयवनरूपानेकाश्रयनिष्ठा वर्त्तमानाभुजिक्रिया। फलीभूतार्जनाश्रयकर्तृको वासः। ज्ञानकज्ञानाश्रयनिष्ठे मोक्षस्य वाक्यार्थ इति दिक्॥

वचनात्तदारम्भेऽपि तिष्ठतेः शतृनापत्तिः । न हि तद्वाच्यक्रिया देवदत्तस्य लक्षणं किन्तु तदुपलक्षितसूचनक्रियेति बोध्यम् ॥

समुच्चीयमानमिति । (कै)

परस्परलक्षणता यत्र समुच्चीयमानं सत्कर्तृविशेषस्य लक्षण-मित्यन्वयः ॥

यथा चैतन्येति । (कै)

तत् स्वरूपत्वात् पुरुषस्य यथा तत्र लक्षणत्वारोपेण शब्द-प्रयोगस्तथाऽत्रापि तदारोपेण प्रत्यय इति भावः ॥

भाष्ये

[1]इति वक्तव्यमेवेति । (भा)

"लक्षणहेत्वोः" इत्यनेनासिद्धेः । यथाश्रुतसूत्रन्यासे सूत्रे वाग्रहणानुवृत्तेरभावाच्चेत्यभिमानः ॥

---

१ "इत्येतद् वक्तव्यमेवेति" इति क-ख-घ- चिन्हितपुस्तकेषु पाठः ॥

# तौ सत् । ३ । २ । १२७ ॥

**प्रत्ययविधिरिति ।** (कै)

सदित्यस्य प्रत्ययस्य विधिरित्यर्थः ॥ भाष्ये

**प्रकृताविति ।** (भा)

एवं च प्रत्ययविधौ शतृशानचावित्यस्यानन्वयापत्त्या संज्ञाविधिरेवेति भावः ॥

[1]**धर्मासंबन्धयोरपीति ।** (कै)

'लटः सद्' (३।३।१४) इत्यादिविहितयोरित्यर्थः ॥ ननु भूते शतृशानचोर्विध्यदर्शनादाह

**वर्त्तमानसामीप्य इति ॥** (कै)

**अतिदेशादिति ।** (कै)

तेन प्रत्ययवत् संज्ञाप्यतिदेशेनैव सिद्धा तस्या अपि वर्त्तमानाधिकारे विहितत्वात् । "लटः सद्वा" (३।३।१४) इति

१ धर्मासम्बन्धयोरपीति इति पाठः ग चिह्नितपुस्तके ॥

शतृशानचौ सत्संज्ञौ स्तः ॥ तौ ग्रहणसामर्थ्यादिह शतृशानचोरानुपूर्वीमात्रं गृह्यते । अन्यथा प्रकृतयोर्वर्त्तमानार्थयोरेव संज्ञा स्यात् । लडादेशयोस्तु न स्यात् । तेन तद्योगे पूरणगुणेति न प्रवर्त्तते । लटः

वचनादेव भविष्यदर्थयोरपि मा सिद्धेत्यर्थः। प्रशस्तानचावित्यस्य सत् संज्ञाविति शेषः॥ न त्वकरीत्या सत् संज्ञासिद्धिरत आह

**वर्त्तमानवदित्यादि॥** (कै)

**न तु संज्ञेति।** (कै)

अनधिकारादितिभावः॥

ननु "लृटः सद्वा" (३।३।१४) इत्यनेन सच्छब्देन विधानात् तद्विशिष्टयोः सा सिद्ध्यत आह

**तथा लृट इति॥** (कै)

भाष्ये

**[1]ब्राह्मणस्य यक्ष्यदिति।** (भा)

यद्यपि "पूरणेति" (२।२।११) [2]सूत्रेऽसामर्थ्यात् समासो नेतिभाष्ये उक्तं तथापि तत्रत्यसिद्धान्तोदाहरणस्य "ब्राह्मणस्य शुक्ला:" इत्यस्योपलक्षणम्॥

---

१ 'ब्राह्मणस्य पश्यन्' इति उपलब्धबहुषु भाष्यपुस्तकेषु पाठः॥
'ब्राह्मणस्य पश्यमानाः' इत्यपि बहुषु भाष्यपुस्तकेषु पाठः॥

२ उपलब्धभाष्यपुस्तके "असामर्थ्यादत्र न" "तत्रासामर्थ्यात्" इत्येवं पाठोऽस्ति॥

---

सद्वेति (३।३।१४) सूत्रं तु सत्प्रवृत्तौ स्त इत्येव परं स्यात्। यथा अमी पिष्टपिण्डाः सिंहाः क्रियन्तामित्यत्र सिंहशब्देन तदाकारतामात्रं लक्ष्यते मुख्यार्थस्य बाधात् तथेहापीति दिक्॥

**संनिहितस्यैवेति ।** (कै)

संनिहितगुणविशिष्टस्यैवेत्यर्थः । तादृशस्यैव तत्र बुद्धिस्थत्वादिति भावः ॥

**नान्तमिति ।** (कै)

वाच्यवृत्त्या तद् यथा प्रतीतेरिति तात्पर्य्यम् ॥

**शब्देनैवेति ।** (कै)

योगविभागबोधनद्वारा बोध्यत इत्यर्थः ॥

**शब्दत इति ।** (भा)

भाष्ये [1]"आद्यादित्वात्" तृतीयान्तात् तसिरिति भावः ॥
भाष्ये

**सदितियोगेति ।** (भा)

'सद्' इत्येव सूत्रे इत्यर्थः ॥

**[2]योगाङ्गमिति ।** (भा)

योगः सूत्रसमुदायरूपाष्टाध्यायी तदङ्गसूत्रत्वेन । तत्र योगविभागे सतीत्यर्थः ॥ ननु स्थानिनिर्देशाभावात् प्रत्ययाधिकाराच्च आदेशत्वं कथं प्रत्ययस्येति च कथं लभ्यमित्यत आह

१ प्रतियोगे पञ्चम्यास्तसिः । ५ । ४ । ४४ ॥ तसि प्रकरणे आद्यादिभ्य उपसंख्यानम् । इति वार्त्तिकेन तृतीयान्तात् तस् प्रत्ययः ॥

२ 'योगाङ्गे' इति 'ग' पुस्तके पाठः ॥

[1]पूर्वसूत्रे इति । (कै)

प्रत्ययप्रकरणाच्च प्रत्ययस्येतिलब्धमिति भावः । अनुवर्त्तमान-प्रत्ययपदं षष्ठ्याविपरिणम्यत इति बोध्यम् ॥ ननु[2]धातोरित्यधिकारात् तृतीयधात्वधिकारविहितानामादेशेऽपि तव्यादीनामपि प्रसङ्गः कस्मान्नोक्तोऽत आह

तृजादीनामिति । (कै)

लोपविधानसामर्थ्यान्नभविष्यत इत्यनुषङ्गः । णमुल् विधानं लादेश प्रवृत्तये एव स्यात् । न हि स कश्चित्प्रयोगे श्रूयते इत्यभिमानः ॥ नियमं साधयति भाष्ये

योगविभागतश्चेति । (भा)

ताविति योगविभागेन यतः सत्संज्ञकं विहितमतो

[3]ऌटः सद् (भा)

इति योगविभागेन नियम्यत इत्यर्थः ॥ तद् व्याचष्टे

एवं तर्हि- (भा)

त्यादि ॥

तावेवेति । (कै)

तावित्यनेन पुनर्विहितौ । सदित्यनेन च प्रक्रान्तत्वाविशेषात्

---

१ लक्षणहेत्वोः क्रियायाः ( ३ । २ । १२६ ) इति सूत्रे ॥

२ धातोः । ३ । १ । ९१ ॥

३ ऌटः सदिति इति बहुषु पुस्तकेषु पाठः ॥

सर्वेषामपि संज्ञा ॥ नन्वेवमपि "[1]द्विषोऽमित्रे" इत्यादिविहित-शतुः संज्ञा न स्यादिति चेत्

**ल्टः सद्वा ।** (भा)

इति ज्ञापकात् तच्छब्देन शतृशानच्त्वाभ्यामेव परामर्शो न तु लस्थानिकत्वादिविशेषस्याप्याश्रयणमित्याशयात्

**लट इवेति ।** (कै)

पूर्वविहितशतृशानज्भ्यामनुवादेन विकल्पोऽनेन विधीयत इत्यर्थः । एवं च लट् ल्टोरुभयोरपि प्रथमासमानाधिकरणे आदेशविकल्पसिद्धिरितिभावः । एवं च यथान्यासेऽप्ययं विकल्पः । प्रथमासमानाधिकरणविषयपूर्वेतिध्वनितम् ॥

**[2]लादेशेष्विति ।** (कै)

वासरूपन्यायस्य अनादेशप्रत्ययविषयत्वादितिभावः ॥ साधना-भिधानस्येष्टत्वादाह

**अनिष्टस्यापीति ॥** (कै)

**निशाना इत्यादाविति ।** (कै)

अनुपदेशात् परत्वाभावादितिभावः ॥

---

१ ३ । २ । १३१ ॥

२ लादेशेषु वासरूपविधिर्नास्तीति । परिभा ७० ॥

# तृन् । ३ । २ । १३५ ॥

अताच्छील्यार्थमिति । (कै)

अनुपसर्गस्येति । (भा)

विशेषं वक्तव्यमित्यन्ये ॥ तृनभावे कथं प्रशास्तेत्यत आह

तृजेवेति ॥ (कै)

नन्वेवं प्रशासितेतिस्यादत आह

तृन् तृचाविति । (कै)

"[1]शंसि चदादिभ्य' इति हरदत्तोक्तपाठे तु वृद्धिनलोपौ दुर्लभौ ॥ नन्वत्र गतिसमासे उभयथाप्यव्ययपूर्वपदप्रकृतिस्वर-पूर्वेति कथं स्वरे विशेषोऽत आह

[2]तादौ च (कै)

---

१ तृन्तृचौ शास्ति क्षदादिभ्यः संज्ञायां चानिटौ ॥
इत्युपलब्धकैयटे पाठः ॥
तृन् तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥
इति हरदत्तकृतपदमञ्जर्यां पाठः ॥
एवं च उणादिसूत्रपाठेऽपि । २५० ॥
२ तादौ च निति कृत्यतौ । ६ । २ । ५० ॥

इत्यादि [1]षुकीति प्रत्ययसंनियोगशिष्टतया त्वन्त्वाद्गुणात् पूर्वमेव षुक्स्यादिति भावः ॥ ननु 'नेषते' रिड् दुर्वारोऽत आह

**[1]नेषतेस्त्विति ॥** (कै)

**[1]त्विषेरिति ।** (कै)

तथा च तत्रानुपयोगात् सर्वशेष इति भावः ॥ भाष्ये

**क्षत्तेति ।** (भा)

द्वाराधिकृतो रथः सूतश्चेत्याहुः ॥

---

१ नयते षुक् च । वा । अ ३ । २ । १३५ ॥

२ धात्वन्तरं नेषतिः । कथं ज्ञायते । नेषतु नेष्टादिति दर्शनात् । इन्द्रो वत्सेन नेषतु । गावो नेष्टात् ॥

३ त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च । वा । अ ३ । पा २ । सू १३५ ॥

# ग्लाजिस्थश्च क्स्नुः । ३ । २ । १३९ ॥

ननु कद्वयमुपलभते अत आह

लक्ष्येति ॥ (कै)

तेनेति । (कै)

निर्देशेनासिद्धत्वं बाध्यत इत्यर्थः ॥

तदभावादिति । (कै)

असंहिता ह्रतार्धमात्राकालेन विच्छेदादवसानविषयत्वमिति-भावः ॥ ननु संहिताया अविवक्षायां विसर्गोऽपि कथं तत्रापि संहिताधिकारादितिस्पष्टमष्टमे भाष्ये इति चेन्न । पूर्वेण संहितायां एवावसानकार्यनिमित्तत्वादिति भावः ॥

---

ˈयद्येवं चर्त्वस्यासिद्धत्वाद् 'हशि च' (६ । १ । ११४) इत्युत्वं प्राप्नोति । सौत्रो निर्देशः । तेन असिद्धत्वाभावादुत्वाभावे विसर्जनीयो भवतीत्यर्थः ॥

# शमित्यष्टाभ्यो घिनुण् । ३ । २ । १४१ ॥

उच्चारणार्थत्वमिति । (कै)

केवलोच्चारणार्थत्वमित्यर्थः ॥

शमिनीतरेति । (भा)

ननु ह्रस्वाभावे '[1]तसिलादिषु' इति पुंवत्त्वं युक्तमिति कथं दीर्घप्रयोग इति चेन्न। ताच्छीलिकानां प्रायेण रूढितुल्यतया भगवतोक्तत्वेन संज्ञात्वात् '[2]संज्ञापूरण्योश्चे'ति निषेधादित्याहुः ॥

---

१ तसिलादिष्वाकृत्वसुचः । ६ । ३ । ३५ ॥

२ अ ६ । पा ३ । सू ३८ ।

---

अकार उत्तरत्र कुत्वार्थः। उकार उगितश्चेति ह्रस्वविकल्पार्थः। शमिनितरा शमिनीतरा। नचैवं शमिनौ शमिन इत्यत्रोगिदचामिति नुम्प्रसङ्गः। नुम् विधौ झल् ग्रहणस्यापकर्षात्। इह च झलन्तत्वाभावादिति भाष्ये स्थितम्। वृत्तिकारस्तु उकार उच्चारणार्थः। नानुबन्ध इत्याह। शमिनितरादौ घरूपेति नित्यमेव ह्रस्वत्वमिष्यते इति तस्याप्रयोज्यत्वमाहुः। तदेतत् सर्वं भाष्यविरोधादप्रमाणमिति प्रामाणिकाः॥ उन्मादीत्यादौ तु वासरूपन्यायेन घिनुण् भविष्यति इति दिक् ॥

# निन्द-हिंस-क्लिश-खाद-विनाश-परिक्षिप-परिरट-परिवादि-व्याभाष-असूयो वुञ् । ३ । २ । १४६ ॥

जातौ बहुवचनमिति । (कै)

तत्र बहुवचनस्य भगवता प्रत्याख्यानादेकव्यक्तिविषये जात्याश्रयणे फलाभावाच्चेदं चिन्त्यम् । प्रयोगबहुत्वाश्रयं बहुवचनमितिपरे ॥

---

'असूओ वुञ्' इति पाठः बहुषु मुद्रितसिद्धान्तकौमुदीषु मुद्रितकाशिकासु मुद्रितपदमञ्जर्यां च अस्ति परम् उपलब्ध महाभाष्ये शब्दकौस्तुभे च एवं नास्ति । तत्र 'असूयः' इत्येवं पाठः ॥

णिदि कुत्सायाम् । टुह-हिसि-हिंसायाम् । क्लिश-विबाधने । खादृभक्षणे । णश अदर्शने । गयन्तः भाविना णिलोपेन निर्देशः । अकस्तु आगन्तुकः । केचित्तु विनाशीति णयन्तमेव पठन्ति । क्षिपि रटी-उक्तार्थौ । वदिर्णयन्तः । भाष-व्यक्तायां वाचि । असूयति कण्ड्वादियगन्तः ॥ समाहारद्वन्द्वः । व्यत्ययेन पुंस्त्वम । पञ्चम्यर्थे च प्रथमा ॥ असूयति भिन्नानामिह ग्रहणं व्यर्थम । णवुलैव रूपसिद्धेः । असूयतेस्तु णवुलि प्रत्ययात् पूर्वमुदात्तंवुञि तु ञ्नित्यादिरिति स्वरे विशेषः ॥ इतरेषां त्वेकाच्त्वान्न स्वरे भेदः ॥ ताच्छीलिकेषु वासरूपन्यायेन णवुलृजादयो न भवतीति ज्ञापनार्थमेतत् ॥

# जु-चङ्क्रम्य-दंदम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः। ३। २। १५०॥

सकर्मकार्थमिति। (कै)

[1]"अनुदात्तेतश्च हलादेः" इतिसूत्रे [2]'चलनशब्दार्थादकर्मकात्' इत्यतोऽकर्मकादित्यनुवर्त्तते। तत्त्वं च सोपसर्गत्वेनान्तर्भावितण्यर्थत्वेन वेति बोध्यम्॥ [3]"सूददीपेति" युच्निषेधकम्॥

१ अ ३। पा २। सू १४९॥
२ चलनशब्दार्थादकर्मकाद्युच्। ३। २। १४८॥
३ सूद-दीप-दीक्षश्च। ३। २। १५३॥

जु-इति सौत्रोधातुः। गतिवचन इत्येके। वेगवचन इत्यन्ये॥ क्रमु-पादविक्षेपे। द्रम-ह्म्म-मीमृ-गतौ। सृ-गतौ। गृधु-अभिकाङ्क्षायाम्। ज्वल-दीप्तौ। शुच-शोके। लष-इच्छायाम्। शल-ह्वल-पत्लृगतौ। पद-गतौ॥

सूद-दीप-दीक्षश्च इत्यनेन युच्-निषिध्यते। षूद-क्षरणे। दीपी-दीप्तौ। दीक्ष-मौण्ड्ये॥ सूदिता। दीपिता। दीक्षिता॥

ननु दीपि ग्रहणं व्यर्थम्। 'नमि कम्पि स्म्यजसकमहिंसदीपो रः। ३। २। १६७॥ इति रेणैव युचो बाधात्। ताच्छीलिकेषु वासरूपविधिर्नास्तीति पदिग्रहणेन ज्ञापितत्वादिति चेत् सत्यम्। तस्यानित्यत्वमनेन ज्ञाप्यते। तेन कम्रा। कमना इह युज्रयोरेव समावेशो ज्ञाप्यत इति भाष्यस्वरसः॥ यदाह भवति युचोरेण समावेश इति वृत्तिकारस्तु उपलक्षणमिदं मन्यते॥

# स्पृहि गृहि पति दयि निद्रा तन्द्रा श्रद्धाभ्य आलुच्। ३। २। १५८॥

ननु '[1]अतो दीर्घ' इत्यत्र तिङित्यनुवृत्त्या कथमत्र दीर्घ इत्यत आह

[2]तुरुस्तु इति। (कै)

अत एव '[3]ज्ञाजनोर्जे'ति दीर्घविधानस्या[4]कृतव्यपरिभाषाज्ञापकत्वं संगच्छते॥

प्रयोजनभावादिति। (कै)

नेत्संज्ञेति शेषः॥

उभयत्रैकादेश इति। (कै)

[5]लित्स्वरे [6]प्रत्ययस्वरे वा कृते उकारेण गुणरूपे एकादेशे

१ अतो दीर्घो यञि। ७। ३। १०१॥
२ तुरुस्तुशम्यमः सार्वधातुके। ७। ३। ९५॥
३ अ ७। पा ३। सू ७९॥
४ अकृतव्यूहाः पाणिनीयाः? — अकृत्ते पुनर्वृत्तावविधिः। परिभा ९३॥
५ लिति। ६। १। १९३॥
६ आद्युदात्तश्च। ३। १। ३॥

. स्पृह-ईप्सायाम। गृह-ग्रहणे। पत-गतौ। एते चुरादावदन्ताः॥ शीङो वाच्यः। शयालुः॥ कथं-कृपालुः स्पर्धालुरिति। कृपां स्पर्धां च लातीति विग्रहे "मृगय्वादयश्च" (उणा-प्र-पा-सू-३७) इत्यनेन 'कुः' प्रत्ययः॥

इत्यर्थः । एवं चेत्वे लकारोच्चारणवैयर्थ्येन सामर्थ्यात् नेत्वमिति भावः ॥ नन्वेवमपि 'श्रद्दालुः' इति स्यादत आह

**श्रद्धालुशब्दस्यापीति ।** (कै)

सिद्धिरिति शेषः ॥

**धेट इति ।** (कै)

करणस्य शेषत्वविवक्षायां षष्ठी तस्य च भौवादिकत्वात् श्नोरभावेन द्वित्वाभाव इति भावः ॥

**शिदाश्रय इति ।** (कै)

शपाश्रय इति भावः ॥

**अथवेति ।** (कै)

संज्ञापूर्वकतया श्नोरभावेण द्वित्वं नेति अर्थः । द्वित्वं तु न संज्ञापूर्वकम् । विषयकोटौ संज्ञापूर्वकस्यैव तेनानित्यत्वबोधनादित्याहुः ॥ भाष्यानुक्तत्वेन संज्ञापूर्वक इत्यस्याप्रामाणिकत्वे तु इदं चिन्त्यम् ॥ परे तु [1]अजस्राद्यथिभ्यामिवात्रापि श्रद्धेति समुदायात् प्रत्यय इति न काचिच्छंकेत्याहुः ॥ इयेयङ्त्वकृनात्स्यनभिधानादिति बोध्यम् ॥

---

१ अत्र निपातनात्-श्रत्-शब्दस्य धा शब्देन समासे "अजस्राद्यथितन्द्रावत्" विशिष्टात् प्रत्यये धातोर्विधानाभावात् सार्वधातुकत्वाभावाच्छप आलोपस्याभावे श्रद्धा-लोच सिद्धे आलुज् विधानमन्यतोऽपि विधानार्थं तेनेदं सिद्धमिति स्पष्टं भाष्ये ॥

# आदृगमहनजनः किकिनौ लिट् च। ३। २। १७१॥

ऋकारगुणनिषेधार्थादिति। (कै)

ऋधातोः किकिनोर्गुणनिषेधानिषेधयोः फले विशेषाभावः। 'आरिरिति' रूपमेव गुणेऽतन्निषेधेऽपि 'अत आदेः' इति दीर्घे यणि च तदेवेति भावः॥

ऋकारनिर्देशेति। (कै)

घेर्ग्रहणे इत्यर्थः॥

जगुरिः। (भा)

इत्यादौ कित्त्वाद् गुणाभावे ओष्ठ्यपूर्वत्वाभावेऽपि छान्दसत्वादुत्वम्॥

भाष्यकारवचनेति। (कै)

संस्रादि ऋच्छमच्छरितस्यैव पतेस्तत्र ग्रहणमित्यन्यविकरणस्य तदभावः। यदा प्रसिद्धस्य पतेर्ग्रहणं तद् दिवादिकस्य तस्य चद रूपम्॥

आद्-इति-नायं तकारः किन्तर्हि दकारः। ऋदोरबिति वत्॥ भ च मुखसुखार्थ इत्यर्थः॥ अत्र भाषायामिनित्वपेक्षते इति छन्दस्यन्या-तकारादयः॥

## अन्येभ्योऽपि दृश्यते । ३ । २ । १७८ ॥

**ग्रावस्तु इति ।** (कै)

विक्तोऽपि उपलक्षणम् ॥

**तच क्रते इति ।** (कै)

प्रत्ययसंनियोगशिष्टतयान्तरङ्गत्वाद्दीर्घत्वे क्रते इत्यर्थः ॥ ननु दीर्घत्वं नस्यादित्ययुक्तस्यानुवादेन विधिलिङो ऽसंभवादत आह

**संभावने इति ।** (कै)

दीर्घत्वं संभवेदिति नेत्यर्थः ॥ यद्यपि दीर्घवचनसामर्थ्या[१]ल्लक्ष्ये लक्षणस्येति न्यायबाधे न पुनर्दीर्घप्रवृत्तिरेव युक्ता तथापीष्टानुरोधात् संप्रसारणाभाव एव भाष्यक्रतोक्तः ॥ भाष्ये

**कार्यक्रतत्वादिति ।** (भा)

विकारक्रतलक्ष्यभेदस्तु नात्र न्याये आश्रीयते एतद् भाष्यप्रामाण्यात् ॥ क्विप्रच्छ्योर्दीर्घेत्यत्र वार्त्तिकसूत्रेणैव क्विपि सिद्धे दीर्घत्वार्थमेव ग्रहणमिति बोध्यम् ॥ येन दीर्घसमुच्चये दिद्युदादेरपि स्यात् । असमुच्चये जुहूर्नसिद्ध्येदत आह

१ लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते । परिभा १२१ ॥

**दीर्घ इति ॥** (कै)

घुतिगमिभ्यामन्वये वैयधिकरण्यापत्तिरित्येताभ्यामसम्बन्धो दीर्घस्येत्यर्थः ॥ भाष्ये

**दीर्यतेर्वेति ।** (भा)

एतद् भाष्यप्रामाण्यादेव [1]दृधातुर्दिवादावपि बोध्यः ॥

**जीर्यतेर्वेति ।** (भा)

अत्र पक्षे उत्वे चेन विधेयम् ॥

**दधातेर्वेति ।** (भा)

'[2]घुमास्था' इतीत्वम् ॥ ईत्वमवकारादाविति वचनं तु भगवता प्रत्याख्यास्यते ॥

१ दृ-हिंसायाम् । स्वा-परस्मै-सेट् ॥

२ घुमास्थागापा जहातिसां हलि । ६ । ४ । ६६ ॥

# मतिबुद्धिपूजार्थेभ्यश्च । ३ । २ । १८८ ॥

प्रत्ययविधानादिति । (कै)

तेन हि विधेयविषये ऽयं न्यायो नानुवाद्यविषये इति ज्ञाप्यते । कालस्त्वनुवाद्य इति भावः ॥ तेन

"पूजितो यः सुरासुरैः"

इत्यपि सिद्धम् ॥ भाष्ये

शीलित इत्यादि । (भा)

उक्तसमुच्चयार्थं नैवैतेषां संग्रह इति भावः ॥

कष्टं भविष्यतीति । (भा)

भविष्यतीत्यर्थे कष्टशब्द इत्यर्थः ॥

मतिरिच्छा न तु बुद्धिस्तस्याः पृथगुक्तत्वात् । 'जनैरविदितविभवो भवानीपतिः' ॥ अज्ञानार्थेभ्यो भूतेऽपि क्तः ॥ चकारोऽनुक्तसमुच्चयार्थः । तथाच भाष्यम् ॥

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत् स्मृताः ॥

पूर्ववत् (भा)

शीलितारक्षितारक्षवत्

वर्त्तमाने (कै)

इत्यर्थस्तदाह

न म्रियते इति ॥ (भा)

---

इति काळोपनामकशिवभट्टसुतसतीगर्भजनागेश-
भट्टविरचिते महाभाष्यप्रदीपोद्द्योते तृती-
यस्य द्वितीये पादे तृतीयमाह्निकम् ॥

---

इति वज्रवल्लभशर्मविरचिते विषमपदव्याख्याने तृतीयस्य
द्वितीयपादे तृतीयमाह्निकम् ॥

---

महाभाष्यप्रदीपोद्योतः।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः।



कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्॥



# उणादयो बहुलम्। ३। ३। १॥



शास्त्रान्तरेति। (कै)

व्याकरणान्तर इत्यर्थः॥

साधुत्वेति। (कै)

वर्त्तमानकाले तत्त्वार्थमिति भावः॥

बाहुलकं प्रकृतेस्तनुदृष्टेः
प्रायसमुच्चयनादपि तेषाम्।
कार्यसशेषविधेश्च तदुक्तम्
नैगमरूढिभवं हि सुसाधु॥

**प्रकृतेः** (भा)

इत्यस्य

**तन्वीभ्यः** (भा)

इति व्याख्यानमननुगुणमत आह

**ज्ञाताविति ॥** (कै)

ननु तनुशब्दस्य प्रकृतेरिति विशेषणतया कथं समासोऽत आह

**तनुशब्द इति ।** (कै)

तथाच गमकत्वात् समास इति भावः ॥

**तानवमिति ।** (कै)

व्याकरणान्तरे तासामल्पत्वं दृष्टेत्यर्थः ॥

**बाहुलकमिति ।** (कै)

बहूनर्थान् लाति [1]इत्यर्थकबहुलशब्दात् भावे वुञा सिद्धमिति बोध्यम् । बहवोऽर्थाश्च प्रवृत्तिनिवृत्त्यादयो वृद्धैरुक्ताः ॥

नाम च धातुजमाह निरुक्ते
व्याकरणे शकटस्य च तोकम् ।
यन्न विशेषपदार्थसमुत्थम्
प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु ॥

१ मनोज्ञादित्वदाद् वुञ् । तत्पुनर्बह्वर्थादानं बहुलशब्दप्रवृत्ति-निमित्तं बहवः पुनरर्थाः “क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः” इति ॥

बह्वर्थादानमिति । (कै)

बह्वर्थग्रहणरूपं प्रवृत्तिनिमित्तमित्यर्थः ॥

तेनापठिताश्च इति । (कै)

व्याकरणान्तरे पठिताश्च इत्यर्थः ॥ भाष्ये

उणादयो दृश्यन्ते (भा)

इत्यादिर्व्याकरणान्तर इति शेषः ॥ तदाह

यथा दृशेरक्लज् (कै)

इत्यादि ॥

प्रायेणसमुच्चयनमिति । (कै)

व्याकरणान्तरे इत्यर्थः ॥ ननु स्वतन्त्राणामृषीणामेवं न्यूनं शास्त्रे

कृतम् इति (कै)

पर्य्यनुयोगो युक्तोऽत आह

तावत्येव भवन्त्विति ॥ (कै)

प्रश्न इति । (कै)

ननु प्रकृतीनां निर्देशो ऽन्वेत्यादिलया केन प्रमाणेन ज्ञातमिति भाष्याक्षरार्थः ॥

तदिति । (भा)

नैगमरूढ़िभवमित्यर्थः ॥

जातावेकवचनमिति । (कै)

साधव इत्यनेनान्वयः । तेन [1]सुष्ठिति पाठस्तु सम्यगेव । तस्य चाग्रेण संग्रहोऽ प्रकृत्यस्य साधुत्वं च सर्वसम्मतमतो ज्ञायते

प्रकृतेस्तनुदृष्टः (भा)

इत्यादीतिभाष्यार्थः ।

सुसाधवः कथं स्युरिति (भा)

भाष्यस्यातो बाहुलकमितिशेषः ॥

ते (कै)

पाणिनिना बोधितसाधुत्वकाः कथं स्युरित्यर्थः । पाणिनिना बोधित साधुत्वमेव सुसाधुत्वं सम्प्रतिप्रयोगार्हत्वात् । तदाह

अपरिपूर्णानामिति ।

सर्वाभ्यः प्रकृतिभ्यः सर्वप्रत्ययानां तत्तद्रूपेण विधानं तु ब्रह्मणापि दुरुपपादमिति भावः ॥ ननु तेषामेव व्युत्पादनं कैर्वैयाकरणैः कृतमित्याशङ्क्याह भाष्ये

[2]नाम च (भा)

इत्यादि ॥ तद् व्याचष्टे

---

१ 'ते सुष्ठु' इति कैयटपाठः ॥

२ अत्र निरुक्तम् तत्र नामान्याख्यातजानि इति शाकटायनो नैरुक्त समयश्च । १ । १२ । २ ॥

**नाम च धातुजमाह निरुक्ते** । (भा)

नाम धातुजमित्येवमाहनैरुक्ता इत्यक्षरार्थः ॥ तदाह

**अन्ये** (कै)

इत्यादिना । पाणिनेस्तु तान्यव्युत्पन्नानीत्येवेति भावः । इदं च "[1]आयनेयी" ति सूत्रे भाष्ये स्पष्टम् ॥ एवं च [2]"कृवापे'त्युणादिसूत्राणि शाकटायनस्येति सूचितम् ।

**धातुजं नामेति** ॥ (भा)

**आह निरुक्ते** (भा)

निरुक्तकारः ॥ शाकटायनश्च स्वकृते व्याकरण आह

**धातुजं नामेति** (भा)

भाष्येऽन्वयः ॥

**पदार्थः** (भा)

इत्यत्रार्थशब्दः प्रयोजनवाचीत्याह

**अर्थः प्रयोजनमिति** ॥ (कै)

**विशेषश्चासाविति** । (कै)

उक्तप्रकृतिप्रत्ययादेः

---

१ आयनेयीनीयियः फ-ढ-ख छ-घां प्रत्ययादीनाम् । ७ । १ । २ ॥
२ कृवापाजिमिस्वदिसाध्यशूभ्य उण् । १ । १ उणा ॥

यत्न समुत्थितम् (कै)

विशिष्टायाः प्रकृतेः प्रकृतेरूप्रत्ययोत्पादनेन व्युत्पादितमित्यर्थः ॥

संज्ञासु धातुरूपाणीति (भा)

अवतारयति

[1]सर्वत्रेत्यादि ॥ (कै)

संज्ञासु (भा)

प्रसिद्धसंज्ञाशब्देषु ॥

---

१ प्रकृतिं दृष्ट्वा प्रत्यय ऊहितव्यः। प्रत्ययं च दृष्ट्वा प्रकृति-रूहितव्या। न सर्वत्र ऊहः कर्तव्यः। किं तर्हि साधुत्वेनाभिमतासु संज्ञास्विति ॥

# भविष्यति गम्यादयः । ३ । ३ । ३ ॥

**विशेष इति ।** (कै)

सत्यपि वास्तवे विशेषे तस्याविवक्षितत्वात्, सामान्यस्यैव विवक्षामाश्रित्य तदाश्रयो णिनिः । [१]अनद्यतनाख्यस्तु विशेषः । पश्चात् श्वः शब्दमहिम्ना गम्यते इति भावः ॥

**विशेषवीति ।** (कै)

प्रथमत एव विशेषविवक्षायामित्यर्थः ॥

**अपवादेति ।** (कै)

लृटो हि द्वावपवादौ णिनिर्लुट् च ॥ नन्वेवं श्वोगमिष्यतीत्यादिप्रयोगाणामापत्तिर्णिनिना बाधादत आह

**[२]वासरूपेति ।** (कै)

सामान्यविवक्षायामिति भावः ॥ भाष्ये

**पुरापचतीत्यनपशब्दत्वार्थेति ।** (भा)

भविष्यत्येवानपशब्दत्वं यथा स्यात् । भूते तु नेत्येतदर्थमित्यर्थः ॥ तदाह

१ भविष्यतीत्यनद्यतन उपसंख्यानम् । वा । किं पुनः कारणं न सिध्यति । लृटायं निर्देशः क्रियते । लृट् चानद्यतने लुटा बाध्यते तेन

२ अ ३ । पा १ । सू ९४ ॥

## सतीति । (कै)

भविष्यद् भूतयोरसाधुत्वप्राप्तौ भविष्यत्येवानेन साधुत्वं क्रियते न तु भूते वर्त्तमानकाले साधुत्वाभावे तु न मानं भाष्यादृता-भात् । कालस्यानुवाद्यतया तक्रकौण्डिन्यन्यायाप्राप्तेश्च । न भविष्यत् कालेन वर्त्तमानकालस्य वाधनादितिकैयटाशयः ॥

## भूतेऽपीति । (कै)

भविष्यत्पदाभावे "[१]यावद्" इतिसूत्रं यत्र विहितो लट् ततोऽन्यत्रापि यथा स्यादित्यर्थं स्यात् । एवं च भूतेऽपि साधुत्वं स्यादिति भावः ॥ दूषणान्तरमाह

## शब्दोपात्तेति । (कै)

अनुवाद्यविषये [२]तक्रकौण्डिन्यन्यायाभावादिदं चिन्त्यम् ॥

---

लृट एव विषये एते स्युः । न वा वाक्यार्थत्वाद् गम्यादयः शब्दो विशेषे यत् सामान्यं तदाश्रयेण प्रवर्त्तन्ते अनद्यतनाम्यस्तु विशेषः स्वः शब्दमहिम्ना गम्यते विशेषविवक्षायां तु लुडेव भवति । श्वोगन्ता ग्राममिति वासरूप-विधिना च लृडपि भवति तेन भविष्यति गमिष्यतीत्यादयः प्रयोगा उप-पद्यन्ते ॥

---

१ यावत् पुरा निपातयोर्लट् । ३ । ३ । ४ ॥

२ 'ब्राह्मणेभ्यो दधिदीयतां तक्रं कौण्डिन्याय' इतिन्यायः "मिदचो-ऽन्त्यात् परः" (१ । १ । ४७) इति सूत्रे भाष्ये ॥

# यावत् पुरा निपातयोर्लट्। ३। ३। ४॥

यावत् पुरादिष्विति। (भा)

भाष्ये आदिना इतः आरभ्य 'तुमुन्' सूत्रपर्यन्तसूत्रसन्दर्भ-संग्रहः॥

लडित्येतदनुवर्तिष्यते इति। (भा)

इत्यादिसूत्रसन्दर्भोपलक्षणमिदम्॥

# लिप्स्यमानसिद्धौ च । ३ । ३ । ७ ॥

भाष्ये

न लिप्स्यमानसिद्धिरपि लिप्सैवेति । (भा)

लिप्साव्याप्यैवेत्यर्थः । एवं च लिप्सायास्तत्रापि गम्यमानत्व-मस्त्येवेत्याशयः ॥

सिद्धिरहितायामिति । (कै)

भवान् ब्राह्मणान् आमन्त्रयिष्यतीत्यादौ । सिद्धिविषयोदा-हरणं तु यो भक्तं ददाति स स्वर्गं गच्छतीत्यादौ ॥

अकिं वृत्तार्थोऽयमारम्भ इति ॥ *पूर्वसूत्रे किं वृत्तग्रहणं लिप्स्य-मानसिद्धिरहिते लिप्सामात्रे किं वृत्त एव यथास्यादकिं वृत्तमाभूदित्येत-मर्थम् ॥

* किं वृत्ते लिप्सायाम् (३ । ३ । ६) इति सूत्रे ॥

# तुमुन् ण्वुलौ क्रियायां क्रियार्थायाम् । ३ । ३ । १० ॥

भाष्ये

[1]इत्यत्र षष्ठ्या इति । (भा)

अत्र सूत्रेऽकस्य भविष्यतीत्यन्वाख्यानवार्त्तिके चेत्यर्थः ॥

ननु सामान्यण्वुल्येवायं निषेधोऽस्त्वत आह

सतीति । (कै)

तदनुवादेन विहितो हि तदर्थको भवतीत्यर्थः ॥ भाष्ये

य एवासाविति । (भा)

भविष्यत्क्रियावाचकप्रसक्तिकत्वमेव ण्वुलि भविष्यत्वमितिभावः ॥

[2]धातुसम्बन्धे इति । (भा)

'लप्स्यन्ते' (भा) इति धातुसम्बन्धोऽत्रेति भावः । न च धातुसम्बन्ध इत्यनेनापि कालान्तरे प्रत्यया विधीयन्त इत्यस्यापि

१ अकेनोर्भविष्यदाधमर्ण्ययोः ( २ । ३ । ७० ) इत्यत्र षष्ठ्याः प्रतिषेध उक्तः स यथा स्यात् ॥

२ कथं तर्हि भविष्यत् कालता गम्यते । धातुसम्बन्धे प्रत्यया इति । याजकत्वस्यैव भविष्यत्वं प्रतीयत इत्यर्थः ॥

भविष्यत् कालत्वमस्त्येवेति वाच्यम् । धातुसम्बन्धे इत्यादिना तत्प्रत्याख्यानप्रकारस्मारणेनादोषात् । 'याजका' इत्यस्य तथा व्यवहरिष्यमाणा इत्यर्थात् ॥ तदाह

**याजकत्वस्यैवेति ।** (कै)

तद्व्यवहारस्यैवेत्यर्थः ॥

**[1]यस्तर्हीति ।** (भा)

तत्र लक्षणायां न प्रमाणमिति तत्र शब्दार्थ एव भविष्यत्वमिति भावः । तत्रापि प्रकरणाल्लक्षणेत्युत्तरम् । सम्बन्धशब्देन प्रकरणमुच्यते इत्याह

**तस्य च तावदिति ॥** (भा)

**भावियाजकत्वादिकमारोप्येति ।** (कै)

तद्व्यवहारमित्यर्थः । ओदनं भोजको व्रजतीत्यादौ च भविष्यत्वेनैव धात्वर्थप्रतीतेर्निषेधसिद्धिरिति भावः ॥

**कर्त्ता व्रजतीति ।** (कै)

करिष्यामीति व्रजतीत्यस्यार्थ इत्यर्थः ॥

---

१ यस्तर्हि न धातुसम्बन्धः । इमे ऽस्य याजकाः इमे ऽस्य लावका इति । एषोऽपि भूतकालः । कथं तर्हि भविष्यत् कालता गम्यते सम्बन्धात् । भावियाजकत्वादिकमारोप्य तथाविधानादित्यर्थः ॥

# भाववचनाश्च । ३ । ३ । ११ ॥

## ज्ञापकेनेति । (कै)

यद्यपि तुमुन्ल्युडर्थो भावोऽसत्त्वभूतः । घञादिवाच्यस्तु सत्त्वभूत इति [1]"तुमर्थे से सेन" इति सूत्रे भाष्यकैयटयोरुक्तत्वेन तेषां कथं तुमा ल्युटा वा बाधः । तथापि अर्थान्तरविशेषाविवक्षया भाष्ये बोध्यम् । एकदेश्युक्तिर्वा इदं भाष्यम् ॥

## यथाविहिता इति (भा)

साधुत्वद्योतकत्वाद्यर्थौ भावः ॥

## लोकप्रसिद्धमिति । (कै)

यथा विधानं विहितानामेव तथा वाचकत्वमितिभावः ॥

---

वक्तीति वचनः । कृत्यल्युटो बहुलम् (३ । ३ । ११३) इति कर्तरि ल्युट् करण एव वा । भाव उच्यते येन स भाववचनः । अत्र पुरुषाः कर्तारः । भावाधिकारविहिता ण्व भाववचना भवन्ति ॥

---

१ तुमर्थे से सेनसे असेन् क्से कसेनध्यै अध्यैन् कध्यै कध्यैन् शध्यै शध्यैन् तवै तवेङ् तवेनः । ३ । ४ । ९ ॥ अस्त्यन्यः । कर्तुंस्तुमुनोऽर्थ इति । कः पुनरसौ । भावः ॥ कुतो नु खल्वेतद् भावे तुमुन् भविष्यति न पुनः कर्मादिषु कारकेषु ॥ घञादीनां तु धात्वर्थव्यतिरिक्तः सिद्धरूपो वाच्यः ॥

# अण् कर्मणि च । ३ । ३ । १२ ॥

**प्रतिप्रसवस्य लाघवादिति ।** (कै)

कां प्रति बाधकरूपेण ण्वुला बाधितस्याणः तुमादयो बाधकरूपेण न भवन्तीति निषेधनिष्ठमात्रेण प्रतिप्रसवत्वं सिद्धानुवादेन च तन्निषेध निवृत्तिः । इत एवापूर्वविध्यपेक्षया लाघवम् । अपवादकादिविषये तु परत्वाण्ण्वुलेव स्यान्नत्वण् । न च परत्वाद्यं कादीनामपि बाधकः । अपूर्वविधित्वापत्तेरिति भावः ॥

**ततश्चेति ।** (कै)

अण्वचनो बाधको भवतीत्यर्थं कर्मण्युपपदे एव तस्य बाधकत्वमिति भावः ॥

**कर्मसाचेति ।** (कै)

एवं च तत् सामर्थ्यात् परत्वेनापवादकादिविषयेऽपि प्रतिप्रसवविधित्वमस्येति भावः ॥ ननु क्रियार्थोपपदे विधानार्थं-

१ चकारः सन्नियोगार्थ इति । अन्यथा पर्य्यायेण स्यात् । कदाचित् क्रियार्थायामेव क्रियायामुपपदे कदाचित् कर्मण्येव केवले । वचनं तु भविष्यतिकाले कादीनामपवादानां बाधनार्थं स्यात् । चकारात्तु सन्नियोगार्थात् समुदायस्यैव प्रत्ययोत्पत्तिं प्रति निमित्तत्वमुपपदसंज्ञा तु प्रत्येकमेव भवति प्रत्येकं सप्तमी निर्देशात् । तेन केवलस्यापि कर्मणः समासो भवति ।

मणित्येवास्तु कर्मग्रहणं व्यर्थं केवलकर्मोपपदे सामान्यसूत्रेण "[1]कर्मण्यण्" इत्यनेनैव सिद्धेरत आह

**वचनन्त्विति ।** (कै)

कर्म ग्रहणन्त्वित्यर्थः ॥

**भविष्यति काले इति ।** (कै)

क्रियार्थोपपदे ऽसत्यपि कंबलदाय इत्यादौ कादिबाधनार्थमेव स्यादितिभावः ॥ भाष्ये

**चेमैवेति ।** (भा)

उपपदसंज्ञयोरपि समुच्चय इति भावः ॥ युक्त्यन्तरमाह

**[2]प्रत्येकं चेति ॥** (भा)

तथाचष्टे

**कर्मणीति ॥** (कै)

---

१ अ ३ । पा २ । सू १ ॥

२ उपलब्ध नागेशभट्टीय विवरणे यद्यपि 'प्रत्येकं वेति' इति पाठोऽस्ति तथापि बहुषु महाभाष्यपुस्तकेषु-'चेति' दर्शनादत्र तथैव स्थापितः ॥

# लृट् प्रैषे च। ३। ३। १३॥

क्रियायामिति। (कै)

तस्मिन्सत्येवोभयत्र सिद्धिरिति भावः॥

ण्वुला बाधितत्वादिति। (कै)

बाधकन्यायाभावस्य ज्ञापनात् बाधकन्यायेन ण्वुलिति हर-दत्तस्तु चिन्त्य एव॥

प्रैषग्रहणादिति (कै)

तत् सामर्थ्याद् योगविभाग इति भावः॥ सूत्र पाठस्तु च रहित इति तात्पर्यः॥ अन्यथा "प्रैषवचनं क्रियार्थक्रियायां प्रतिपदविध्यर्थमि"ति भाष्यासंगतिः॥ चकारसत्वेपि तस्यायमर्थो न प्रैषग्रहणस्येतिस्पष्टमेव॥ ननु तत्सामर्थ्यात् क्रियोपपदे नैतत्व कल्पनात्स्यादितिमत्वा शंकते

साधीयः। (भा)

इत्यादि॥ भाष्ये

निर्भज्यते। (भा)

विभज्यते इत्यर्थः॥

लृट् प्रैषे इत्येवमुचितम्। चकारस्तु अपाणिनीयपाठः॥

**अक्रियार्थोपपदत्वादिति ।** (भा)

क्रियार्थोपपदभिन्नोपपदार्थकत्वादित्यर्थः ॥ स्वाशयं प्रकटयति

**एवं तर्हीति ।** (भा)

च घटितः पाठः कर्त्तव्य इति भावः ॥

[1]**वार्त्तिककारस्येति ।** (कै)

तेन वार्त्तिककृत्कृतोऽयं च शब्दघटितोऽयं न्यास इति सूचितं चकारं वार्त्तिककृदुक्तः ॥

---

१ शेषः क्रियार्थोपपदादन्य' । क्रिया क्रियार्थोपपदं यस्मिन् भविष्यति काले ततोऽन्यो भविष्यन्नित्यर्थः ॥

# लृटः सद्वा । ३ । ३ । १४ ॥

---

लृड्रूपोपात्तानामिति । (कै)

इदं च वृत्त्यादिव्यवहारात् प्रयोगवशाच्चावसेयम् ॥

---

लृट इति वचनं स्थानिनिर्देशार्थम्। अन्यथा सत्सञ्ज्ञकौ प्रत्ययौ स्वतन्त्रौ स्यातां न त्वादेशौ॥ कथं श्वोऽग्नीनाधास्यमानेन इत्यनद्यतने शतृशानचौ भवतः। उक्तोऽत्र परिहारो "व्यत्ययो बहुलम्" इति कालव्यत्ययेन लृट् ॥

# अनद्यतने लुट् । ३ । ३ । १५ ॥

**अनद्यतनेऽपीति ।** (कै)

[1]'लृट् शेष' इतिसूत्रेण केवलभविष्यति ज्ञापकेन अनद्यतन-भविष्यतीत्यर्थः ॥ तत्रान्यतरनिर्देशेऽन्यतरस्मिन् न स्यादत आह

**तन्त्रेणेति ॥** (कै)

**एकशेषेणेति ।** (कै)

विभक्त्यन्तिकशेषेणेत्यर्थः ॥ एतच्च ज्ञापकं यद्विषयलृट एवेति तद्विषयलुटोऽनद्यतनेऽ साधुत्वमेवेति केचित् । सामान्यतः अपूर्व-ज्ञापकमित्यन्ये ॥ भाष्ये

**परिदेवनम् ।** (भा)

अनुशोचनम् ॥

**[2]श्वस्तनीति** (भा)

लुटः संज्ञा ॥

**[3]भविष्यन्त्यर्थे** (भा)

लृडर्थे भविष्यत् सामान्ये इत्यर्थः ॥

---

१ अ ३ । पा ३ । सू-१३ ॥

२ लुटः पूर्वाचार्य्यसंज्ञा ॥

३ भविष्यन्तीशब्देन पूर्वाचार्य्यसंज्ञया लृडुच्यते ॥

यैवमिति । (भा)

विसंवितम् ॥

[1]अनभियुक्तः (भा)

अभ्यासहीनः । अद्यतनविषयमेतत् प्रयोगद्वयम् ॥

---

# पदरुजविशस्पृशो घञ् । ३ । ३ । १६ ॥

स्पर्शोनाम (कै)

इत्युदाहरणम् ॥

अन्यच (कै)

व्याध्यतिरिक्ते ॥

---

1 परिचयरहितः ॥

# सृस्थिरे । ३ । ३ । १७ ॥

कालान्तरस्य प्रापक इति । (कै)

प्राप्तिमानित्यर्थः । कालान्तरस्थायीति यावत् ॥

अस्थिरार्थमिति । (कै)

'विसारो मत्स्यः[१] (भा)

इत्यत्रैकदेशस्थस्य कालान्तराप्रापकता अस्थिरत्वम् ॥

बलम्

दृढोंऽशः । सारो बलमित्यपि शरीरे दृढांशस्यैव बल- पदार्थत्वादुपपन्नं न्याय्यस्यापि दृढत्वादेव तत्रापि सारशब्दः सिद्धः । एवं श्रेष्ठेऽपि 'खदिरसारादौ' कैयटोक्तस्थिरत्वाभावश्चिन्त्यः । तस्मात् सूत्रस्यैव विषयपरिगणनमिदम् । चिरस्थैकरूपास्थिरत्वस्य कैयटोक्तस्थिरत्वप्रतिद्वन्द्विनो निरूपयितुमशक्यत्वाच्चेत्यन्ये ॥

---

१ विविधं सरतीति ॥

२ उपलब्ध नागेशभट्टीय विवरणपुस्तके "मत्स्याः" इति पाठोऽस्ति परम् उपलब्धमहाभाष्ये-"मत्स्यः" इति पाठः ॥

# भावे। ३। ३। १८॥

ततश्च शब्देनेति। (कै)

भाव इति शब्देनेत्यर्थः॥

योऽर्थः। (कै)

सिद्धावस्थः॥ नन्वेवं *"स्त्रियां क्तिन्" इति सूत्रासंगतिरत आह

स्त्रियां भाव इति॥ (कै)

नन्वेवमपि †"नपुंसके भावे" इत्यसंगतं तत्रार्थान्तरानुवृत्त्यभावादत आह

एवमिति॥ (कै)

कर्त्तरीति। (कै)

‡"कर्त्तरि कृत्" इत्यनेन तत्रेत्यर्थः॥ लिङ्गसंख्ययोर्नान्तरीयकत्वमुपपादयति

* अ ३। पा ३। सू ९४॥
† अ ३। पा ३। सू ११४॥
‡ अ ३। पा ४। सू ६७॥

नित्यानामेव शब्दानां माङ्गल्यस्य निवृत्तये।
अन्वाख्यानाद् भावशब्दे पश्चि नान्योऽन्यसंश्रयः॥

सत्त्वेति ॥ (कै)

प्रातिपदिकमात्रं निर्दिश्यतामिति वदन्तं प्रत्याह

शब्देति । (कै)

न केवलाप्रकृतिरितिनिषेधादिति भावः ॥ भाष्ये

कयाचिद् विभक्त्येति । (भा)

संख्याश्रयेत्यर्थः ॥

विनार्थे इति । (कै)

एवं यद्विना यन्न भवति तन्नान्तरीयकमित्यर्थः ॥

भाष्यकारवचनप्रामाण्यादेति । (कै)

वाशब्दो हेतौ । पृषोदरादित्वमित्यर्थः ॥

न लोपाभाव इति । (कै)

निषेधार्थकोऽननुबन्धको न शब्दो नास्त्येवेति भावः ॥ ननु कण्टकस्य पुंस्त्वात् कंटकानीत्यनुपपन्नमतआह

कंटकशब्दस्येति । (कै)

*अर्द्धर्चादित्वादिति भावः ॥

* अ २ । पा ४ । सू-३१ ॥

न विनालिङ्गसंख्याभ्यां सत्त्वभूतोऽर्थ उच्यते ।
इत्यतस्तत्समुपादानं तयोर्न तु विवक्षितम् ॥

प्रयोगमूलत्वादिति। (कै)

अनुवादगतत्वादविवक्षेति तत्त्वम् ॥

न ह्यत्रेति। (भा)

भाष्यव्याख्यानुवादे इत्यर्थः ॥ किंचिदधिकं वक्तुं विवक्षायामपि न दोष इत्याह

अथवेति। (भा)

भाष्ये क्रत्वोर्दृष्टान्तार्थं ग्रहणम्। यत्समभिव्याहारे साध्यत्वेन भावमात्रं गुर्वोर्थं इति तस्य सामान्यवाचित्वम् ॥

भिन्नलिङ्गेति। (कै)

पाकः पक्तिः पचनमिति भावः ॥

[भिन्नलिङ्गसंख्यानुगतेषु। (कै)

तद्विशिष्टेषु ॥

[1]सामान्यम्। (कै)

सत्त्वभावरूपविद्रुत्वाख्यम् ॥

तच्चैकं पुंस्त्वानुगतं चेति। (कै)

अत एव पक्तिर्भाव इत्याद्युपपद्यते धर्मपरस्यापि धर्मधर्मिणोरभेदात् सामानाधिकरण्यम् ॥

---

१ सत्ताख्यं सामान्यमपि भवति नामाख्यत्वेनाभिधीयते इति क्रियासामान्यवाची भवतिर्भवति ॥

**तदाश्रित्यति । (कै)**

एवं लिङ्गसंख्ययोर्विवक्षायामपि न दोषः । न चैवं पक्तिरित्यादौ पुंस्त्वापत्तिः । तादृशविशेषगतसामान्यस्य भावशब्दवाच्यस्य सिद्धत्वस्य पुंस्त्वैकत्वयोः सत्त्वेऽपि तदाश्रयविशेषस्य नानालिङ्गत्वात्तीत्वाद्युपपत्तिरितिभावः ॥

**सामान्यमिति । (कै)**

तद्गतसिद्धत्वाख्योधर्म इत्यर्थः ॥

**विशेषा इति । (कै)**

तदाश्रया व्यक्तय इत्यर्थः । तास्व भावविहितप्रत्ययान्तवाच्या अनेकलिङ्गा इति भावः ॥

**कर्त्रादिभेदादिति । (कै)**

स्त्र्यादिभेदादित्यपि बोध्यम् । क्वचित्तु कैयटे तथैव पाठः ॥

**सामान्यानुगत इति । (कै)**

सिद्धत्वरूपसामान्यानुगत इत्यर्थः ॥

**[1]सविधिरिति । (कारि:)**

प्रकार इत्यर्थः । यथा । एकस्यैवाचार्य्यत्वं मातुलत्वं सम्बन्धिभेदात् तथा एकस्मिन्नेव पाकादिषु साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषरूपताभावशब्दवाच्य सामान्यं चेत्यर्थः । तच्च तत्र यथा

आचार्य्यो मातुलश्चेति यथैको व्यपदिश्यते ।
सम्बन्धिभेदादर्थात्मास विधिः पक्तिभावयोः ॥

| | | |
|---|---|---|
| Dana [illegible], Fasc. [illegible] @ -/10/- each | [illegible] | [illegible] |
| D[illegible], Fasc. 1 @ -/10/- each .. | [illegible] | 10 |
| Dictionary of the Kashmiri Language, Part I .. | [illegible] | [illegible] |
| Gadadhara Paddhati Kālasāra, Vol. I, Fasc. 1-7 @ -/10/- each | 4 | [illegible] |
| Ditto Ācārasāra, Vol. II, Fasc. 1-4 .. | [illegible] | [illegible] |
| Gobhiliya Grihya Sūtra, Vol. I .. | [illegible] | [illegible] |
| Ditto Vol. II, Fasc. 2-3 @ 1/4/- each .. | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista .. | 2 | 0 |
| Ditto Grihya Sangraha .. | 0 | 10 |
| Haralata .. | 1 | 14 |
| *Institutes of Vishnu (Text), Fasc. 2 @ -/10/- each .. | 0 | 10 |
| Kāla Viveka, Fasc. 1-7 @-/10/- each .. | 4 | 6 |
| Karmapradiph, Fasc. 1 .. | 1 | 4 |
| Kātantra, Fasc. 1-6 @-/12/-each .. | 4 | 8 |
| *Katha Sarit Sagara (English), Fasc. 4-14 @ 1/- each .. | 11 | 0 |
| Kavi Kalpa Lata, Fasc. 1 .. | 0 | 10 |
| Kavindravacana Samuccayah .. | 3 | 8 |
| Kiranavali, Fasc. 1-3 @ -/10/- .. | 1 | 14 |
| Kurma Purana, Fasc. 1-9 @ -/10/- each .. | 5 | 10 |
| *Lalita Vistara (English), Fasc. 1-3 @ 1/- each .. | 3 | 0 |
| Madana Pārijāta, Fasc. 1-11 @ -/10/- each .. | 6 | 14 |
| Mahā-bhāsya-pradipoddyota, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-12; Vol. III, Fasc. 1-10 @ -/10/- each .. | 19 | 6 |
| Ditto Vol. IV, Fasc. 1-3 @ 1/4/- each .. | 3 | 12 |
| Maitra, or Maitrayaniya Upanishad, Fasc. 1-2 .. | 1 | 4 |
| Manutīkā Sangraha, Fasc. 1-3 @ -/10/- each .. | 1 | 14 |
| Mārkandeya Purana (English), Fasc. 1-9 @ 1/- each .. | 9 | 0 |
| *Markandeya Purana (Text), Fasc. 4-7 @ -/10/- each .. | 2 | 8 |
| *Mimansa Darcana (Text), Fasc. 9, 11-17 @ -/10/- each .. | 5 | 0 |
| *Mirror of Composition (English), Fasc. 4 .. | 2 | 0 |
| Mugdhabodha Vyakarana, Vol. I, Fasc. 1-7 @ -/10/- each .. | 4 | 6 |
| Nirukta (2nd edition), Vol. I, Fasc. 1-2 @ 1/4/- .. | 2 | 8 |
| *Nirukta (old edition), Vol. IV, Fasc. 1-8 @ -/10/- each .. | 5 | 0 |
| Nityācārapaddhati, Fasc. 1-7 @ -/10/- each .. | 4 | 6 |
| Nityācārapradīpa, Vol. I, Fasc. 1-8, Vol. II, Fasc. 1-4 @ -/10/- each | 7 | 8 |
| Nyaya Vartika Tatparya Parisudhi, Fasc. 1-7 @ -/10/- each .. | 4 | 6 |
| *Nyayavartika (Text), Fasc. 2-7 @ -/10/- each .. | 3 | 12 |
| Nyayasarah .. | 2 | 0 |
| Padumāwati, Fasc. 1-6 @ 2/- each .. | 12 | 0 |
| *Parāçara Smrti, Vol. I, Fasc. 2-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ -/10/- each .. | 11 | 14 |
| Parāçara, Institutes of (English) @ 1/- each .. | 1 | 0 |
| *Paricista Pravan (Text), Fasc. 5 @ -/10/- each .. | 0 | 10 |
| Pariksamukha Sutram .. | 1 | 0 |
| Prabandhacintāmani (English), Fasc. 1-3 @ 1/4/ each .. | 3 | 12 |
| Prākrita-Paingalam, Fasc. 1-7 @ -/10/- each .. | 4 | 6 |
| Prthviraja Vijaya, Fasc. 1-2 .. | 1 | 4 |
| Rasarnavam, Fasc. 1-3 .. | 3 | 12 |
| Ravisiddhanta Manjari, Fasc. 1 .. | 0 | 10 |
| *Saddarśana-Samuccaya, Fasc. 2-3 @ -/10/- each .. | 1 | 4 |
| Sadukti-karna-mrita, Fasc. 1 @ -/10/- each .. | 0 | 10 |
| Samaraicca Kaha, Fasc. 1-7 @ -/10/- each .. | 4 | 6 |
| *Samavada Sanhita, Vol. I, Fasc. 1-4, 6-10; Vol. 2, Fasc. 2-6; Vol. 3, Fasc. 1-7; Vol. 4, Fasc. 1-6; Vol. 5, Fasc. 1-8 @ -/10/- each | 21 | 4 |
| *Sankara Vijaya (Text), Fasc. 2-3 @ -/10/- each .. | 1 | 4 |
| *Sankhya Aphorisms of Kapila (English), Fasc. 2 .. | 1 | 0 |
| *Sankhya Pravachana Bhashya, Fasc. 2 .. | 0 | 10 |
| Sānkhya Sūtra Vrtti, Fasc. 1-4 @ -/10/- each .. | 2 | 8 |
| Ditto (English), Fasc. 1-3 @ 1/- each .. | 3 | 0 |
| Siva Parinahya, Fasc. 1-2 .. | 1 | 4 |
| Six Buddhist Nyaya Tracts .. | 0 | 10 |
| Smriti Prakasha, Fasc. 1 .. | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ -/10/- each .. | 3 | 12 |
| Srauta Sutra of Latyayana (Text), Fasc. 1-9 @ -/10/- each .. | 5 | 10 |
| Sri Surisarvasvam, Fasc. 1-3 @ -/10/- each .. | 1 | 14 |
| Suçruta Samhitā (English), Fasc. 1 @ 1/- each .. | 1 | [illegible] |
| Suddhi Kaumudī, Fasc. 1-4 @ -/10/- each .. | 2 | [illegible] |
| Sundaranandam Kavyam .. | 1 | [illegible] |
| *Suryya Siddhanta, Fasc. 2 @ 1/4/- .. | 1 | [illegible] |
| Syainika Sastra .. | 1 | [illegible] |
| *Taittereya Samhita (Text), Fasc. 17-45 @ -/10/- each .. | 18 | [illegible] |
| *Taittiriya Aranyaka of Black Yajur Veda (Text), Fasc 5-11 @ -/10/- each .. | 4 | [illegible] |
| *Taittiriya Brahmana (Text), Fasc. 2-24 @ -/10/- each .. | 13 | [illegible] |

| | Rs. | As. |
|---|---|---|
| *Taittiriya Pratisakhya (Text), Fasc. 2–3 @ -/10/- each .. .. | 1 | 4 |
| *Tandya Brahmana (Text), Fasc. 13–18 @ -/10/- each .. .. | 3 | 12 |
| Tantra Vartika (English), Fasc. 1–15 @ 1/4/- .. .. .. | 18 | 12 |
| *Tattva Cintāmaṇi, Vol. II, Fasc. 7–10; Vol. III, Fasc. 1–2; Vol IV, Fasc. 1; Vol. V, Fasc. 1–5; Part IV, Vol. II, Fasc. 1–12 @ -/10/- each .. .. .. .. .. | 14 | 6 |
| Tattva Cintamani Didhiti Prakas, Fasc. 1–6 @ -/10/- each .. | 3 | 12 |
| Tattva Cintamani Didhiti Vivriti, Vol. I, Fasc. 1–8; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1 @ -/10/- each .. .. .. .. | 7 | 8 |
| *Tattvarthadhigama Sutram, Fasc. 2–3 @ -/10/- each .. .. | 1 | 4 |
| Tirthacintamoni, Fasc. 1–4 @ -/10/- each .. .. .. | 2 | 8 |
| Trikāṇda-Maṇdanam, Fasc. 1–3 @ -/10/- .. .. .. | 1 | 14 |
| Tul'si Satsai, Fasc. 1–5 @ -/10/- .. .. .. .. | 3 | 2 |
| Upamita-bhava-prapañca-kathā, Fasc. 1–14 @ -/10/- each.. .. | 8 | 12 |
| *Uttara Naishadha (Text), Fasc. 6–12 @ - 10/- each .. .. | 4 | 6 |
| Uvāsagadasāo (Text and English), Fasc. 1–6 @ 1/- .. .. | 6 | 0 |
| Vajjalaggam, Fasc. 1 .. .. .. .. .. | 0 | 10 |
| Vallāla Carita, Fasc. 1 @ -/10/- .. .. .. .. | 0 | 10 |
| *Varaha Purana (Text), Fasc. 2–14 @ -/10/- each .. .. | 8 | 2 |
| Varṣa Kriyā Kaumudi, Fasc. 1–6 @ -/10/- .. .. .. | 3 | 12 |
| Vayu Purana (Text), Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–7 @ -/10/- each | 8 | 2 |
| *Vedanta Sutras (Text), Fasc. 7–13 @ -/10 - each .. .. | 4 | 6 |
| Vidhāna Pārijāta, Fasc. 1–8; Vol. II, Fasc. 1 @ -/10/- .. .. | 5 | 10 |
| Ditto Vol. II, Fasc. 2–5 @ 1/4/- .. .. .. | 5 | 0 |
| Ditto Vol. III, Fasc. 1 .. .. .. .. | 0 | 10 |
| Vishahitam, Fasc. 1 .. .. .. .. .. | 0 | 10 |
| Vivādaratnākara, Fasc. 1-7 @ -/10/- each .. .. .. | 4 | 6 |
| Vrhat Svayambhū Purāṇa, Fasc. 1–6 @ -/10/- .. .. .. | 3 | 12 |
| *Vrhannaradiya Purana (Text), Fasc. 3–6 @ -/10/- each .. .. | 2 | 8 |
| Yogaśastra, Fasc. 1–5 .. .. .. .. .. | 5 | 10 |
| *Yoga Sutra of Patanjali (Text and English), Fasc. 3–4 (Fasc. 3, Re. 1/-, Fasc. 4, Rs. 2/-) .. .. .. .. .. | 3 | 0 |

## *Rajasthani Series.*

| | | |
|---|---|---|
| A Descriptive Catalogue of Bardic and Historical Manuscripts. | | |
| Sect. i: Prose Chronicles. Part i: Jodhpur State. Fasc. 1 .. | 1 | 0 |
| Sect. i: Prose Chronicles. Part ii: Bikaner State. Fasc. 1 .. | 1 | 0 |
| Sect. ii: Bardic Poetry. Part i: Bikaner State. Fasc. 1 .. | 1 | 0 |
| Vacanikā Rāthōṛa Ratana Siṅghajī rī Mahesadāsōta rī Khiṛiyā Jagā rī kahī. Part i: Ḍiṅgaḷa Text with Notes and Glossary .. | 1 | 8 |
| Veli Krisana Rukamaṇī rī Rāthōṛa rāja Prithī Rāja rī kahī. Part i: Ḍiṅgaḷa Text with Notes and Glossary .. .. | 1 | 8 |
| Bardic and Historical Survey of Rajputana, Chanda rāu Jēta Sī rō .. | 1 | 8 |

## *Tibetan Series.*

| | | |
|---|---|---|
| Amarakosah, Fasc. 1–2 .. .. .. .. .. | 4 | 0 |
| Amartika Kamdhenuh .. .. .. .. .. | 1 | 0 |
| Bauddhastotrasangraha, Vol. I .. .. .. .. | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1–4 @ 1/- each .. | 4 | 0 |
| Nyayabindu (A Bilingual Index) .. .. .. .. | 1 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1–2 .. .. .. | 2 | 0 |
| Pag-Sam Shi Tin, Fasc. 1–4 @ 1/- each .. .. .. | 4 | 0 |
| Prajna Pradipah .. .. .. .. .. | 1 | 0 |
| Rtogs brjod dpag hkhri Śiṅ (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc. 1–13; Vol. II, Fasc. 1–11 @ 1/- each.. .. | 24 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–3; Vol. III, Fasc. 1–6 @ 1/- each .. .. .. .. .. | 14 | 0 |
| Timed-Kun-Den .. .. .. .. .. | 1 | 0 |
| or Tibetan Texts. The Song of the Eastern Snow Mountain .. | 1 | 0 |

---

| | | |
|---|---|---|
| Min… …nskrit Manuscripts, Fasc. 1–34 @ 1/- each .. .. | 34 | 0 |
| …itto (Palm-leaf and selected paper MSS.) @ 3/- each .. | 6 | 0 |
| Notice of S… …ddhist Sanskrit Literature, by Dr. R. L. Mitra .. | 5 | 0 |
| Ditto d… the Search of Sanskrit MSS., 1895-1900, 1901-1905, and | | |
| Nepalese B… -/8/- each .. .. .. .. | 1 | 8 |
| Report on … …cientific Periodicals in Calcutta Libraries .. | 5 | 0 |

1906-1911 @

Catalogue of the S…

N.B.—All Ch… …eques, Money Orders, &c., must be made payable to the "Treasurer, Asia… …ic Society," only.

30-11-20.

**Bo oks are supplied by V.P.P.**

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1443.

# महाभाष्यप्रदीपोद्योतः ।

# MAHĀBHĀṢYAPRADĪPODDYOTA,

OR

## A COMMENTARY ON PANINI GRAMMAR.




BY
NĀGEÇA BHAṬṬA
EDITED BY
PAṆḌIT BAHUVALLABHA ÇASTRI,
*Lecturer on Panini and Vedas, Govt. Sanskrit College, Calcutta.*

VOL. IV. FASCICULUS V.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET.
1921.

[illegible]TIC SOCIETY OF BENGAL

No. 1, PARK STREET, CALCUTTA

AND OBTAINABLE FROM

The Society's Agents—

Messrs LUZAC & Co., 46, *Great Russell Street, London, W.C.*

M. PAUL GEUTHNER, 13, *Rue Jacob, Paris, VI*e.

*Complete copies of those works marked with an asterisk * cannot be supplied as some of the Fasciculi are out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | As. |
|---|---|---|
| Açvavaidyaka, Fasc. 1–5 @ -/10/- each | 3 | 2 |
| Advaitachintā Kaustubha, Fasc. 1–3 @ -/10/- each | 1 | 14 |
| *Agni Purana (Text), Fasc. 4–14 @ -/10/- each | 6 | 14 |
| *Aitareya Aranyaka of Rig-Veda (Text), 2–4 @ -/10/- each | 1 | 14 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1–5; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–5, Vol. IV, Fasc. 1–8 @ -/10/- each | 14 | 6 |
| Aitareyalocana | 2 | 0 |
| Amarakosha, Fasc. 1–2 | 4 | 0 |
| *Anu Bhasyam (Text), Fasc. 2–5 @ -/10/- each | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1–3 @ -/10/- each | 1 | [illegible] |
| *Aphorisms of Sandilya (English), Fasc. 1 @ 1/- | 1 | [illegible] |
| Astasāhasrikā Prajñāpāramitā, Fasc. 1–6 @ -/10/- each | 3 | [illegible] |
| *Atharvana Upanishads (Text), Fasc. 2–5 @ -/10/- each | 2 | [illegible] |
| Ātmatattvaviveka, Fasc. 1–3 | 1 | [illegible] |
| Avadāna Kalpalatā (Sans. and Tibetan), Vol. I, Fasc. 1–13; Vol. II, Fasc. 1–11 @ 1/- each | 24 | [illegible] |
| Bālam Bhatti, Vol. I, Fasc. 1–2; Vol. II, Fasc. 1 @ -/10/- each | 1 | [illegible] |
| Bauddhastotrasaṅgraha | 2 | [illegible] |
| Baudhāyana Śrauta Sūtra, Fasc. 1–3; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–3 @ -/10/- each | 6 | [illegible] |
| *Bhamati (Text), Fasc. 5–8 @ -/10/- each | 2 | [illegible] |
| Bhassavritty | 0 | [illegible] |
| Bhātta Dīpikā, Vol. I, Fasc. 1–6; Vol. II, Fasc. 1–2 @ -/10/- each | 5 | [illegible] |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1–7 @ -/10/- each | 4 | [illegible] |
| Brahma Sutras (English), Fasc. 1 @ 1/- | 1 | 0 |
| Bṛhaddevatā, Fasc. 1–4 @ -/10/- each | 1 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1–6 @ -/10/- each | 3 | 12 |
| Çatadūṣaṇī, Fasc. 1–2 @ -/10/- each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1–4 @ 2/- each | 8 | 0 |
| *Çatapatha Brāhmaṇa, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–5; Vol. III, Fasc. 1–7; Vol. V, Fasc. 1–4 @ -/10/- each | 14 | 6 |
| Ditto Vol. VI, Fasc. 1–3 @ 1/4/- each | 3 | 12 |
| Ditto Vol. VII, Fasc. 1–5 @ -/10/- | 3 | 2 |
| Ditto Vol. IX, Fasc. 1–2 | 1 | 4 |
| Çatasahasrikā-prajñāpāramitā, Part I, Fasc. 1–18, Part II, Fasc. 1 @ -/10/- each | 11 | 14 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 4–25; Vol. III, Part I, Fasc. 1–18, Part II, Fasc. 1–10; Vol. IV, Fasc. 1–6 @ -/10/- each | [illegible] | 0 |
| Ditto Vol. IV, Fasc. 7 @ 1/4/- each | 1 | [illegible] |
| Ditto Vol. IV, Fasc. 8–10 @ -/10/- | 1 | 14 |
| Çlokavartika (English), Fasc. 1–7 @ 1/4/- each | [illegible] | 12 |
| *Çrauta Sutra of Āpastamba (Text), Fasc. 6–17 @ -/10/- each | [illegible] | [illegible] |
| *Çrauta Sutra of Çānkhāyana, Vol. I, Fasc. 1–7; Vol. II, Fasc. 1–4; Vol. III, Fasc. 1–4; Vol. IV, Fasc. 1 @ -/10/- each | [illegible] | [illegible] |
| Çri Bhashyam (Text), Fasc. 1–3 @ -/10/- each | | |
| Çri Çankaradigvijaya Charita, Fasc. 1–4 | | |
| [illegible] Kaumudi, Fasc. 1–3 @ -/10/- each | | |

निरूपकभेदाद् भिन्नम्। एवं प्रकृतेऽपि वाचकभेदात् कारकनिरूपितं साध्यत्वं क्रियान्तरनिरूपितं च सिद्धत्वमिति बोध्यम्॥

**वाच्यत्वेनेति।** (कै)

अनेकार्थत्वाद् धातूनां सिद्धत्वमपि घञन्तभूधातोरर्थ इति भावः॥

**यत्सामान्यमिति।** (कै)

साध्यत्वविशिष्टतत्तत्क्रियात्वरूपविशेषसत्त्वेऽपि यत्सिद्धत्वाख्यसामान्यं घञन्तभवतिवाच्यं तत्प्रत्ययार्थत्वनिर्दिश्यते इत्यर्थः। न च तस्यैकत्वात् पुंस्त्वाच्च चिकीर्षा इत्यादौ टाबादिनस्यादिति वाच्यम्। तस्य भावसिद्धत्वरूपस्यैकत्वपुंस्त्वविशिष्टस्य विशेषणत्वेन सिद्धात्। अविशेषणत्वेन भासमानेऽपि तेन स्वाश्रयपुंलिङ्गाद्ययोग्यतापनीयते इति न दोषः॥

**सत्त्वरूपत्वमिति।** (कै)

एवं च सिद्धत्वसाध्यत्वरूपो धर्मविशेषो धात्वर्थः। पाकादिपदार्थ इति भावः॥

**[1]आख्यातशब्दे** (हरिः)

पचतीत्यादौ॥

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धना॥

भागाभ्याम् (हरिः)

प्रकृतिप्रत्ययाभ्याम् ॥

साध्यसाधन (हरिः)

क्रियाकारके बोध्ये इत्यर्थः ॥

---

# अकर्त्तरि च कारके संज्ञायाम्।
# ३।३।१९॥

विधिप्रतिषेधयोरिति। (कै)

एकविषयत्वे विकल्पापत्तेस्तदितरकारकविषयता विधेयेति भावः ॥ ननु भावविषयत्वमेव स्यादत आह

भावे चेति ॥ (कै)

ननु स्वार्थे विधानमपि भावे इत्येव सिद्धमत आह

साध्यमानेति। (कै)

अकर्त्तरीति तु सामान्यप्राप्तकर्थसम्बन्धार्थं स्यादिति भावः ॥

भाष्ये

**विहित इति ।** (भा)

एवञ्च सामर्थ्यात् कारक एव भविष्यतीति भावः ॥ इतर आह

**तेनेति ॥** (भा)

**अकर्त्तरि संज्ञायामेवेति ।** (भा)

सामान्यतः [1] "कर्त्तरि कृत्" इति सूत्रप्राप्तकर्त्तरि न किन्तु भावे तत्र च संज्ञायामेवेत्यर्थः ॥

**संज्ञाभूत इति ।** (भा)

संज्ञात्वं प्राप्त इत्यर्थः ॥

**भावः ।** (भा)

भावप्रत्ययान्तम् इत्यर्थः ॥

**यदर्थो विधिरिति ।** (भा)

नियमविधिरित्यर्थः ॥

**योगविभागास्त्विति ।** (कै)

अकर्त्तरिग्रहणास्येत्यपि बोध्यम् । नियमपक्षे तस्यापि वैयर्थ्या-दित्याङः ॥

**उक्तो भावभेदो भाष्ये ।** (भा)

---

१ अ ३ । पा ४ । सू ६७ ॥

प्रकृतिव्यतिरिक्तस्य छात्रस्य वाक्यमित्यन्ये । [1]भगवत एव इत्यन्ये ॥ भाष्ये

[2]नञिवयुक्तमिति । (भा)

प्रसज्यप्रतिषेधात् पर्युदासो न्याय्य इति भावः ॥

घञनुक्रमणमित्यादीति । (कै)

[3]"परिमाणाख्यायाम्" इत्यादि घञ् विधानम् अजपोरेव बाधकं न तु स्त्रीप्रत्ययानामित्यर्थकं हि तद्वार्त्तिकमिति भावः ॥ ननु 'परिमाणाख्यायाम्' इत्यत्र कारके इत्यनुवृत्त्यावपि कर्मणि क्तिनं बाधित्वा घञ् भूदित्यर्थं तदावश्यकमिति चेन्न। परिमाणाख्यायां भाव एव क्तिनं मन्यते। अभिधानस्वाभाव्यादिति न दोषः ॥

---

१ एतद् वाक्यं भगवत एव नहि छात्रस्य। महाभाष्ये बहुषु दृष्टत्वात् ॥ प्राचीनमहर्षीणामेषा शैली ॥

२ नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः । परिभा-७५ ॥

३ अ ३ । पा ३ सू २० ॥

# [1]परिमाणाख्यायां सर्वेभ्यः । ३ । ३ । २० ॥

परिमाणं परिच्छित्तिः तस्या आख्यानं कथनं तत्रेत्यर्थः । परिच्छित्तिश्च प्रत्ययार्थस्येति भावः ॥ सार्वैकादिशब्दैरुदाहरणेषु स्पष्टैव । पुनर्विधानादेवाऽप् विषये भवतीत्यत आह

अन्यथेति ॥ (कै)

उपादानादनेनैवेति । (कै)

परिमाणाख्यायामित्यनेनैवेत्यर्थः । [2]" निरभ्योः पूल्वोः " इति च न कार्य्यमिति भावः ॥ विश्वासनिष्पावौ कर्मणि घञन्तौ । तण्डुलशब्देन शूर्पशब्देन च तत्पुरुषः । निश्चीयतेः सभावसाधनो वा । निश्चायो राशिः । अत्र राश्यैकत्वेन परिच्छेदः । निष्पूयते तुषाद्यपनयनेन स निष्पावस्तण्डुलराशिः । अत्रापि संख्यया परिच्छेदः । [3]" ग्रहवृदृनिश्चिगमश्च " इति अप् प्राप्तिः ॥

१ परिमाणाख्यायामिति भावसाधनः परिमाणशब्दः । आख्यानमाख्या उक्तिः । परिच्छित्तरुक्तौ सत्यामित्यर्थः । कस्य पुनः परिच्छित्तिः प्रत्ययार्थस्य भावस्य कर्तृवर्जितस्य कारकस्य च ॥ तण्डुलनिश्चाय इति निश्चीयते राशीक्रियत इति निश्चायो राशिः । तण्डुलानां निश्चाय इति षष्ठीसमासः । अत्र राश्यैकत्वेन परिच्छित्तिर्गम्यते । अत्र अपि प्राप्ते घञ् । प्रायेण तु निश्चाय इति पाठः तत्राप्यर्थः स एव ॥

२ अ ३ । पा ३ । सू २८ ॥ ३ अ ३ । पा ३ । ५८ ॥

**बाध्यमानापेक्षायामिति ।** (कै)

सामान्यचिन्तायामिदम् ॥ बाध्यविशेषचिन्तायामपि प्रकारविशेषमाह

**समुदायापेक्षायां चेति ॥** (कै)

ननुभावे इत्यनेनैव सिद्धमत आह

**कर्मण्यपीति ।** (कै)

परिमाणज्ञापनार्थं भाष्ये एकादिपदोपादानम् ॥ भाष्ये

**अथापीति ।** (भा)

एवं च पाकादिशब्दानामसंज्ञात्वात् "अकर्त्तरि च" इत्यनेन सिद्धमित्यर्थः । एवं चासंज्ञार्थं परिमाणाख्यायामित्यस्य चारितार्थ्यमिति । अनयोर्विषये च सर्वग्रहणमावश्यकमिति भावः ॥ समाधत्ते

**अजपावपीति ।** (भा)

एवञ्च तण्डुलनिश्चाय इत्यादावप्यसंज्ञात्वादयोऽप्राप्तौ परिमाणाख्यायामित्येव घञ् सिद्ध इति नार्थः सर्वग्रहणेनेत्यर्थः ॥ अजपोः संज्ञाविषयत्वे युक्तिमाह

**यथा जातीयक इति ।** (भा)

अन्यथाऽसंज्ञायां तयोश्चारितार्थ्येन घञपवादत्वमेव नस्यादिति भावः ॥

१ अ ३ । पा ३ । सू १९ ॥

बहुः (भा)

कृतभार्थ्यः ॥ ननु धातुविशेषणात् सर्वेभ्य इति पञ्चम्यन्तात् सर्वेष्विति कथं लभ्यतेऽत आह

सर्वेभ्य इति

तादर्थ्ये इति ॥ (कै)

ननपादाने 'ऽकर्त्तरिकारके' इत्युक्तेः सिद्धमत आह

तेनाधिकरणे इति । (कै)

अपादानन्तु दृष्टान्तार्थमिति भावः ॥ तदुदाहरणम्

अधीयते अस्मिन् इत्यध्यायः (भा)

स्वाध्यायः काल इत्यर्थः ॥

णच् स्त्रियामिति सर्वेभ्य इति । (भा)

व्यावचोरीत्यादौ युजादिविषयेऽपीत्यर्थः ॥ भाष्ये

कर्मव्यतिहारे (भा)

इत्यादि। तत्र [१]णज् विधायके सूत्रे स्त्रीग्रहणं व्यतिपाकोवर्त्तते इत्यत्र णजभावत्वम्। [२]"स्त्रियां क्तिन्" इत्यतः पृथग् ग्रहणं तु व्यावचोरीत्यादौ युजादीनां बाधकानां बाधनार्थम्। न च

१ कर्मव्यतिहारे णच् स्त्रियाम् इति सूत्रव्याख्यानावसरे "स्त्रीग्रहणम्। व्यतिपाको वर्त्तते" इति भगवता महाभाष्यकारेणोक्तम् इति ॥

२ अ ३। पा ३। सू ९४॥

[1]"व्यतिहारादिषु" [2]"गुरोश्च हलः" इत्यस्यापि बाधप्रसङ्गः । स्त्रियां क्तिन् इत्यधिकारे एव कर्मव्यतिहारेण कृततो णिच इतिन्यायेन सिद्धेः इति तद् वार्त्तिकार्थः ॥

**इञनुण् सर्वेभ्य इति ।** (भा)

सांराविणमित्यादौ भावक्तादिविषयेऽपीत्यर्थः ॥

**अभिविधाविति ।** (भा)

शब्दशक्तिस्वभावाद् भावे एवेनुण् सिद्धौ भावग्रहणं वासरूप-न्यायेन पक्षप्राप्तक्तादिनिवृत्त्यर्थं "नपुंसकभावे" इत्यनन्तरमेव वक्तव्ये पृथक् ग्रहणं तु क्तस्य बाधकानां खलर्थानामपि बाधनार्थं पूर्वविप्रतिषेधेनेति भावः ॥ क्तवत् ल्युटो बाधस्तु नेष्यते इत्याह

**न तु ल्युट इतीति ।** (भा)

एतद् वार्त्तिकार्थः ॥

**उभयाधिकारादिति ।** (कै)

परिमाणाख्यायां भावेऽपीष्टेरिति भावः । उदाहरणयोर्भावे क्तिन् । पूर्वसूत्रस्थभाष्यस्वरसात् ॥

**घञाश्रयेति ।** (कै)

घाश्रयायां तु [3]"जनी जृष् क्नसु'ति मित्त्वेन तारशब्दे

१ "तत्र व्यतिहारादिषु दोषः" प्रकृतसूत्रभाष्ये ॥

२ अ ३ । पा ३ । सू १०३ ॥

३ जनी जृष् क्नसुरञ्जोऽमन्ताश्च । इति धातुपाठान्तर्गतगणसूत्रम् ॥

ह्रस्वापत्तिरिति भावः ॥ ननु जृणाति क्र्यादौ प्लतादौ पठ्यते । अत एव जृतये जनौ जृषिति गणसूत्रे षकारोच्चारणम् । एवं चतस्यामित्त्वेन तस्माद् घञि णिलोपेनापि सिद्धम् ॥

**जार इतीति** (कै)

चेन्न मितोऽमंति रूपव्यावृत्त्यर्थत्वात् । दारयतेर्यद्यपि पचाद्यचा सिद्धम् । तथापि अकावघकाविति स्वरव्यावृत्त्यै इदम् ॥

**करणे वा इति ।** (भा)

पुंसि संज्ञायां च इत्यनेन इदमुपलक्षणं ल्युटोऽपि ॥

# [1]इङश्च । ३ । ३ । २१ ॥

ननु सूत्रेणैव सिद्धमत आह

**प्रकृत्येति । (कै)**

सजातीयत्वादित्यर्थः ॥ तथाच [2]"स्त्रियां क्तिनो" बाधार्थमिदमिति भावः ॥

**कर्मणीति । (कै)**

हरदत्तस्तु करणे इत्याह 'निम्रियतेऽनेन' इति निवृत्तिमाच्छादनं बाहुलकात् करणे क्तः । तदाह

**अङ्गताच्छादनेति ॥ (कै)**

---

१ इङश्चेत्यपादाने स्त्रियामुपसंख्यानम् तदन्ताच्च वा ङीष् । वा । उपाध्याय इति । उपेत्य अस्मादधीयते इति अपादाने घञ् । अध्याय इत्यत्र कर्मणि घञ् ॥ अपादाने स्त्रियामिति घञनुक्रमणमजपोर्विषय इति वचनात् स्त्रियामप्राप्तो घञ् विधीयते ॥ उपाध्याया उपाध्यायीति । या स्वयमध्यापयति तस्यामेतद्रूपम् । पुंयोगे तु नित्यमेव ङीष् । शॄ वायुवर्णनिवृत्तेषु । वा । शारो वायुरिति । करणे घञ् ॥ शारो वर्ण इति । चित्री करणमत्र धात्वर्थः । चित्री क्रियतेऽनेनाश्रय इति । अत्रापि करणे घञ् । वर्णान्तरसंपृक्तश्चेद् वर्णः शारः । निम्रियते आव्रियतेऽनेन शरीरमिति निवृत्तमावरणमुच्यते । कृत्यल्युटो बहुलमिति करणे क्तः ॥

२ पा अ ३ । पा ३ । सू ९४ ॥

# समि मुष्टौ। ३। ३। ३६॥

अङ्गुलीति। (कै)

दृढमुष्टिनानेनाख्याख्यायते॥

मुष्टिकस्येति (भा)

भाष्ये॥ मुष्टौ कुशल इत्यर्थे [1]आकर्षादित्वात् कन् निपातनम्॥

---

१ आकर्षादिभ्यः कन्। ५। २। ६४॥

# [1]कर्मव्यतिहारे णच् स्त्रियाम्।
## ३।३।४३॥

भाष्ये

**व्यतिपाकार्थमिति।** (भा)

पुंलिङ्गे भावे मा भूदित्यर्थः। अकर्तृकारके तु न अनभिधानादिति भावः॥

**प्रकरणोत्कर्षादिति।** (कै)

[2]'स्त्रियां क्तिन्' इत्येतदपेक्षयेति भावः॥

**बाधकानामिति।** (कै)

व्यावचोरीत्यादौ [3]'ण्यास' इति युच्। अत्रेदं बोध्यम्। क्तिनोऽयमपवादः। अत एव पक्षे 'वासरूपविधिना' सोऽपि। अन्येषां तदपवादानां तु पृथक् पाठेन पूर्वविप्रतिषेधकल्पनया बाधकः। अत एव व्यतीक्षाया असिद्धिः शङ्किता भाष्ये। विप्रतिषेधविषये वासरूपाप्रवृत्तेः॥

१ धातुरिति वर्त्तते तस्य विशेषणं कर्मव्यतिहारग्रहणं कर्मव्यतिहारे वर्त्तमानादित्यर्थः। धातोश्च क्रियावाचित्वं न तस्य साधनकर्मव्यतिहारे वृत्तिः सम्भवति। अतो लौकिकस्य क्रियाकर्मणो ग्रहणम्॥

२ अ ३। पा ३। सू ९४॥

३ ण्यासश्रन्थो युच्।३।३।१०७॥

**णिज्ग्रहणं चेति ।** (भा)

इदं व्यावचोरीत्यादौ कबाधनार्थम् ॥

**व्यावक्रुष्टिरिति ।** (कै)

स्पष्टश्चायं प्रयोगो [1]"वामरूप" सूत्रे ॥ व्यात्युक्षीति च भाष्यकाव्ये शिवेति स्त्र्यधिकारे वामरूपविधेरभावात् । व्यात्युक्ष्याम् अत्र अपवादविप्रतिषेधेन [2]'गुरोश्च' इत्यप्रत्ययप्रसङ्गादिति भावः ॥ एवं च वामरूपसूत्रस्थप्रयोगानुष्ठानरूपभाष्ये विरोधात्

**[3]सिद्धन्तु** (भा)

इत्यादि तत्सूत्रस्थवार्त्तिकमेकदेश्युक्तिरिति भावः ॥

**व्यावचोरी व्यतीहेति ।** (भा)

बहुलग्रहणात् भाष्ये इति तात्पर्य्यम् ॥ पाठान्तरं तु स्त्रियामित्यकरणप्रयुक्तलाघवात् बाहुलकस्य तथाप्यावश्यकत्वाच्च वार्त्तिकोक्तमेव युक्तमिति ॥

---

१ वामरूपोऽस्त्रियाम् । ३ । १ । ९४ ॥

२ अ ३ । पा ३ । सू १०३ ॥

३ सिद्धन्तु अमरूपस्य बाधकस्य वा वचनात् ॥ वा ॥

# अभिविधौ भावे इनुण् । ३ । ३ । ४४ ॥

[1]द्वयेऽपि प्रकृते इति । (कै)

प्रकरणे इत्यर्थः । द्वयोरपि प्रकृते इति पाठान्तरम् ॥

भावे एवेति । (कै)

घञ्वदिति भावः ॥

मध्येऽपवादा इति । (कै)

बाध्यसामान्यचिन्तयेदं सिद्धमिति वासरूपन्यायेन पक्षप्राप्तयोरपि तयोर्बाधनार्थं भावग्रहणमिति भाष्याभिप्रायवर्णितमुचितम् ॥

वासरूप इति । (कै)

स्त्र्यधिकार एव वासरूपनिषेध इति प्राक् प्रतिपादनादिति भावः ॥ भाष्ये

ये तस्येति । (भा)

कस्य बाधकाः खलर्था इत्यर्थ उचितः कैयटोक्तार्थेनाचरस्वारस्यम् ॥ भावग्रहणफलादविशेषस्य । अचाप्येवं करणात् पूर्वप्रतिषेधकल्पवेति तात्पर्य्यम् ॥

---

१ उपलब्धविवरणपुस्तके 'द्वयोरपि प्रकृते' इति पाठोऽस्ति ॥

संकुटनमित्येवेति। (भा)

संकुटनमिति भवत्येवेत्यन्वयः॥ अत एव [1]"पुंयोगादिति सूत्रस्थः संकुटिनमिति भाष्यप्रयोगः सङ्गच्छते॥

## [2]एरच्। ३। ३। ५६॥

भाष्यकारवचनादिति। (कै)

ततो बाहुलकात् क्नुङपीति भावः॥

स्वरे इति। (कै)

अपि आद्युदात्तं अन्त्योदात्तमित्यर्थः॥

---

१ अ ४। पा १। सू ४८॥

२ वर्षमिति--वृषभो वर्षगादिति भाष्यकारप्रयोगाद्वर्षगामित्यपि भवति॥ कल्प्यत इति कल्पः। अर्घ्यत इति अर्घः॥ मन्त्र्यत इति मन्त्रः। अपि प्रतिषिद्धे घञेव भवति॥

# ग्रहवृदृनिश्चिगमश्च । ३ । ३ । ५८ ॥

भाष्ये

स एवास्य स्वर इति । (भा)

[1]थाथघञिति सूत्रेणेति भावः ॥

स्तेये वर्त्तते इति । (भा)

हस्तादानविषये इति भावः ॥

किं तर्हि घञेवेति । (भा)

हस्तादानविषये इत्यर्थः ॥ प्रकृतसूत्रे निश्चिग्रहणं स्तेयार्थं चेत् घञोऽप्राप्तेरेव सिद्धं अस्तेयार्थं चेत् तत्र निपूर्वचिनोतेः पूर्वविप्रतिषेधेन घञेवेष्टेरिति भाष्यार्थः । घञ् चेति पाठे चशब्दादेवार्थो द्रष्टव्यः ॥

कृत्स्वरेणेति । (कै)

[2]गतिकारकोपपदादिति विहितेन ॥

---

१ थाथघञ्क्ताजबित्रकाणाम् । ६ । २ । १४४ ॥ थ-अथ-घञ्-क्त-अच्-अप्-इत्र-क-एतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तः ॥

२ गतिकारकोपपदात् कृत् । ६ । २ । १३९ ॥

# स्तम्बे क च । ३ । ३ । ८३ ॥

अनेकेनेति । (भा)

[१]घनात्मर्घनप्रघणप्रघाणोद्धानापघनरूपेणेत्यर्थः ॥

अस्वरेणाद्युदेति । (कै)

निपातने तु निपातनात् फिषोऽन्त इति सिद्धिरिति भावः ॥

तथातो लोप इति । (कै)

प्रत्ययसंनियोगशिष्टतया विधानाद् 'आर्धधातुक' इति लोप इति भावः ॥ आदेशस्य स्थानिस्वरेणान्तरतम्यादन्तोदात्त इति तात्पर्य्यम् ॥

तस्य सर्वापवादत्वादिति । (कै)

यद्यपि पुंस्त्वं चरितार्थस्तथापि बहुलग्रहणादिति भावः ॥

भाष्ये

---

१ मूर्त्तौ घनः । ३ । ३ । ७७ ॥ अत्र घन इति अत्रस्य काठिन्यमित्यर्थः ॥ अन्तर्घनो देशः । ३ । ३ । ७८ ॥ अगारैकदेशे प्रघणः प्रघाणश्च । ३ । ३ । ७९ ॥ द्वारप्रदेशे द्वौप्रकोष्ठावलिन्दावाभ्यन्तरो बाह्यश्च तत्र बाह्ये प्रकोष्ठे निपातनं नागारैकदेशमात्रे । प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यत इति अप् कर्मणि पक्षे वृद्धिश्च । उद्घनोऽत्याधानम् । ३ । ३ । ८० । अधिकरणे अप् ॥ अपघनोऽङ्गम् । ३ । ३ । ८१ । करणेऽप् ॥

अजपथ्यामिति। (भा)

हेतिरिति निपातनमपि अकरणे चरितार्थमिति भावः॥ निपातित हेतिशब्दः ऊतियूति इत्यादिना क्तेः क्तिनि इत्यन्ये॥

---

# स्त्रियां क्तिन्। ३। ३। ९४॥

[1]"क्तिन्नाबादिभ्य" इति वचनं [2]"गुरोश्च हल" इत्येतत् प्राप्तियोग्यविषयम्॥ [3]"निष्ठायां वा सेटोऽकारवचनादि"त्यनेन समानयोगक्षेमत्वाद् इत्याहुः॥ एवं च सेटस्तत्सूत्रप्राप्तिविषया आबाद्य इति फलितम्॥

---

१ स्त्रियां क्तिन्नाबादिभ्यश्च। वा॥

२ अ ३। पा ३। सू १०३॥

३ निष्ठायां वा सेटोऽकारवचनात् सिद्धम्। वा॥

# [1]स्थागापापचो भावे । ३ । ३ । ९५ ॥

बाध्यमानेति । (कै)

बाध्यसामान्यचिन्तायाम् ॥

बाध्यसमुदायेति । (कै)

विशेषचिन्तायामपि प्रकारविशेषः ॥

---

१ स्थादिभ्य 'आतश्चोपसर्गे' इति प्राप्तस्य पचेस्तु षित्वात् प्राप्तस्याङोपवादः ॥

## [1]व्रजयजोर्भावे क्यप्। ३। ३। ९८॥

उत्तरेति। (कै)

भाष्ये तद्विषयोदाहरणदानादिति भावः॥

## कृञः श च। ३। ३। १००॥

वा वचनमिति। (भा)

इदमेव ज्ञापयति वर्णगौरवादपि [2]योगविभागो गरीयानिति भावः॥

---

१ पित् करणमुत्तरत्र तुगर्थमिति॥

२ योगविभाग इति कृञः क्यब् भवति ततः श च चकाराद् यथा प्राप्तं चेति। तेन त्रीणि रूपाणि भवन्ति। अन्यथा चकारेणानन्तरस्य क्यप एव समुच्चयो न तु क्तिन इति क्तिन्न स्यात्॥ शकारः सार्वधातुकसंज्ञार्थः॥

# [१]इच्छा। ३। ३। १०१॥

शे यगभाव इति। (भा)

भावार्थकत्वाद् यकः प्राप्तिः॥

---

१ इष इच्छायामित्यस्माद्भावे शप्रत्ययो भवतीति न त्वकर्त्तरि कारके स्वभावात्॥ 'इच्छा-परिचर्य्या-परिसर्य्या-मृगया-अटाट्यानामुपसंख्यानं कर्त्तव्यम्' इत्यत्र शप्रत्ययो यक् च निपात्यते। परिचर्य्या—पूजा॥ परिसर्य्या—परिसरणमत्र गुणोऽपि निपात्यते॥ मृग—अन्वेषणे। चुरादावदन्तः। अत्र आतो लोपाभावो निपातनात्। शे यकि णिलोपः। मृगया॥ अटतेः शे यकि यका सह टकारस्य द्विर्वचनं पूर्वभागे यकारस्य निवृत्तिर्दीर्घत्वमित्येतत् सर्वं निपात्यते। हलादिशेषस्तु नास्ति। षाष्ठिके द्विर्वचनेऽभ्याससंज्ञाविधानाद् यदात्वच्चर्त्यं सूर्णोतीनामिति यङन्तादप्रत्ययादित्यकारस्तदा आतो लोपे यलोपे च अटाटेति भवति॥

जागर्तेरकारो वा। वा। वा शब्दात् पक्षे शः। तदा सार्वधातुके यक्। जाग्रो विचिण्णल्ङित्सु इति गुणः॥ जागर्य्या। जागरा॥

# [1]षिद् भिदादिभ्योऽङ् । ३ । ३ । १०४ ॥

ननु गुहतः गिरिरत आह

गिरिशब्द इति ॥ (कै)

---

१ भिदादिभ्य इति— अत्र गणे भिदा छिदा इत्यङन्ता एव समुदायाः पठ्यन्ते तेषु भिदिच्छिदि प्रभृतयोऽङः प्रकृतयो याश्ता इह भिदादिशब्देन निर्दिश्यन्त इत्यर्थः । कुत एतत् । धात्वधिकारात् । भिदादिभ्यो धातुभ्य इति । भिदिर्-विदारणे । छिदिर् द्वैधीकरणे । विद ज्ञाने । क्षिप प्रेरणे । गुहू-संवरणे । डुधाञ् धारणपोषणयोः । मिथृ मेधृ-हिंसासंक्लेशयोः । ऋ-गतौ । हृञ्-हरणे । क्षि-क्षये । अथवा क्षि-निवासगत्योः । तॄ प्लवनतरणयोः । धृञ् धारणे । लिख अक्षरविन्यासे । चुद प्रेरणे । पीड अवगाहने डुवप बीजतन्तु सन्ताने । वस-निवासे । मृजूष् शुद्धौ । कृप कृपायाम् । इत्येता वेदितव्याः ॥

गुहा गिर्योषध्योरिति वक्तव्यम् । वा । गिरिशब्देन तदेकदेश उच्यते । अन्यत्र गूढिः क्तिन्नेव भवति । आरा-हारा-कारा-तारा-धारा-इति । गुणे कृते दीर्घत्वं च निपात्यते । रेखा लेखेति । लिखेः पक्षे लकारस्य रेफो निपात्यते गुणश्च । चूडेति । चुदेर्डत्वं दीर्घत्वं च निपात्यते । भित्तिरन्येति । भिद्यत इति भित्तिः कुड्यम् । छित्तिश्छिद्रम् । आरा शस्त्र्यामिति । शस्त्री शस्त्रजातिः स्वभावाच्च विशेषः परिगृह्यते । आरा प्रतोदः । अर्यन्ते प्रेर्यन्तेऽनया अश्वा इति कृत्वा । आर्त्तिरन्येति । धार्यते प्रपात्यते इति धारा । धृतिरन्येति । प्रीतिर्धैर्यं च ॥

# [1]ग्रयासश्रन्थो युच् । ३ । ३ । १०७ ॥

भाष्ये

न पुनरादेरिति । (भा)

एवं च पाक्षिकानिष्टप्रसंग इति भावः । यत्तु प्रथमातिक्रमे कारणाभावादादेरेव स्यादिति तन्न । तन्न्यायस्य शास्त्रेऽनङ्गीकारात् । (अत एवानुदात्तस्येति सार्थकम्) अत एव तित्स्वरितमिति तस्यादावन्तस्वरितसिद्धिरिति बोध्यम् ॥

अन्त्यस्येति । (भा)

आदेस्त्वाद्युदात्तस्येत्यनेन सिद्ध इति भावः ॥

इत्यनुवर्त्तनसामर्थ्यादिति । (भा)

इदं च चित्त्वेऽपि तदनुबन्धकपरिभाषया कुटोऽग्रहणापत्ति-वारणावश्यकमिति भावः ॥

---

१ युचश्चकारश्चिन्त्यप्रयोजन उदात्त इति हि वर्त्तते तत्सामर्थ्या-दन्तोदात्तत्वं भविष्यति । प्रत्ययस्वरेणैवाद्युदात्तत्वसिद्धेः ॥

# रोगाख्यायां ण्वुल् बहुलम् । ३ । ३ । १०८ ॥

धातुक्ततोऽर्थः साधनमिति भ्रमं वारयति

**क्रियेति** ॥ (कै)

भावाधिकारेऽपि कारकनिवृत्त्यर्थमिदम्

**इक्श्तिपाविति** ॥ (भा)

**क्वचिन्नेति** । (कै)

[1]" भूवो वुग् लुङ् लिटोः " इत्यादौ ॥

[2]**श्तिकरणादिति** । (कै)

श्तिकरणस्य पिबाद्यादेशचारितार्थ्याद् इदं चिन्त्यं तस्मान्निर्दे-शेरेव विकरणाः साध्याः ॥ भाष्ये

१ अ ६ । पा ४ । सू ८८ ॥

२ श्तिपः श्तिकरणसामर्थ्यादकर्तृवाचिन्यप्येतस्मिन् शबादयोभवन्ति । एवमभावकर्मवाचिन्यपि क्वचिद्यगपि भवति यथा " विभाषा लीयतेः " अत्र लीलिङोर्यका निर्देशः कृतः । श्यनि तु लीङ एव ग्रहणं स्याद् न तु लीनातेः । कथं पुनः श्तिकरणस्य सामर्थ्यं यावता पिबतिर्जिघ्रतिरित्यादौ श्तिपि पिबाद्यादेशार्थं ग्लायत्यादावात्वप्रतिषेधार्थं च श्तित् करणं स्यात् । एवं त" द्रुपसर्गात् सुनोति सुवतिस्यति" " विभाषा लीयतेः " " भवतेश्च

## पचेः पचतेरिति । (भा)

कर्मणः शेषत्वविवक्षया षष्ठी प्रयोगानिति शेषो वा धात्वर्थनिर्देशेऽप्येतौ बाहुलकात् । अत एव "[1]ईक्षतेर्नाशब्दम्" (वेदान्तदर्श-, अ १ । पा १ । सू ५) "[2]आहौ प्रभूतादिभ्यः" "[3]गच्छतौ परदारादिभ्यः" इति प्रयोगाः सङ्गच्छन्ते ॥

## कृत्संज्ञेति । (कै)

बाहुलकादित्यन्ये ॥

## एवं मत्वर्थीय इति । (कै)

प्रातिपदिकत्वाद्विभक्त्युत्पत्तिरित्यनुषङ्गः । आर्धधातुकत्वाभावादतो लोपाप्राप्तेः । स्वादित्वाभावेनाभत्वाद् [4]यस्येति लोपाप्राप्तेश्चाच

उपसंख्यानम्" "ध्यायतेः संप्रसारणं च" इत्येवमादिनिर्देशाच्छवादयो भविष्यन्ति ॥ वर्णात्कारः । (वा) बहुलवचनादेव क्वचिद् वर्णसंघातादनुकरणादपि भवति एवकार इति । कारप्रत्ययान्तस्य कृदन्तत्वात् प्रातिपदिकसंज्ञा भवति ॥ रादिफ इति । (वा) कारस्यायमपवादः । कथं तर्हि रकारादीनि नामानि वामरूपविभिन्ना कारोऽपि भविष्यति ॥

१ अत्र धातुवाचकः ईक्षतिशब्दः । धात्वर्थभूतेक्षणापरो लक्षणया बोध्यः । ईक्षणं पर्यालोचनमध्यवसायः । तच्चाचेतनस्य प्रधानस्य नोपपद्यते चेतनधर्मत्वात् ॥

२-३ आहौरिति गच्छतौरिति च वार्तिकद्वयं प्राग्वहतेष्ठक् ( ४ । ४ । १ ) इति सूत्रस्थम् ॥

४ अ ६ । पा ४ । सू १४८ ।

भाष्यकारेति । (कै)

बहुलग्रहणादिति भावः । तदाश्रयणे भाष्यकारवचनं हेतुः । बहुव्रीहेः स्वार्थिकोऽयं कः । षष्ठीतत्पुरुषात् [1]"गहादित्वात्" छेन कश्चित् साधयति ॥

---

# [2]हलश्च । ३ । ३ । १२१ ॥

भाष्ये

एत्येति । (भा)

आदेःऽर्थप्रदर्शनार्थमिदम् । तेन [3]"आतो युक्" इति युक् ॥

१ गहादिभ्यश्च । ४ । २ । १३८ ॥

२ लेखो लेखनी ॥ विद्यते ज्ञायते अनेन धर्माधर्माविति वेदः ॥ अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गो वीरुद् विशेषः ॥ घञ् विधौ-अवहार-आधार-आवायानामुपसंख्यानं कर्त्तव्यम् (वा) इति वार्त्तिकम् । अवह्रियन्ते अस्मिन्नवहारः । आध्रियन्ते अस्मिन्नाधारः । एत्य एतस्मिन् वयन्ति आवायः ॥ वृत्तिकारस्तु आधारावायशब्दौ सूत्रे प्रक्षिप्य चकारेणावहारशब्दं साधयति स्म विचित्राहि वृत्तेः कृतिर्वृत्तिकारेण ॥

३ आतो युक् चिण कृतोः । ७ । ३ । ३३ ॥

# उदङ्को ऽनुदके । ३ । ३ । १२३ ॥

घञ्वद् घोऽपीति । (कै)

सूत्रेऽनुदक इति प्रतिषेधसामर्थ्यात् प्रत्याख्याने [1]प्रायग्रहणादिति भावः ॥

# कर्त्तृकर्मणोश्च भूकृञोः । ३ । ३ । १२७ ॥

खल् न भवतीत्यस्योदाहरणमाह

आढ्येन सुभूयत इति ॥ (कै)

खित्करणसामर्थ्यादिति । (कै)

न च [2]कूलमुद्रुज इत्यादिवद् व्यवहितेऽपि [3]कृद् ग्रहणपरिभाषया मुम् कर्त्तव्यत्वेन तत् कृतार्थमिति वाच्यं भाष्यप्रयोगेणैव व्यवस्थाकल्पनादिति तत्त्वम् । बहुलग्रहणमित्यन्ये ॥

१ उदङ्कोऽनुदकग्रहणं चानर्थकम् । अत्र कस्मान्न भवति । प्रायवचनाद् यत्र न भवति । यथा गोदोहनः प्रसाधन इति ॥

२ उदिकूले रुजिवहोः ( ३ । २ । ३१ ) इत्यत्र ॥

३ कृद्ग्रहणं गतिकारकपूर्वस्यापि ग्रहणम् । परिभा. २९ ॥

दुःखवोऽप्युपपदानीति । (कै)

समासस्तु पर्य्यायेणेति बोध्यम् ॥

---

## अन्येभ्योऽपि दृश्यते । ३ । ३ । १३० ॥

छन्दसीत्यधिकारादिति । (कै)

१ "छन्दसि गत्यर्थेभ्य" इत्यतः ॥

इति श्रीशिवभट्टसुतोपाध्यायोपनामकसतीगर्भज-
नागेशभट्टकृते महाभाष्यप्रदीपोद्योते
तृतीयस्य तृतीये प्रथमाह्निकम् ॥

इति चन्द्रोपाध्यायोपनामकवैद्यनाथशर्मविरचिते महाभाष्यप्रदीपोद्-
द्योतविषमपदव्याख्याने तृतीयस्य तृतीये प्रथममाह्निकम् ॥

---

१ अ ३ पा ३ सू १२९ ॥

## महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

# वर्त्तमानसामीप्ये वर्त्तमानवद्वा ।
## ३ । ३ । १३१ ॥

[1]समीपमेवेति । (कै)

कालप्रकरणात् कालेन समानाधिकरण्यार्थमिति भावः । अत्रापि पक्षे षष्ठीसमास एव ॥

१ अत्र केचिद् व्याचक्षते — समीपस्य भावः सामीप्यं भावे ष्यञ् । वर्त्तमानस्य सामीप्यं वर्त्तमानसामीप्यं षष्ठीसमासः वर्त्तमानस्य भूतभविष्यन्तौ प्रति यत् सामीप्यं तत्र वर्त्तमानवत्प्रत्ययातिदेशोऽनर्थकः । ये हि वर्त्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् भवन्त्येव अतो वर्त्तमानं प्रति भूतभविष्यतोर्यत्सामीप्यं तदत्र वर्त्तमानसामीप्यमित्युच्यते समीपशब्दाच्च वर्त्तमानस्य सामीप्येनाभिसम्बन्धात् समासो नानुपपन्नः यथा देवदत्तस्य

( वर्त्तमानसामीप्ये वर्त्तमानवद्वा । ( अ. ३ । पा. ३ । आ. २ )
३ । ३ । १३१ । )

## समासाप्रसङ्ग इति । (कै)

भूतभविष्यन्निरूपितवर्त्तमानस्य यत् सामीप्यं तत्र वर्त्तमानवत्प्रत्ययातिदेशोऽनर्थकः । ये हि वर्त्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् सिद्धा एवातो वर्त्तमाननिरूपितं भूतभविष्यतोर्यत् सामीप्यं तत्रेत्यर्थः स्वीकार्यः । तथाच वर्त्तमानपदेन समासाप्रसङ्ग इति भावः ॥

## सामीप्यसम्बन्ध इति । (कै)

. तृतीयातत्पुरुषः सामीप्यनिरूपितः सम्बन्ध इत्यर्थः । समीपेनाश्रयतारूपः साक्षात्सम्बन्धस्तयोरेवेत्यर्थः ॥

## पारम्पर्येणेति । (कै)

तत्र समीपद्वारा सामीप्येन सम्बन्ध इति भावः । प्रतियोगितासम्बन्धेनान्वयः । वर्त्तमानकालप्रतियोगिकसामीप्ये सतीत्यर्थ इत्यन्ये । भूतादौ वर्त्तमानसामीप्ये सति वर्त्तमानवत्प्रत्यया इति वाच्योऽर्थः । एवं च तत्समीपे भूतादौ फलन्तीति बोध्यम् ॥

गुरुकुलमिति । गुणेन नेति प्रतिषेधोऽपि न भवति यस्माद् गुणशब्दस्य सम्बन्धिशब्दत्वाद् गुणान्तिमस्य गुणिन एव समासनिषेधो न च वर्त्तमानसामीप्यस्य गुणो । भूतभविष्यतोस्तद्गुणत्वादिति नदिदं क्लिष्टं व्याख्यानं व्यत् निर्देशस्य केवलं गौरवायैव स्यादित्यन्यथा व्याचष्टे । समीपमेव सामीप्यम् । न चास्मिन् पक्षे ष्यञो वैयर्थ्यं स्वार्थेऽपि ष्यञ् भवतीति एतमर्थं ज्ञापयितुं ष्यञानिर्देशः कृत इत्यर्थः ॥

[1]तद्गुणित्वात्- (कै)

सामीप्यगुणित्वाद् इत्यर्थः ॥

[2]तद्गुणत्वादिति (कै)

पाठे बहुव्रीहिः । अयमेव युक्तः पाठः ॥

वर्त्तमान इति । (कै)

प्रथमान्तेन वर्त्तमाने ये प्रत्यया इत्यर्थः कथं लभ्यतेऽत आह

सहचरितानामिति । (कै)

लक्षणयेति भावः ॥

रूपमात्रमिति । (कै)

न तूपाधिविशिष्टमित्यर्थः । तत्करणे तु वर्त्तमानेऽर्थे यथा भवन्ति तथा सामीप्येऽपि भवन्तीत्यर्थाज्ञ दोष इति भावः ॥

लण्मात्रेति । (कै)

मात्रशब्दः कार्त्स्न्ये ॥ भाष्ये

यौ तद्वौति । (भा)

शवन्तावित्यर्थः ॥ ननु यमपि वर्त्तमानसमीपभूतभविष्यतोर्विधीयमानः कथमविशेषविरहित इत्यत आह

१ उपलब्धकैयटपुस्तके— 'तद्गुणित्वात्' इति पाठो नास्ति ॥
२ उपलब्धकैयटपुस्तके— एवं पाठोऽस्ति ॥

**वर्त्तमानलक्षणादिति ॥** (कै)

एतद् योगविहित इत्यर्थः ॥ प्रयोगान्तरमप्याह भाष्ये

**अयं योग इति ॥** (भा)

भाष्ये

**णुवाद्यर्थमिति ।** (भा)

इष्णुजादयोऽपि वर्त्तमान एव विधीयन्ते इति भावः । सुत्र: प्रतुर्नजिङ्स्थानप्रस्य सर्वकालत्वमुक्तं [1]"भूते इति सूत्रे भाष्ये" इति स्थानप्रस्तुक्तिः कैयटे चिन्त्या ॥

---

[1] अ ३ । पा २ । सू ८४ ॥

# [1]आशंसायां भूतवच्च। ३। ३। १३२॥

सूत्रप्रयोजनं दर्शयति भाष्ये

**आशंसानामेति॥** (भा)

आशंसायां भविष्यत्कालत्वं कथमत आह

**आशंस्येति॥** (कै)

ननु भविष्यन्त्यामाशंसायामेव प्रत्ययः कस्मान्नेत्यत आह

**इह चेति।** (कै)

एवं च कालस्य सर्वत्र लकारप्रकृत्यर्थे एवान्वयस्य क्लृप्तत्वादाशंसान्तरान्वय इति भावः॥

**अपवादस्येति** (भा)

भाष्यस्य अपवादस्य निमित्तमतिदेशाभावाद् इत्यर्थः॥ तदाह

१ अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोऽनद्यतनः। सामान्यातिदेशे च विशेषो नातिदिश्यते ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्युक्ते ब्राह्मणमात्रप्रयुक्तं कार्य्यं गम्यते न तु माठरादिविशेषप्रयुक्तं तेनानद्यतनप्रयुक्तौ लङ् लिटौ न भवतः॥

कश्चिदध्वानं जिगमिषुः पश्यति अमुष्मिन्नवकाशे कूपो भविष्यतीति। अनद्यतने कूपो भवितेति। समासाद्य कूपोऽस्तीति। अतिक्रम्य कूपो भूदिति। अतिक्रम्योषितत्वात् कूप आसीदिति। अतिक्रम्योषित्वा विस्मृत्य कूपो बभूवेति। तदत्र सर्वत्र कूपसत्ताया वर्त्तमानत्वं भूतभविष्यद्रूपत्वमिति सर्वत्र लडेव प्राप्नोति लुङादयस्तु वक्तव्याः। तदाह— अस्मदर्थानां

**नाचापवादस्येति ।** (भा)

निमित्तमुपात्तमस्तीत्यर्थः ॥ ततः किमत आह

**तच्चेति ॥** (कै)

**कथं द्वन्द्वे चेति ।** (कै)

[1]" विरूपाणामपि समानार्थानाम् " इत्येकशेषारम्भादिति तस्य भिन्नत्वाद्भिन्नार्थत्वमिति भावः ॥

**उत्प्रेक्षणमिति ।** (कै)

तदपि इच्छाविशेष एव इत्यभिमानः ॥ मन्वाशंसायाः सम्भावनावयवत्वबाधितमत आह

**अवयवशब्द इति ॥** (कै)

प्राप्यत्वेन निश्चयविषयत्वरूप[2]प्रधारितत्वस्याशंसाविषयेऽसंभवादाह

१ अ १ । पा २ । सू ६४ ( एतत् सूत्रस्थवार्त्तिकम् ) ॥

२ इदं मे भूयादिति मनसा विषयीकृतोऽर्थः प्रधारितोऽर्थ इति ॥ अप्रधारित इति पाठे— अनिर्धारितोऽवश्यम्भावितया अनिश्चित इत्यर्थः ॥

---

भवन्त्यर्थे सर्वा विभक्तयः कर्त्तुर्विद्यमानार्थत्वादिति । ( क्षिप्रवचने लृट् ( ३ । ३ । १३३ ) इति सूत्रस्थवार्त्तिकम् ) । भवन्ती शब्दो लटः पूर्वाचार्याणां संज्ञा । यदि वचनेन वर्त्तमान एव लुङादयो विधीयन्ते । कूपो भूदिति प्रयोक्तव्ये कूपो भविष्यतीत्यपि प्रयुज्येत तस्माद्यथा स्वकालमेता विभक्तयः कालेषु प्रयुज्यन्ते । कथमिन्द्रियव्यापारस्य कालस्य कूपसत्तां प्रति भेदकत्वेनाश्रयणात्तस्या अपि तत्कालत्वं ततश्चेन्द्रियव्यापारे भाविनि भविष्यद्विभक्तिर्वर्त्तमाने वर्त्तमानविभक्तिर्भूते भूतविभक्तिरिति सिद्धमिष्टम् । उक्तञ्च हरिणा—

**मनसेति ।** (कै)

सङ्कल्पात्मकत्वेनेत्यर्थः ॥ अनेनेच्छारूपताशंसाया उक्ता आशंसायाः प्रधारितार्थत्वासम्भवादाह

**आशंसाविषयत्वादिति ।**

अनिश्चित एवेच्छाविषयः । अनेनेच्छात्वतः तस्या उक्ताविधुरप्रत्ययः । विपरीतकारणं तेन सम्भावितस्यार्थस्य शङ्काप्राप्तित्वं सूचितम् ॥ सम्भावनं नामाप्रधारित इति पाठे एकांशे उत्कटत्वेऽपि अन्यांशे अनुत्कटज्ञानसत्त्वादनिश्चयरूपज्ञानविषयस्तेन ज्ञानविषयतोक्ताप्रधारितोऽर्थ इति पाठे अंशेऽवश्यभावित्वेनानिश्चित इत्यर्थः ॥

**अभिनीत एवेति ।** (भा)

शङ्काप्राप्तिरित्यर्थः ॥

**ज्ञानमिति ।** (कै)

ज्ञानेच्छयोश्च भेदः स्पष्ट एवेत्यर्थः । तयोर्भेदे एकदेश्युक्तयुक्त्यन्तरमाह भाष्ये

**अर्थासंदेहो वेति ।** (भा)

तयोरर्थाविशेषेऽप्यात्मसमर्थ्यादात्मसमर्थ्यकृतो भेद इति भावः । तद्दूषयति

सत्तामिन्द्रियसम्बन्धात् नैव सत्ताविशिष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥
अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद् भेदः स तत्र न विवक्षितः ॥

आचार्य्येति ॥ (भा)

नालमर्थ्यमिति । (भा)

नियमेनालमर्थ्यं न गम्यते इत्यर्थः ॥

---

## छिप्रवचने लृट् । ३ । ३ । १३३ ॥

भाष्ये

निष्पन्ने इति । (भा)

भविष्यतिभूतप्रत्ययो वक्तव्य इत्यर्थः ॥

अनाशंसार्थमिति । (कै)

आशंसायां पूर्वेण भूतवदतिदेशाद्भविष्यत्यपि क्ताः सिद्ध इति भावः ॥ आशंसाभावं दर्शयति भाष्ये

देवश्चेद् वृष्ट इति ॥ (भा)

तदेवाह

वस्तु स्वरूपेति । (कै)

नलस्याशंसाविषयतेति भावः ॥ वृष्टो जातायामेवं वादो लोके इति वस्लोको भविष्यत् प्रयोगं न मृष्यति तस्मान्मुख्या-निष्पत्तिर्निष्पदेरर्थः किन्त्वन्या एवेत्यर्थः । अत एवाह

## अप् प्राप्नोति। (कै)

अयमेव निष्पत्तिपदार्थोऽभिमतस्तस्येति भावः॥

## प्राप्नोनामिति। (कै)

पूर्वान्वयि॥

## तत्रैवेति। (कै)

अप् शालिबीजसंयोगरूपनिष्पत्तावेतान्वयो निःपूर्वकपदेर्वर्त्त-मानत्वात्तद्वाचकत्वादित्यर्थः। निष्पदेरित्युपलक्षणं संपदेरपि। निष्पत्तेरिति पाठे ऽप्ययमेवार्थः। क्तिपानिर्देशात् अन्न तु कर्त्तर्य्यकत्वाभावाश्चक्रतः। यद्वा सत्कार्य्यवादे तत्रैव निष्पत्ते-र्वर्त्तमानत्वं व्याख्यानमेव युक्तम्॥ भाष्ये

## हेतुभूतेति। (भा)

हेतुभूतस्य कारणत्वं प्राप्तस्य कारणस्य कालं कार्य्ये आरोप्य प्रयोग इत्यर्थः। तदारोपफलमाह

## कारणान्तरेति। (कै)

तेन चावश्यभावित्वं फलति॥

## कारणस्यैवेति। (कै)

अयमप्युपादानकारणत्वादिति भावः॥

## अन्यथेति। (कै)

वृष्टेः प्रागपि मेघोत्पत्त्यनन्तरमीदृशप्रयोगस्य दर्शनात्।

तत्र च वृष्टेरपि वास्तवभूतत्वाभावात्तदुपपत्तिमपि दर्शयितुमिति भावः॥

**मेघादेरिति।** (कै)

एवमेवानुत्पत्तेरितिभावः॥ तत्राद्य पक्षे शंकते भाष्ये

**यदि तर्हीति॥** (भा)

**अभिव्यक्तिरिति।** (कै)

स्थूलरूपेणाभिव्यक्तिरित्यर्थः। निष्पत्तिस्तत्रापशालिबीजसंयोग एव तत्रापि कार्य्यसत्त्वादिति भावः॥ तद्दर्शयति

**एतदिति॥** (कै)

**कारणसामग्र्येति।** (कै)

ननु कार्य्यसमधिगम्यं सामग्रीत्वं तथाच कार्य्यानुमाने इतरेतराश्रय इति चेन्न वृद्धपरम्परसामग्रीत्वग्रहात् तेनावश्यम्भावित्वेन कार्योत्पत्तावनुमितायां तत्र कारणकालारोपेण भूतप्रयोगेऽपि स्थूलरूपेणाभिव्यक्तिरूपमुख्यतनोत्तरमेव क्रियाकारित्वमिति भावः॥ नन्वस्त्यर्थानामित्ययुक्तं नह्यसिः केषां चिद्धातूनामर्थोऽत आह

**सत्तेति।** (कै)

अस्तेरर्थो येषाम् इत्यर्थ इति भावः॥ कर्त्तुर्विद्यमानत्वेऽपि क्रियायाः कालत्रययोगदर्शनादाह

**ततश्च सत्ताया इति।** (कै)

कर्तृसत्तयोः समनियतत्वादिति भावः॥

**अविकल्पितत्वादिति ।** (कै)

प्रयोगे इत्यर्थः ॥

**यन्नवेति ।** (भा)

प्रयोगे इति शेषः ॥

**वचनेन ।** (कै)

"अत्यर्थानाम्" इति वार्त्तिकेन

**असिद्धविपर्य्यास इति** (भा)

भाष्ये ॥

**लोके इति ।** (कै)

शिष्टत्वहेतौ यतः शिष्टलोकानामसिद्धो विपर्य्यासो विपरीतः प्रयोगोऽत न विकल्पेन प्रयुञ्जन्ते ऽन्यैरतोऽत्र यथा कालमेव प्रत्यया इत्यर्थः । किं पुनः कारणं वा न भाष्यन्ते किं च कारणं शिष्टानां विपर्य्यासासिद्धिरिति भावः । वास्तवकालभेदस्याभावाद्वचनेनैव साधनप्राप्तोत्येन विपर्य्यासादिकमिति भावः ॥

**इन्द्रियव्यापारः ।** (कै)

तत्प्राप्तिः । इन्द्रियपदेनात्र कर्मेन्द्रियम् ॥

**[1]सताम् ।** (हरिः)

वस्तूनाम् ॥

१ सतामिन्द्रियसम्बन्धात् सैव सत्ताविशिष्यते ।
भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः ॥

**इन्द्रियसम्बन्धात् ।** (हरिः)

तत्तत्प्राप्तिसम्बन्धात् । एकैव सत्ताकालभेदेन बुध्यते ॥

**वस्त्वन्तरम् ।** (हरिः)

इन्द्रियव्यापारः ॥ तदेवाह

**यः समासादनादिति ॥** (हरिः)

**तच ।** (हरिः)

बुद्धिकर्मव्यवसायविषये ॥

**वर्त्तमानेति ।** (कै)

वर्त्तमानार्थिकेत्यर्थः ॥

---

अस्तित्वं वस्तु मात्रस्य बुद्ध्या तु परिगृह्यते ।
यः समासादनाद् भेदः स तत्र न विवक्षितः ॥

# नानद्यतनवत् क्रियाप्रबन्धसामीप्योः। ३ । ३ । १३५॥

अपूर्वेति । (कै)

अद्यतनशब्दोपादानेन कस्यापि विध्यभावात् तत्र दृष्टत्वमात्रेणातिदेशो वाच्यः। तथाच भूताद्ये रूपे ऽद्यतने लङपि स्यादिति भावः॥ भाष्ये

लुङ्लृटोरिति । (भा)

भविष्यत्यद्यतने लुङ् । भूताद्यतने लृट् स्यादिति भावः॥

अप्राप्तेति । (कै)

लुङ्लृटौ भूतभविष्यतोऽद्यतने दृष्टौ तत्राद्यतनवदित्युच्यमाने तस्मिन्नेवाद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदंशत्याज्यः। तत्राद्यतनांशत्यागेनातिदेशे भूतानद्यतने तयोरतिदेशोऽनर्थकः इति कश्चिदंशोऽहातव्यः। लुङ् भविष्यति तत्र लृडिति प्रयोगसिद्धावपि अद्यतनवदिति विरुध्येत । तस्माद् भूतांशपरित्यागेनातिदेशे आश्रीयमाणे ऽयथाकालप्रसंग इति भावः॥ भाष्ये

[1]यथाप्राप्तमेवेति। (भा)

स्वैरेव विधायकैः स्वेषु स्वेषु कालेषु भवन्तीति न सङ्कर-प्रसंग इत्यर्थः॥

तेन परोक्षे इति। (कै)

परस्यच मानं चिन्त्यम्॥ भाष्ये

लङ् लुटोः। (भा)

एवोपक्रमे उक्तेरिति दिक्॥

---

१ यथा येन प्रकारेण प्राप्तं प्राप्तिर्यस्येति बहुव्रीहिः। अव्ययीभावे त्वम्भावः स्यात्। इहाद्यतनवचने सति विधानमिदं विज्ञायेत। तत्र लङ् विधिप्रसङ्गे पूर्वविधाने ह्यद्यतनसंज्ञाब्देनेन विहितस्य कस्यचित् प्रत्ययस्याभावादद्यतने दृष्टस्यातिदेशो लट् चाप्यद्यतने दृष्टस्तेन तस्यापि भूतभविष्यतोः प्रसङ्गो लुङ्लृटोश्चायथाकालं विधिः प्रसज्येत लुङो विषये लृट् लृटश्च विषये लुङ्। ननु च वत्करणात् सादृश्यार्थात् सङ्करो न भविष्यति। नैतदस्ति। इह लुङ् लृटो भूतभविष्यतोरद्यतने च दृष्टौ तत्राद्यतनवदित्युच्यमाने तस्मिन्नेवाद्यतने तयोरतिदेशो ऽनर्थक इति कश्चिदंशो ह्यतव्यस्तत्राद्यतनांशत्यागेनातिदेशे विज्ञायमाने भूतानद्यतने लुङ् भविष्यदनद्यतने लृडितिसिद्धम्। यदा तु भूतभविष्यदंशपरित्यागेनातिदेशस्तदा भूताद्यतने दृष्टस्य भविष्यदद्यतने भविष्यदनद्यतने च दृष्टस्य भूताद्यतने विधानमिति संकरः स्यादेव। लट् चोभयत्र प्रसज्येत। वत्करणं तु यस्माद् धातोर्यस्मिन्नुपाधौ यः प्रत्ययो विहितः स तस्मादेव तस्मिन्नुपाधावेव यथा स्यादित्येवमर्थं स्यात् तेन 'पूङ्यजोः शानन्' इत्यादौ कालव्यत्यास एव भवति न धात्वादिव्यत्यासः। यदि पुनरयं द्वौ प्रतिषेधौ कृत्वा तूष्णीमास्ते स्वैरेव विधायकैर्लङादय उत्सर्गाः स्वेषु स्वेषु कालेषु अपवादविनिर्मुक्तेषु भवन्तीति न सङ्करप्रसङ्गः। अतो यथा प्राप्तस्याभ्यनुज्ञानान्नायं वतिः किं तर्हि मतुप। अनद्यतनमस्यास्तीत्यनद्यतनवत्। सामान्यविवक्षायां नपुंसकत्वम्॥

# भविष्यति मर्यादावचनेऽवरस्मिन् ।
## ३ । ३ । १३६ ॥

[1]उत्तरसूत्रे सप्रयोजनमेतदिति पाठः ॥

**त्रिंशद्रात्र इति ।** (भा)

[2]'संख्यापूर्वं रात्रं क्लीबम्' इति तु अस्मादेव भाष्यप्रयोगात् 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इत्युक्तेश्चानित्यमितिभावः ॥

**[3]योऽयमध्वापरिमाण इति ।** (भा)

अपरिमाण इति छेदः ॥

**नियमार्थमिति ।** (कै)

क्रियाप्रबन्धविषय इति भावः ॥

**[4]विधीति ।** (कै)

अक्रियाप्रबन्धादिति भावः ॥

---

१ उपलब्धकैयटे 'उत्तरसूत्रस्य प्रयोजनमेतत्' इति पाठोऽस्ति ॥

२ लिङ्गानुशासनसूत्रमिदम् (१३१ लिङ्गानु—सू.) ॥

३ योऽयमध्वा अपरिमाणो गन्तव्यः तस्य यदवरं साकेतादिति ॥
योऽयमध्वा आपाटलिपुत्राद् गन्तव्यस्तस्य यत्परं साकेतादिति ॥

४ विधिनियमसम्भवे च विधिरेव ज्यायान् इति ॥

# कालविभागे चानहोरात्राणाम् । ३ । ३ । १३७ ॥

'द्वन्द्वश्च प्राणि' इत्यादिवत् अहोरात्राणामहोरात्रैर्विभागे एकवत् स्यादतो वार्त्तिकम्

अनहोरात्राणामिति ॥ (भा)

तद्व्याचष्टे

'सम्बन्धसामान्य इति ॥ (कै)

---

१ अनहोरात्राणामिति सम्बन्धसामान्ये षष्ठी न कर्मणि नापि कर्त्तरि ॥

# परस्मिन् विभाषा । ३ । ३ । १३८ ॥

**एकयोगे इति ।** (कै)

सामर्थ्यात् कालविभागनिषेधः । तर्हि देशविभागस्याहोरात्रैः सम्बन्धोऽस्ति इति भावः ॥

**[1]पृथग्योगेति ।** (कै)

कालविभागग्रहणसामर्थ्यादित्यपि बोध्यम ॥

---

१ इह 'भविष्यति मर्यादावचने ऽवरस्मिन्' अनहोरात्राणाम् इत्येकयोगे कर्त्तव्ये पृथग् योगकरणं परस्मिन् विभाषा इत्यत्र कालविभागग्रहणसम्बन्धार्थमेवेत्यर्थः ॥

# लिङ् निमित्ते लृङ् क्रियातिपत्तौ।
## ३ । ३ । १३९ ॥

कुतश्चिन्निमित्तात् क्रियाया अनिष्पत्तिः क्रियातिपत्तिः ॥

साधनातिपत्तिः । (भा)

साधनविशेषविशिष्टक्रियातिपत्तिरित्यर्थः ॥

---

# भूते च । ३ । ३ । १४० ॥

[1]"उताप्योः" प्राक् वा इत्यस्याधिकार इत्युक्तेऽन्यस्य तदुत्तरमप्यधिकार इति लभ्यते तदाचष्टे इत्याह

वक्ष्यमाणेति ॥ (कै)

तत्रेति । (कै)

तत्रापीत्यर्थः ॥

लृङ् प्रत्यय इति । (कै)

नित्यमितिशेषः ॥

---

१ अ ३ । पा ३ । सू-१५२ ॥

# [1]वोताप्योः । ३ । ३ । १४१ ॥

भाष्ये

**विभाषागर्हाप्रभृताविति ।** (भा)

गर्हाविशिष्टप्रवृत्त्यर्थविभाषापदघटित '[2]विभाषाकथमि लिङ् च' इति सूत्रप्रभृतीत्यर्थः ॥ अनेनेतरसूत्रत्यागे बीजमाह

**गर्हायां लडपीति ॥** (कै)

# गर्हायां लडपि जात्वोः । ३ । ३ । १४२ ॥

**मा याजयन्तमिति ।** (भा)

[3]ताच्छील्यप्रतिपादनेन गर्हा यदनेन क्रियते तत्सर्वं याजनार्थमिति सर्वदा याजयन्नेवास्तीति क्रियायाः समाप्तिरविवक्षितेति भावः ॥

१ वा आ उताप्योरित्यत्र आङः प्रश्लेषः । तत्र आङ उताप्योरित्यनेन सम्बन्धादन्यापेक्षत्वेनान्तरङ्गत्वाद्वा पूर्वं परेण महाद्गुणे कृते पूर्वं प्रत्यन्तवद्भावाद् "ओमाङोश्च" इति पररूपम् । यथा आ ऊढा ओढा अद्य ओढा अद्योढा । कदोढा । इति ॥

२ अ ३ । पा ३ । सू १४० ।

३ एतत् सर्वं हरदत्तकृतपदमञ्जर्यां स्पष्टम् ॥

# [1]अनवक्लृप्त्यमर्षयोरकिं वृत्तेऽपि । ३ । ३ । १४५ ॥

ननु किं वृत्तेनेत्यर्थात् कथमुपपदत्वमत आह

अकिं वृत्तेति । (कै)

उपपदसंज्ञाया अन्यथापि भावात् तदा भविष्यतीत्यनुपपन्नमत आह

[2]उपपदसंज्ञाकार्यमिति ॥ (कै)

---

१ अत्र अपि ग्रहणं प्रत्याख्यातुं तथाऽकिं वृत्त इत्यपि विस्पष्टार्थमेव । अस्वरितत्वादेव किं वृत्त इत्यस्याननुवृत्तेरविशेषेण प्रत्ययद्वयं भविष्यति । आह च भाष्ये—

किं वृत्तस्यानधिकारादुत्तरत्रा किं वृत्तग्रहणानर्थक्यमिति ॥

२ किं पुनरुपपदसंज्ञायाः प्रयोजनम् । अतिङिति प्रतिषेधात् समासो न । यदा लृटः सत्संज्ञकौ भवतस्तदा समासो यथा स्यात् । नास्य लृटः सत्संज्ञकौ भवतः । लृटः सद्वा इत्यत्र भविष्यतीत्यधिकारात् । अयं तु कालमात्रे भवति इति ॥

# शेषे लृडयदौ । ३ । ३ । १५१ ॥

[1]संभावनं तात्पर्य्येणेति । (कै)

यदि शब्दस्य संभावनार्थत्वेन संभावनं प्रतीयते इत्यर्थः ॥ तदेवाह

संभावने हि यदि शब्द इति ॥ (कै)

भाष्ये

[2]न हि यदाविति । (भा)

चित्रीकरणं तात्पर्य्यपदगम्यं न तु अन्धो नाम पर्वतमारोक्ष्यते-त्यादावुदाहरण इव तत् समभिव्याहारं विनापि गम्यमिति भावः ॥

---

१ संभावनार्थो यदि शब्दः प्रयुज्यते ततश्च सम्भावनमत्र तात्पर्य्यार्थः न चित्रीकरणम् ॥

२ नहि यदावुपपदे चित्रीकरणं गम्यते किं तर्हि सम्भावनम् ।

# [1]हेतु हेतुमतोर्लिङ् । ३ । ३ । १५६ ॥

**लक्षणहेत्वोरिति ।** (कै)

क्रियाया लक्षणे हेतौ च वर्त्तमानाद्धातोः कर्त्तरि शतृशान- चावित्यर्थः । सूत्रस्य किं च लक्षणत्वादेस्तद् द्योत्यत्वेऽपि द्योतक- समुच्चयस्य दृष्टत्वादितिशब्देन तद्द्योतनेऽपि शत्रादिप्राप्तिरिति भावः ॥

---

# इच्छार्थेषु लिङ्लोटौ । ३ । ३ । १५७ ॥

**[2]कामप्रवेदनमिति ।** (भा)

प्रयोक्तुः स्वाभिप्रायाविष्करणमित्यर्थः ॥

---

१ वर्षतीति धावति । हन्तीति पलायते इति । अत्र शतृशानचौ कस्मान्न भवतः । तदाह—

देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥

२ इच्छार्थेषु लिङ्लोटौ कामप्रवेदनं चेत् ॥

# विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्न-प्रार्थनेषु लिङ् । ३ । ३ । १६१ ॥

**नियोगेति ।** (कै)

नियोगः प्रवर्त्तना प्रवर्त्तकनिष्ठप्रवृत्त्यनुकूलो व्यापार एतदेव प्रेषणम् ॥ भाष्ये

[1]**व्यापारणेति ।** (भा)

प्रवर्त्तनेत्यर्थः । एतेन नियोगः इष्टसाधनताज्ञानमिति परास्तम् । "[2]हेतुमति च" इति सूत्रस्थ लोडादिणिचोः पर्य्यायत्वाशंकापरभाष्यविरोधापत्तेरित्याहुः ॥

[3]**न्यायेति ।** (कै)

शब्दशक्तिविषयेत्यर्थः । अयं भावः । निमन्त्रणादिशब्दानां

१ विध्यधीष्टयोः को विशेषः । विधिर्नाम प्रेषणम् । अधीष्टं नाम सत्कारपूर्विका व्यापारणा ॥

२ अ ३ । पा १ । सू २६ ॥

३ न्यायव्युत्पादनार्थं च प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥
अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥

प्रयोजकनिष्ठव्यापारवाचकत्वस्य सर्वसंमततया विधिशब्दस्यापि प्रयोजकनिष्ठव्यापारवाचित्वं न त्विष्टसाधनत्वादिबोधकत्वमिति । स चाच प्रयुज्यमानलिङादिरूपः । स च प्रेषणात्वेन लिङ् शक्यः । प्रेरणात्वं चाखण्डोपाधिः । एकस्यैव रूपभेदेन वाच्यवाचकत्वे उपपद्येते । स लोके पुरुषनिष्ठः । वेदे ईश्वरनिष्ठः । [1]वेदस्याकर्तृकत्ववादिनां मते शब्दनिष्ठः । शब्दरूपत्वाच्च स शाब्दीभावनेत्युच्यते इति मञ्जूषायां विस्तरः ॥

---

१ वेदस्याकर्तृत्ववादिनाम् मते इति । अपौरुषेयो वेद इति प्रामाणिकाः । न तत्राप्रामाण्यशङ्का सर्वज्ञेश्वरश्वासप्रश्वासरूपत्वात् । तथाच "अस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस" इति । अपौरुषेयत्वन्तु इदं मया कर्त्तव्यमिति बुद्धिपूर्वकं यत्नेनाकरणाद् एतावतैवाकर्तृकत्वव्यवहारः । वेदजनकत्ववदेव च जगज्जनकत्वमीश्वरस्येति बोध्यम् ॥ शाक्याद्यागमास्तु नैवं तेषां बुद्धिपूर्वं मोहनार्थत्वेन कृतत्वस्मरणात् ॥ तदुक्तं सूतसंहितायाम्—

श्रुतिः सनातनी साध्वी सर्वमानोत्तमोत्तमा ।
प्राह चाद्वैतनैर्मल्यं निर्विकारत्वमात्मनः ॥
सर्गस्थित्यन्तमप्याह चेतनाचेतनस्य च ।
अतीन्द्रियार्थविज्ञाने मानं नः श्रुतिरेव हि ॥
श्रुतिः सनातनी शम्भोरभिव्यक्ता न संशयः ।
शंकरेण प्रणीतेति प्रवदन्त्यपरे जनाः ॥
यदा साऽनादिभूतैव तदा मानमतीव सा ।
स्वतश्च परतो दोषो नास्ति यस्माद् द्विजर्षभाः ॥

स्वतो दोषो न वेदस्य विद्यते सूक्ष्मदर्शने ।
अस्ति चेद् व्यवहारस्य लोप एव प्रसज्यते ॥
परतश्च न दोषोऽस्ति परस्याभावतो द्विजाः ।
स्वतो दुष्टोऽपि शब्दस्तु मानमेवाप्तसङ्गमात् ॥
इति वार्त्तापि वार्त्तैव मुनीन्द्राः सूक्ष्मदर्शनाः ।
स्वतो दुष्टः कथं मानं भवत्यन्यस्य सङ्गमात् ॥
यत् सम्बन्धेन यो भावो यस्य प्राज्ञाः प्रसिद्ध्यति ।
स तस्य भ्रान्तिरेव स्यान्न स्वभावः कथञ्चन ॥
जपाकुसुमलौहित्यं विभाति स्फटिके भृशम् ।
तथापि तत्र लौहित्यं भ्रान्तमेव न वास्तवम् ॥
अन्यत्रान्यस्य धर्मस्तु प्रतीतो विभ्रमो मतः ।
आप्तापेक्षी तु शब्दस्तु प्रामाण्याय न सर्वथा ॥
अनाप्तयोगाच्छब्दस्य प्रामाण्यं मुनिपुङ्गवाः ।
स्वतः सिद्धं तिरोभूतं स्वनाशाय हि केवलम् ॥
यदा सा शङ्करेणोक्ता तदापि श्रुतिरास्तिकाः ।
प्रमाणं सुतरामाप्ततम एव महेश्वरः ॥
सर्वदोषविहीनस्य महाकारुणिकस्य च ।
सर्वज्ञस्यैव शुद्धस्य कथं दोषः प्रकल्प्यते ॥
सर्वदोषविशिष्टस्य निर्घृणस्य दुरात्मनः ।
अल्पज्ञस्य च जीवस्य वृष्टाऽनाप्तिर्हि सत्तमाः ॥
अतः पक्षद्वयेनापि वेदो मानं न संशयः ।
वेदोऽनादिः शिवस्तस्य व्यञ्जकः परमार्थतः ॥
अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते शिवः ।
तस्माद्वेदोपदिष्टार्थो यथार्थो नात्र संशयः ॥

ईश्वरस्य स्वरूपे च जगत् सर्गादिषु द्विजाः।
अतीन्द्रियार्थेष्वन्येषु मानं नः श्रुतिरेव हि॥
श्रुति साहाय्यरहितमनुमानं न कुत्रचित्।
निश्चयात् साधयेदर्थं प्रमाणान्तरमेव वा॥
तस्माद्वेदो महेशोद्धः प्रमाणं सर्ववस्तुनि।
अन्यथा न जडः शब्दोऽतीन्द्रियार्थस्य साधकः॥
अत्यन्तमलिनानान्तु प्राणिनां वेदमार्गतः।
पञ्चरात्रादयोमार्गाः कालेनैवोपकारकाः॥ इति॥

तत्र वेदप्रामाण्यसाधयितुं शब्दमात्रस्य प्रामाण्यं साधयन् शब्दस्य स्वतो दोषो नास्तीत्याह अस्ति चेदिति॥ स्वतो दुष्टस्यैवाप्तसम्बन्धात् तद्गतप्रामाण्येन प्रमाणत्वमित्यसङ्गतमित्याह स्वतो दुष्टोऽपीत्यादि॥ तद्गत-प्रामाण्यस्य भ्रमविषयत्वेन वक्तृमिथ्यानियामकतापत्तिरिति भावः॥ किं चासापेक्षे शब्दस्य प्रमाणत्वे तदाप्तत्वं केन चिद् मानेन ज्ञातव्यं तत्प्रा-माण्यमपि मानान्तरेण इत्यनवस्था तस्मात् स्वतः सिद्धमेव शब्दस्य प्रामाण्यमनाप्तबुद्धिप्रभवत्वरूपकारणदोषेण तिरोभूतं क्रियते इति न व्यञ्ज-कादिवाक्यस्य प्रामाण्यमिति भावः॥ ईश्वरो भोक्ता तद्रूपमेव ईश्वरस्याप्तत्वे मानमाह सर्वदोषविहीनस्येति॥ तत एव सर्वज्ञत्वं तद् हीनत्वं च केनापि तद्दोषाद्यसाक्षात् करोत्। शङ्करकृतत्वं खण्डयति ईश्वरस्य स्वरूपे चेत्यादि॥ शिवस्य तत्प्रकाशकत्वमेवोक्तम्॥ शुद्धानुमानात् तत्सिद्धिर्नेत्याह श्रुतिसाहाय्येति। कुतर्कशङ्काकलङ्कग्रामादिति भावः॥ श्रुतिविरुद्धन्त्वनु-मानमनुमानाभास एव। यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति न्यायभाष्योक्तेः॥ वेदमार्गतः सार्वविभक्तिकस्तसिः। वेदमार्गेण-त्यर्थः। हीनानामिति शेषः॥ पञ्चरात्रादय इत्यादिना शाक्यादयः। तेनैतेषां वेदतुल्यता निरस्ता॥ अत्यन्तमलिनानामित्यनेन उदितानुदित-होमकाधिकारिभेदेन प्रामाण्यव्यवस्थोक्ता॥

**विधिरूपतेति।** (कै)

प्रेरणेत्यर्थः॥ यन्नियोगतः कर्त्तव्यं श्राद्धादि तस्य निमन्त्रणत्वाभावादाह

**निमन्त्रणविषयत्वादिति॥** (कै)

भाष्ये

**ब्राह्मणेनेति।** (भा)

शब्दब्रह्मात्मनोऽप्येवं सर्ववेदानुसारिणः।

विवक्षा वाऽविवक्षा वा वक्तव्या विधिशक्तितः॥

शब्दब्रह्मवादाभ्युपगमे तु ब्रह्मणोऽपि सर्ववेदात्मकदेहाधिष्ठातृत्वाद् विवक्षाविवक्षे वक्तुं शक्येते च विधिशक्तितो ज्ञायते इत्यर्थः॥

शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते।

तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥

तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादने।

विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः॥

ननु सूत्रे भाष्येऽप्युक्तम्—

सर्वं चेतनावदिति॥

एवमन्यत्रापि महाभाष्यकारेणोक्तम्—

न हि छन्दांसि क्रियन्ते। नित्यानि छन्दांसीति। तेन प्रोक्तम् ४। ३। १०१। इति सूत्रे भाष्ये॥

एवं वेदस्य नित्यत्वम् अपौरुषेयत्वं च इति सर्वेषां सिद्धान्तः। इत्यलमिति पल्लवितेन॥

१ एवं तर्हि यन्नियोगतः कर्त्तव्यं तन्निमन्त्रणम्। किं पुनस्तत्। हव्यं कव्यं च। ब्राह्मणेन सिद्धं भुज्यतामित्युक्ते अधर्मः प्रत्याख्यातुः॥

मिद्धं हव्यं कव्यं वा भुज्यतामिति ब्राह्मणेनोक्तेऽर्थाद् ब्राह्मणं प्रति तस्य प्रत्याख्यातुर्ब्राह्मणस्याधर्म इत्यर्थः । ब्राह्मणेनेतरैरन्यदीयनिमन्त्रणप्रत्याख्याने ब्राह्मणकृतेऽपि हव्यकव्यातिरिक्तविषयामन्त्रणप्रत्याख्याते नाधर्म इति लभ्यते ॥ "यदान्य" इत्यादिव्याख्याने कैयटकृते बीजं भाष्यानुग्रहस्य चिन्त्यः । सामान्यत एव ब्राह्मणस्य श्राद्धादिनिमन्त्रणप्रत्याख्यानेऽधर्मः स्मृतिष्वपि स्मर्य्यते इति बोध्यम् ॥

## काम्यकर्मणीति ।

यत्र भोजनाद्यननुष्ठानेऽपि न प्रत्यवायस्तद्विषयाप्रवर्त्तनाऽऽमन्त्रणमिति तात्पर्य्यम् ॥

## उत विषयेति । (कै)

लिङादयस्तु द्योतका इति भावः ॥ विध्यादीनामर्थ इति वक्तुमुचितमत आह

## आदिशब्दस्येति । (कै)

प्रेरये भवन्तमित्यादितदुदाहरणं बोध्यम् ॥

## निमन्त्रणादीनामिति (भा)

भाष्यस्य निमन्त्रणादिपदानामित्यर्थः ॥ भाष्ये

## निमन्त्रये (भा)

इत्याद्युपलक्षणं निमन्त्रयेरित्यादेरपि ॥ ननु निमन्त्रण इत्येकत्वेऽपि कर्त्रादिसंख्याश्रये द्विवचनबहुवचने भविष्यत इत्यत आह

**नाप्राप्तेष्विति।** (कै)

एवं च कर्त्राद्यप्रतीत्यापत्तिरपि दूषणान्तरं बोध्यम्॥

**कर्त्रादिगतायाः संख्याया इति।** (कै)

क्रियायामारोपिताया इति शेषः। वस्तुतः प्रवर्त्तकनिष्ठप्रेरणायाः प्रयोज्यकर्त्तृकत्वाभावात्तद्गतसंख्यारोपेण मानं वाच्यत्वे च तस्या एव विशेष्यत्वं सा च एकैवेति द्विवचनाद्यनापत्तिः। धात्वर्थस्य कर्त्तृद्वित्वादिना द्वित्वादावपि तस्य विशेषणत्वान्न द्विवचनादिनियामकता। कर्त्रादिबाधस्तु न युक्त इत्यग्रे स्फुटीभविष्यति॥ अत एव भाष्ये

[1]**द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात्** (भा-वा)

इत्येव हेतूक्तः॥ विवृतं च

**एकोऽयमर्थो निमन्त्रणं नाम तस्यैकत्वादिति।** (भा)

अनेकविषयकमपि निमन्त्रणमिति तदर्थः। एतेन विशेष्यगतसंख्यैकवचनादिबोध्येति सूचितम्। अत एवात्र पक्षे भावकर्त्रादीनां बोधानापत्तिरिति दूषणं नोक्तम्॥ भाष्ये

[2]**इहापि तर्हि प्राप्नोतीति।** (भा)

लडादयस्तेभ्यो न स्युः। अनेन लिङावाधितत्वादिति भावः॥ द्योतकतापक्षीयं दूषणमुद्धर्त्तुमाह

१ उपलब्धविवरणे। द्विवचनाद्यसिद्धावैकार्थत्वादिति। पाठोऽस्ति॥
२ उपलब्धविवरणे तु। इहापि प्राप्नोतीति। इति पाठोऽस्ति॥

**सिद्धन्त्विति ।** (भा)

द्वितीयाकाङ्क्षस्य धातोः प्रकृते प्रत्ययार्थे कर्त्रादौ लिङि-त्यर्थः ॥ कर्त्रादीनामपि द्योत्यत्वपक्षे

**प्रत्ययार्थे** (भा)

इत्यस्य प्रत्ययद्योत्ये इत्यर्थः ॥ नन्वेवं पश्य मृगो धावतीत्यादा वपि लिङ् स्यादत आह

**द्वितीयं विध्यादिकमिति ।** (कै)

द्वितीयशब्देन विध्यादिरेव गृह्यत इति भावः ॥

**नियोज्यः** (कै)

प्रेर्यः ॥

**नियुज्यते** (कै)

प्रेर्यते । प्रेरणाविषयधात्वर्थे यदा धातोर्लक्षणा तदा प्रकृत्यर्थे प्रत्यय इति भावः ॥ प्रकृते प्रत्ययार्थ इत्यनेनामन्त्रणादीनामर्थे इति पक्षेऽपि तत् त्यागसूचितः । विरोधाभावात् कर्त्रादयो द्योत्या इति पक्षस्य "[१]वुक्रमोः" इति सूत्रस्थभाष्यसंमततया चाद्ये मानाभावाच्च । अत एव वाचकत्वपक्षे द्विवचनाद्यसिद्धिवत् तिबा-द्यसिद्धिर्नोक्ता । भावकर्मकर्त्रर्थकत्वस्यैवात्मनेपदपरस्मैपदविभागेन तद्विधानात् युष्मदस्मच्छेषसामानाधिकरण्याभावेन प्रथमपुरुषाद्य-सिद्धिर्नोक्तः । अनियमस्तु नोक्त इति दिक् ॥

१ वुक्रमोरनात्मनपदनिमित्ते । ७ । २ । ३६ ॥

**भिन्नमामन्त्रणं प्रतीति ।** (कै)

धात्वर्थातिरिक्तं प्रेरणारूपव्यापार प्रतीत्यर्थः ॥ प्राप्नोतु भवान् इत्यादेरङ्गीकरोतु भवान् आमन्त्रणाङ्गीकारविषयाप्रेरणेत्यर्थः ॥ ननु पाकं पचतीतिवत् प्रवर्त्तनाविशेषरूपामन्त्रणस्यापि तद्विशेषामन्त्रणान्तरविषयाकाङ्क्षा इत्यत आह

**भेदपूर्विकाया इति ।** (कै)

तत्र सामान्यविशेषतयाऽभेदान्वयो न तु तथा प्रकृते इति भावः ॥

**आमन्त्रणं प्रतीति ।** (कै)

धात्वर्थव्यापारातिरेकेण प्रेरणां प्रतीत्यर्थः ॥ अत्रेदं तत्त्वम् । स्वविषयप्रेरणा तु नात्र प्रत्ययार्थः स्वेच्छयैव तत्प्रवृत्तिसिद्धेः । स्वप्रवृत्तेः स्वप्रेरणानपेक्षत्वेन तस्यास्तदर्थत्वाभावात् । इदमेवाभिप्रेत्योक्तम् । 'पुरुषो विधिशक्तिप्रतिबन्धक' इति न्यायविदः ॥ अत एव भगवतोत्तमपुरुषविषये एवं शङ्कितं

**विशिष्टकर्मकमिति ।**

संबोध्यकर्मकमित्यर्थः ॥

**अवश्यकर्त्तव्यतालक्षणम् ।** (कै)

अवश्यानुष्ठेयत्वलक्षणम ॥

**ततो भोजनादिष्विति ।** (कै)

तद्बोधनार्थं च निमन्त्रये इत्यादिप्रयोग इति भावः ॥

नन्वेवं निमन्त्रणमित्यादौ निमन्त्रणादिपदप्रयोगोऽयुक्तो लोटैव तदर्थप्रत्यायनादत आह

**न त्वयं लौकिक** (कै)

इत्यादि। धातूनामनेकार्थत्वाद् निमन्त्रणामन्त्रणशब्दावर्हत्वार्थकौ। अर्हत्वं चावश्यकर्त्तव्यतालक्षणं कैयटोक्तम्। एवं च "[१]अर्हे-कृत्यतृचश्च" इत्यनेन लिङ् लोटावुत्तमपुरुषविषये इति उक्तं भवति इति बोध्यम्॥ भाष्ये

**कथं पुनरिति।** (भा)

धर्मिणो हि धर्माकाङ्क्षा न तु धर्मस्येति प्रश्नः॥

**स्त्रीत्वं च स्त्रीत्वेन** (भा)

इत्यत्र स्त्रीताशब्द उदाहरणं प्रवर्त्तनाविषय एककर्तृकः पाक इति बोधः॥ अहं पाचयेयम इत्यादौ पाकप्रवर्त्तनाऽवश्यानुष्ठेयेति बोधः॥ भाष्ये

**यावता वाचेति।** (भा)

यद्वचेत्यर्थः॥

**बहुवचनेति।** (कै)

अत एव सर्वलकारान्ते '[२]लः कर्मणि' इत्यकारि। इदं चिन्त्यम्॥

१ अ ३। पा ३। सू १६९॥ २ अ ३। पा ४। सू ६९॥

त इति । (कै)

एतत् सूत्रस्थभाष्यस्थग्रन्थाभ्यां च इत्यस्यैकवचनान्ततायाः एव लाभात् ॥

[1]सुपां कर्मादय (भा)

इत्यस्यायं भावः। धात्वर्थक्रियाया इव प्रेरणायाः स्वत एकत्वेऽपि प्रेर्यगतसंख्यायाः स्वनिष्ठधात्वर्थ इव स्वविषयकप्रेरणायामप्यारोपात् ॥

द्विवचनादीति।

वस्तुतो "यावता च" इत्यादिग्रन्थ एकदेशिनः। एवं च प्रत्ययार्थे व्यापारे संख्यान्वयेऽपि प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिभङ्ग इत्यपास्तम्। एकदेश्युक्तित्वे न चैतेः ॥ नन्वेवमपि नियमेन न स्यादधिकार्थस्यापि भानादत आह

प्रसिद्धः (भा)

इत्यादि ॥

तच। (भा)

अर्थे। अत्र द्योतकतापक्षो युक्तः। पच इत्यादावपि तत्प्रतीतेश्च। संख्याकालकारकाणामिवाख्या अपि द्योत्यताया एवौचित्याच्च। एवं च प्रवर्त्तनाविषया पाक इत्येव इति बोध्यम् ॥

---

[1] सुपां कर्मादयोऽप्यर्थाः संख्याचैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥

# प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च । ३ । ३ । १६३ ॥

भाष्ये

स्त्रियाः प्रागिति । (भा)

इदमपि ज्ञापकं स्त्रीविकारादूर्ध्वं कश्चिद् 'वासरूप' विध्यभावस्य इत्यर्थः ॥

---

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते
महाभाष्यप्रदीपोद्द्योते तृतीयस्य
तृतीये पादे द्वितीयमाह्निकम् ॥
पादश्च तृतीयः समाप्तः ॥

---

इति चट्टोपाध्यायोपनामकप्रसन्नकुमारात्मजस्वर्गमयीगर्भज-
बज्जवल्लभकृते महाभाष्यप्रदीपोद्द्योतविषम
पदव्याख्याने तृतीयस्य तृतीये पादे
द्वितीयमाह्निकम् ॥
पादश्च समाप्तः ॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## धातुसम्बन्धे प्रत्ययाः । ३ । ४ । १ ॥

धातोः सम्बन्ध इत्यर्थेऽव्यावर्त्तकत्वं तत् धातोः कारकसम्बन्धस्य कारकान्तरं वा धातुसम्बन्धस्य सार्वत्रिकत्वात् । धात्वोः सम्बन्ध इत्यर्थे तु समासो दुरुपपादः । वृत्तौ संख्याविशेषस्याभावाद् अत आह

**सम्बन्धस्येति ॥ (कै)**

**द्वित्वमवगम्यते इति । (कै)**

वस्तुतो द्वित्वाबोधेऽपि धातुत्वेनैव धातुद्वयबोध इति बोध्यम ॥

**[1]गुणभूतयोरिति । (कै)**

स्वार्थप्रतिपादनव्यग्रयोरित्यर्थः ॥ तन्मर्थद्वारकसम्बन्धो धात्वो-

१ उपलब्धकैयटपुस्तके । "गुणीभूतयोः" इति पाठोऽस्ति ॥

रेवाश्रीयतां कर्मत्वसमासकर्त्तृकत्वादिवद् इति चेन्न । गोमानासी-दित्यादौ प्रवृत्त्यनापत्तेः । न ह्यप्रयुज्यमानयोरर्थद्वारकोऽपि सम्बन्धो वक्तुं शक्य इति भावः ॥ अर्थयोश्च कः सम्बन्ध इत्यत आह

**विशेषणेति ।** (कै)

स च प्रत्ययार्थद्वारको वाक्यार्थ इति बोध्यम् ॥

**अन्यस्मिन् काले इति ।** (कै)

उपपदोपाधिप्रकृत्यर्थानां तु न बोधः । वर्त्तमानस्य इत्यारभ्य कालान्यत्वस्यैव प्रतिपादनादिति भावः ॥

**प्रकृतानामिति ।** (कै)

प्रकरणादिति भावः ॥

**वर्त्तमानसत्तेति ।** (कै)

न च "तदस्यास्ति" इत्यत्र संख्यावद्वर्त्तमानकालोऽप्यविवक्षितः इति वाच्यम् । दण्डिनमानयेत्युक्ते दण्डस्याप्यानयनापत्तेः । इदं च तत्रैव भाष्ये स्पष्टम् ॥ भाष्ये

**भूतकाल** (भा)

इत्यादयो बहुव्रीहयः ॥

**भाविव्यपदेशेति ।** (कै)

भाविव्यवहार इत्यर्थः ॥

१ अ ५ । पा २ । सू ९५ ॥

**अग्निष्टोमयाजीति उत्तरमिति ।** (कै)

व्यवहरिष्यमाण इति शेष इति भावः ॥

**यष्टेति ।** (कै)

इत्यर्थः प्रतीयत इति शेषः ॥

**[1]भाविव्यपदेशादिति ।** (कै)

भाविव्यवहारविषयादग्निष्टोमयाज्यादिपदादित्यर्थः ॥

**वाक्यार्थवशादिति ।** (कै)

जनितेत्येतत्समभिव्याहारात् तत्प्रतीतेस्तस्य वाक्यार्थत्वमित्यर्थः ॥ व्यवहारस्य भविष्यत्व विषयभविष्यत्वकृतमिति भावः ॥ वैपरीत्य-निवारणाय मूलयुक्तिं दर्शयति

**विशेष्याया इति ॥** (कै)

भाष्ये

**उपपदस्य** (भा)

इत्यस्य गुणभूतस्येत्यर्थः । सूत्रारम्भे च नायं न्यायः । न्यायेन वचनसंकोचे मानाभावात् । धात्वोः सम्बन्धे ताभ्यां धातुभ्यां ये ये प्रत्ययास्तेऽन्यत्रापि काले भवन्तीति वाक्यार्थादित्याशयः ॥

**सूत्रारम्भे इति ।** (कै)

तथाच सूत्रस्य धातोरस्त्यादेः सम्बन्धे सति धातोः प्रत्ययः कालान्तरे इत्यर्थ इति भावः । नन्वस्त्यादिप्रकृतिकत्वाभावात् कथं तद्विषयत्वमत आह

१ उपलब्धकैयटे 'भाविव्यपदेशविज्ञानात्' इति पाठोऽस्ति ॥

**अस्त्यादिविशेषणायेति ॥** (कै)

**पूर्वोक्तेनेति ।** (कै)

गुणप्रधानभावकल्पनायाश्रयणाभिप्रायेणेत्यर्थः ॥

**भाविशब्दस्येति ।** (कै)

यदि यत्कालं भावितया व्यवहृतं तदासीदिति हि तदथ उचितः। न तु अतीतमासीदिति तथासति पर्य्यायत्वापत्तिरिति भावः ॥

**इत्येतस्मिन्निति ।** (भा)

इत्येतत् पदं तस्मिन् भवितेत्यर्थः। एवं प्रत्याख्याने सूत्र च सन्दर्शित्यादौ वर्त्तमानत्वमारोप्य शता तत्फलं तु तत्समानकालत्वस्य दर्शने लाभः। शतृस्थले क्रिययोः समानकालत्वप्रतीतेः। यद्वा दर्शनकालिकं वासस्य वर्त्तमानत्वमाश्रित्य प्रत्ययः। एवमेव ननु चोत्पततैव लोपं चोदिताः स्म इति सरूपसूत्रस्थभाष्यप्रयोगोपपत्तिः ॥

**[1]गोमानासीद्** (भा)

इत्यत्र देवदत्तस्य विद्यमानत्वेऽपि गोमद्रूपस्यातीतत्वाद्भूते प्रत्ययः। तत्रार्थाद् गवामप्यतीतत्वप्रतीतिरिति दिक् ॥

---

१ तदस्यास्त्यस्मिन्निति मतुप प्रत्ययो वर्त्तमानसत्ताविशिष्टेन प्रकृत्यर्थेन विशिष्टेऽर्थे विहितः। धातुसम्बन्धे तु प्रकृत्यर्थस्य भूतभविष्यत्वेऽपि साधुर्भवति तत्रायमत्रार्थः। गावोऽस्यासन् गोमानासीत्। गावोऽस्य भवितारो गोमान् भवितेति ॥

# क्रियासमभिव्याहारे लोट् लोटो हिस्वौ वा च तध्वमोः। ३। ४। २॥

भाष्ये

हिस्वयोरिति। (भा)

तद्विधायके इत्यर्थः॥ ननु तिङ्षु कृतेषु तेषामेवैतौ भविष्यत इत्यत आह

सामान्येति॥ (कै)

लस्य कृतेऽपि हिस्वौ किमायातमित्यत आह

तचेति॥ (कै)

अव्ययत्वमिति। (कै)

तदन्तस्य विभक्त्यन्तप्रतिरूपकत्वादव्ययत्वमिति भावः॥

हिस्वयोः

इत्यस्य हिस्वान्तयोरित्यर्थः॥ ननु व्यतिकराणामात्मनेपदिभ्योऽपि हिः परस्मैपदिभ्योऽपि स्व इत्याकारः। स चानुपपन्न आत्मनेपदं संज्ञाभावेन लादेशत्वेन परस्मैपदसंज्ञासत्त्वेन वात्मनेपदिभ्यो विधानानुपपत्तेरत आह

यदीति॥ (कै)

ननु तिङो हिस्वौ न च तावन्मात्रं पदं तस्य पदत्वादिति पदादेशस्येत्ययुक्तमत आह

**पदशब्देनेति ॥** (कै)

**निमित्तानीति ।** (कै)

निमित्तशब्दो नित्यनपुंसक इति भावः ॥ केचित्तु नामैकदेश ग्रहणेन परस्मैपदात्मनेपदं पदशब्देन भाष्य उच्येते इत्याहुः ॥

**स्थानिवद्भावादिति ।** (कै)

न च '[1]सार्वधातुकमपित्' इत्यतिदेशान्ङित्त्वं स्यात् पित्त्वादिति वाच्यम् एतद्विषयेऽपि स्थानिवद्भावप्रवृत्त्या आतिदेशिकपित्त्वमादायापिदिति निषेधप्रवृत्तेः । अन्यथालुकरवामित्यादौ गुणानापत्तिरिति दिक् ॥

**स भवान्** (भा)

इत्यादाविति । आदिखण्ड इति शेषः । तद् ध्वनयन्नाह

**परस्येति ॥** (कै)

नन्वनन्तरस्येति न्यायाद् यावानित्यमकृतमत आह

**योगविभागेति ॥** (कै)

भाष्ये

**भुंक्ष्व** (भा)

इत्यस्यानुप्रयोगे

**भुनध्वे** (भा)

इति पाठः ॥

**पित्त्वेन स्वादेशः** (कै)

इति पाठः कैयटे ॥

---

१ अ १ । पा २ । सू ४ ॥

**सर्वेषां तिङामिति** । (कै)

तिङादेशत्वे वर्यितेऽप्ययं दोष इत्यर्थः ॥

**इहकुमारौति** । (कै)

एतद् भाष्यवार्त्तिकस्वरसात् क्रियासमभिहार इति वार्त्तिकं लोडन्तविषयकमेव द्रष्टव्यम् । अन्यथा तस्यैतो भिन्नवचनत्वे गौरवं स्याद् इत्याहुः ॥ दोषान्तरमप्याह भाष्ये

**लोण्मध्यमेति** ॥ (भा)

ननु सर्वेषां स्थाने इत्यर्थेऽसम्भवः परस्मैपदादिग्रहणाभावादत आह

**प्रसङ्ग इति शेष इति** ॥ (कै)

दोषान्तरमप्याह भाष्ये

**सूत्रं चेति** ॥ (भा)

**लोडादेशाविति** । (कै)

लोडित्यस्य च लोड्वदित्यर्थः । स्थानिवत्त्वेनैव लोड्गुणातिदेशस्य सिद्धेः पुनर्लोड्वदिति वचनं लोट् स्थानिकहिस्ववदतिदेशार्थमिति भावः ॥ अतिदेशफलमाह

**तेनेति** ॥ (कै)

**वचनान्तरेणेति** । (कै)

पुरुषादिसंज्ञायां युष्मत् सामानाधिकरण्ये एकत्वे च तत्र च व्यर्थस्तयोर्विधिरिति भावः ॥

# [1]यथाविध्यनुप्रयोगः पूर्वस्मिन्। ३ । ४ । ४ ॥

ननु क्रियारूपार्थप्रतीतेः कथमनभिव्यक्तपदार्थकत्वमत आह

संख्येति ॥ (कै)

नह्येकस्या इति । (कै)

एतेन समुच्चय एव सामान्यवचनस्येति नियमेऽपि प्रकृते न पर्यायवृत्तिरित्यपास्तम् ॥ समुच्चयविषये सामान्यवचनस्येति वचनाद्याथबाधेऽपि प्रकृतविषयतया बाधे मानाभावाद्विनापि वचनं सिद्धमिति भाष्याक्षरार्थः ॥

नेष्टेति । (कै)

अत एव लुनीहि लुनीहि इत्येवायं लुनातीति भाष्ये व्यवहितप्रयोगः सङ्गच्छते । तेनानुप्रयोगशब्दार्थव्यभिचार उक्तः । पूर्वप्रयोगस्तु यदि नेष्टस्तदाभिधानाद् वारणीयः । यदेष्ट एव स इत्याहुः ॥

---

१ पदार्थानतिवृत्तौ यथार्थे यदव्ययमित्यव्ययीभावः । अनुप्रयोग इत्यनुशब्दो धात्वर्थानुवादी न पश्चाद् भावेनानन्तर्य्येऽर्थे तेन पूर्वव्यवहितप्रयोगोऽपि भवति । पूर्वस्मिन्निति वचनं विस्पष्टार्थम् । समुच्चये हि सामान्यवचनस्यानुप्रयोगं वक्ष्यति । तेन ततोऽन्यत्रायं विधिः ॥

# समुच्चये सामान्यवचनस्य । ३ । ४ । ५ ॥

भाष्ये

लघुत्वादिति । (भा)

सर्वविशेषानुगतैकसामान्यवाचकानुप्रयोगे सामान्यस्य सन्निहितविषये पर्य्यवसानात् सर्वेषां कालाद्यभिव्यक्तौ सिद्धायां विशेषवाचकनानाधातुप्रयोगे गौरवादिति भावः ॥

[1]क्वचिदेवेति । (कै)

अपर्य्यायविषय इत्यर्थः । एवं च तरुद्रुम वनस्पत्यादिषु पर्य्यायेषु लाघवगौरवानादराद् न दोषः । इह तु पर्य्यायत्वं स्पष्टमेवेत्याहुः ॥

---

१ क्वचिदेव विषये शिष्टप्रयोगदर्शनादाद्रियते न सर्वत्र

# उपसंवादाशङ्कयोश्च । ३ । ४ । ८ ॥

इदं नित्यत्वे विधानार्थं तदाह

नित्यार्थमिति । (कै)

पूर्वसूत्रे हि [1] 'लिङर्थे लेट्' इत्यत्राप्येतस्यां ग्रहणमनुवर्त्तते इति भावः ॥

व्यवस्थितेति । (कै)

वेदे आपाद्यरूपाभावात्

सर्वविधीनां छन्दसि वैकल्पिकत्वाद्

अदोष इत्यन्ये ॥

कारणं हेतुरिति । (कै)

तदुत्तरकालवद्दानस्येति भावः ॥

कारणमवधिरिति । (कै)

तदस्तु दानस्य तत्कारणाभावेऽपि बहुशोदृष्टत्वात् तत्कारणे सत्यपि बहुशस्तद्दानाभावाच्च व्यक्तिविशेषयोः सत्यपि पूर्ववर्त्तित्वोत्तरवर्त्तित्वे नियमे तद्घटितवारणत्वस्य नैतच्छब्दतो भानं किन्त्ववध्यवधिमद्भावस्यैवेति भावः ॥

1. अ ३ । पा ४ । सू ७ ॥

भाष्ये इदमेवाशङ्काया अप्युदाहरणं सम्भावनापरत्वेन तद्व्याख्यानस्य सम्भवात् सम्भावनैव यत्राशङ्का तदाह

[1]आशङ्कायामपीति । (कै)

अकारणादकार्योत्प्रेक्षाया अपि दर्शनादित्यपि बोध्यम् ॥

लिङ् प्रयोगेति । (कै)

लोकेऽपीत्यर्थः । एवं चानयोरपि [2]लिङर्थे लेडित्येव सिद्धे इदं न कार्यमिति भावः

१ उपसंवादः परिभाषणम् । उपसंवादे तावत् । यदि मे भवान् इदं कुर्य्यादहमपि त इदं दास्यामीत्येवं विधं परिभाषणमुपसंवादः ॥ आशङ्कापि कारणतः कार्य्यानुसरणम् । तत्रापि कारणं हेतुः । कार्य्यानुसरणं हेतुमदित्याशङ्कायामपि लिङर्थे लेट् ॥

२ अ ३ । पा ४ । सू ७ ॥

# तुमर्थे सेसेनसे असेन् क्से कसेनध्यै अध्यैन् कध्यै कध्यैन् शध्यै शध्यैन् तवै तवेङ् तवेनः । ३ । ४ । ९ ॥

ननु कर्मादिपदानुपादानात् कथं तेषु प्रसक्तिरत आह

**क्रिययेति** ॥ (कै)

ननु अवापप्रृतो भाव इत्येतत् सत्त्वे घञादिवत्सिद्धे भावे तु उणादयः स्युः । स्वार्थे विधाने तु साध्ये भावे इति विशेष्योऽत आह

**साध्यमानेति** । (कै)

वार्त्तिकेऽपि भावशब्देन साध्यभावस्यैव ग्रहणमिति भावः ।

[1]तुमर्थ इत्यनुवादाच्च तुमोऽपि भावे सिद्धिरिति बोध्यम् ॥

---

१ कर्त्तरि कृदिति वचनाद् भावस्तुमर्थो नोपपद्यत इति प्रश्नः अपकर्षो ऽपनयः स्वार्थश्च धातुना भाव इति साध्यमानरूपः स एव हि धातुवाच्यो भावः । घञादि वाच्यस्तु भावो धात्वर्थव्यतिरिक्तः सिद्धतारूपः ॥

# उदीचां माङो[1] व्यतीहारे ।
## ३ । ४ । १९ ॥

---

**नानुबन्धेति ।** (कै)

तेनानुबन्धविशिष्टस्याग्रहणमिति भावः ॥

**एकान्तत्वे इति ।** (कै)

अयमेव पक्षो न्याय्य इति [2] 'तस्य लोपः' इति सूत्रे भाष्ये ॥

---

१ मेङोऽयं कृतात्वस्य निर्देशः कृतो न पुनर्माङ मान इत्यस्य तस्य व्यतिहारे वृत्त्यसम्भवादित्यर्थः ॥

२ अ १ पा ३ सू ९ ॥

# [1]समानकर्तृकयोः पूर्वकाले ।
# ३ । ४ । २१ ॥

ननु कर्तृशब्देन शक्तेरपि तस्याश्च क्रियाद्वयविषयभेदान्नैककर्तृकत्वं युक्तं क्रिययोरत आह

[1]शक्तीति । (कै)

शक्तिमद्वृत्तिकत्वस्य शक्तेरारोपेणैककर्तृकत्वोपपत्तिरिति भावः ॥

भाष्ये

स्वशब्देनेति । (भा)

नाच धातोः पूर्वकालविशिष्टक्रियावृत्तिता किं तु स्वार्थमात्रवृत्तितेति भावः ॥ पूर्वकालस्य क्वाद्योत्यत्वमाह

---

१ धात्वधिकाराद् धात्वर्थस्यैव समानकर्तृकत्वं विज्ञायते इत्याह समानः कर्ता ययोर्धात्वर्थयोरित्यादि ॥ निर्धारणे चायं षष्ठी । समान शब्दश्चायमेकवाची ॥

२ ननु शक्तिः कारकम् । अन्या च पूर्वकालक्रियायाः शक्तिः । अन्या च उत्तरकाल क्रियायाः । तत् कुतः समानकर्तृकत्वं विज्ञायत इत्याह शक्तिशक्तिमतोरित्यादि । शक्तिः शक्तिमांश्च शक्तिशक्तिमन्तौ । यश्च शक्त्याधारो या च शक्तिस्तयोरिह भेदो न विवक्षितः । तेन शक्त्याधार एक एव देवदत्तः कर्ता । स च उभयोरपि क्रिययोरेक एवेति युक्तं समानकर्तृकत्वम् ॥

**पौर्वकाल्यद्योत्य इति ॥** (कै)

ननूक्तार्थानामिति न्यायस्य विषयोऽयं द्योतकत्वेन प्रायस्तद्-प्रवृत्तेः। तदुध्वनयन् वक्ष्यति

**इह कस्मान्न भवति। आस्यते भोक्तुमिति।** (भा)

अन्यथा तत्र तुमुन् नास्ति क्रियानिष्ठ पूर्वकालस्य द्योतितत्वा-त्तदसंगतिः स्पष्टैवेति दिक् ॥ भाष्ये

**तुशब्देनेति।** (भा)

पूर्वशब्देनेत्यर्थः ॥ नन्वत्र 'विभाषाग्रे' इति सूत्रेण भवत्येव क्त्वात आह

**पूर्वशब्दस्येति ॥** (कै)

**तत्र ग्रहणादिति।** (कै)

अत्र चेदमेव भाष्यं मानम् ॥

**भोक्त्रन्तरेति।** (कै)

कर्तृपौर्वकाल्यमित्यस्य कर्त्रन्तरसाध्यसजातीयक्रियापेक्षं 'पौर्व-काल्यमित्यर्थ इति भावः ॥ तदुध्वनयन्नाह

**कर्तृपौर्वेति ॥** (कै)

**पूर्वकालत्वादिति।** (कै)

तत्र भोजनफलकपूर्वकालमासनमिति बोध इति भावः ॥[1]

१ प्राभाकरास्तु पूर्वप्रयुज्यमानादिति व्याचक्षते अनुष्ठाने पौर्व काल्यं नाद्रियन्त तद् भाष्यविरुद्धम् ॥

तुमुन् समभिव्याहारे समभिव्याहृतक्रियायां पूर्वकालत्वं तुमुन् द्योत्यं प्रतीयते । एवं तत्र क्त्वा स्यादिति तात्पर्य्यम् । एवं च यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्वं तत्र क्त्वा तदाह

**लट् चाप वासरूपेणेति ।** (भा)

अन्यथास्य पूर्वकालार्थकत्वाभावेन कथं वासरूपेण सः समानार्थत्वे हि तत् सूत्रे प्रवृत्तेः । एवं च भुक्त्वाव्रजतीत्यादौ पूर्वकालभोजनकर्तृकं व्रजनमिति बोधः ॥ ननु स्त्र्यधिकारात् परतोऽपि वासरूपविधेरभावात् कथमत्र तेन द्वयोरेव लब्धिरित्यत आह

**'वासरूप इति ।** (कै)

तदुक्तं वासरूपविध्यभावस्तु क्त्वादिष्विति भावः ॥ ननु वासरूपेण लटः सिद्धावपि कदाचित्तुमुनपि स्यादत आह

**यदात्विति ॥** (कै)

**नहीति ।** (कै)

तुमुनन्तार्थस्य स्वार्थफलकक्रियां प्रति विशेषणत्वनियमात् । क्त्वान्तार्थस्य च स्वोत्तरकालक्रियां प्रति विशेषणत्वनियमात् । न च तदुभयं सम्भवतीतिभावः ॥

**समानकर्तृकेति ।** (कै)

समानक्रियान्तरापेक्षं पौर्वकाल्यं यस्यास्तत्प्रतिपादनपरत्वाद्वि-

---

१ इहास्यते भोक्तुमिति वासरूपेण लड् भवति । यदा असेः क्त्वा भवति तदा भुजेर्लडादय एव भवन्ति । न तु तुमुन् अनभिधानात् ॥

त्यर्थः ॥ तत्र द्विवचनबहुवचनान्यतरावश्यकत्वेनैकतरोपादाने ऽन्यत्र न स्यादितिसाधुत्वार्थमेव तत् । तत् विवक्षितमिति तात्पर्य्यम् ॥

"इमौ चेद् व्याधितौ स्यातां देय स्यादिदमौषधम्"

इत्यादौ लोके द्वित्वस्याविवक्षा दर्शनात् ॥

गुणानां चेति । (क्रै)

प्रधानक्रियान्वये सम्भवति गुणभूतक्रियान्वयोचित इति भावः ॥ प्रत्येकानन्तर्य्यविवक्षायामिष्टासिद्धिमप्याह भाष्ये

[1]एवं च कृत्वेति । (भा)

तेन प्रत्येकानन्तर्य्याविवक्षायां क्त्वा न साधुरित्याहुः ॥

१ "क्रिया भेदाय कालस्तु संख्या सर्वस्य भेदिका" ॥

# [1]विभाषाग्रे प्रथमपूर्वेषु । ३ । ४ । २४ ॥

साधनेति । (कै)

साधनान्तरजन्यस्वजातीय क्रियापेक्ष पौर्वकाल्यविषया इत्यर्थः ॥

न तु क्रियेति । (कै)

एककर्तृकभिन्नक्रियानिरूपितपौर्वकाल्यविषया इत्यर्थः ॥ साधन-पौर्वकाल्यविषयाणामेव ग्रहणे प्रमाणमाह

तेषां हीति । (कै)

पूर्वादीनामित्यर्थः ॥ मानान्तरमप्याह

भाष्यकारेण चेति ॥ (कै)

प्रकृतसूत्रभाष्यपर्यालोचनया एवमेवेत्याह

यदि चेति ॥ (कै)

निः सन्देहा इति । (कै)

सन्देहान्निष्क्रान्तेति समासः ॥ संशयानुपपत्तिं दर्शयति

१ अग्रशब्दो देशविशेषवचनोऽप्यस्ति । प्रभोरग्रे भुङ्क्ते इति । इह तु प्रथमशब्दसाहचर्यात् कालविशेष वाचिनो ग्रहणम् ॥ किमियं प्राप्ते विभाषाहोस्विदप्राप्ते । कथं च प्राप्ते कथं चाप्राप्ते । आभीक्ष्ण्ये इति वा नित्ये प्राप्तेऽन्यत्र वा प्राप्ते । किं चातः । यदि प्राप्ते आभीक्ष्ण्योऽनिष्टा- विभाषा प्राप्नोत्यन्यत्र चेष्टा न सिद्ध्यति ॥

**यस्मादिति ॥** (कै)

**तदाभीक्ष्ण्येति।** (कै)

उक्तार्थत्वेन क्त्वाणमुलोरप्राप्तेरिति भावः॥ ननु पौर्वकाल्यो-क्तावपि आभीक्ष्ण्यप्रतिपादनाय तयोः प्राप्तिरत आह

**आभीक्ष्ण्यं चेति।** (कै)

एवं चावश्यकद्विर्वचनेनैव तद् द्योतनसम्भवेनास्य तत्राप्य-प्राप्तिरिति भावः॥

**तयोर्विधानम्।** (कै)

तयोः प्राप्तिः॥

**पूर्वप्रथमेति।** (कै)

यद्यपि पूर्वशब्दो देशवाची तथापि प्रथमसाहचर्यं नियामकमिति बोध्यम्॥

**निमित्तस्य चेति।** (कै)

[1]उपपदमिति महासंज्ञया प्रत्ययनिमित्तस्योपपदत्वं नहि अभावस्योपपदमिति वक्तुं शक्यमिति भावः॥ भाष्ये

**न वक्तव्यः** (भा)

इत्युक्ते अवचने हेतुमाह

**उक्तं चेति।** (भा)

चो हेतौ। यत उक्तमतो न वक्तव्य इत्यर्थः॥

१ तत्रोपपदं सप्तमीस्थम्। ३। १। ९२॥

**उक्तं वेति** (भा)

पाठेऽपि वा शब्दोऽत्र चार्थ एव बोध्यः। अवचने वैकल्पिकत्वेनान्तरानुक्तेः॥ नन्वननुवृत्तावपि आभीक्ष्ण्ये परत्वादिदमेवोचितमित्युभयत्र विभाषात्वमुचितमित्यत आह

**पूर्वविप्रतिषेधादिति** ॥ (कै)

**ननु चेति** । (कै)

साधनपौर्वकाल्यविषये क्रियापौर्वकाल्यस्यापि सत्त्वादिति भावः॥ वासरूपेण क्त्वादीनां सिद्धत्वाद्विभाषाग्रहणं किमर्थमिति शंकायामपि ज्ञापकार्थमित्युत्तरं बोध्यम्॥ वासरूपन्यायेन क्त्वादिसिद्धेर्व्यर्थमेतदिति शङ्कते

**कः पुनरिति** । (कै)

वक्ष्यमाणरीत्या ज्ञापकार्थेत्युत्तरम्। एवं च प्रकृतसूत्रविषये क्त्वादि सिद्ध्यर्थं विभाषाग्रहणं ज्ञापनफलं तु पूर्वसूत्रे णमुल्विषये वासरूपो नास्तीत्येव ज्ञाप्यते तदोत्तरसूत्रविषये ऽपि क्लातव्यादयो न स्युः। तद्ध्वनयन्नाह

**तत्र यदीति** । (कै)

[1]आभीक्ष्ण्य इति सूत्र इत्यर्थः। अभिमतमर्थं यत्र विधीयेते इत्येवं रूपमित्यर्थः॥

१ आभीक्ष्ण्ये णमुल् च । ३ । ४ । २२ ॥

# [1]स्वादुमि णमुल् । ३ । ४ । २६ ॥

**भाविप्रत्ययविषये इति ।** (कै)

णमुल् विषये इत्यर्थः ॥ स्वादुमीत्यनूद्यप्रत्ययविधानात् प्रत्यये भाविनि सति पूर्वमेव निपात्यते इति भावः ॥

**[1]भावप्रत्ययविषये इति**

पाठेऽप्ययमेवार्थः । यत्तु एनं पाठं दृष्ट्वा भावप्रत्ययमात्रं विषयं निपातनं क्त्वायोगेऽपीति तत्र स्वादी: कृत्वा यवागूं भुङ्क्ते

**अस्वादुं स्वादुं कृत्वा भुङ्क्ते इति** (भा)

भाष्यप्रयोगविरोधात् । [2]स्वादीं कृत्वेतिवत् स्वादुं कार-मित्यत्रापीकारः स्यात्तदभावाय निपातनमित्यर्थो भाष्यस्य ॥

[1] स्वादुमि इत्यर्थ ग्रहणाम् एतच्च व्याख्यानाल्लभ्यते ॥

१ भाव प्रत्ययविषये मान्तत्वनिपात्यमाने चोक्त गुणवचनादिति ङीबन भवति अकारान्तत्वादकारान्तत्वाभावादित्यर्थः ॥

२ स्वादी कृत्वा यवागूं भुङ्क्ते इतीकाराभावस्योदाहरणम् । अस्वादुं स्वादुं भुङ्क्ते इत्यप्ययस्य ॥ इह यदि क्त्वादयः प्रत्ययाः कर्त्तरि कृदिति वचनात् कर्त्तरि स्युः । इह पक्कौदनो भुज्यते देवदत्तेनेति देवदत्तात् तृतीया न स्यात् क्त्वाप्रत्ययेनानभिहितः कर्त्तेति । अथ क्त्वाप्रत्ययेनाभिधाने सत्यपि भुजिप्रत्ययेनानभिहितः कर्त्तेति कृत्वानभिहिताश्रयाविभक्तिर्भवति तृतीया । यद्येवमोदने द्वितीया प्राप्नोति किं कारणं भुजिप्रत्ययेनाभि-

**विहित इति ।** (कै)

उकारान्तत्वाभावादित्यर्थः ॥

**अव्ययार्थमेवेति ।** (कै)

अपूर्वविधानात् प्रतिप्रसवस्य लघुत्वादिति भावः ॥

**आ च तुमुनः** (भा)

इत्यत्र चकारः किमपेक्ष इत्यत आह

**पूर्वोक्तेति ।** (कै)

मान्तनिपातनमित्यस्य वक्तव्यमितिशेषः ॥

**अभिविधौ चेति ।** (कै)

एवं च तुमुनन्ता धातुसम्बन्धाधिकारविहिता अव्ययकृत इत्यर्थः ॥ तुमुन्समसामान्यात् तुमुन् ण्वुलावित्यस्यापि ग्रहणं बोध्यम् । अत एवाग्रे भोक्तुमोदनः पच्यत इत्युदाहरणं संगच्छते ॥

**समानाधिकरण इति ।** (भा)

स्वान्वयि समभिव्याहृताख्यातवाच्य कारके इत्यर्थः ॥

---

धानेऽपि क्त्वाप्रत्ययेनानभिहितं कर्मेति तथा यदि कर्मणि स्युः पक्त्वौदनं भुङ्क्ते देवदत्त इति देवदत्तात्तृतीया प्राप्नोति ओदनात् प्रथमा पक्त्वौदनो भुङ्क्ते देवदत्तेन पक्त्वौदनं भुङ्क्ते देवदत्त इत्येव तु भवति तथास्मिन् णमुल्यपि स्वादुं कारं भुज्यते यवाग्र्देवदत्तेनेति यवाग्वा द्वितीया न भवति स्वादुं कारं यवागूं भुङ्क्ते देवदत्त इत्यत्रापि कर्मणि द्वितीया भवति । एवमातुमुनो द्रष्टव्यम् ॥

भाष्ये [१]ऽनुप्रयोगशब्देनेदमेवोच्यते सामानाधिकरण्ये कारके वर्त्तमानाद्धातोरित्यर्थस्तेन तस्य धात्वर्थं प्रति विशेषणत्वमेवेति ॥

ननु सत्यन्यस्मिन् कारके कर्त्रैव कस्मादभिधीयतेऽत आह

**असत्यस्मिन्निति ॥** (कै)

ननु अभिहिते प्रतिषेधात् कथमनभिहिताश्रयो विधिरत आह

**[२]पर्य्युदास इति ॥** (कै)

**भिन्नधात्वर्थेति ।** (कै)

पाके भोदनगमने ग्राम इत्यर्थः । अस्य वचनस्य प्रयोजनं दर्शयितुमित्यन्वयः ॥ भाष्ये

**स इह दोषो न जायते इति ।** (भा)

१ तुमनि भोक्तुमोदनः पच्यते देवदत्तेन । इष्यते ग्रामो गन्तुं देवदत्तेन । भोक्तुमोदनं पचति देवदत्तः । ग्रामं गन्तुमिच्छति देवदत्त इति सर्वत्रानुप्रयोगाद्यत्र लादयस्तदनुरोधेनैव कर्तृकर्मणोर्विभक्तिर्भवति । तस्मादव्ययकृतः समानाधिकरणे इति वक्तव्यम् । केन समानाधिकरणे । अनुप्रयोगेण । एतदुक्तं भवति । अनुप्रयोज्यमानाद्धातोर्यस्मिन् कारके लादयो विहितास्तत्रैवाव्ययकृतोऽपि भवन्तीति । एवं ह्युभाभ्यां कर्तृकर्मणोरभिहितत्वाद्यथायथं विभक्तयः सिद्धन्ति ॥

२ अनभिहित इति पर्य्युदासे चेतश्चोद्यं तदाहि सत्यभिधानेऽभिधाने च यतोऽनभिधानं तदाश्रया विभक्तिः प्राप्नोति परिहरति भुजिप्रत्ययेनेति । अनभिहित इति प्रसज्यप्रतिषेध आश्रीयत इति भावः । तदाहि यतोऽभिधानं तदाश्रयः प्रतिषेधो भवति ॥

ननु अनभिहिताश्रया तृतीया सिद्धा द्वितीयाप्राप्तिरूपो दोषस्तु न तत् किमत्र प्रयोजनमिति प्रयोजनं दर्शयितुमुपन्यास इति कैयटासंगतिरिति चेदत्र वदन्ति

**दर्शयितुमिति** (कै)

कैयटस्य विचारयितुमित्यर्थः। स दोष इह न जायते तस्मात्वार्थं एतदुदाहरणविषये इति भाष्यार्थः। यदि प्रवर्त्तेत तदा एतत्प्रयोगाभावरूपमनिष्टं च स्यात् तस्मात् समानशब्द एकपर्य्याय इति तात्पर्य्यम्॥

**आख्यातादिपदवाच्येति।** (कै)

अत्रेदं तत्त्वम्। उपात्तकारकाणां प्रधानान्वये सम्भवति न गुणे शब्दान्वयः। अर्थत एव तदीयकारकाऽऽकाङ्क्षा शान्तौ तत्रान्वये मानाभावात्॥

**तद्द्वारक इति** (कै)

क्रियाद्वारकः। गुणक्रियानिरूपिता शक्तिरपि गुणभूतेति-भावः॥ ननु चार्थान्वयेऽपि तत् क्रियानिरूपिता शक्तिस्तत्रान्वये-वान्यथा ग्रामाय गन्तुमिच्छतीत्यादि न स्यात्। एवं च द्वितीया-दिकं स्यादेवात आह

**[१]तच्च प्रधानेति।** (कै)

१ आख्यातपदवाच्या क्रिया विशेष्यत्वात् प्रधानं विशेषणभूतात्व-प्रधानं तद् द्वारेण तद्विषययोः शक्त्योरपि गुणप्रधानभावः। तच्च प्रधानानुवर्त्तित्वाद् गुणानां तन्मुखप्रेक्षित्वात्तद्विशद्धस्वकार्य्यारम्भाभावाद् यथा यथं विभक्तिसिद्धिरित्यर्थः॥

अत प्रधानशब्देन सर्वतः प्रधानमाख्यातवाच्यक्रियैव तच्छक्तेरेव वस्तुस्वभावमाहात्म्यं न स्वसमानाधिकरणेतर शक्त्यभिभावकत्वात् । अत एव लुधं प्रति हन्तुंशक्यमित्यपि भवतीति पस्पशायां कैयटेनोक्तं संगच्छते । तत्र शक्यमित्यस्यापि नामत्वेनेतरक्रियां प्रति गुणत्वेन स्वसमानाधिकरणेतरशक्त्यभिभवे सामर्थ्याभावादिति दिक् ॥

अन्ये तु समानाधिकरणे इत्यस्यानुप्रयोगेन इत्येव व्याख्यानात् । अयमपि प्रयोगस्त्विष्ट एव । तद्वचनवादिमतेऽसिद्धेर्न व्याख्याता-न्तानुप्रयोगविषयं पच अपहन्तुं शक्यमितिभाष्यप्रयोगासिद्ध्या पत्तेः । तुमुना कर्मणोऽनभिधानात् द्वितीयापत्तेरित्याहुः ॥

## पृथक्त्वादिति । (कै)

भिन्नत्वादित्यर्थः यत् स्वकार्यं तदारम्भकत्वाभावादित्यर्थः । एतेन यदा यत्र शब्दान्वयस्तदातद्विभक्तिः साधुत्वम् । ओदनं पक्त्वा भुज्यते पक्त्वौदनः भुज्यते इत्युभयत्रापि साध्विति परास्तम् । प्रकृतसूत्रस्थभाष्यवार्त्तिकयोरनुक्तिसम्भवप्रसक्तापत्तेरित्यलम् ॥ यत्तु हरदत्तेन[1] "वयं तु ब्रूमः । सकृच्छ्रुतस्य युगपद्भाभ्यां सम्बन्धा-भावादेकेनैव प्रधानेन शब्दो ऽन्वयः ; इतरेण तु संनिधानादार्थ इति " गुणनिरूपिताशक्तिस्तत्र नास्त्येवेत्युक्तम् । तत्र

१ प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ॥
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥

ग्रामाय गन्तुमिच्छतीति । (भा)

मत्पक्षस्य भाष्यप्रयोगविरोधापत्तेः । ग्रामस्य गतिकर्मत्वा-भावेन चतुर्थ्यप्राप्तेः । मम तु शाब्दान्वयाभावेऽपि तन्निरूपित-कर्मत्वस्यात्मत्वेन परत्वाद् गत्यर्थकर्मनीत्यस्य प्रवृत्त्या न दोषः । एवं ग्रामाय गत्वा द्रक्ष्यतीत्यपि साध्विति दिक् ॥

---

# वर्षप्रमाणे ऊलोपश्चास्यान्यतरस्याम् ।

## ३ । ४ । ३२ ॥

[1]गोष्पदं प्रातीति । (कै)

तरतीत्यर्थः ॥

[2]नन्वस्मात् केऽपि वृत्तौ प्रमित्यनुस्वारश्रवणं न स्यात् । णमुलन्तात्तु भवतीत्यत आह

१ उपलब्धकैयटपुस्तके "गोष्पदं प्रतीति" पाठोऽस्ति ॥

२ ननु च णमुलि सति 'कृन्मेजन्त' इत्यव्ययत्वाद् विभक्तीनां श्रवणं न भवति । तरपि च गोष्पद प्रतरमिति भवति । कल्पवादौ च गोष्पद प्रकल्प इति भवति । अज्ञातादिषु चाव्ययत्वादकच् भवति के तु सति सर्वमेतन्न सिद्ध्यति । उच्यते । इष्यते तावद्विभक्तीनां श्रवणमेकेन गोष्पदप्रेण इति तरबादिषु चोपन्यस्तानि रूपाणि नेष्यन्त एव । एतच्च भाष्ये ऊलोप प्रत्याख्यानादवसीयते ॥

**[1]गोष्पदप्रमिति ॥** (भा)

**करणे इति ।** (कै)

तथा सति [2]वृषधात्वर्थेन सामानाधिकरण्यं भवति ॥

**बहुव्रीहाविति ।** (कै)

गोष्पदस्य पूरः पूरणमत्र क्रियायामित्यर्थः ॥

**[3]लित्स्वरेणोकार इति ।** (कै)

तत उपपदसमासे कृदुत्तरपदप्रकृतिस्वरः ॥

**कृत्स्वरेणेति ।** (कै)

प्रत्ययस्वरेण प्रत्ययस्योदात्तत्वे कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः ॥

ननु च गोष्पदप्रमित्यत्रापि घञन्तं सिद्धं न सिद्ध्यति यदि तावत् करणे घञं विधाय तदन्तेन कर्मणि षष्ठ्याः समासः क्रियते ततस्थाथादिस्वरेणान्तोदात्तत्वं स्यादथ भावे घञि व्यधिकरणपदो बहुव्रीहिः क्रियते गोष्पदस्य पूरणमस्मिन् वर्षे इति ततः पूर्वपदप्रकृतिस्वरः प्रसज्येत । गोष्पदपूरणं गोष्पदपूरं वृष्टमित्यादि न च सिद्ध्यति तस्मात् वर्षप्रमाण इति वक्तव्यम् ॥

१ प्रा पूरणे इत्यस्माद्धातोः कः क्रियाविशेषणत्वात् कर्मत्व नपुंसकत्वे न रूपभेदः । नार्थभेदः । न स्वरभेदः ॥

२ वृषु सेचने । भ्वादि परस्मै सेट ॥ वृष प्रतिबन्धने । चुरा, आ, सेट ॥

३ लिति ६ । १ । १९३ ॥

# करणे हनः । ३ । ४ । ३७ ॥

बाहुल्येनेति । (कै)

अन्ये तु हन्तिर्हिंसार्थ एव । पद्धत्यादौ हिंसारोप इत्याहुः ॥ भाष्ये

[1]पाण्युपघातमिति । (भा)

पाणिना वेदिं हन्तीत्यर्थः । हिंसा च प्राणि विषयेति भावः ॥

१ अर्थवत्त्व हिंसार्थस्य विधानात् । वा ॥ अर्थवत्तु हन्तेर्णमुल्वचनम् । कोऽर्थः । अहिंसार्थस्य विधानात् । अहिंसार्थस्य हन्तेर्णमुल्यथा स्यात् । अस्ति पुनरयं क्वचिद् हन्तिरहिंसार्थः यदर्थो विधिः स्यात् । अस्तीत्याह । पाण्युपघातं वेदिं हन्ति ॥

हिंसार्थानामित्यनेन णमुलि तृतीयाप्रभृतीन्यन्यतरस्यामिति विकल्पितः समासः स्याद् अतो हिंसार्थेऽप्यनेनैव णमुलेषितव्य इत्यर्थः । कथं पुनरिष्यमाणोऽपि लभ्यते । यावताऽहिंसार्थे हन्तौ सावकाशोऽयं विधिर्हिंसार्थानामित्यस्य तु हन्तिव्यतिरिक्तो हिंसार्थोऽवकाशः । हिंसार्थे हन्तावुभयप्रसङ्गे परत्वात् स एव विधिः प्राप्नोति इति ॥ अत्राहुः । यत्रैक एव धात्वर्थः सामान्यविशेषभावेन भिद्यमानो विशेषणविशेष्यभावमनुभवति सोऽस्य विषयः कषादिषु यथाविध्यनुप्रयोग इति वचनात् । अत्यन्तभिन्न धात्वर्थसम्बन्धेतु तेनैव णमुल भवतीति । एवं च नित्यसमासार्थो यथाविध्यनुप्रयोगार्थश्चेति । कोऽर्थः यथा विध्यनुप्रयोगार्थः सन्नित्यसमासार्थ इत्यर्थः ॥

## सामान्येति। (कै)

यत्रानुप्रयोगेन णमुलन्तयोः सामान्यविशेषभावेनान्वयस्तत्र इदमेव। यत्र तु भेदसम्बन्धेनान्वयस्तत्र तेनैवेति भावः॥

## हिंसार्थानामिति।

णमुलि[1] "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति वैकल्पिकः समासः॥

[1] अ २ पा २ सू २१॥

# अधिकरणे बन्धः । ३ । ४ । ४१ ॥

यद्यपीदं ग्रामरूपन्यायेन यत्नासिद्धं तथाप्यनिष्टमपि प्राप्नोतीत्याह

**ग्रामबन्धम्** (कै)

इत्यादिना ॥

**ग्रामे बद्धः ।**

इति त्वपपाठः ॥ कर्मणि क्तस्य विषये भावविषये णमुलो-ऽप्राप्तेः ॥ यद्यप्ययं साध्यो भावः । स च सिद्धस्वभावस्तथापि सिद्धत्वस्याधिक्येऽपि तस्याचतेः ॥ भाष्ये

**एवं वक्ष्यामीति ।** (भा)

**संज्ञायाम्** (भा)

इत्यनेनैकवाक्यता यत्र ।

**कथम् ।** (भा)

इति संज्ञात्वाभावात् प्रश्नः ॥

**[1]उपमाने इति ।** (भा)

एवमनधिकरणविषयेऽपि तेनैव साध्यमिति भावः ॥

---

१ उपमाने कर्मणि च ( ३ । ४ । ४५ ) इत्येवं भविष्यति ॥

# तिर्यच्यपवर्गे । ३ । ४ । ६० ॥

तिर्यक् शब्दोऽनृजुवाची ॥

**अपवर्गः ।**

समाप्तिः तद् वाची च ॥

**नहीति ।** (कै)

[1]सौत्रत्वेन शास्त्राप्रवृत्तौ तु तद्विनाशप्रसङ्गः बीजम् इत्यन्यदिति भावः ॥

* व्युत्पत्तिमात्रं चैतन्नत्वत्रावयवार्थोऽस्ति समुदायो हि ह्ययमपवर्गे वर्त्तते ॥

१ तिरश्चीनि भवितुमर्हन्ति । सौत्रो निर्देशः इति ॥

# 'नाधार्थ्य प्रत्यये च्व्यर्थे । ३ । ४ । ६२ ॥

**तथाचेति** । (कै)

तदाचेत्यर्थः ॥

**द्वैध कृत्येति** । (कै)

डान्तेन समासे विभक्तिलोपः । एतद् भाष्यस्वरसात् प्रत्यय-पक्ष एव तत्र न्याय्य इति तत्त्वम् ॥

**नार्थमपौति** । (कै)

निरनुबन्धकमादाय रूपाणां सिद्धेरनिष्टाभावाच्च च तदर्थत्वं तदनुबन्धकपरिभाषाया अनित्यत्वेनेति भावः ॥

**[1]हिरुगिति** । (भा)

नार्थत्वात् प्राप्तिः ॥

---

* नाधा सम्प्रचरितोऽर्थो नाधाप्रद्राभ्यामुक्तः ॥

१ हिरुक् कृत्वेति ॥

# [1]कर्त्तरि कृत् । ३ । ४ । ६७ ॥

ननु "'भावे' इति सूत्रं धातुमात्राद् घञविषये आवश्यक-मत आह

**घञित्येतावदिति । (कै)**

**भावपदोपादानविनापि अन्यप्रत्ययवत् स्वार्थे विधानेनैव भावे सिद्धमिति भावः । ततः [3]"पदरुज' इति कर्त्रर्थमिदम् ॥**

१ किमर्थमिदमुच्यते । कर्त्तरि कृद्वचनमन्यत्र देशे स्वार्थविज्ञानात् । यत्र वचनेनार्थो निर्दिश्यते तत्र प्रत्ययार्थः प्रकृत्यर्थे एव प्रत्ययो भवति तद्यथा गुप्तिज् किद्भ्यः सन् यावादिभ्यः कन् इति एवमिमे कृतः स्वार्थे स्युः स्वार्थे मा भूवन् कर्त्तरि स्युरिति ॥ ननु च यमिच्छति स्वार्थे आह तं भावे घञ् भवतीति । तन्नियमार्थं भविष्यति घञेव भावे नान्यः कृदिति । असति ह्येतस्मिन् सूत्रे घञित्येतावत् सूत्रं कर्त्तव्यं धातोर्घञ् भवतीति ॥

किमर्थमिदम् । कर्त्तरि ण्वुलादयो यथा स्युः । क्व तर्हि स्युः । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे ॥ ननु च स्वार्थे यत्र प्रत्ययमिच्छति तत्र भावग्रहणं करोति यथा घञादिविधौ भावे इति । नैवेते घञादयः स्वार्थे भवन्ति । किं तर्हि तस्य धर्मे सिद्धतायां । तथा लकारादिविधौ "लः कर्मणि च भावे चाकर्मकेभ्यः" ( ३ । ४ । ६९ ) इत्यत्र सूत्रे लकारा अपि न स्वार्थे विधीयन्ते । किं तर्हि । तस्य धर्मे साध्यतायां । यद्यपि घञादीनां लकाराणां च भावे विधानं तथापि शब्दशक्तिस्वाभाव्यादेष विषयविभागो लभ्यते । घञादीनां हि धात्वर्थस्य

**घ्नन् … तीति।** (कै)

"घः घ्नन्' इत्येकं वाक्यं विध्यर्थम्; ततः "कर्मणि" इति नियमार्थमिति भावः॥ परिहरति

**…मिदं वाक्यमिति॥** (कै)

**कथं कारकान्तरे इति।** (कै)

एकवाक्येऽपि विशेषणोपादानं नियमफलमित्यर्थः

॥ १ अ ३ । पा २ । सू … ॥

सिद्धतामेवाभिधातुं सामर्थ्यम्। लक्षणाणां … मेव। तदेवं यदनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति तस्मात् … ऽपि तत्रैव भवेयुः। अतः कर्त्रर्थेव ते यथा स्युरित्येवमर्थमिद … न द्वैधम्। … दुत्पत्तिवाक्यानामयं शेषो वा स्याद्गवल ट्चो कर्तरि "नेन्द्रियग्रहिपचादिभ्यो ल्युणिन्यचः कर्तरीति॥ अर्थादेशो वा। निरपेक्षैः स्वैः स्वैर्विधायकैर्वाक्यैर्विहितानां कृतां पश्चादनेनार्थ आदिश्येत येन लक्षणान्तरैः कृतो विहितास्ते कर्तरि वाच्ये भवन्तीति। तत्र यदि द्वितीयः पक्ष आश्रीयेत ततो यथा ट्चादीनामनेनार्थो आख्यायते तथा ल्युडादीनामपि। विशेषानुपादानात्। ततस्तेऽपि कर्तरि स्युः। स्वेषु विधिवाक्येषु करणादीनामुपादानात् करणादिष्वपि॥

ननु च ल्युडादिषु करणादिरर्थो विशेषविहितत्वात् कर्तुस्य बाधको भविष्यति। न। नाना वाक्यत्वात्। इह दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय इति अभिन्नकालत्वादेकं वाक्यं विशिष्टदानस्य प्रतिपादकमिति तक्रेण दधि बाध्यते यदा तु पूर्वाह्ने ब्राह्मणभोजन प्रकरणे दधि ब्राह्मणेभ्यो दीयतामित्युच्यते ऽपराह्णे तु तक्रं कौण्डिन्याय दीयतामिति न तत्र बाध्यबाधकभावः। तथा अस्मिन् पक्षेऽपि कालभेदेन वाक्यद्वयोच्चारणाद् बाध्यबाधकभावो न लभ्यते तस्माद् दृष्टव्यायं पक्ष इति॥